# THE PANDIT.

## A MONTHLY JOURNAL

OF THE

## BENARES COLLEGE,

DEVOTED TO

# SANSKRIT LITERATURE.

## VOLUME VI.

BENARES:
PRINTED AND PUBLISHED BY THE PROPRIETORS, E. J. LAZARUS & CO

# INDEX TO VOLUME VI.



*Supplement.*

# काशीविद्यासुधानिधिः

श्रीगणेशाय नमः

श्रीमद्विजयिनीदेवीपाठशालोदयोदितः । प्राच्यप्रतीच्यवाक्पूर्वापरपक्षद्वयान्वितः ॥ १ ॥
अङ्करश्मिः स्फुटयतु काशीविद्यासुधानिधिः । प्राचीनार्यजनप्रज्ञाविलासकुमुदोत्करान् ॥ २ ॥

A Monthly Journal, of the Benares College, devoted to Sanskrit Literature.

No. 61. Benares, June 1st, 1871. Vol. VI.

## ॥ भाट्टचिन्तामणेस्तर्कपादः ॥

अथ प्रवर्तकज्ञानं विचार्यते ।

ननु किमत्र विचार्यते, इष्टसाधनत्वकृतिसाध्यत्वबलवदनिष्टाननुबन्धित्वज्ञानानां प्रवृत्तिहेतुत्वस्य क्लृप्तत्वादिति चेत् । अत्र गुरवः । स्वविशेषणवत्ताप्रतिसंधानजन्यकार्यताज्ञानस्यैव चिकीर्षाद्वारा प्रवृत्तिहेतुत्वं, नेष्टसाधनत्वबलवदनिष्टाननुबन्धित्वज्ञानयोरपि । अन्यथा हेतुहेतुमद्भावत्रयकल्पनागौरवात् । तथाहि । कार्यताज्ञानं द्विविधं, मयेदं कर्तुं शक्यतइत्येवंरूपमेकं, ममेदमवश्यं कार्यमित्येवंरूपं द्वितीयम् । तत्राद्यं पदार्थनिष्ठयोग्यतागम्यमिति न प्रवृत्तिं प्रति हेतुः । द्वितीयं तु स्वेष्टसाधनत्वबलवदनिष्टाननुबन्धित्वज्ञानजन्यमिति चिकीर्षाद्वारा प्रवृत्तिं प्रति हेतुः । इदमेव स्वविशेषणवत्ताप्रतिसंधानजन्यत्वं, स्वं नियोज्यः, तद्विशेषणं काम्ये फलकामना, नित्ये शुचितत्कालजीवित्वादीति नेष्टसाधनत्वबलवदनिष्टाननुबन्धित्वज्ञानजन्यकार्यताज्ञानस्य चिकीर्षाद्वारा प्रवर्तकत्वं सिद्धं भवति । अत एवेष्टसाधनत्वेनाज्ञाते मध्वन्नभोजने ऽनिष्टसाधनत्वेन ज्ञाते विषभोजने बलवदनिष्टानुबन्धित्वेन ज्ञाते मधुविषसंपृक्तान्नभोजने न प्रवृत्त्यापत्तिः । न च तत्र मध्वन्नभोजनजन्यं सुखं भवत्वितीच्छया तदापत्तिः । विषासंपृक्तमध्वन्नभोजनसुखत्वेनैवेच्छागोचरीभावात् । नापि जीवकर्तृकत्वलिङ्गककार्यताज्ञानेन विषभक्षणे प्रवृत्त्यापत्तिः । न वा काम्ये शौचादिलिङ्गककार्यताज्ञानात्प्रवृत्त्यापत्तिः । एतेन भावियौवराज्ये तृप्तस्य भोजने च प्रवृत्त्यापत्तिर्निरस्ता ॥ केचित्तु इदानींतनमत्कृतिसाध्यताज्ञानं हेतुस्तच्चेदानींतनमदिष्टसाधनत्वज्ञानाधीनमिति तदभावान्न प्रवृत्तिरित्याहुः ॥ तन्न । तदनुकूलकृत्यभावे ऽपि यदि मया क्रियते तदेदं भविष्यतीत्येतादृशकृतिसाध्यत्वज्ञानस्य तदानीमपि सत्त्वात् । एवं चेष्टसाधनत्वबलवदनिष्टाननुबन्धित्वशुचितत्कालजीवित्वज्ञानजन्यानां कार्यताज्ञानानां कार्यताज्ञानत्वेनानुगतानां प्रवृत्तौ हेतुत्वमिति लाघवम् । इष्टसाधनत्वज्ञानादीनां प्रवृत्तिं प्रति हेतुत्वे तु हेतुहेतुमद्भावत्रयकल्पनागौरवम् । न चेष्टसाधनत्वादिज्ञानानां कार्यताज्ञानहेतुत्वकल्पने तद्धेतोरेवास्त्विति न्यायात् प्रवृत्तिं प्रति तेषामेव कारणत्वं युक्तम् । शाब्दबोधे तात्पर्यज्ञानस्येव प्रवृत्तौ कार्यताज्ञानस्य लाघवेन हेतुत्वात्, तद्धेतुप्रकरणादीनां शाब्दबोधहेतुत्वाभाववत् कार्यताज्ञानजनकेष्टसाधनत्वज्ञानादीनामपि तद्धेतुत्वकल्पनायोगात् । तस्मात्कार्यताज्ञानमेव प्रवर्तकं कार्यत्वमेव विध्यर्थः ॥

अथ कार्यत्वं विध्यर्थमङ्गीकृत्य तन्मते वाक्यार्थबोधप्रकारः । लोके तृप्तिकामः पचेदित्यादौ प्रत्ययार्थकार्यत्वस्य प्रकृत्यर्थपाके ऽन्वयवत्स्वर्गकामो यजेत शुचिः संध्यामुपासीतेत्यादिवैदिकविधौ प्रत्ययार्थकार्यत्वस्य न प्रकृत्यर्थयागाद्यन्वयः संभवति । प्रकृत्यर्थाप्रनीतयोग्यताकत्वात् । तथाहि । यागादिक्रियायां कार्यत्वान्वये नियोज्यान्वयो हेतुः । नियोज्यविशिष्टायामेव पाकादिक्रियायां कार्यत्वान्वयदर्शनात् । अन्वयप्रयोजकरूपवत्त्वस्य तन्मते योग्यत्वात् । नियोज्यस्य च प्रकृते स्वर्गकामस्य नियोज्यत्वेन स्वफलकामनाप्रयुक्तकार्यताज्ञानविषयत्वेन संबन्धेन यागादिक्रियायामन्वये स्वर्गसाधनत्वेन ज्ञा-

यमानत्वं वा योग्यता । तच्च न संभवति । साक्षात्स्वर्गसाधनत्वस्य बाधात्, परंपरया तत्साधनत्वस्य परंपराघटकापूर्वज्ञानं विना दुर्ज्ञेयत्वात् । तथा च यागे नियोज्यान्वयासंभवान्न कार्यत्वान्वय इति । अथ शुचिः संध्यामुपासीतेत्यादौ नित्ये यथेष्टसाधनत्वज्ञानं विनापि शुचिनियोज्यकं संध्यावन्दनविषयकं कार्यमिति बोधस्तथा स्वर्गकामनियोज्यको यागः कार्य इति बोधः स्यादिति चेन्न । प्रकृते कामनाविशिष्टस्य नियोज्यत्वेन नित्यविधितो विशेषात् । न च कामनोपलक्षणमस्त्वात्ममात्रमेवोपलक्ष्यं, काम्यसाधनतालिङ्गककार्यताज्ञानस्य प्रवर्तकत्वेन नातिप्रसङ्ग इति वाच्यम् । तर्हि स्वर्गकाम इत्यस्य वैफल्यापत्तेः । कामनाया उपलक्षणत्वे नित्यइव वेदाधीनकार्यताज्ञानान्निष्कामस्यापि प्रवृत्त्यापत्तेः । इष्टसंबन्धे मानाभावादप्रवृत्त्यापत्तेश्च । नहि नित्यविधितः प्रकृते स्वर्गकामपदसमभिव्याहारादन्यो विशेषः । विशेषणत्वे हि विशिष्टस्य स्वप्रयोज्यकार्यताज्ञानवत्त्वरूपनियोज्यत्वेनान्वये तत्कामनाविषयसाधनत्वस्य योग्यतात्वात् स्वर्गकामपदैकवाक्यतानिर्वाहकप्रतीत्यनुपपत्त्या वाच्यमपूर्वं कामनाविशिष्टान्वयि सिद्ध्यति । अत एव प्रधानविधावेवापूर्वाकाङ्क्षा न नित्यविधावाग्नेयादिविधौ च । ममेदं कार्यमिति बोधवत्त्वरूपनियोज्यत्वे च कामनाया विशेषणतया प्रयोजकत्वं कामिनो जनकत्वमिति विशिष्टप्रयोज्यत्वम् । संबद्धत्वं च कर्तृत्वाधिकारित्वाभ्याम् । बोधे तूपलक्षणता ऽनयगत्या न क्षतिकरी । प्राथमिकनियोज्यान्वये विशेषणतयैवेष्टसिद्धेः । एतेन राजा स्वाराज्यकाम इत्यादौ राजत्वादिर्बुध्यमानत्वे सति व्यावर्तकत्वेन विशेषणत्वमप्यपास्तम् । कामनायामेव तत्कृतेरुदयात् । यदा कामना तदा तत्कृतिरिति रीत्या व्यावर्तकत्वसंभवाच्च । अतो यागे कार्यत्वान्वये नियोज्यान्वयो योग्यता । तत्र चेष्टसाधनत्वेन ज्ञायमानत्वम् । स्वर्गसाधनत्वस्य योग्यतात्वाभावादिति गुरुमतनिगर्वः ॥

अत्र काम्यसाधनत्वेपि तत्त्वेनाज्ञायमाने नियोज्यानन्वयात् काम्यसाधनत्वेन ज्ञायमानत्वमुक्तम् ।

यत्तु काम्यासाधनेपि तत्साधनत्वभ्रमान्नियोज्यान्वयादुपस्थितकाम्यसाधनत्वागृहीतासंसर्गकत्वमेव योग्यता, उपस्थित्यर्थमेवापूर्ववाच्यतासिद्धिरिति । तन्न । त्वन्मते योग्यताविशिष्टज्ञानस्यैव शाब्दबोधे हेतुत्वादन्यथाख्यात्यापत्तेः । एतेन तादृशज्ञानवतोऽपि नियोज्यस्य चिकीर्षाशून्यस्य न यागकृतिरिति न नियोज्यत्वं योग्यता, न वा चिकीर्षा, तद्वतो ऽप्युपादानप्रत्यक्षविरहिणो ऽसत्त्वादिति परास्तम् । अन्वयप्रयोजकत्वं नान्वितवृत्तित्वेन गृहीतत्वं, किं त्वनन्वितवृत्तित्वेनागृहीतत्वम् । तत्त्वं च यदा यस्य तत्त्वं तदा तस्य न योग्यतात्वं, किं तु विशिष्टनिष्ठतयोक्तनियोज्यत्वमेव, प्रयोजकतया तस्य विशिष्टनिष्ठत्वात् । चिकीर्षावत्त्वमपि तथेति चेत् । सत्यम् । किं तु तत्प्रयोजकत्वं तस्योक्तनियोज्यत्वद्वारकत्वेन गुर्विति तत्त्यागः । अत एव कृतिप्रयोजकत्वरूपकर्तृत्वत्यागः । कृतिसमवायित्वरूपं कर्तृत्व फलभावित्वरूपं चाधिकारित्वं न कामनायामिति न तयोर्विशिष्टनिष्ठत्वमिति प्रागेवोक्तम् । वस्तुतस्तन्मते ऽन्यथाख्यात्यभावाद्यागो मत्कृतिसाध्य इति ज्ञान कृतिशून्यस्य नास्त्येवेति न किं चिदेतत् । ननु योग्यतान्वये योग्यतान्तरापेक्षायामनवस्थापत्तेर्नियोज्यान्वयरूपयोग्यतान्वये न योग्यतान्तरापेक्षेति चेत् । सत्यम् । नियोज्यत्वस्य योग्यतारूपस्य स्वर्गकामे ऽन्वये योग्यतान्तरानपेक्षायामपि नियोज्यत्वेन रूपेण स्वर्गकामस्य पदार्थस्य धात्वर्थे यागे ऽन्वये योग्यतान्तरस्यावश्यकत्वात् । घटे छिद्रेतरत्वस्यान्वये योग्यतान्तरानपेक्षायामच्छिद्रेतरत्वेन घटस्यान्वये योग्याहरणत्वस्याहरणे योग्यजलत्वस्य जले योग्यतात्वात् । तथाहि, यथा घटादिमात्रेणाहरणाद्यसंभवाद् घटे छिद्रेतरत्वमाहरणे योग्याहरणत्वं जले च योग्यजलत्वं योग्यता, तथा स्वर्गादिमात्रस्य ममेदं कार्यमिति ज्ञानशून्यस्य यागाद्यन्वयसंभवात्स्वर्गकामे नियोज्यत्व क्रियायां काम्यसाधनत्वेन ज्ञायमानत्वं योग्यता, नित्ये तु शौचादिमत्त्वमेव योग्यतेति बोध्यम् ।

अथापूर्वरूपकार्येपि न नियोज्यान्वयसंभवः । अपूर्वस्य प्रागनुपस्थित्या तत्र काम्यसाधनत्वरूपयोग्यताज्ञानासंभवादिति चेन्न । विशिष्यापूर्वत्वेन ज्ञानासंभवेपि कार्यत्वेन तस्य काम्यसाधनत्वज्ञानसंभवेन नियोज्यान्वयसंभवात् । ओदनत्वेन तृप्तिसाधनतया ज्ञाते ओदने तृप्तिकामान्वयवत् समानप्रकारकत्वेनैव योग्यताधियो नियोज्यान्वये हेतुत्वात् । अपूर्वलाभस्तु योग्यताबलात् । यागजन्यं कार्यं स्थायि प्रकृतकाम्यसाधनमित्यपूर्वस्यैव विषयत्वाद्, यागजन्यस्य कार्यान्तरस्यातथात्वात् ॥ एतेन साक्षात्साधनत्वान्वययोग्यतारूपं स्थायित्वं प्रागपूर्वानुपस्थित्या ऽसंभवीत्यपास्तम् । कार्यत्वावच्छिन्ने क्वचित् स्थायित्वज्ञानसंभवात् । साक्षात्साधनत्वस्य नियोज्यान्वययोग्यतारूपस्य योग्यतात्वेनैवोपस्थितेस्तत्र योग्यतान्तरानपेक्षणाच्च । स्वर्गकामो यजेतेत्यादिवाक्यश्रवणे स्वर्गसाधनं स्थायि कार्यं संभवति स्वर्गकामान्वययोग्यं, यागस्त्वस्थायीत्यनुपपत्तिज्ञानादपूर्वं वाच्यं सिध्यतीत्यनुपपत्तिज्ञानमेव योग्यताज्ञानमित्यन्ये ॥

लिङेव फलकरणत्वान्वितं स्वार्थमाहेति न्यायप्रदीपः ॥

प्रवृत्तिजनकशाब्दबोधक्रमस्तु नियोज्यस्वर्गकामीयं यागविषयकं स्वर्गसाधनं स्थायि कार्यं ममेति प्रथमो बोधः ॥ स्वर्गकामे नियोज्यत्वं संसर्गतया प्रकारतया वा भासते । नियोज्यस्वर्गकामीयो यागः कार्य इति द्वितीयः । अन्यथा ऽतीन्द्रियस्याफलस्य स्वतन्त्रकृत्यसाध्यतया यागकृतिसाध्यस्य यागे कार्यत्वान्वयबोधं विना ऽनुपपत्तेः । नियोज्यस्वर्गकामः स्वनियोज्यकस्वर्गसाधनत्वेन ज्ञायमानकार्यो यागानुकूलकृतिमानिति व्यापारवानिति वा तृतीयः । अन्यथा पूर्वप्रतीतकृतेराश्रयान्वयं विना ऽनुपपत्तेः । आख्यातवाच्यव्यापारसामान्यस्य कर्तृसाकाङ्क्षत्वात्प्रथमान्तपदोपस्थाप्ये ऽन्वयबोधनियमाच्च तदन्वयं विना ऽनुपपत्तेर्वा स्वर्गकामो यागजन्यफलभागिति चतुर्थो बोधः । अन्यथा ऽनधिकारिणः कर्तृत्वानुपपत्तेः । मत्कृतिसाध्यो यागः, अहं च कर्ता ऽधिकारी चेति पञ्चम इति केचित् ॥

विवरणकारस्तु अत्र बोधत्रयमेवावश्यकं तावतैव प्रवृत्तिसिद्धेरित्याह ॥

निबन्धकारस्तु आद्यबोधद्वयोत्तरमहं स्वर्गकामः कर्ता भोक्ता चेति विरोधात्प्रवृत्तिमाह ॥

इदं गुरुमतं तु मद्विहितसूत्रवृत्तौ मया
विचार्य कुसुमाञ्जलौ बहु च दूषितं भूषितम् ।
अपेक्षितमथाप्युपेक्षितमिदं कठोरत्वतः
शिशुपतिविबोधनार्थकृतभाट्टचिन्तामणौ ॥

नैयायिकास्तु इष्टसाधनत्वकृतिसाध्यत्वबलवदनिष्टाननुबन्धित्वज्ञानानामन्यतराभावे चिकीर्षाऽजननात्सर्वेषां तज्जनकत्वमविवादम् । अन्यथा चन्द्रमण्डलादावपि चिकीर्षापत्तेः । एवं च प्रवृत्तिजनकलिङादीनां विनिगमनाविरहेण त्रितयेपि शक्तिः, पुष्पवन्तशब्दवच्च युगपदर्थत्रयबोधेनैका शक्तिः । शक्तित्रयेण वा युगपद्बोधः । अन्वयश्च तेषां धात्वर्थे । अतस्त्रितयमित्याहुः ॥

अत्रेदमवधेयम् । कृतिसाध्यत्वं न विधिवाच्यम् । कृतौ यागानुकूलत्वबोधेन समानसंवित्संवेद्यतया यागे कृतिसाध्यत्वस्यापि भानात् । एवमिष्टसाधनत्वमपि न वाच्यम् । तस्यापि यागस्वर्गयोः साध्यसाधनभावबोधेनैव भानात् । अनन्यलभ्यस्य च शब्दार्थत्वात् । न च तत्र तत्प्रकारकबोधार्थं शक्तिकल्पनम् । इष्टत्वावच्छिन्नसाध्यतानिरूपितसाधनताज्ञानस्यैव प्रवर्तकत्वादिति वाच्यम् । स्वर्गकामपदेन तत्रेच्छाविषयत्वबोधाद् यागे तत्साधनत्वबोधेनैवेष्टसाधनत्वस्यापि बोधात् । स्वर्गो ऽनिष्टं यागो वा ऽसाधनमिति बोधे स्वर्गकामादिपदार्थबोधाभावेनैव तद्वाक्यजन्यप्रवृत्त्यभावोपपत्तेः । एवं बलवदनिष्टाननुबन्धित्वमपि न वाच्यम् । अर्थवादेनैव तद्बोधात् । क्लमायासादिरूपानिष्टे इष्टोत्पत्तिनान्तरीयकदुःखाधिकत्वाभावबोधनेनैव बलवदनिष्टाननुबन्धित्वस्य लाभात् । किं चेष्टसाधनकृतिसाध्यबलवदनिष्टाननुबन्धिज्योतिष्टोमाभिन्नयागानुकूलकृतिमान् स्वर्गकाम इति बोधे आख्यातार्थकृतेर्विशेष्यतया प्रकारतया च भाने वैरूप्यापत्तिरित्यादि दिक् ॥

अत्राभिधीयते ॥ अभिधैव शब्दनिष्ठा प्रवर्तनारूपा विध्यर्थः, तथाहि । प्रवृत्तिर्द्विधा स्वेच्छाधीना पराधीना च । तत्राद्यायामिष्टसाधनत्वादिधीः कारणम् । अन्त्यायां राजगुर्वादेराज्ञाप्रेरणादिधीः । अनिच्छन्तमपि राजा मां प्रवर्तयतीत्यनुभवात् । तेषां च प्रवृत्तौ प्रत्येकरूपेण न हेतुत्वं, व्यभिचाराद् गौरवाच्च । किं तु इच्छादिनिष्ठप्रवर्तनात्वप्रकारकज्ञानं हेतुः । तच्चायं मां प्रवर्तयति विधिर्मां प्रवर्तयतीत्याकारकम् । प्रवर्तना च प्रवर्तयितुः परप्रवृत्त्यनुकूलव्यापारविशेषः । स च चेतनस्य राजादेराज्ञादिः । वेदे वक्तुरभावादचेतनस्य वेदस्याभिधानामकः कश्चिच्छब्दसमवेतो ऽलौकिकः । तथा च राजाज्ञादिज्ञानाद्यथा प्रवृत्तिस्तथा विधेरभिधाज्ञानादिति सैव लिङर्थः । सा च शब्दाश्रितत्वात् शब्दशक्तिः शब्दव्यापारत्वाच्च शाब्दभावनेत्युच्यते । भावनापदस्य व्यापारवाचकत्वात् । अत एवाख्यातार्थो भावनापि व्यापार एव । ननूक्तयुक्त्या ऽभिधादिपदाभिधेयत्वादिना ज्ञानादप्रवृत्तेश्च प्रवर्तनात्वेनैवाभिधाज्ञानं प्रवृत्तिहेतुस्तेन तज्ज्ञानं च कथं स्यात्, किं चाभिधाया अचेतनवेदरूपकर्तृशक्तित्वेन तस्यां व्युत्पत्त्यसंभवश्चेति चेन्न । प्रवर्तनात्वविशिष्टे लिङ्त्वावच्छिन्नशक्तिस्वीकारात्तत एव तज्ज्ञानात्तथैव व्युत्पत्तेः । तथाहि । स्तनपानार्थं रुदन्तं स्वं पश्यन्त्या मातुः स्तन्यदानार्थं प्रवृत्तिमुपलभ्य तज्जनकं ज्ञानं जिज्ञासुः स्वरोदनेन स्वाभिप्रायरूपप्रवर्तनानुमानमेव मातुः परिशेषात्तथेति प्रतिसंधत्ते, ततश्च प्रयोजकवृद्धवचनश्रवणजन्मप्रयोज्यवृद्धस्य प्रवृत्तिं दृष्ट्वा तस्य तद्वाक्यजं प्रवर्तनाज्ञानमनुमिनोति । ततस्तस्य किं हेतुरिति जिज्ञासायां वाक्यमेव तथा ऽवधारयति । तदुक्तम् ।

अभिधाभावनामाहुरन्यामेव लिङादयः ।
अर्थात्मभावना त्वन्या सर्वाख्यातस्य गोचरः ॥

इति । अर्थात्मत्वमर्थविषयकत्वमर्थाश्रितत्वं वा । तथा चार्थनिष्ठत्वादर्थभावना फलोत्पत्त्यनुकूलकृतिनोदनादिव्यापाररूपा ऽऽख्यातत्वावच्छिन्नशक्त्या चेतनाचेतनकर्तृसाधारणी कर्तृशक्तिः । द्विविधापि भावना नियमतः कर्मकरणेतिकर्तव्यतारूपांशत्रयसाकाङ्क्षा तत्त्रितयसाकाङ्क्षत्वमेवोभयानुगतं भा-

वनापदप्रवृत्तिनिमित्तम् । तत्र शब्दभावनाया अंशत्रयमाहुः । लिङोऽभिधा सैव शब्दभावना,भाव्या च तस्याः पुरुषप्रवृत्तिः, सबन्धबोधः करणं, तदीयप्ररोचना चाङ्गतयोपयुज्यते । अस्यार्थः । लिङो ऽभिधानामकस्ववृत्तिः स्वशक्तिरवश्यं वाच्या । न च तत्र मानाभावः । व्यापारभिन्नस्य परनिष्ठव्यापारजनकत्वं स्वनिष्ठव्यापारद्वारैवेति व्याप्तेः । चक्रभ्रमिजनकत्वस्य दण्डादौ स्वनिष्ठस्पन्दादिद्वारैव दृष्टत्वात् । तथा च लिङ्पदेनापि प्रवृत्त्यनुकूलेन स्वनिष्ठव्यापारो ऽवश्यं जननीय इति स एवाभिधात्मकः । व्यापारस्य व्यापारापेक्षायामनवस्था स्यादिति व्यापारभिन्नस्येति । व्यापारिणः स्वनिष्ठव्यापारार्जनेपि व्यापारापेक्षायामनवस्थापत्तेः परनिष्ठेति । शब्दे ज्ञानद्वारा प्रवृत्तिहेतुत्वात् सिद्धसाधनं स्यादिति शब्दनिष्ठाभिधासिद्ध्यर्थं स्वनिष्ठेति । किमित्याकाङ्क्षायां भाव्यमाह, भाव्या चेति । अर्थभावनैव शब्दभावनाभाव्येत्यर्थः । केनेत्याकाङ्क्षायां करणमाह । संबन्धबोध इति । अगृहीतलिङ्शक्तिकस्याप्रवृत्त्या संकेतग्रहस्य तत्सहकारित्वमित्याशयः । संकेतश्च तद्वाक्यघटकपदानां तत्तदर्थे,लिङश्च प्रवर्त्तनात्वादिविशिष्टे बोध्यः ॥ नन्विष्टसाधनताज्ञानं प्रवृत्तिमात्रे हेतुस्तथा च तद्विना प्रवर्त्तनामात्रज्ञानेपि कथं प्रवृत्तिरिति चेत् । सत्यम् । स्वर्गकामो यजेतेत्यादौ प्रथमतो लिङ्पदार्थयोरर्थभावनाशब्दभावनयोरन्वयबोधः प्रवर्त्तनाविषयकृतिरित्याकारको जायते । एकपदोपात्ततया धात्वर्थापेक्षया प्रत्यासत्तितारतम्यात्, तदुक्तम् ।

विधिभावनयोः श्रुत्या सङ्गतिः पूर्वमिष्यते ।

इति । प्रवर्त्तनात्वविशिष्टस्य च विषयतया ऽर्थभावनायामन्वये इष्टभावनात्वमिष्टं भावयति उत्पादयतीति व्युत्पत्त्येष्टसाधनत्वरूपं, योग्यता तस्य विध्यर्थेपि, क्रियागतमिष्टसाधनत्वं न विध्यर्थे इत्येतन्मते विशेषः । अर्थभावनाया इष्टसाधनत्वं क्रियागतेष्टसाधनत्व विना नेत्याक्षिप्तक्रियेष्टसाधनत्वधीरपीति प्रवृत्तिर्नानुपपन्नेति । तत्र आख्यातोपस्थितार्थभावना किं केन कथमित्यंशत्रयं क्रमेणापेक्षमाणा किमिष्टं कुर्यादित्याकाङ्क्षायां यागस्य कष्टत्वेन करणत्वेन चासाध्यतया यागेनान्यद्भावयेदिति । किमिदं तदन्यदित्याकाङ्क्षायां स्वर्गकामपदसमर्पितमसिद्धतया साधनापेक्षं स्वर्गमेवार्थभावनाभाव्यत्वेन स्वीकरोति । श्रुतिवृत्त्या हि पदार्थभूतस्य स्वर्गकामस्य भाव्यत्वमुच्यमानं विशेष्यबोधे विशेषणे स्वर्गे पर्यवस्यति । तथा च यागेन स्वर्गं भावयेदिति फलितं, यागकरणिका स्वर्गफलिका प्रवृत्तिः प्रवर्त्तनाविषय इति बोधः । यत्र च समभिव्याहृतानुपस्थितं फलं तत्र प्रकरणादिना, तेषामप्यभावे ऽर्थवादेन विधिसापेक्षेण, तस्याप्यभावे विश्वजिन्न्यायेन फलविशेषः कल्प्यते । यद्यपि पुरुषप्रवृत्तिरूपभावनानिष्पाद्यो यागस्तत्र न करणं तथापि फलावच्छिन्नभावनायां विशेषणे करणत्वे करणत्वोपचार इति फलोद्देश्यकप्रवर्त्तककृतिविषयत्वमेवात्र करणत्वं, दण्डेन घटं करोतीत्यादौ लोकेपि हि तथैव करणत्वम् । केनेत्यस्यापि किंविषयिणी कृतिः स्वर्गसाधनमित्यर्थ इत्यन्ये ॥ अत्र यागकरणकत्वविशिष्टे लक्षणेति प्राञ्चः ॥ वस्तुतः करणत्वं यागस्य संबन्धो वाक्यार्थ एव ज्योतिष्टोमादेस्तत्राभेदेनान्वयो निराबाधः । इत्थं च कथं विनष्टेन यागेन स्वर्गो भाव्य इति प्रतीत्यवसानेन्तरापूर्वकल्पनेति संबध्यते, ततः कथमपूर्वं यागेन कर्तव्यमित्यपूर्वभावनायामित्थंभावेन संयुज्यमानमितिकर्तव्यताजातमपूर्वप्रयुक्तमुच्यते । ततः प्रकारापेक्षायां समिधो यजतीत्यादिवाक्यैरिष्टविशेषापेक्षैः स्वाधिकारवाक्यैकवाक्यतया दर्शपूर्णमासभावना प्रयाजादिभावनोपेता ऽपूर्वं साधयतीत्यवगते प्रयाजादीनां तादर्थ्येन समन्वये पश्चादुपकारत्वं कल्प्यते । तदयं भट्टमते बोधक्रमः । स्वर्गकामनिष्ठा यागकरणिका स्वर्गफलिका प्रयाजादीतिकर्तव्यताका भावनेत्यर्थभावनाबोधः । विधिनिष्ठा शक्तिग्रहकरणिका स्तुत्यर्थवादोपकृता प्रवर्तनेति शब्दभावनाबोधः शक्तिकल्पनेन लक्षणया वोपपद्यते । ततो निरुक्तार्थभावना निरुक्तप्रवर्तनाविषय इत्येकवाक्यतया महावाक्यार्थबोधः । अत एव विध्युपरक्ता भावना लिङर्थ इति भट्टसिद्धान्तः । विधिः प्रवर्तना तदुपरक्ता तद्विशिष्टार्थभावना लिङ्प्रतिपाद्येत्यर्थः । अर्थभावनाविशेषणत्वेनैव शब्दभावनाया अन्वयः । राजादिकृताज्ञादेस्तथैवान्वयात्, तदन्वयेन योग्यत्वेन प्रवर्तनायामपि बलवदनिष्टाननुबन्धीष्टसाधनत्वं लभ्यते । न सुरां पिबेदित्यादौ प्रतिषेधवाक्यार्थोपीत्थमेवोन्नेयः । एवमन्ये ऽप्यन्वयबोधाः स्वयमूह्या इति ॥

अथ विधेर्भेदः । तत्र विधिस्त्रिविधः । अपूर्वविधिर्नियमविधिः परिसंख्याविधिश्च ॥

विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति ।
तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते ॥

अत्यन्ताप्राप्तविषयप्रापको विधिरपूर्वविधिः । यथा व्रीहीन्प्रोक्षतीति । अत्र प्रोक्षणमत्यन्ताप्राप्तम् । पक्षे प्राप्तस्याप्राप्तांशपूरणफलो विधिर्नियमविधिः । यथा व्रीहीनवहन्तीति व्रीहीणां पुरोडाशद्वारा यागसाधनत्वस्य तुषविमोकसाधनीभूतावघातनखविदलनान्यतराक्षेपकतया ऽवघातस्य पक्षप्राप्तत्वात् । एकस्मिन्प्रधाने नियतप्राप्तस्याङ्गद्वयस्यैकस्मिन्नङ्गे नियतप्राप्तस्य प्रधानद्वयसंबन्धस्यान्यतरनिवृत्तिफलको विधिः परिसंख्याविधिः । यथा गृहमेधीये आज्यभागौ यजतीति । इमा-

मरुभ्यान्नशनामृतस्येत्यश्वाभिधानीमादत्तइति च । अत्रातिदेशेनाज्यभागतदितराङ्गयोर्गृहमेधीये मन्त्रे च मन्त्रलिङ्गेनाश्वगर्दभरशनादानसंबन्धयोर्नियतप्राप्ततया तद्विधेरितरनिवृत्तिफलकत्वात् । न च विधीनामाक्षेपातिदेशलिङ्गानपेक्षप्रवृत्तिकतया ऽप्राप्तावघातादिप्रापकत्वेनापूर्वविधित्वमिति वाच्यम् । विधानवेलायां विधिमात्रस्यापूर्वविधित्वे ऽपि फलतो नियमादिव्यपदेशात् । न चैवमपि नियमपरिसंख्याविध्योरितरनिवृत्तिफलकत्वस्यैवकारेण विवरणस्य च तुल्यतया भेदो न स्यादिति वाच्यम् । अप्राप्तांशप्राप्तेर्विधेयावघातनिष्ठतया शीघ्रोपस्थितत्वेन लाघवेन च फलत्वसंभवे लिङ्गोपस्थितिकाया निष्पादिन्याश्च निवृत्तेः फलत्वायोगात् । मन्त्रविधौ तु नियमस्य फलत्वासंभवादितरनिवृत्तेरेव फलत्वमिति । नन्वेवमप्यपूर्वविधिलक्षणमग्निहोत्रं जुहुयात्स्वर्गकामः, अथातोऽग्निमग्निष्टोमेनानुयजतीतिविध्योरव्याप्तम् । एतद्विधिविषययोरग्निहोत्रचयनयोरुत्पत्तिविधिप्राप्तत्वात् । न चोद्देश्यसबन्धित्वेनेत्यप्राप्तेर्विशेषणमिति वाच्यम् । तथापि तमुक्थ्येनेत्यादिविधावव्याप्तेः । उद्देश्योक्थ्यादिसंबन्धेनातिदेशतश्चयनादिप्राप्तेः । न चायं प्रकृतावुत्तरवेद्या सह विकल्पितस्य उक्थ्ये ऽतिदिष्टस्य नियमो ऽङ्गान्तरपरिसंख्या वा, गौरवात् । उपपादितं चाप्राकरणिकस्यापि चयनस्य वाक्येन प्रकृतिभूतज्योतिष्टोमाङ्गत्वमिवोक्थ्याद्यङ्गत्वं, तस्य चयनाश्रितगुणकामप्राप्तिः फलमिति दशमे । न चोद्देश्यसंबन्धित्वेन विधिविषयान्ययत्किंचित्प्राप्तिफलको विधिरपूर्वविधिरिति लक्षणम् । द्वादशाहिकगावामयनिकच्यनीकादिविध्यन्तर्गतयोरैन्द्रवायवाग्रं प्रथममहर्भवति अथ शुक्राग्रमिति विध्योरव्याप्तेः । रथन्तरबृहत्पृष्ठत्वेनैन्द्रवायवाग्रत्वादिप्राप्तेः सत्त्वादनैमित्तिकत्वबोधनद्वारा तद्विकृतौ वामदेव्यपृष्ठवति तत्प्राप्तिफलकत्वेनापूर्वविधित्वात् । न च यत्किंचित्संबन्धित्वेन यस्य कस्य चिदप्राप्तस्य प्राप्तिफलको विधिरपूर्वविधिरिति वाच्यम् । अवघातनियमस्यापि विकृतावाज्यधर्मप्राप्तिफलकत्वेनातिव्याप्तेः । तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशुयाजं पौर्णमास्यामन्तरा यजतीत्युपांशुयाजे कालविधावप्राप्तस्वर्गसंबन्धप्राप्तिफलके ऽव्याप्तेश्च । तत्रोद्देश्यान्यसंबन्धित्वेन यत्किंचित्प्राप्तिफलकत्वाभावात् । आपराग्निकहोमविधिसंदंशपठिते द्वे आहवनीये जुहोतीति विधौ गार्हपत्यान्वाहार्यपचनाधिकरणकचतुःसंख्याकहोमान्तरत्वकृतद्वङ्गत्वव्यावृत्तप्राप्ताग्निहोत्रहोमाभ्यासत्वसिद्ध्या तेषामभ्यासानामप्राप्तफलसंबन्धप्राप्तिफलकत्वात् । न च विधेयसंबन्धित्वेन यत्किंचित्प्राप्तिफलकत्वं विवक्षणीयम् । वैश्वदेवीं सांग्रहणीं निर्वपेद् ग्रामकाम इति विधौ संनिध्याम्नातानामामनहोमानामार्थवादिकग्रामफलसंबन्धव्यावृत्त्याङ्गत्वसिद्धिफलके ऽव्याप्तेः । दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति विधौ सर्वथा ऽव्याप्तेश्चेति चेत् ॥

अत्र पितृचरणाः । उद्देश्यविधेयफलान्यतराणामनिर्धारितस्वविरोधिप्राप्तिप्रयुक्तस्वाप्राप्तांशप्रापको विधिर्नियमः । अस्ति चेदं व्रीहीनवहन्तीत्युपायनियमे नियम्यावघातस्यानिश्चितस्वविरोधिनखविदलनप्राप्तिप्रयुक्तावघाताप्राप्त्यंशपूरकत्वात् । य, ज्जुह्वां गृह्णाति प्रयाजेभ्यस्तत्, यदुपभृति, प्रयाजानूयाजेभ्यस्तदित्युभयनियमे पुरोडाशं प्रथयतीति नियमे च । अत्र चोद्देश्यविधिविषययोः पाक्षिकत्वे सतीत्युक्तौ तमुक्थ्येनेति विधौ रथन्तरे प्रस्तूयमाने संमीलयेदित्यत्र चातिव्याप्तिः ! तद्वारणार्थमप्राप्त्यंशपूरणफलकेति । एवमपि सर्वेभ्यो दर्शपूर्णमासाविति विधेरप्राप्तस्वर्गान्यफलांशपूरणफलकत्वादतिव्याप्तिवारणाय स्वविरोधिप्राप्तिप्रयुक्तत्वमप्राप्तिविशेषणं, स्वर्गान्यफलप्राप्तेः प्रापकप्रमाणाभावप्रयुक्तत्वेन विरोधिप्राप्तिप्रयुक्तत्वाभावात् । एवमपि पृष्ठ्यः षडहो बृहद्रथन्तरसामा कार्य इति विधौ षडहांशतृतीयादिदिवसेषु बृहद्रथन्तरविरोधिवैरूपादिप्राप्तिप्रयुक्तस्वाप्राप्तिपूरणफलकत्वादतिव्याप्तिवारणाय निर्धारितत्वं स्वविरोधिप्राप्तेर्विशेषणम् । अत्र विरोधिप्राप्तेरनिर्धारितत्वान्नातिव्याप्तिः । न च हिरण्यगर्भः समवर्तताग्र इत्याघारमाघारयतीति नियमे ऽव्याप्तिः । अत्र पक्षप्राप्त्यभावादिति वाच्यम् । तस्यापूर्वविधित्वेनेष्टापत्तेः । न च नियमापूर्वस्य नियम्यजन्यत्वात्तत्र दृष्टार्थत्वान्नियमादृष्टकल्पनावश्यभावः; नियमापूर्वस्य हिरण्यगर्भमन्त्रस्य ज्ञानकालानवच्छेदकत्वान्नियमापूर्वजनकत्वाभावात् । एवमसमर्थमन्त्रविनियोगेषु उत्करे वाजिनमासादयति परिधौ पशुं नियुञ्जीतेत्यादिष्वपूर्वविधित्वं द्रष्टव्यमिति दिक् ॥

परिसंख्यात्वं च वैदिकप्रमाणेन केन चित्संबन्धेन द्वयोरेकसंबन्धत्वे लिङ्गादिप्रमाणप्रकृतविध्यनुपपत्त्यन्यतरेण समुच्चित्यनित्यप्राप्तयोरनुयोगितासंबन्धेन इतरनिवृत्तिफलकनञाद्यसमभिव्याहृतविधित्वम् । वर्तते चेदमश्वाभिधानीमादत्त इति शेषिपरिसंख्यायाम् । शेषित्वसंबन्धेनाश्वाभिधानीगर्दभाभिधान्योर्मन्त्रसंबन्धित्वेन प्राप्तयोरितरनिवृत्तिफलकत्वात् । इडान्ता प्रायणीया संतिष्ठत इति, शेषपरिसंख्यायां च यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान्गृह्णीयादिति नियमान्तरपरिसंख्यायां च । अस्य प्रकृतिविकृतिभूताना रथन्तरसाम्नामरथन्तरसाम्नां चैन्द्रवायवाग्रतासंबन्धित्वेन प्राप्तरथन्तरसामनिवृत्तिफलकत्वात् । वाग्वा एषा यदैन्द्रवायव इत्याश्रयान्तरपरिसंख्यायां च । अत्र ह्येवावपति इत्त एवोद्ध

षतीति पावमानगायत्रीबृहत्यनुष्टुब्भिन्नच्छक्परिसंख्यायां गायत्र्यादिषु तद्भिन्नच्छन्दसामस्यैवोद्गीतः प्रागसिद्धत्वेन प्राप्त्यभावादव्याप्तिवारणाय प्रकृतविध्यनुपपत्तीति । अत्र चैवकारोक्तपरिसंख्याबोधानन्तरमर्थप्राप्तिबोधः प्राप्तिसामर्थ्येनावापस्य ऋग्विषयत्वपरित्यागः सामविषयत्वं कल्प्यत इति । एवमप्यप्राप्तपरिसंख्येति नाव्याप्तिः । चत्वारो भवन्ति षडहा भवन्तीत्यपूर्वविधिषु षट्त्रिंशद्रात्रिक्रमप्रयोगसंबन्धितया प्राप्तषडहच्छन्दोमधर्माणां मध्ये छन्दोमधर्मनिवृत्तिषडहेष्वतिव्याप्तिवारणाय समुच्चित्येति प्राप्तिविशेषणम् । नहि षडहच्छन्दोमधर्माणामेकत्र समुच्चित्य प्राप्तिः । सप्तमादिषु छन्दोमधर्माणां प्राप्तेः । यदि चैककर्तृप्रयोगसंबन्धित्वेन प्राप्तिरस्तीति विभाव्यते तदास्त्येव परिसंख्याविधिरिति नातिव्याप्तिसंभावनापि । एतेन सर्वं ब्रह्मणे परिहरति सप्रियाय सगोत्राय ब्रह्मणे देयः । आग्नेया ग्रहा भवन्तीति विधिष्वतिव्याप्तिसंभावना परास्ता । सर्वर्त्विजां स्वस्वभागसंबन्धितया प्राप्तिसत्त्वेनैकत्र समुच्चित्य प्राप्त्यभावात् । सकलनियमविधिव्यावृत्त्यर्थं नित्येति । यावज्जीवमग्निहोत्रं जुहोतीत्यकरणनिवृत्तिफलके विधावतिव्याप्तिवारणायानुयोगितासंबन्धेनेति निवृत्तिविशेषणम् । अकरणनिवृत्तेः करणत्वरूपाया अनुयोगितासंबन्धेन तदभावात् । अत एवाभावाभावस्य भावरूपत्वम् । ननु तथापि क्रत्वर्थनिषेधेषु दीक्षितो न ददाति न जुहोति न पचतीत्यादिष्वतिव्याप्तिः । दीक्षितस्य क्रत्वर्थपुरुषार्थहोमादीनां समुच्चित्य प्राप्तिसत्त्वेनैतस्य पुमर्थहोमनिवृत्तिफलकत्वाद् इति चेत् । निषेधेषु विधित्वाभावाद्विधिपदेनैव तद्व्यावृत्तिरिति केचित् । नञाद्यसमभिव्याहृतेति वा विशेषणीयं, तेन न कुत्राप्यव्याप्त्यतिव्याप्त्यवकाश इति दिक् ॥

उभयभिन्नो विधिरपूर्वविधिः । प्राप्तिफलको विधिरिति लक्षणं तु नियमपरिसंख्ययोः फलत्वाभावे प्राप्तिरेव फलत्वेन पर्यवस्यतीत्यभिप्रायेणेत्याहुः ॥

केचित्तु अयोगान्ययोगव्यावृत्तिभिन्नफलको विधिरपूर्वविधिः, अयोगव्यावृत्तिमात्रफलको नियमो, ऽन्ययोगव्यावृत्तिमात्रफलको विधिः परिसंख्येति लक्षणान्याहुः ॥

परे तु तात्पर्यविषयतापर्याप्त्यवच्छेदकप्राप्तिमद्विधित्वमपूर्वविधित्वम् । एवं तात्पर्यविषयतापर्याप्त्यवच्छेदकनिवृत्तिमद्विधित्वं परिसंख्यात्वम् । तात्पर्यविषयतापर्याप्त्यवच्छेदकायोगव्यवच्छेदकत्ववद्विधित्वं नियमत्वम् । विषयताया अपि पर्याप्त्यङ्गीकारात् । यत्र त्वेकस्यैव विधेरुभयत्र तात्पर्यं तत्र संकरोपीष्ट एवेत्याहुः ॥ वर्तते चैतत्प्रोक्षणविधौ । प्रोक्षणप्राप्तिफलकत्वात् । नन्वग्नये वो जुष्टं प्रोक्षामीति मन्त्रस्य देवतार्थद्रव्यप्रोक्षणलिङ्गबलाद्धविःप्रोक्षणद्वारा कर्मार्थत्वावगमात्तत एव प्रोक्षणप्राप्तिः । यथा प्रकृतौ दीक्षाहुतीर्जुहोतीति विहितासु दीक्षाहुतिष्वाकूत्यै प्रयुजे ऽग्नये स्वाहेत्यादिषु षट्सु मन्त्रेषु लिङ्गक्रमप्राप्तेष्वग्निप्रयोगे पुनराकूतिमग्निमित्यादिषु षट्सु मन्त्रेषु पठितेषु षड्भिर्दीक्षयतीति वचनेन विनियुक्तेषु स्वाहालिङ्गबलाद्धोमद्वारा दीक्षार्थत्वे प्राप्ते लिङ्गाद्धोमप्राप्तिः । न च वाच्यं तत्र द्वादश जुहोतीति वाक्यं होमविधायकमिति । प्रकृतितः प्राप्तत्वेन विध्यनुवादकृतवैरूप्यप्रसङ्गेनानुवादत्वाद् । न च वाच्यमेकादश प्रयाजान्यजतीतिवदभ्यासविधिरयमिति । षड्भिर्दीक्षयतीति विधेरानर्थक्यापत्तेः । एतत्कृतदीक्षासंबन्धानुपपत्त्या होमद्वारकप्राप्त्या प्राकृतमन्त्रबाधापत्तेश्च । अस्तु वा मन्त्रगतद्वादशत्वं विधिः । होमप्राप्तिस्तु मन्त्रलिङ्गादेव । एकस्य वाक्यस्य सर्वथानर्थक्यापेक्षया गुणविधित्वस्य न्याय्यत्वादिति चेन्न । तार्किकप्राप्त्यनवधानदशायामेवापूर्वविधित्वात् । तार्किकप्राप्त्यालोचनेभ्युदयशिरस्कत्वप्रायश्चित्तप्राप्त्यध्वर्युकर्तृकत्वाद्यनेकप्रयोजनासिद्धेः । विधिना प्रोक्षणप्राप्तौ मन्त्रस्य लिङ्गेनाग्निप्रोक्षणादावुत्कर्षापत्तेः । न च ग्रहणावेक्षणवन्मन्त्रलिङ्गेन प्राप्तिरिति वाच्यम् । तयोरपि भक्तविधिनैव विध्यङ्गीकारात् । अतः पदार्थविध्यभावे मन्त्रस्यानङ्गतया तेन न पदार्थप्राप्तिसंभावनापि । दीक्षाहुतीनामपि द्वादश जुहोतीत्यभ्यासविध्यङ्गीकाराल्लिङ्गाच्च होमप्राप्तिः । तेन युक्तमुदाहरणमिति दिक् ॥

तत्रापूर्वविधिरुत्पत्तिविधिविनियोगविध्यधिकारविधिप्रयोगविधिभेदेन चतुर्धा । कर्मस्वरूपबोधको विधिरुत्पत्तिविधिः । यथाग्निहोत्रं जुहोतीति । अङ्गताबोधको विधिर्विनियोगविधिः यथा दध्ना जुहोतीति । फलसंबन्धबोधको विधिरधिकारविधिः यथा ऽग्निहोत्रं जुहुयात्स्वर्गकाम इति । स्वाङ्गानुष्ठानबोधको विधिः प्रयोगविधिः । स च नित्यकल्पो भिन्न उत्पत्तिविनियोगविध्युपजीवकश्च । न च किमर्थं तत्कल्पनमिति वाच्यम् । समानदेशकालकर्तृताया अन्येनालाभात् तल्लाभाय तस्यावश्यकत्वात् । अङ्गप्रधानविध्येकवाक्यताबोध एव प्रयोगविधिरित्यन्ये । नियमपरिसंख्याविधी प्रायेण विनियोगविषयावेवेतिदिक् ॥

सोपि विधिर्विषयभेदादष्टविधः । शुद्धधात्वर्थविधिः । अन्योद्देशेन धात्वर्थविधिः विशिष्टधात्वर्थविधिः । अन्योद्देशेन विशिष्टधात्वर्थविधिः । धात्वर्थोद्देशेनान्यविधिः । धात्वर्थोद्देशेनविशिष्टान्यविधिः । धात्वर्थोद्देशेनान्ययोः संबन्धविधिः । मुक्त्वा धात्वर्थमन्ययोः संबन्धविधिः ॥ उदाहरणानि । अग्नि-

होत्रं जुहोति । अग्निहोत्रं जुहुयात्स्वर्गकामः । सोमेन यजेत । दशापवित्रेण ग्रहं संमार्ष्टि । दध्ना जुहोति । य इष्ट्या पशुना सोमेन वा यजेत सोमावास्यायांवा । अत्र यागोद्देशेन पौर्णमास्यमावास्याविशिष्टविकल्पविधानात् । विकल्पितपौर्णमास्यमावास्याविधानाद्वा । प्राकाशावध्वर्यवे ददाति । अत्र प्रकृतदानोद्देशेन प्राकाशाध्वर्युसंबन्धविधानात् । दध्नेन्द्रियकामस्य जुहुयात् । अत्र मुक्त्वा धात्वर्थमन्यसंबन्धविधानादित्यष्टौ प्रकारा इति जीर्णाः ॥ धात्वर्थोद्देशेनान्यसंबन्धविधेरुद्देशेन विशिष्टविधितो भेदाभावात्सप्तविधत्वं युक्तम् । अत्र च पूर्वापेक्षया उत्तरोत्तरदौर्बल्यंप्रत्ययानां प्रकृत्यर्थान्वितस्वार्थाभिधायकत्वव्युत्पत्तितद्भङ्गाभ्यां द्रष्टव्यम् ॥

इति मीमांसकश्रीगागाभट्टकृतभाट्टचिन्तामणौ तर्कचरणे विधिभेदतत्प्रकारनिरूपणम् ॥

## ॥ अथ बालभारतस्य ॥

॥ स्त्रीपर्वारम्भः ॥

कुलयुद्धहताहितो हरि-
स्तपसे मुक्तकलत्रपुत्रकः ।
अविशच्छुचि यन्मनस्तपो-
वनमृद्धे स पराशरात्मजः ॥ १ ॥
स इतश्च जगाम संजयः
कृतफूत्कारमहारवः पुरम् ।
ह ह हा प्रहता स्म इत्यति-
प्रलपन् भूपतिवेश्म चाविशत् ॥ २ ॥
अथ भानुमतीमुखस्नुषा-
विदुरादिस्वजनव्रजान्वितम् ।
दयितायुतमेत्य संजयो
नृपतिं गद्गदया गिरा जगौ ॥ ३ ॥
अहमन्वहमेत्य विप्रियं
प्रियवर्गव्ययमभ्यधां तव ।
अधुनात्यहितं वदाम्यदः
शृणु वशीकृतहृन्महीपते ॥ ४ ॥
द्रुपदात्मजपाण्डवात्मज-
व्रजयुक्तं गुरुजादिभिर्बलम् ।
हरिसात्यकिपाण्डवोज्झितं
निशि हत्वाभिगतैर्निवेदितम् ॥ ५ ॥
अपमोहवशः स सौप्तिकं
प्रियमाकर्ण्य लसन्मनाः प्रगे ।
तनयस्तव हर्षितो ययौ
दिवमेकादशवाहिनीविभुः ॥ ६ ॥
युग्मम् ।
इति कोपनपद्मपन्नगी-
गरलोर्मिप्रवकल्पया गिरा ।
परिपेतुरुपेतमूर्च्छनाः
क्षितिपीठे क्षितिवल्लभादयः ॥ ७ ॥
मुमुहुर्मुहुरुत्थिता मुहु-
र्मुहुरालप्य मिथोऽतिदैन्यतः ।
क्व नु याम कथं भवाम किं
करवामेत्यरुदंस्तमाममी ॥ ८ ॥
प्रविकीर्णशिरोरुहां स्फुरत्-
परिकम्पां करुणप्रलापिनीम् ।
अवदन्नदृशं सभामिमा-
मथ शोको रसवत्तयास्पृशत् ॥ ९ ॥
धृतराष्ट्रसभेयमाविला
धरणिस्फालितमौलिजास्रजा ।
करुणस्य विलासकारणं
शुशुभे पल्लविनी वनीव सा ॥ १० ॥
विधिपर्यनुयोगहोक्तिहृ-
त्तटघातादिकविक्रियोज्झिता ।
अपि विस्मृतरोदकारणा
प्ररुरोदेव सभा सुनिर्भरम् ॥ ११ ॥
विनिमीलितचक्षुषो नम-
च्छिरसः[1] श्वासनतोन्नताङ्कृकाः ।
प्रसृताङ्घ्रियुगा लसद्भुजा
रुरुदुर्मन्द्रमचेतना जनाः ॥ १२ ॥
अथ विस्तृतवक्त्रकन्दर-
प्रविशद्दृग्जलसेचनादिव ।
अतिशोकविमूर्च्छितं मनः
कथमप्याप नृपस्य चेतनाम् ॥ १३ ॥

१—चुरसः इति पा० ।

विदुर द्युगतात्मजन्मन-
स्त्वमनाथस्य ममैकको गतिः ।
परिपालय मामिति ब्रुवन्
स धरापः पुनराप कश्मलम् ॥ १४ ॥
पुनरार्तमना जनाधिपः
प्रहितस्त्रैणसुहृज्जनोऽलपत् ।
विदुरेण च संजयेन च
प्रियया च प्रविभाजयन् शुचः ॥ १५ ॥
अपि भूरिचमूभरोचितः
किमपि स्वल्पकसैन्यशालिषु ।
ह ह हा प्रहता मदङ्गजा
व्रणलेशोऽपि न पाण्डवेष्वभूत् ॥ १६ ॥
क्व स सैन्यभरः क्व तद्बलं
सुहृदः सूतसुतादयः क्व ते ।
क्व भवांश्च सुयोधनः क्षितौ
क्षममन्यत् किमु भागधेयतः ॥ १७ ॥
कठिनं विधिना विनिर्मितं
हृदयं वज्रमयं मम ध्रुवम् ।
तनयव्ययदुःखपर्वत-
व्रजपातेऽपि न यद्व्यदीर्यत ॥ १८ ॥
अथ भूपमिति प्रलापिनं
प्रसभोल्लासितगद्गदस्वरः ।
परिधौतमुखो दृगम्बुभिः
प्रतिबोधाय जगाद संजयः ॥ १९ ॥
किमु शोचसि बुद्धिलोचन
स्फुटवेदागमतत्त्वशास्त्रवित् ।
तनयास्तव वीरवर्त्मना
यदवापुः पदमैशमद्भुतम् ॥ २० ॥
विदुरोऽपि जगाद सादरं
नृप शोकं प्रतिलोकवत् कृथाः ।
समुपेत्य कुतोऽपि कुत्रचित्
पथिकाभेषु गतेषु सूनुषु ॥ २१ ॥
निगदन्ति च रूपमात्मन-
स्तनयानित्यपि मा शुचं कृथाः ।
क्व इतीतरपद्धतिर्बहू-
कृतरूपः शुचमेति मन्त्रवान् ॥ २२ ॥
अधिकाधिकवैभवोद्भवे
नृप तेषां मुदितोऽसि सर्वदा ।
दिवमेषु गतेषु भूतला-
दधुना किं कुरुषे शुचं कृतिन् ॥ २३ ॥
तनया मम पाण्डवैः हता
मतिरेषापि तवास्तु मा शुचे ।
निहता निजकर्मणैव ते
भववर्ती स्वकृतैकभुग् यतः ॥ २४ ॥
तमथैत्य पराशरात्मभूः[1]
प्रतिबोधाब्धिसुधाकरोऽभ्यधात्[2] ।
किमु मुह्यसि ते दिवं गताः
सुखिनस्त्वां नृप न स्मरन्त्यपि ॥ २५ ॥
मृतयो हि भवानुकारिका
बत जन्तुं भवनित्यबालकम् ।
गमयन्त्यमुमङ्कमङ्कतः
कुरुते तन्ममतां मुधा जनः ॥ २६ ॥
अजनि स्वजनो न कस्य को
न भविष्यत्यथवा भवभ्रमे ।
जगदेककुटुम्बिनो जनाः
क्व विभिन्ने जनयन्तु तच्छुचम् ॥ २७ ॥
इति मा कुरु शोकमुर्वरा-
वर किंचाधमधीस्तवात्मजः ।
अवनाववतीर्णवान् कले-
रयमंशः कमलासनाज्ञया ॥ २८ ॥
अहमिन्द्रसदस्यगां पुरा
जगतीं तत्र गता जगौ सुरान् ।
विधिसंसदि कार्यमस्ति यत्
प्रतिपन्नं तदुपास्यतामिति ॥ २९ ॥
अथ तां जगतीं विधिर्जगौ
व्रज लोकं लघु धात्रि धारय ।

१ अपि सत्यवतीसुतोऽभ्यधात् इति पा० ।
२ गिरम् इति च पा० ।

धृतराष्ट्रसुत: सुयोधन-
स्तव कार्याणि करिष्यति द्रुतम् ॥ ३० ॥
दनुजावतरैर्नरै: कले-
रवतारो बहुभि: सहायवान् ।
भवितैष समन्तपञ्चके
निखिलक्षयिमृत्युकारणम् ॥ ३१ ॥
इति वेद्मि तवात्मज: कलि:
कलिनिर्माणनिजापराधत: ।
सहित: स्वसहायमण्डलै:
प्रलयं प्राप धराप मा मुह: ॥ ३२ ॥
इति गुह्यमवेत्य मुह्य मा
भज धैर्यं नृप धर्मवित्तम ।
त्वयि भक्तिपरोऽधिमोहित-
स्तव जीविष्यति नापि धर्मभू: ॥ ३३ ॥
सुकृतञ्च विधेर्विवर्ततो
मम वाचापि निजानसून् धर ।
पितृधी: करुणां करिष्यति
त्वयि धार्मिर्नृप पालयाद्य तम् ॥ ३४ ॥
इतिवाङ्मतभाङ्महीपति-
र्गतवत्याशु पराशरात्मजे ।
प्रचचाल समन्तपञ्चकं
प्रति बन्धूनभिशोचितुं व्यसून् ॥ ३५ ॥
स इतश्च कृती युधिष्ठिर:
परिदध्यौ गुरुनन्दनादिका: ।
पुरनि:सृतमेत्य धीदृशं
पृथगासन्निति मां चरा जगु: ॥ ३६ ॥
इयता समयेन तद्गत:
कुरुवर्षान्तिकमेव न: पिता ।
अनुयामि ततस्तमङ्गज-
व्ययकोपी लघु मां शपत्यसौ ॥ ३७ ॥
इति मङ्क्षु विचिन्त्य धर्मभू-
र्हरिशैनेयनिजानुजान्वित: ।
धृतराष्ट्रमुपेत्य तात ते
सुतवैरी नमतीत्युपानमत् ॥ ३८ ॥

अथ कौरववीरकामिनी-
रुदिताकर्णनगद्गदस्वर: ।
नृपतिर्नतविष्णुसात्यका-
नुजनामानि पितुर्न्यवेदयत् ॥ ३९ ॥
तमथो परिरभ्य बुद्धिदृक्
परिरब्धुं वकशत्रुमाह्वयत् ।
बलवांस्तनयान्तकारिणं
प्रहरिष्यन् भुजलीलयैव तम् ॥ ४० ॥
हरिणादित एव कारित-
स्तदभिप्रायविदाऽऽयसोऽर्पित: ।
परिपीड्य च वक्षसा पुमान्
रभसाद्भीमधिया द्विखण्डित: ॥ ४१ ॥
विनियुक्तसमग्रशक्तिना
विधुरोऽसौ रुधिरं वमन् मुखात् ।
न्यपतद्भुवि मूर्च्छया रया-
दथ सूतेन धृतोऽश्वसत् क्रमात् ॥ ४२ ॥
अथ तद्दलनास्तमत्सर:
प्रकटीभूतविवेकसंभ्रम: ।
ह ह हा किमघानि पाण्डव:
स मयैवं मतिलोचनोऽरुदत् ॥ ४३ ॥
प्रणतोऽथ हरिस्तमभ्यधा-
न्न स भीम: समहारि मा मुह: ।
छलितस्त्वमय:पुमर्पणा-
दिह नागायुतशक्तिमान् मया ॥ ४४ ॥
इतिवाक्प्रतिहार्षितं हरि:
कृतशोचं पुनराह धीदृशम् ।
अकृतेष्टवचा: स्वयं सुता-
नपिष: कुप्यसि किं वृकोदरे ॥ ४५ ॥
अवधार्य निजापराधत:
सुतवृन्दं हतमुर्वरावर: ।
सुकृतञ्च कृतं सुदुष्करं
तदिदं नोऽनुमनुष्व सर्वथा ॥ ४६ ॥
इतिवाचि जनार्दने जगौ
धृतराष्ट्र: स्मयमानमानस: ।

सुतशोकभरेण धर्मतः
प्रपतन् साध्वहमुद्धृतस्त्वया ॥ ४७ ॥

इतिगीरतिवत्सलोऽखिला-
नयमालिङ्ग्य विमत्सरस्ततः ।
विजयध्वमखण्डिताः परै-
रिति कल्याणमयीमुवाच गाम् ॥ ४८ ॥

धृतराष्ट्रमतास्ततो गता
लघु नन्तुं सुबलात्मजाममी ।
तपसस्तनयं तु सा शुचा
परितप्ता परिशप्तुमैहत ॥ ४९ ॥

तदवेत्य पराशरात्मभू-
र्द्युधुनीस्पर्शशुचिर्द्रुतागतः ।
सुबलस्य सुतां जगौ न गौः
सति शापाय नृपस्य तन्यताम् ॥ ५० ॥

तनयेन जयाशिषेऽर्थिता
भवती या सुकृते जयं जगौ ।
कुटिलेऽद्य सुते हते नृपं
किमु शप्तुं सति धार्मिमीहसे ॥ ५१ ॥

सुबलस्य सुता ततोऽवदन्-
मम ते दुर्नयिनो हताः सुताः ।
विदधे पुनरानिलिः सुयो-
धनदुःशासनयोरसद्वधम् ॥ ५२ ॥

अथ पार्वनिराह निर्मितं
यदकृत्यं जननि क्षमस्व ते ।
अपराधपरानपि क्वचित्
किमु माता तनुजान् जिघांसति ॥ ५३ ॥

कृतया सदसि प्रतिज्ञया
कुरुभूपस्य मयोरुराहतः ।
अधरस्तु न मे विलङ्घितो
युधि दुःशासनरक्तधारया ॥ ५४ ॥

अथ सक्रुधमाह सौबली
क्व तपःसूनुरनूनमत्सरः ।
समरे मम येन नन्दनोऽ-
गमि नैकोऽपि कुलस्य तन्तुताम् ॥ ५५ ॥

अथ धर्मसुतः कृताञ्जलिः
परिकम्पी पुरतः स्थितो जगौ ।
अयमस्मि सुतान्तकारिणं
शप मां मातरुदात्तपातकम् ॥ ५६ ॥

मम संहृतबन्धुपद्धते-
रसुभिः पापकलङ्कपङ्किलैः ।
सुकृतावतरेण सेव्यतां
तव शापच्छिदशापगापयः ॥ ५७ ॥

इतिवाचि नृपे न सौबली
किमपि स्माह विनिश्वसन्मुखी ।
स नमन् कुनखः पुनस्तया-
जनि पट्टान्तरदृष्टिवीक्षितः ॥ ५८ ॥

तमवेत्य भिया जयी ययौ
हरिपृष्ठाय परेऽपि तद्वसुः ।
उदयद्भयया ततस्तया
दधतो भीतिमतीव सान्त्विताः ॥ ५९ ॥

तदनु प्रणिपत्य तां तया-
नुमता नेमुरुपेत्य ते पृथाम् ।
कुलनाशभुवां दृशोरपां
वितरन्तीं प्रमदाश्रुणे पदम् ॥ ६० ॥

मखजामथ सूनुशोचिनी-
मधिरोप्याङ्कतटे प्रबोध्य च ।
तनयैश्च तया च संयुता
सुबलक्ष्मापसुतां पृथानमत् ॥ ६१ ॥

मखजामथ सौबली जगौ
किमु वत्से शुचमेषि पश्य माम् ।
विधिदृष्टमिदं समागतं
गतबन्ध्वात्मजयोरिहावयोः ॥ ६२ ॥

नियता नियतेर्नियोगत-
स्तनुभाजां मृतिरेति किं नु ते ।
द्युधुनीतरणे तथा रणे
मरणेनापि न यान्ति शोच्यताम् ॥ ६३ ॥

इति बोधमयीमियं धियं
दधती व्यासवितीर्णदिव्यदृक् ।

समलोकत संगराङ्गणं
पतितच्चचगणं यथास्थितम् ॥ ६४ ॥
धृतराष्ट्रयुधिष्ठिरादय-
स्तदनु व्यासगिरा रणाङ्गणम् ।
चलदाकुलवीरकामिनी-
कुलकल्लोलितशोकमासदन् ॥ ६५ ॥
अथ वीक्ष्य पलादसंकुलं
स्फुटचिह्नैर्वृतमङ्गिभिर्मृतैः ।
रुददङ्गणमङ्गणं युधः
सुबलक्ष्मापसुता हरिं जगौ ॥ ६६ ॥
मृगयस्व मुकुन्द कुञ्जरै-
र्घननीलैः कनकोज्ज्वलैर्भटैः ।
व्यसुभिर्वसुधा विभात्यसौ
तिमिरार्कांशुसमीकभूरिव ॥ ६७ ॥
नरदास्यकराङ्घ्रयोऽरुच-
न्निह निम्नाः चितयोऽस्रपूरिताः ।
यमपानकृतेऽम्बुवासिता-
रुणमैरेयनिखातभाण्डवत् ॥ ६८ ॥
विमलातपवारणच्छला-
दिह राकाचयचन्द्रमण्डलैः ।
पतितेषु मुखेषु भूभुजां
निजमित्रेष्विव मूर्च्छितं शुचा ॥ ६९ ॥
गलितैः शुशुभेऽच कुम्भिनां
रदमुक्ताफलकेतनाञ्चलैः ।
भटनिर्दलितासुहृद्यश-
स्तरुशाखाकुसुमच्छदैरिव ॥ ७० ॥
इह रक्तमये पयोनिधौ
शिखिपत्रातपवारणैर्बभे ।
जलदैरिव पातुमागतैः
क्वचिदुत्पातनियोगवृष्टये ॥ ७१ ॥
हतभूपतिवृन्दरण्डिता-
श्च्युतकर्तर्यसिचक्रकेतनात् ।
चतकङ्कणवेणिकुण्डला-
वलिमोक्षन्निह दिग्जयश्रियः ॥ ७२ ॥

चुटिताखिलसंधिनि स्थिताः
कवचे लूनवपुष्टया बभुः ।
क्रमुकद्रुमवल्करोपिता
इव भोज्याय यमेन दोर्भृतः ॥ ७३ ॥
पतितैः कलिताखिभिर्भृशं
कनकाभैर्भुजशालिनां भुजैः ।
नकुलैर्धृतपन्नगैरिव
प्रमदः कालसभासदां ददौ ॥ ७४ ॥
यमकिंकरबालकव्रजै-
र्नवशिक्षातरणाय सज्जिताः ।
इह तुम्बफलोच्चया इव
चतजाब्धौ भटमौलयो बभुः ॥ ७५ ॥
इदमुल्ललितायमुच्चकैः
स्थितमाभाति शताङ्गमण्डलम् ।
रथिनस्त्रिदिवालयं गतान्
स्वयमन्वेतुमिवादृतोद्यमम् ॥ ७६ ॥
प्रविकीर्णपुटाजिनं बभा-
विह निस्वानकदम्बमुन्मुखम् ।
पलसंचयनाय कौणपैः
परितो भाण्डघटेव सज्जिता ॥ ७७ ॥
अवलोकय कृष्ण जिष्णवो
जगतामप्यवहन्त ये धुरम् ।
भुवि ते पतिता विधेर्वशा
धिगहो यान्ति पलादखाद्यताम् ॥ ७८ ॥
प्रतिरोमपृषत्कमण्डली-
परिविद्धः परिदूरिताननैः ।
पिशितग्रसनाय जम्बुके-
रयमाघ्राय विमुच्यते मुहुः ॥ ७९ ॥
भषणोऽस्य वपुष्यसावस्र-
क्कपिशाभं पिशितस्य शङ्कया ।
शरशल्यमदन् चताननः
स्वपलेनैव विगाहते मुदम् ॥ ८० ॥
पतितस्य करेण बिभ्रतः
शरमेकेन परेण कार्मुकम् ।

लघु दूरममुष्य यान्त्यमी
चकिताः फेरवगृध्रवायसाः ॥ ८१ ॥
गमितः शतखण्डतामयं
रिपुणा कोपपरेण मार्गणैः ।
मुदितेन समेत्य फेरुणा
सकुटुम्बेन विभज्य भुज्यते ॥ ८२ ॥
अयमस्य दृशि क्षिपन् मुखं
अतिपाशे पतितैककङ्कमः ।
करटो विरटन् धुतच्छदः
करटैः कैर्न रटद्भिरीक्ष्यते ॥ ८३ ॥
पिशितग्रसनात्ततृप्तयः
कतिचित् क्रव्यभुजः पिबन्त्यमी ।
सुभटासिहतिद्विखण्डित-
द्विरदेन्द्रप्रकरोदरोदकम् ॥ ८४ ॥
पिशितार्थमुपागतैर्निशा-
चरचक्रैर्नरचक्रतो धुताः ।
कुपिता इव यान्ति जम्बुका-
दय एते व्यसुरक्षसां कुलम् ॥ ८५ ॥
इह डिम्भविदंशदंशिनः
पलभुग्दम्पतयः स्मरातुराः ।
रसयन्ति रसात् करोटिभि-
श्चषकाभैः रुधिरासवं नवम् ॥ ८६ ॥
नलकास्थिपुटस्रुतं घृतं
नवमस्तिक्ययुतं निशाचरी ।
अभिभोजयति प्रियं शिशू-
नपि सेयं पिशितैकभुक् स्वयम् ॥ ८७ ॥
प्रखरैः क्षुरकादिकायुधैः
पतितानां भुजिमां ह हा निजैः ।
इह जाङ्गलखण्डखण्डने
सहकारित्वमधारि रक्षसाम् ॥ ८८ ॥
पललैः कवलीकृतैस्तृषं
कलयन्तो नितरां निशाचराः ।
नखभिन्नशवौघदृङ्मयीं
जलधारां परितः पिबन्त्यमी ॥ ८९ ॥

कृतरक्तविलेपनाः प्रिये-
र्जनितान्त्रावलिहारवल्लयः ।
पलभुक्सुदृशोऽत्र रासकैः
कटु गायन्ति किरीटिपौरुषम् ॥ ९० ॥
न निरीक्षितुमप्युपाचरै-
रपि शक्याः सुकृतैकराशयः ।
व्यसवोऽप्यतिशायिकान्तयः
सुखसुप्ता इव भान्ति केऽप्यमी ॥ ९१ ॥
द्युवधूः खलु दिव्यमूर्तिना
परिरब्धाप्यमुनास्य विग्रहम् ।
अतिदिव्यममुं विलेपना-
भिपतद्भृङ्गमिवाकटाक्षयत् ॥ ९२ ॥
परितोऽब्धुधियालिपद्धति-
र्नृपतेरस्य मुखे व्यसोरपि ।
अमला मणिकुण्डलांशुभि-
र्निपतन्ती चलचामरायते ॥ ९३ ॥
विमलातपवारणोदरे
पतितो मौक्तिकभूषणांशुमान् ।
अधिदुग्धपयोधिकुण्डलत्-
फणिसुप्ताच्युतवद् विभात्ययम् ॥ ९४ ॥
अपरोऽपि भुजाभृतां गणः
पलभुग्भिर्द्रुतमेष मुच्यते ।
त्वरिताभिपतत्तदङ्गना-
सुसतीत्वप्रभया भयाकुलैः ॥ ९५ ॥
विविधैरुपलक्षणैः क्षणा-
दुपलक्ष्य प्रमदाजनः प्रियान् ।
किमु वक्ति कथं विचेष्टते
परिमग्नः शुचि पश्य केशव ॥ ९६ ॥
किमु नाथ विरक्तवान्
भवान् मयि यन्मामपि वीक्ष्य नाकृषः ।
करिकुम्भतटान्मधुप्रियः
कुचदेशादिव पाणिपल्लवम् ॥ ९७ ॥
अनुकूल ममाद्य धृष्टतां
प्रिय किं दर्शयसेऽधुनापि यत् ।

असिमुञ्चसि न स्वपाणितो
वरवेणीमिव साहसप्रिय: ॥ ९८ ॥
अपि शत्रुशरक्षतैर्वृतो
नखचिह्नैरिव शौर्यसंपद: ।
प्रिय मङ्क्षु परिष्वजस्व मां
विधुराहं त्वयि नैव मानिनी ॥ ९९ ॥
नवरागरसाद्विलोकसे
द्युवधूं यद्यनिमेषया दृशा ।
प्रथमां दयितां ततो न मां
किमु दाक्षिण्यवशादपीक्षसे ॥ १०० ॥
परिरम्भणचुम्बनादिकं
विजितं केलिदुरोदरे मया ।
वितराशुतरां तदद्य मे
प्रिय निद्रास्यनृण: सुखीव किम् ॥ १०१ ॥
समरश्रमभित्तये रणो-
रुधिरोत्क्लिन्नशरीर एव मे ।
परित: परिरम्भणोत्सवं
न पुरेवाद्य करोषि किं प्रिय ॥ १०२ ॥
अपराधपरस्य ते नति-
र्न मयामानि ततोऽसि मानभाक् ।
अधुना पदयो: पतामि ते
द्रुतमुत्तिष्ठ कृपां कुरु प्रभो ॥ १०३ ॥
अणुसंचलनेऽपि जागृया-
मितिवादिन् रुदतीं प्रियाद्य माम् ।
नवजागरणारुणेक्षण:
कथमाकृष्य कचेर्न चुम्बसि ॥ १०४ ॥
मदुरस्तव मानिनोऽपि य:
सततभ्यासवशोऽस्पृशद्रसात् ।
प्रियमामपि वीक्ष्य पार्श्वगा-
मधुना सोऽप्यलस: कथं कर: ॥ १०५ ॥
उपधाय कुचौ मम स्थितो
दिनदानश्रमवान् निशासु य: ।
हृदयेश कर: स ते क्षितौ
रणखिन्न: किमशेत संप्रति ॥ १०६ ॥

न्यपतन्मुहुरेत्य मन्मुखे
कविगोष्ठीरसितोऽपि यत् तव ।
किममीलि तदप्यदस्त्वया
नयनं नाथ मदागमेऽधुना ॥ १०७ ॥
मयि यन्नच दु:प्रलापवान्
नच जागर्षि रवेरपीदृशै: ।
कुतुकात् प्रिय तत् त्वया धृता
छलनिद्रावगतोऽसि यच्छ माम् ॥ १०८ ॥
इति शोकमयोक्तिविह्वला:
स्रवदश्राविलगण्डमण्डला: ।
गुरुमोहवशा वदन्त्यमू-
र्दयितान् प्राणवियोगिनोऽङ्गना: ॥ १०९ ॥
उपलक्षयसे न मत्कुचौ
किमिमौ कुम्भयुगेषु कुम्भिनाम् ।
इति काचिदियं प्रलापिनी
प्रियपाणिं तरसा हृदि व्यधात् ॥ ११० ॥
किमु मत्परिरम्भलोभत-
स्त्वमुपेतोऽसि पुरोऽतिदूरत: ।
इति वागियमीशितु: पृथक्
पतितं पाणिमुरस्यरोपयत् ॥ १११ ॥
अधिकृत्तमरातयेऽर्पितं
प्रभुणा वेणिधृतं निजं शिर: ।
इयमुत्पुलका चुचुम्ब च
व्यसुतां प्राप च वीरवल्लभा ॥ ११२ ॥
शतखण्डितमङ्गमीशितु:
सकलं न्यस्य यथास्थितं क्रमात् ।
परिरभ्य मुदाप मूर्च्छनं
यदियं प्राप तदेव मृत्युताम् ॥ ११३ ॥
इति युद्धधरावलोकिनी
पतितं वीक्ष्य सुतं सुयोधनम् ।
सुबलस्य सुता विमूर्च्छिता
पुनरुद्धुध्य जगाद केशवम् ॥ ११४ ॥
यदवादि मया रणोद्यमे
न सुत: सैष जयेति भाषया ।

तदिमां ध्रुवमाययौ दशां
सह बन्धुस्वजनैः सुयोधनः ॥ ११५ ॥
विविधैरिति भाषणैर्मुहु-
र्विहिताक्रन्दभरा हृदीशितुः ।
बत भानुमती दृगम्बुभिः
स्वयमन्तःस्नपनं करोत्यसौ ॥ ११६ ॥
वपुषो हरते रजोऽञ्चले-
र्विकृषत्यङ्गुलिभिस्तृणं मुखात् ।
गमयत्यसृगश्रुभिः स्नुषा-
निवहोऽयं दयितेषु मामकः ॥ ११७ ॥
इयमच्युत मौलिमीशितुः
स्वयमङ्के विनिवेश्य बालिका ।
स्वजने त्वयि दत्तदीनदृग्
विलपन्ती वदतीदमुत्तरा ॥ ११८ ॥
श्वसुरेष सुतः प्रियः सदृक्
तव रूपे विनये नये जये ।
किमु सर्वग पश्यति त्वयि
छलिभिर्भूरिभिरेकको हतः ॥ ११९ ॥
अभिचुम्ब्य हृदीशितुर्मुखं
पुनरालोक्य निजाश्रुभिः प्लुतम् ।
स्मृतसात्त्विकवारिविभ्रमा
विधुरेयं रुदती वदत्यमुम् ॥ १२० ॥
प्रिय विप्रियवानहं त्वया
नहि पृष्टापि युधि द्रुतं यता ।
किमु विप्रियकारिणीमिव
प्रलपन्तीमपि मां न भाषसे ॥ १२१ ॥
यदि दत्तमुरः सुरस्त्रियै
प्रिय तन्मां वलितारुणेक्षणः ।
कटु रे रटसीह किं वदे-
त्यपि रोषाद्दयितापि मे मुदः ॥ १२२ ॥
प्रिय तादृगगोरपौरुषः
स्फुटमेकोऽपि रणैककर्कशः ।
मदभाग्यसहायतां विना
क्व सहस्रैरपि हन्यसे द्विषाम् ॥ १२३ ॥

सततं मयि साम तन्वतः
प्रिय मन्ये तव विस्मृता रुषः ।
धृतकोपलवस्य तत्कृते
पुरतः स्थातुमपीश्वराः परे ॥ १२४ ॥
तनयस्य तदैव वैरतः
कति तातेन न जघ्निरे परे ।
नयनोत्सव तैर्घनैरपि
प्रिय नैको बबले पुनर्भवान् ॥ १२५ ॥
यदि वेद्मि तपांसि तान्यहं
सुरबालाभिरलाभि यैर्भवान् ।
द्विगुणानि विधाय तानि तत्
प्रिय ताभ्योऽपि भवन्तमानये ॥ १२६ ॥
भवदाननदर्शने सदा
प्रिय यन्निर्निमिषत्वमासदम् ।
अनिमेषविलोचनासु म-
द्रमतः किं तदगामि पश्य माम् ॥ १२७ ॥
अपि साप्तपदीनमुच्यते
महतां सङ्गतमङ्ग शाश्वतम् ।
तदहं सहसेयमुज्झिता
किमु षण्मासविलासवल्लभा ॥ १२८ ॥
इति तारविलापिनीमिमा-
मियमाकृष्य विराटमागता ।
अनुरोदयतेऽपि रोदसी
न सुदेष्णा करुणारवेण किम् ॥ १२९ ॥
त्रिदिवेऽप्सरसो भुवि प्रियाः
पुलकस्वेदभृतो भजन्त्यमुम् ।
द्रुपदं स्वरभेदवेपथु-
प्रलयस्तम्भविवर्णताश्रिताः ॥ १३० ॥
अपकृष्य कृपीं विमूर्च्छितां
स्फुटधूमच्छलधार्मिदुर्यशः ।
गुरुसंस्करणं द्विजोत्तमा
विरचय्य द्युधुनीं व्रजन्त्यमी ॥ १३१ ॥
रसना ननु मद्भूपते-
र्वृषतेजोवधपापलुप्तये ।

पलभुक्पतगक्षुधानले
सरलेह स्वमहो जुहोत्यसौ ॥ १३२ ॥
दयितस्य शिरोऽतिदूरतो
द्रुतमानीय नियोज्य वर्म्मणि ।
प्रियभूमिरसाविहातपो
गृहमेहीत्यभिवक्ति मत्सुता ॥ १३३ ॥
अवलोकय पश्य सुभ्रुवो
विगतेर्ष्याः सममेव केशव ।
शयनस्थितमाप्तपञ्चतं
बत भूरिश्रवसं श्रयन्त्यमूः ॥ १३४ ॥
अयमीशितुरध्वरोद्धुरो
हठकण्ठग्रहकृन्मृगीदृशाम् ।
द्विजराजिषु गोसहस्रदः
प्रतिपक्षान्तकरः करः परः ॥ १३५ ॥
इति भर्तृभुजं प्रपातितं
स्वयशःशाखिशिखावदैन्द्रिणा ।
समुदस्य भुजोऽङ्गुलीदले-
ष्वभिचुम्ब्य प्रलपन्त्यमूर्मुहुः ॥ १३६ ॥
स्वभुजौ नटयन्नकारय-
न्मम पुत्रं भुवि दुष्कृतानि यः ।
वृषसेनसुषेणयोरियं
जननी शोचति तं हतं परैः ॥ १३७ ॥
शकुनिः पतितोऽयमात्मजान्
मम यन्मन्त्रनियन्त्रितान् शतम् ।
अजुहोदनुजक्रुधानल-
त्विषि धार्मिर्भुवि लब्धुमिन्द्रताम् ॥ १३८ ॥
इति सूनुशुचा विमूर्च्छिता
पुनरासादितचेतना स्म सा ।
हरिमाह न मत्कुलं त्वया
किमिवारक्षि लयोदयक्षम ॥ १३९ ॥
अयमीदृगुपेक्षितस्त्वया-
जनि कृत्स्नोऽपि कुलक्षयो मम ।
इति षट्त्रिंमितेऽस्तु वत्सरे
भवतोऽप्यच्युत गोत्रविप्लवः ॥ १४० ॥

हरिराह पुरो हसन्नसौ
मम दैवाद्भवितान्वयक्षयः ।
शुचमेमि न तेन शोच मा
त्वमपीमान् भवितव्यताहतान् ॥ १४१ ॥
जगतामनिवारया तृषा
विधुरासि द्रुतमेहि जाह्नवीम् ।
शुचमुज्झ पिबोज्ज्वलं जलं
तनयेभ्यो ददती जलाञ्जलीन् ॥ १४२ ॥
इति विश्वविदा मुरच्छिदा
तृषितेयं प्रकटीकृतस्पृहा ।
चपयावददाः करोमि किं
सुतशोकादपि दुःसहास्तृषः ॥ १४३ ॥
समरव्यसुवीरमण्डल-
स्फुटसंख्यानगतिर्युधिष्ठिरः ।
धृतराष्ट्रनृपेण तत्क्षणं
परिपृष्टो निजगाद दिव्यदृक् ॥ १४४ ॥
कोट्योऽष्टषष्टिर्वीराणां६८०१२००००द्वादशायुतसंयुताः ।
जघ्निरे समरेऽमुष्मिन् महःसंहतिदुःसहाः ॥ १४५ ॥
दशपञ्च च षष्टिश्च शता७५००न्युत्कटतेजसाम् ।
हतानि राजराजानां सुरराजजितामपि ॥ १४६ ॥
चतुर्दशसहस्राणि लक्षाणि१४००००००००रणदक्षिणाः ।
विकटाः सुभटाः पेतुरिह पातितशत्रवः ॥ १४७ ॥
तुल्यं ज्वलन्मखशतानलप्रवणपावने ।
रणोत्सङ्गे हुताङ्गास्तेऽभूवन् शतमखोपमाः ॥ १४८ ॥
मर्तव्यमिति योद्धारोऽप्रीता गन्धर्वतां गताः ।
पराङ्मुखा रणेऽस्त्रेण हता गुह्यकतामगुः ॥ १४९ ॥
न स्वामिभक्त्यै नो कीर्त्यै न जयाय दिवे नवा ।
आवेशादेव ये युध्वा मृतास्ते ब्रह्मतां गताः ॥ १५० ॥
वीरेन्द्ररूपरौद्रत्वक्ष्वेडाभियुग्यमर्दनैः ।
मृता रक्ताब्धिपातैर्ये जग्मुस्तेऽप्युत्तरान् कुरून् ॥ १५१ ॥
लोमशस्य प्रसादेन तीर्थयात्राचरः पुरा ।
यां दृष्टिमासदं दिव्यां सर्वं पश्याम्यदस्तया ॥१५२॥
इत्युक्त्वाथ तपःसूनुरादिशन्मृतसंस्कृतौ ।
तत्रेन्द्रसेनं विदुरयुयुत्सुसंजयान्वितम् ॥ १५३ ॥

श्रीखण्डकृष्णागुरुरोचितासु
चितासु तैस्तत्क्षणमाहितानि ।
धूमोर्मिभिः कीर्तिपटा भटानां
स्फुटं नभोऽन्तः सुरभीबभूवुः ॥ १५४ ॥

अथो मिथः कण्ठकृतग्रहाणां
स्त्रीणां तदाक्रन्दरवस्तथासीत् ।
यथाभवत् तत्प्रियभोगभाजा-
मप्यश्रुपातः सुरसुन्दरीणाम् ॥ १५५ ॥

स्वर्गं गतानामथ बान्धवानां
प्रवृत्तिमाप्रष्टुमिव प्रयातः ।
स्वर्गस्रवन्तीसलिलैः क्रियोत्कः
पार्थोऽम्बिकासूनुयुतः सवर्गः ॥ १५६ ॥

येऽत्र क्षेत्रे क्षत्रियाः कीर्तिशेषा-
स्तेषामेतद्दत्तमक्षय्यमस्तु ।
इत्युक्त्वोच्चैरम्बिकासूनुमुख्याः
कृप्तस्नानाः कल्पयामासुरम्भः ॥ १५७ ॥

सद्यः प्रोद्यद्दुःखसंघट्टमूढो
गूढं कुन्त्या श्रावितो भानुवृत्तम् ।
अर्णः कर्णायापि धार्मिस्तदानी-
मश्रोर्मिश्रं दत्तवान् सोदराय ॥ १५८ ॥

सत्त्वक्रीतसुरर्द्धिवीरविधुरक्रन्दत्कुरङ्गीक्षणा-
श्रेणीसाञ्जनबाष्पजातयमुनासंभेदशोभाजुषः ।
जाह्नव्याः पुलिनावनीं विमलयन्नात्मोपवेशात् तत-
स्तेने सत्यभुवः शुचामवगलद्रागः प्रयागश्रियम् ॥ १६९ ॥

भेजे श्रीजिनदत्तसूरिसुगुरोरर्हन्मतार्हस्थितेः
पादाब्जभ्रमरोपमानममरो नाम व्रतीन्द्रः कृती ।
तद्वाग्योजि स बालभारतमहाकाव्येऽधितैकादशं
बोधप्रक्रमसूक्तपद्धतिसखे स्त्रीपर्व निर्व्यूढताम् ॥ १६० ॥

एकेनानेन सर्गेण स्त्रीपर्वणि विनिश्चितम् ।
शतद्वयमिह स्पष्टमष्टोत्तरमनुष्टुभाम् ॥ १६१ ॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रविरचिते बालभारतनाम्नि महाकाव्ये वीराङ्के स्त्रीपर्वकीर्तनो नाम एकोनचत्वारिंशः सर्गः ॥ ३९ ॥ पर्व ११ ॥ :: :: ॥

## ॥ अथ बालभारतस्य ॥

### ॥ शान्तिपर्वारम्भः ॥

ओंकारः स यदाद्येकवर्णोऽपीशत्रयीमयः ।
व्याप विश्वानि तान् वेदान् न्यस्यन् व्यासमुनिर्मुदे ॥ १ ॥

अथ त्रैलोक्यकल्याणकन्दमन्दाकिनीतटे ।
तत्राजग्मुः शमारामनीरदा नारदादयः ॥ २ ॥

जलाञ्जलिविरामेऽपि नेत्राञ्जलिगलज्जलः ।
शौचान्तेऽपि सुहृच्छोकादकिंचित्करणस्थितिः ॥ ३ ॥

धर्मभूः किमपि ध्यायन् विन्ध्यस्मारीव वारणः ।
ऊचे देवर्षिणा कर्णपेयपीयूषवर्षिणा ॥ ४ ॥

युग्मम् ।

दिष्ट्यासि कुशली राजन् किंचिच्छाय इवेक्ष्यसे ।
हताहितसमूहोऽपि दग्धेन्धन इवानलः ॥ ५ ॥

जित्वाप्यरीन् रणास्कन्दमन्दसंक्रन्दनोऽधमान् ।
लब्धेऽतिकष्टादिष्टेऽपि राज्ये राजन् विषीद मा ॥ ६ ॥

अथ निःश्वस्य विश्वस्य विभुरूचे ह हा हताः ।
यदर्थमर्थ्यते राज्यं राज्यार्थं तेऽपि बान्धवाः ॥ ७ ॥

यत्रोत्पत्तिस्तदेव स्वं महसे दहतः कुलम् ।
उद्गातं दुर्यशोभिर्मे धूमैरिव हविर्भुजः ॥ ८ ॥

विषस्य सोदरैव श्रीः क्रियया नु ततोऽधिका ।
समग्रकुलनाशाय यद्भोगैकस्पृहापि हा ॥ ९ ॥

स्मरन् मातुर्गिरं योऽस्मान् वध्यकोटिगतान् मुहुः ।
ररक्ष मित्रदाक्षिण्यारब्धयुद्धोऽपि बान्धवान् ॥ १० ॥

जघ्ने कृतघ्नैरस्माभिः सोऽपि विश्वत्रयीजयी ।
सहोदरो महीमज्जत्स्यन्दनव्यसनस्थितः ॥ ११ ॥

युग्मम् ।

तदीदृग्लोभचण्डालचण्डालिङ्गनदूषितः ।
अस्पृश्योऽहमितो यामि जीवितुं विजने वने ॥ १२ ॥

ते सव्यसाचिसाचिव्यभाजः पान्तु धरां शराः ।
वैरस्य हेतुर्द्वेधापि न योग्या मादृशामसौ ॥ १३ ॥

अकिंचिच्चिन्तकः शान्तकण्डूतिर्मृगघट्टनैः ।
वत्स्यामि मुनिरेकाकी जीर्णपर्णाशनो वने ॥ १४ ॥

इत्युक्तिभाजि भूजानौ गिरं भेजे धनंजयः ।
सकोपविनयाटोपकटुकोमलकौशलाम् ॥ १५ ॥

अलब्धे रागिणो लोका अहो लब्धे विरागिणः ।
हेमन्ते तापमीहन्ते हन्त ग्रीष्मे हिमं मुहुः ॥ १६ ॥

गेच्छद्भवान् वने राज्यमिच्छन् राज्येऽधुना वनम् ।
उन्मत्त इव लोकेश लोकेनाप्युपहस्यसे ॥ १७ ॥

विधिरिन्द्रे दरिद्रे च दिदेश कृपया पृथक् ।
धर्ममध्वरदानैश्च तपोध्यानैश्च तारणम् ॥ १८ ॥

तद् दुःस्थेन वनस्थेन नेश यद्यादृतं तपः ।
तदिदानीं श्रितः स्वाम्यं मनः कुरु मखादिषु ॥ १९ ॥

अथ सद्यः समुत्पन्नदुग्धदुर्धरया गिरा ।
कोपेन कलुषीकृत्य विनयं पावनिर्जगौ ॥ २० ॥

वेधसा पङ्गमीचक्रे धिगकिंचनकृद्भवान् ।
मध्याङ्गुलीवाङ्गुलीनां मध्येऽस्माकं मुधा गुरुः ॥ २१ ॥

नास्माकं कोऽप्युपायोऽस्ति विश्ववीरजितामपि ।
त्वत्कनीयस्त्वनामैकं व्यसनं येन तीर्यते ॥ २२ ॥

द्विष्टानामपि दुष्टानां रक्षणं यस्य लक्षणम् ।
तद्वनं चेत् प्रियं तत् किं हता देवव्रतादयः ॥ २३ ॥

मग्नोऽसि राज्यकष्टेऽपि यदि कातरहृतया ।
तत् तपःकष्टदष्टः सन् विमनाः किं करिष्यसि ॥ २४ ॥

अयाचितजलाहारा वल्कभाजो जटाजुषः ।
किं नीडशिरसो वृक्षाः भवं घ्नन्ति विना मनः ॥ २५ ॥

क्षताः क्षमार्थिताः पूर्वं सर्वं अय तपोऽधुना ।
वयं ज्येष्ठानुगा भूप भूहत्यापतनुत्वयि ॥ २६ ॥

इति संहृतवाक्येऽस्मिन्नूचतुश्चतुरौ गिराम् ।
यमौ जलदगर्जान्तोद्रेककेकिरवच्छविम् ॥ २७ ॥

इष्टदीनसुपात्रादिभुक्तशेषभुजां विभो ।
गृहिणां स्पृहणीयैव गतिर्यतिवरैरपि ॥ २८ ॥

तपोभिर्यतयः कष्टं राजन् वाञ्छन्ति विष्णुताम् ।
गृहं तु गृहिणामेत्य विष्णुर्यज्ञं शमिच्छति ॥ २९ ॥

नयी विश्वयतिस्तोमपुण्यषष्ठांशभाङ्नृपः ।
यतिः स्वपुण्यभाग् विद्धि कः कृतिन् सुकृती तयोः ॥ ३० ॥

तत् पालय महीपाल महीमेनां मनोयतिः ।
तुल्यं जनकवद्भुङ्क्ष्व फलं राज्ययतित्वयोः ॥ ३१ ॥

दशनद्युतिहारेण हारिणीमथ भारतीम् ।
रसनाञ्चलदोलायां दोलयामास पार्षती ॥ ३२ ॥

भिन्नारयो भवद्भक्तप्रसादोत्काः सहोदराः ।
नानन्द्याश्चेत् प्रभो तत् ते कृतघ्नस्य व्रतेन किम् ॥ ३३ ॥

क्षालनं वज्रलेपेऽपि म्लेच्छेऽपि स्यात् पवित्रता ।
न घटेत कृतघ्ने तु क्वापि पापप्रतिक्रिया ॥ ३४ ॥

सुकृतेन कृतज्ञानामधः कुर्याद्दिवं धरा ।
दुःकृतेन कृतघ्नानां नोल्लसन्ती ध्रियेत चेत् ॥ ३५ ॥

त्वदालिङ्गनहृद्योक्तिराज्यभोगैः कृतज्ञं ते ।
धन्याः सहेलं खेलन्तु सोदराः सफलश्रमाः ॥ ३६ ॥

इत्यमीषां वचोवीचिप्रपञ्चैरपि भूपतेः ।
स्वबन्धुवधदुःखाग्नितप्तं न शमितं मनः ॥ ३७ ॥

अथ हृज्ज्ञानपीयूषपयोधिलहरीं गिरम् ।
दन्तांशुफेनिलां व्यासस्तच्छोकाग्निच्छिदेऽकिरत् ॥ ३८ ॥

दैवाद्यस्य यथा मृत्युरस्ति स म्रियते तथा ।
मशकोऽपि गजेनापि न शक्यो हन्तुमिच्छया ॥ ३९ ॥

तद्भूनाथ मयामाथि कुलं स्वमिति मा मुहः ।
कस्तान् विश्वजितो वीरान् हन्ति स्वैः कर्मभिर्विना ॥ ४० ॥

स्यात् पृथक् पथि पान्थानां यथा सङ्गः क्षणं क्वचित् ।
तथैव भविनां तत् कः शोकं तद्विरहे वहेत् ॥ ४१ ॥

क्वाचितौ शोकहर्षौ वा यतो भावान् लवे लवे ।
ऐन्द्रजालिकवत् कालो दर्शयत्यन्यथान्यथा ॥ ४२ ॥

राजन् शोचसि किं बन्धून् कालेन कवलीकृतान् ।
ग्रस्यन्ते लीलया येन त्रिलोकीकारिणोऽपि ते ॥ ४३ ॥

शुचं मुञ्च तवेदानीं कालः पालयितुं प्रजाम् ।
न प्रजापालनादन्यो राज्ञां धर्मोऽस्ति यौवने ॥ ४४ ॥

जीवतो राज्यभोगेन व्यसून् ब्राह्मणतर्पणैः ।
बन्धून् प्रीणय भूपाल त्वद्दुःखाद्दुःखिनो द्वये ॥ ४५ ॥

अथास्मिन् विरते विष्णुर्वितेने जिष्णुसंज्ञया ।
क्ष्मापसंतापनाशाय मुखाब्जमधुभारतीम् ॥ ४६ ॥

कः करोति कृती शोकं राजन् परिजनार्तिदम् ।
न बलन्ते मृता येन न च जानन्ति यत् कृतम् ॥ ४७ ॥

सुहृदो दूरगस्यापि यद्यैश्वर्यश्रुतिर्मुदे ।

दिवि भोगभुजः शोच्यास्तत् किं ते बन्धवस्तदा ॥४८॥
करस्थं लालयेन्मृत्युः करी कवलवज्जनम् ।
यदा रुचिस्तदा भुङ्क्ते ततः शोच्येत को मृतः ॥ ४९ ॥
मृत्योश्चरा इव मुहुर्निमेषा वेगिनोऽङ्घ्रिनाम् ।
आयान्ति दृक्पथे जीवग्रहावसरमीक्षितुम् ॥ ५० ॥
अकस्मादेव कुत्रापि कदापि गमनेच्छया ।
जनं विश्वासयन्तीव श्वासाः शश्वद्गतागतैः ॥ ५१ ॥
जगज्जीवातवस्तेऽपि श्रीरामभरतादयः ।
जाता न वेति संदेहदोलायां कालतो गताः ॥ ५२ ॥
जीवितं हन्त जन्तूनां नयनोन्मेषचञ्चलम् ।
सुखश्रीयौवनादीनां का तदंस्पृशां कथा ॥ ५३ ॥
कृत्यं किंचित् करे कार्यं तिष्ठत्यायुषि गत्वरे ।
तमिस्राविद्युदुद्द्योते च्युतं द्रव्यमिव द्रुतम् ॥ ५४ ॥
एष जीवितकल्पद्रुश्चतुर्वर्गफलप्रदः ।
शोकाद्यमलकीलाभिः क्लीबा विफलयन्ति तम् ॥ ५५ ॥
तद्भूलोकपते शोकं मुञ्चामुं चातुरीमय ।
गृहाण जीवितस्यास्य काले कालोचितं फलम् ॥ ५६ ॥
राज्ये यज्ञादिलीलाभिः सफलीकुरु यौवनम् ।
वार्द्धके तु धराधीश युक्तं मुक्तिकृते तपः ॥ ५७ ॥
इत्यादिवाग्भिरन्यैश्च प्राग्भूपचरितैर्मुहुः ।
बोधितो विष्णुना तैश्च शुचावोचद्युधिष्ठिरः ॥ ५८ ॥
धिङ्मां बन्धुवधोद्भूतैः प्राग्भूतैर्मम पातकैः ।
आकाशे कालिकोत्प्रेक्षां करिष्यन्ति कवीश्वराः ॥५९॥
अपि जन्मसहस्राणि वह्नौ मे जुह्वतो वपुः ।
क्षयं यास्यति गाङ्गेयघातकस्य क्व पातकम् ॥ ६० ॥
इति शोकातुरस्वान्तं विलपन्तमिलापतिम् ।
गिरा मधुरया व्यासमुनिराश्वासयन् जगौ ॥ ६१ ॥
निघ्नतो यदि धृतास्त्रान् गुरूनपि न हन्ति यः ।
राजन् स क्षत्रधर्मैकलोकपापेन लिप्यते ॥ ६२ ॥
युधि यः क्षत्रधर्मस्थो हन्ति वा हन्यतेऽथवा ।
गीर्वाणैरपि पूज्येत तौ पुण्यौ पुष्पवृष्टिभिः ॥ ६३ ॥
अपापस्तदसि क्ष्माप प्रसन्नः पालयावनिम् ।
यदि मिथ्याभिशङ्कास्ति वाहमेधं विधेहि तत् ॥ ६४ ॥
अभिनन्द्य निजं राज्यमानन्द्य प्रकृतीः कृतिन् ।
पश्य पुण्याय गाङ्गेयं शरशय्याचरं गुरुम् ॥ ६५ ॥
इति कृष्णमुनीन्द्रेण श्रीकृष्णेन च बोधितः ।
पुरेऽविशत् पुरस्कृत्य धृतराष्ट्रं युधिष्ठिरः ॥ ६६ ॥
महेन महता भूपः स विभूष्य सभाभुवम् ।
द्विजान् धौम्यपुरस्कारानपूजयदुपस्थितान् ॥ ६७ ॥
दुर्योधनसुहृत् तत्र चिदण्डिमुनिवेषभाक् ।
मणिहृप इवाङ्गारश्चार्वाकः कोणपोऽविशत् ॥ ६८ ॥
पापागार कुलाङ्गार धिक् त्वामित्यादि भूपतौ ।
वचोऽभूत् तन्मुखाच्चित्रं चन्द्रादिव हलाहलम् ॥ ६९ ॥
द्विजा विज्ञाय राज्ञे च तं निवेद्य क्रुधादहन् ।
हुङ्कारप्रोत्थितेनाग्निदैवतेनेव हृज्जुषा ॥ ७० ॥
शक्यो हन्तुं हरेणापि नैष द्विजरुषं विना ।
इत्युक्त्वा तद्वधप्रीतो हरिरप्रीणयन्नृपम् ॥ ७१ ॥
तादृग्युद्धोत्थबाह्यान्तस्तापमण्डलखण्डनम् ।
अथाभिषेकं भूपस्य चक्रुस्तीर्थोदकैर्द्विजाः ॥ ७२ ॥
स पूर्वभूमिभृद्भद्रासनवर्ती श्रितः श्रिया ।
राजा विराजयामास विश्वं विश्वंभरातलम् ॥ ७३ ॥
शिवं शक्त्यान्वितमिव प्रत्यक्षं धाम्नि धर्मजः ।
धृतराष्ट्रं प्रियायुक्तममन्यत सुहृन्मतः ॥ ७४ ॥
यौवराज्ये मरुत्पुत्रं विदुरं मन्त्रकर्मणि ।
धनंजयं जयोद्योगे संजयं व्ययचिन्तने ॥ ७५ ॥
नकुलं बलरक्षासु धौम्यं द्विजजनार्चने ।
सहदेवं सहस्थित्यां स्थितिज्ञोऽथादिशन्नृपः ॥ ७६ ॥
युग्मम् ।
संस्थाप्य मन्त्रिणो नुत्वा हरिं रत्नमये ददौ ।
स भीमार्जुनयोर्दुर्योधनदुःशासनौकसी ॥ ७७ ॥
कौरवावसथानित्थमन्येभ्योऽपि विभज्य सः ।
गिरा हरेरलुब्धात्मा लब्धप्रशमनं व्यधात् ॥ ७८ ॥
श्राद्धं विधाय बन्धूनां भूपानथ यथाविधि ।
धर्मात् तेभ्यः प्रपाकूपसत्रकल्पानकल्पयत् ॥ ७९ ॥
विष्णुं जिष्णुनिकेतस्थमन्येद्युः क्षणदात्यये ।
शश्वदन्तर्दृशा दृष्टं दृग्भ्यां द्रष्टुं नृपोऽगमत् ॥ ८० ॥
सिंहासने समासीनं ध्यानलीनं हरिं नृपः ।
शैलेऽम्बुदमिवालोक्य केकीव मुदितो जगौ ॥ ८१ ॥

त्वद्धामनेत्रकुमुदक्रीडानित्यमधुव्रती ।
विभावरीविभा नेयं सुखभावेन ते विभो ॥ ८२ ॥
अथावादिनि गोविन्दे पुनराह नराधिपः ।
विश्वैकध्येय किं ध्यानं दीपमर्के इवासृजः ॥ ८३ ॥
इतिवाचि नृपेऽवाचि दृशावुन्मील्य विष्णुना ।
यो मां ध्यायति राजेन्द्र तं ध्यायामि स मामिव ॥ ८४ ॥
उत्तराशां गतप्राये तपने तनुमुक्तिधीः ।
दध्यौ मामधुना भीष्मस्तमहं मनसागमम् ॥ ८५ ॥
अथ प्रीत्याभ्यधाद्भूपो भगवन् भवदुत्सुकम् ।
भीष्मं यामः स मे धर्मान् वक्तु त्वद्दर्शनाव्ययः ॥ ८६ ॥
श्रुत्वैतदचलद्भूपभीमबीभत्ससात्यकैः ।
मुकुन्दः स्यन्दनी स्कन्दसहोदरदिदृक्षया ॥ ८७ ॥
व्यधादिहान्तरे शान्तमनाः शान्तनवः स्तवम् ।
ऋषिव्रातवृतः शौरेर्भावपूजानवस्रजम् ॥ ८८ ॥
नमः स्वयमविश्वाय विश्वज्ञानाय विष्णवे ।
सर्वाङ्गलीनसर्वाङ्गसहस्रायाद्भुतात्मने ॥ ८९ ॥
वाससा वासरेणेव निशयेव तनुत्विषा ।
शश्वदासेवितं सेवे हरिं कालमिवाङ्गिनम् ॥ ९० ॥
न्यक् पातिनो भवाम्भोधौ जन्तवोऽम्बुदबिन्दुवत् ।
भक्ता भवन्ति यद्भक्तिमुक्तिलीनाः श्रयामि तम् ॥ ९१ ॥
अस्याविभक्तिरूपैव भक्तिर्जीवत्सु मुक्तिदा ।
श्रीविश्वरूपं साक्षान्मे सोऽस्तु नेत्रामृताञ्जनम् ॥ ९२ ॥
इति स्तुत्वा हृदा नुत्वा ध्यायन् सद्योऽप्यलोकत ।
भीष्मः प्रमोदरोमाञ्चदीनो भीष्मशरो हरिम् ॥ ९३ ॥
अथ श्रीकेशवस्तेऽपि भूपभीमार्जुनादयः ।
रथादुत्तीर्य गाङ्गेयमानम्य पुरतोऽविशन् ॥ ९४ ॥
अथ व्यथातुरं भीष्मं दृशालिङ्ग्य हरिर्जगौ ।
कच्चित् ते न शरैर्भिन्नं ब्रह्मज्ञानमयं वपुः ॥ ९५ ॥
श्रीविश्वरूप भगवन् भवन्मयमयात्मनाम् ।
का बाणवज्रपर्यङ्कहंसतूलिकयोर्भिदा ॥ ९६ ॥
इति भाषिणि भीष्मेऽथ केशवः स्माह साहसिन् ।
त्वां वहन्ती मही मन्ये द्यामिन्द्राद्युन्मदां हसेत् ॥ ९७ ॥
त्वयि बाणार्दिते तप्तमनुद्भूतरतिं क्वचित् ।
धाम्नि बोधय सर्वज्ञ धर्मात्मा स्वयमप्यथ ॥ ९८ ॥

क्षीरोदशायी भगवानित्युक्त्वा गरुडध्वजः ।
परामृतकलावृष्ट्या तं दृष्ट्या निर्व्यथं व्यधात् ॥ ९९ ॥
तादृक्संविद्धृतिधामप्रसत्तिश्लाघयोरथ ।
पुष्पवृष्टिस्तयोर्देवदेवर्षिस्तुतयोरभूत् ॥ १०० ॥
श्वो वक्तासि कृतिन् धर्मानित्युक्त्वा भीष्ममच्युतः ।
सपाण्डवो ययौ स्थानमाययौ च निशात्यये ॥ १०१ ॥
अथासि निर्व्यथात्मा चेत् तद्धर्मान् दिश धार्मये ।
इत्युक्तिशालिनि स्माह वनमालिनि सिन्धुभूः ॥ १०२ ॥
त्वत्प्रसादात् पटुर्धर्मान् वक्ष्यामि त्वद्गिरा विभो ।
स्वयं तु पृच्छतु क्ष्माप किं ह्रीः क्षत्रोचिते कृते ॥ १०३ ॥
अथाच्युतगिरा पादलग्नो भीष्मेण भूमिपः ।
आघ्राय मूर्ध्नि मां पृच्छेत्युक्तोऽपृच्छन्नृपक्रियाम् ॥ १०४ ॥
कृत्वा कृष्णाय धर्माय द्विजेभ्योऽपि हृदा नमः ।
ऊचे भीष्मः स्मितरुचा धर्मेणेवोज्ज्वलां गिरम् ॥ १०५ ॥
राजन् राजन्ति राजानः पूज्यपूजादयामयैः ।
तारैः कङ्कणकेयूरहारैर्नटविटादयः ॥ १०६ ॥
हासप्रियो नृपः सारं पिबद्भिरनुजीविभिः ।
पदापि स्पृश्यते रोललोलैः पुष्पमिवालिभिः ॥ १०७ ॥
वृत्तिं कल्पयतः स्वाङ्गव्ययेनापि गवादिषु ।
तृणादपि लघुर्नूनं सर्वधर्मोभिझतो नृपः ॥ १०८ ॥
अकर्णस्य जगत्प्राणपायिनो वक्रचारिणः ।
को विश्वसेद् द्विजिह्वस्य भुजगस्येव भूभुजः ॥ १०९ ॥
सतेजःकीर्तिसूर्येन्दुः क्ष्मापः काल इवापरः ।
क्वचिद्भीमः क्वचिच्छान्तः केन शक्योऽतिलङ्घितुम् ॥ ११० ॥
मखेषु देवं सेवन्ते श्रीपतिं दहनं च ये ।
गोपैः कोप्या न ते विप्राः श्रिये दाहाय च क्षमाः ॥ १११ ॥
नोपेक्ष्यः स्खलिताचारः क्ष्मायामेकोऽपि भूभुजा ।
तस्मिन् लब्धपदः पाप्मा कं कं व्याप्नोति न क्रमात् ॥ ११२ ॥
नयकल्पतरुच्छन्ने क्षीणपङ्कोऽस्तकण्टके ।
राज्ञामुद्यानवद्देशे धर्मः खेलति हेलया ॥ ११३ ॥
यदाज्ञायन्त्रिता वर्णाश्चत्वारोऽप्यर्णवा इव ।
स्फूर्जन्तोऽपि न मर्यादां मुञ्चन्ते स नरेश्वरः ॥ ११४ ॥
यदि यज्ञामृते राजा न वर्षति दिवं प्रति ।
तत् क्षुधार्ताः सुधाकूपान् दिवि देवाः खनन्ति किम् ॥ ११५ ॥

धराभृति न चेद्धर्मस्तदधर्मभरातुरा ।
कूर्माद्यैः किं ध्रियेतोर्वी दलयन्ती रसातलम् ॥ ११६ ॥
तदेक एव देवः क्ष्मापतिर्धर्मगतिस्थितः ।
भाति त्रिजगदाधारः समाहारः सुरश्रियाम् ॥ ११७ ॥
नोकंपृणगुणोऽप्युग्रैर्नृपः क्रूरपरिच्छदः ।
सेवितुं शक्यते केन ससर्प इव चन्दनः ॥ ११८ ॥
तीर्थाधिकारिभिरिव स्फीतलोभैर्नियोगिभिः ।
पीड्यमानाः प्रजास्तीर्थमिव भूपं शपन्ति ह ॥ ११९ ॥
नृपश्चाह्रुपरीवारोऽप्यचारुचरितः स्वयम् ।
जनेन त्यज्यते दूरं मणिवान् फणवानिव ॥ १२० ॥
स्वाचारपरिवारस्य सदाचारस्य भूपतेः ।
राज्ययात्मकतां याति धर्मस्त्रिजगदर्चितः ॥ १२१ ॥
क्रियासु विफलाः सैन्यक्रमविक्रमबुद्धयः ।
न स्यादात्मेव भूपानां पुरोधा यदि धर्मवित् ॥ १२२ ॥
प्रतापस्य प्रकाशेन दण्डस्यालम्बनेन च ।
कलिध्वान्तेऽपि भूपानां वृद्धो धर्मान् सुखं चरेत् ॥१२३॥
अरक्तेभ्योऽतिरक्तेषु कुमुदेभ्योऽम्बुजेष्विव ।
श्रियं संचारयन् भूपः प्रतापी भाति भानुवत् ॥ १२४ ॥
प्राप्तप्रतापतपना विश्वं प्रणिधिभिर्नृपाः ।
दूरप्रचारैर्गृह्णन्ति गूढैर्दृश इवांशुभिः ॥ १२५ ॥
अलक्ष्यः क्ष्माभुजां मन्त्रो विश्वोद्धारक्षयक्षमः ।
सतापस्येश्वरस्येव क्रिययैवानुमीयते ॥ १२६ ॥
क्व लक्ष्मीरतिविश्वस्ते क्व सौख्यमतिशङ्किनि ।
तद्भाति नातिविश्वासी नातिशङ्की च भूपतिः ॥१२७॥
उद्वृत्तदण्डनं दीनपालनं शीललालनम् ।
द्विजार्चनं च राज्यश्रीचतुःशालं महीभुजाम् ॥ १२८ ॥
कारणेऽपि विकोपानामलुब्धानां विपद्यपि ।
प्रमोदेऽप्यविकाराणां राज्ञां श्रीर्विरहासहा ॥ १२९ ॥
मित्राणि रणकालेऽङ्करोमाणीव प्रमोदतः ।
यस्योच्छ्वसन्ति भूमीन्द्रः स नेन्द्रेणापि जीयते ॥ १३० ॥
धर्मी धत्ते स्थितौ यः क्ष्मां तद्गुणैर्योगिनामपि ।
अतिब्रह्मलयानन्दैरमन्दैर्ह्रियते मनः ॥ १३१ ॥
नयी नृपो नृणां सिद्धात् सुवर्णं पुरुषादिव ।
यं धर्मांशमादत्ते न स तेनापि हीयते ॥ १३२ ॥
क्ष्मारक्षणात् परं राज्ञः कृत्यं नास्ति लभेत यत् ।
जनानामर्थधर्मांशौ तेन लोकद्वयीहितौ ॥ १३३ ॥
एवं देवव्रतो राजधर्मं धर्मस्य सूनवे ।
भूरिप्रागभूपचारित्र्यचारुसौरभ्यमभ्यधात् ॥ १३४ ॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रविरचिते बालभारतनाम्नि महाकाव्ये वीराङ्के शान्तिपर्वणि राजधर्मः समाप्तः ॥ १ ॥ :: :: ॥

---

## ॥ अथ खण्डप्रशस्तौ

### रामावतारवर्णनम् ॥

(११४) गाम्भीर्येण महोदयेन शरणत्राणेन मर्यादया
सर्वाशापरिपूरणेन महतास्थैर्येण धैर्येण च ।
नाथ त्वामनुकर्तुमिच्छतितरां वारांनिधिः किं त्वसौ
पीतो वानरलङ्घितः प्रमथितो बद्धः श्रिया त्याजितः ॥

हे नाथ श्रीराम वारांनिधिः समुद्रस्त्वामनुकर्तुं स्वस्यत्वत्साम्यमापादयितुमिच्छतितरामतिशयेन वाञ्छति, तदेवाह, गाम्भीर्येण गम्भीरतया, शरणत्राणेन शरणप्राप्तजनरक्षणेन, महोदयेन महाभाग्येन, मर्यादया शिष्टाचारानतिक्रमणेन, सर्वाशापरिपूरणेन सकलजनमनोरथपूरकेन, महता स्थैर्येण, चपनः महता धैर्येणेति, किं त्वसौ समुद्रः अगस्त्येन पीतेवानरैः स्वचरणै र्लङ्घितोऽमरैर्देवैः प्रमथितस्तथा सेतुरचनेन बद्धस्तथा देवैर्मन्थनानन्तरं श्रिया लक्ष्म्या त्याजितोतः स त्वया सह कथं समुद्रेणानुक्रियते त्वंतु सर्वदोषविनिर्मुक्त इति भावः ॥ ११४ ॥

(११५) देव श्रीनृप रामचन्द्र भवतो दिग्जैत्रयात्रोत्सवे
धावद्वीरतुरङ्गचञ्चलखुरक्षुण्णक्षमामण्डलात् ।
वातोद्धूतरजोमिलत्सुरनदीसंजातपङ्कस्थली-
दूर्वाचुम्बनचुञ्चवो हरिहयास्तेनैव वृद्धं दिनैः ॥

हे श्रीरामचन्द्र नृपते देव भवतस्तव दिग्जैत्रयात्रोत्सवे दिग्विजयकर्तृणां यात्रामहोत्सवे धावतांवीरतुरङ्गाणां शूराश्वानां चञ्चलखुरैः क्षुण्णं विदारितं क्षमा भूस्तस्या मण्डलं तस्माद्वातेनोद्धूतमुच्छलितं यद्रजस्तेन मिलन्ती संपृक्ता या सुरनदी गङ्गा तस्या संजाता या पङ्कस्थली कर्दमभूमिरत एव तत्र प्ररूढा या दूर्वास्तासां चुम्बनेन भक्षणेन वित्ता हरिहयाः सूर्याश्वा जाता अतो दिनैर्वृद्धम्, दूर्वाङ्कुर भक्षणेरता अरुणेन प्रेरिता अपि नतूर्णं प्रयान्ति किंतु शनैरेव अत एव ग्रीष्मतौ महान्तो दिवसा जायन्ते इति भावः ॥ ११५ ॥

(११६) कर्पूरप्रतिपन्थिनो हिमगिरिग्रावाग्रसंघर्षिणः
क्षीराम्भोनिधिमध्यगर्भजयिनो गङ्गौघसर्वंकषाः ।
स्वच्छन्दं हरिचन्दनद्युतितुदः कुन्देन्दुसंवादिन-
स्तस्यासन्नरविन्दकन्दरुचयोऽनेकेगुणाः केचन ॥

तस्य श्रीरामस्यानेके गुणा आसंस्तत्र केचन गुणाः कर्पूरप्रतिपन्थिनः सिततया कर्पूरजेतार आसन्, केचन हिमगिरिस्थपाषाणाग्रस्पर्धका, स्तथा क्षीरसमुद्रमध्यगर्भस्यातिश्वेतत्वात्तस्यापि जयिनः, सितं पावनमपि गङ्गाप्रवाहं सर्वं कषन्तीति तथा बुधा, अन्ये च स्वच्छन्दं हरिचन्दनस्य द्युतिं प्रभां तुदन्तीति तथाविधाः श्वेता अप्याल्हादका आसन्, तथा कुन्देन्दुसंवादिनः सितत्वशीतलत्वादिभिः कुन्देन्दुभ्यांसह संवादशीलाः, अपरे च गुणा अरविन्दकन्दरुचयः कमलकन्दकान्तय आसन्, एतेन श्रीरामगुणानां पावनत्वं श्वेतत्वं निर्मलत्वमाल्हादकत्वं वातिशयितमासीदिति सूचितम् ॥ ११२ ॥

(११७) देव त्वामसमानदाननिहितैरर्थैः कृतार्थीकृत-
त्रैलोक्यं फलभारभङ्गुरशिराः कल्पद्रुमो निन्दति ।
टङ्कच्छेदनवेदनाविरमणात्संजातसौख्यस्थितिः
प्राचीनव्रणिताङ्गरोहणतया श्रीरोहणः स्तौति वः ॥

हे देव अनुपमदानाय न्यस्तैः सुवर्णादिभिरर्थैः कृतार्थीकृतं त्रैलोक्य येन तथाविधं त्वां फलभारेण भङ्गुरं शिरोयस्य स कल्पद्रुमो निन्दति, यतस्त्वया दानेन सर्वेयाचका सफलीकृता अत स्तत्फलानां गृहयालवः कोपि च नासन्निति भावः, तथा च रत्नार्थिभी रत्नग्रहणार्थं टङ्कैः खनित्रैर्यच्छेदनं तेन या वेदना तस्या विरमणादभावात्प्राचीनानि दानात्प्राक्संपन्नानि यानि व्रणितान्यङ्गानि तेषा रोहणतया निर्व्रणतया संजाता समुत्पन्ना सौख्यस्थितिर्यस्य स श्रीरोहणः पर्वतो वः स्तौति, यतस्तथैव सर्वेषां सरत्नतया रत्नार्थिनोभावान्न कैश्चिदपि विदार्यते इति भावः ॥ ११७ ॥

(११८) साधर्म्येण कथं गृणन्तु यमुनावेणीं कृपाणीं च ते
श्रीमद्रामचमूवरेण्य भवतो वाग्ब्रह्मसिद्धान्तिनः ।
नाकृष्टां हलिना न कालियवशाक्रूरां न धाराजडां
न च्छाया जनितां न वक्रबहुलां न प्राप्तभङ्गां क्वचित् ॥

हे श्रीमद्राम हे चमूवरेण्य ते कृपाणीं खड्गं यमुनावेणीं यमुनाप्रवाहं च वाग्ब्रह्मसिद्धान्तिनः पण्डिताः कथं गृणन्तु कथयन्तु, यतो यमुनावेणी हलिना बलभद्रेणाकृष्टा भवतः कृपाणी तु न केनाप्याकृष्टा, तथा सा कालियसर्पवशादुग्रा कृपाणी तु न कस्यापि वशात्किंतु स्वत एवोग्रा, तथा सा धारायां जल यस्याः अथवा धारायां जडास्थिरा कृपाणी तु धारायां न जडा किंतु तीक्ष्णा, तथा छाया सूर्यभार्या तस्यां जनितोत्पन्ना यमुना कृपाणी तु छाया लोहमलः तेन न जनिता किंतु लोहसारनिर्मिता, यमुना वक्राणि पानीयवाहास्तैर्बहुला कृपाणी तु न वक्रबहुला किंत्ववक्रमुखी, तथा च पर्वतादौ विषमस्थले प्राप्ता भङ्गा यया सा यमुना कृपाणी तु न क्वचिदपि प्राप्तभङ्गा सर्वत्र जयिनीत्यर्थः ॥ ११८ ॥

(११६) राजन् राजसुता न पाठयति मां देव्योऽपि तूष्णींस्थिताः
कुब्जे भोजय मां कुमार कुशलं नाद्यापि किं भुज्यते ।
इत्थं केलिशुकस्तवारिसदने मुक्तोध्वगैः पञ्जरा-
च्चित्रस्थानथ वीक्ष्य शून्यवलभावेकैकमाभाषते ॥

हे राजन् राम तवारिसदने स्थितः केलिशुकोध्वगैः पान्थैः पञ्जरान्मुक्तश्चित्रस्थान् राजसुतादीन् शून्यवलभौ शून्यभूमौ वीक्ष्य अथ वास्तविकधिया तेषु एकैकं प्रत्येक मिथ्यमाभाषते, तत्किमित्याह, राजसुता मां कुतो न पाठयति देव्यो महिष्यश्च तूष्णीं स्थिता मौनमाश्रिता न पाठयन्ति तथा हे कुब्जे मां भोजय, तथा हे कुमार कुशलं वर्तते, तथाद्यापि किं न भुज्यते इत्यादीति, अनेन रामस्य सर्वतो विजयित्वं सूचितम् ॥ ११९ ॥

(१२०) प्रौढिं धत्तां कलासु प्रथयतु कुमुदं सत्पथे संचरेद्वा
नेत्रानन्दं विधत्तामवतु च विबुधानस्तु राजा तथापि ।
दोषान्वेषी कलङ्की सहजजडतनुः सक्षयः पक्षपाती
नक्षत्रेशः कथं वा तुलयतु तुलनां रामचन्द्रेण चन्द्रः ॥

रामचन्द्रेण सार्धं चन्द्रस्तुलनां साम्यं कथं वा कलयतु प्राप्नोतु न कथमपीत्यर्थः यद्यपि चन्द्रः कलास्वंशेषु प्रौढिं प्रागल्भ्यं धत्तां बिभर्तु, कुमुदं प्रकाशं प्रथयतु विस्तारयतु, अथवा सतां देवाना पन्थाः सत्पथ आकाशस्तस्मिन् संचरेत्, तथा नेत्राणां लोचनानामानन्दं विधत्तां कुरुतां तथा विबुधान् देवानवतुरक्षतु, अस्तु च राजा शोभितः, यथा रामचन्द्रः कलासु विज्ञानेषु प्रौढिं धत्ते, यथा कौ पृथिव्यां मुदं हर्षं जनयति, यथा सत्पथे सतां योग्ये मार्गे संचरति, यथा नेतॄणां रक्षकाणा मानन्दं जनयति, यथा, विबुधान्पण्डितानवति, यथा च नाम्ना क्रियया गुणैश्च राजा, तथापि चन्द्रोदोषा रात्रिस्तामन्वेषते तच्छीलः कलङ्कवान्, सहजतो जलमयी तनुर्यस्य सः यद्वा चन्द्रस्य जलरूपत्वेन जडत्वादपि तथा, विधः, तथा कृष्णपक्षे एकैककलाक्षयात्सक्षयः, अतएव पक्षेतीतेऽमायां पतनशीलः, तथा नक्षत्राणां तारकाणामीशः स्वामी, रामस्तु न दोषमन्वेषते किंतु गुणान्, नापि कलङ्की

नापि निसर्गतो मूर्च्छितस्वभावः, नापि कदाचन तस्य क्षयः किंतु सर्वदा वृद्धिरेव नच न क्षत्रेशः किंतु सर्वेषां क्षत्राणामीशः अतश्चन्द्रो रामसमः कथं स्यान्न कथमपि रामचन्द्रस्य सर्वोत्तमत्वादिति भावः ॥ १२० ॥

(१२१) नृपति मुकुटरत्नत्वत्प्रयाणप्रशस्तिं
प्लवगपदनमद्भूनिर्भराक्रान्तभोगः ।
लिखति दशनटङ्कैरुन्नमद्भिर्नमद्भि-
र्जरठकमठभर्तुः कर्परे सर्पराजः ॥

हे नृपतिमुकुटरत्न राजचूडामणे तव लङ्कापुरीं रावणाहननार्थं गमनस्य प्रशस्तिं इत्थं गतः इत्थं च तं जघानेत्यादि रूपां जरठकच्छपस्वामिनः कर्परे वानरचरणैर्नमन्त्या भुवो निर्भरेण भारेणातिशयितेनाक्रान्तो भोगः शरीरं यस्य स सर्पराजः शेषराज उन्नमद्भिरूर्ध्वं गच्छद्भिरधस्तनैस्तथैव नमद्भिरुपरितनैश्च दशनटङ्कैर्दन्तखनित्रैर्लिखति, अत्रोन्नमद्भिर्नमद्भिरित्यनेन सर्वैरपि उच्चतया नतया च लेखन्या रामप्रशस्तिर्लेखनीयेति सूचितम् ॥ १२१ ॥

॥ इति श्रीगुणविनयविरचितायां खण्डप्रशस्ति विवृतौ श्रीरामचन्द्रावतारवर्णनं समाप्तम् ॥

---

## THE APHORISMS

OF THE

# YOGA PHILOSOPHY

OF

## PATAÑJALI.

(*Continued from page* 320 )

[1] Having raised a doubt as to the possibility of the causal relation of these mental deposits or impressions [of mind], in order to show its possiblity he states :

**जातिदेशकालव्यवहितानामप्यानन्तर्यं स्मृतिसंस्कारयोरेकरूपत्वात् ॥ ९ ॥**

9. There is an immediacy among those [impressions] though intercepted by rank [in the scale of being], place and time, because the the recollection and the train of self-reproductive impression are identical [that is they are not different].

[1] Of the transmigrating souls wandering in various births, when any one, having experienced some particular birth, after an interval of thousands of births, enters upon the same birth again, then the impressions [of mind, vásaná], which, depending on the particular body &c—the cause of manifestation, were manifested in that fore-experienced birth, and which disappeared [for some period] for want of that particular kind of cause of manifestation, do appear again on finding the same kind of the body &c.—the cause of [their] manifestation. Thus, even on an interval of rank [játi], place and time, there exists an immediacy—non-interval among these in accomplishing identical effects viz. memory &c, because there is an identity [that is, there is no difference] between a memory and the train of self-reproductive thought. For example, from the work [merit and demerit] which is performed, the train of self-reproductive property in the shape of impression takes place in the intellectual principle. This is the germination of the fruit [of works] that is, of paradise and hell &c., or the existence of the works—sacrifice &c, in a state of power The recollection of the agent takes place from the self-reproductive property of the power of experiencing this or that particular enjoyment ; and from the recollection there is the experience of pleasure and pain, and from that experience spring up again the self-reproductive impression and recollection, &c.

For one whose doctrine memory and self-reproductive impression are different [things], the relation of cause and effect is very difficult for want of an immediacy. But in our view, when the experience itself becomes the self-reproductive impression and the self-reproductive impression changes into memory, then there is no difficulty of causal relation, because only one intellect or mind remains as a recollector.

---

१ आसामेव वासनानाङ्कार्य्यकारणभावानुपपत्तिमाशङ्क्य समर्थयितुमाह । जातिदेशकालव्यवहितानामप्यानन्तर्य्यं स्मृतिसंस्कारयोरेकरूपत्वात् ॥ ९ ॥

१ इह नानायोनिषु भ्रमतां संसारिणाङ्काञ्चिद्योनिमनुभूय यदा योन्यन्तरसहस्रव्यवधानेन पुनस्तामेव योनिम्प्रतिपद्यते तदा तस्याम्पूर्वानुभूतायां योनौ तथाविधशरीरादिव्यञ्जकापेक्षया वासना याः प्रकटीभूता आसंस्तास्तथाविधव्यञ्जकाभावात्तिरोभूताः पुनस्तथाविधव्यञ्जकशरीरादिलाभे प्रकटीभवन्ति जातिदेशकाल व्यवधानेपि तासां स्वानुरूपस्मृत्यादिफलसाधने आनन्तर्य्यं नैरन्तर्य्यमेव कुतः स्मृतिसंस्कारयोरेकरूपत्वात् । तथाहि अनुष्ठीयमानात्कर्म्मणश्चित्तसत्त्वे वासनारूपः संस्कारः समुत्पद्यते स च स्वर्गनरकादीनाम्फलानाञ्चाङ्कुरीभावः कर्मणां यागादीनां शक्तिरूपतयावस्थानम् । कर्तुश्च तथाविधभोगभोक्तृत्वस्वरूपसामर्थ्यसंस्कारात् स्मृतिः स्मृतेश्च सुखदुःखोपभोगस्तदनुभवाच्च पुनरपि संस्कारस्मृत्यादयः । एवञ्च यस्य स्मृतिसंस्कारादयो भिन्नास्तस्यानन्तर्य्याभावे दुर्लभः कार्य्यकारणभावः । अस्माकं तु यदाऽनुभव एव संस्कारीभवति संस्कारश्च स्मृतिरूपतया परिणमते तदैकस्यैव चित्तस्यानुसन्धातृत्वेन स्थितत्वात्कार्य्यकारणभावो न दुर्घटः ॥

[1] Let there exist an immediacy and the causal relation among the impressions [of mind] but when a perception takes place the first time is it then caused by an impression or does it proceed without a cause? To clear up this doubt he states as follows :—

**तासामनादित्वमाशिषो नित्यत्वात् ॥ १० ॥**

Aph. 10. They have eternity because the benediction is eternal.

[2] "They" impressions "have' eternity—state of a thing not having a beginning—, hence it means that they are without a beginning because the benediction is eternal; that is, the benediction in the shape of the intense desire—i. e. special resolution, "May the causes of my pleasure exist always and may there never be separation of us from them" which is the cause of impressions, is eternal— i. e. has no beginning.

[3] The meaning is this,—that, when there is the proximity of the cause [i. e. impression] who can oppose the realization of the effects, that is of the perception and the self-continuant impressions.

What is meant is this,—the intellect, modified by [various] perception and self-reproductive impression &c., and having the attributes of contraction and expansion, on finding this or that cause of manifestation—i. e. the fructification [of works], is diversied by different effect.

[4] Having raised the doubt, since they [impressions] are infinite how is it possible to get rid of them, he declares the means for their removal.

**हेतुफलाश्रयालम्बनैः संगृहीतत्वादेषामभावे तदभावः ॥ ११ ॥**

Aph. 11. As [they are] collected by cause, effect, substratum and support [therefore] on non-existence of these non-existence of the impressions takes place.

[5] The cause of impressions is internal perception, and of this i. e of perception desire &c. [i e. desire, aversion &c] and of these [i. e. of desire &c.] ignorance; this is the immediate and mediate cause; the "effect" is body &c and memory &c.; "substratum" is the intellectual principle [or mind]; and the "support" of impressions is the same as that of perception [i. e. the object—the object perceived, that is whatever object being present any impression is excited, that object is the support of that impression.]

[1] Therefore, as all the impressions are collected by the cause, effect, substratum and support, on non-existence of this cause &c, that is, while these are rendered [useless like a burnt seed by knowledge and asceticism the impressions, for want of a root, do not spring up—i. e. do not produce [their] effect; this is their non-existence.

[2] It may be asked Since it is observed that the intellect is in momentary transition, and a difference is proved, inasmuch as the impressions are called into being not simultaneously, according to the relation of cause and effect, how can there be unity in the intellect? In answer to this he states.

**अतीतानागतं स्वरूपतोऽस्त्यध्वभेदाद्धर्म्माणाम् ॥ १२ ॥**

Aph. 12. That which is past and that which is to come does exist in its proper nature, for the course of properties is different.

[3] Production of things not existing is not reasonable, because their relation with existence is impossible, no relation of a hare's horn &c [that is of anything chimerical and impossible] with existence has been anywhere observed

[4] In the case of a non-entity, regarded as an effect, with what design do the causes proceed to act? No one exercises activity having observed a non-existing object; otherwise there would be a contradiction also among existences [inasmuch as if the non-existent became existent the existent might become non-existent]; There is no relation of a non-existence.

---

१ भवत्वानन्तर्य्यङ्कार्य्यकारणभावश्च वासनानां यदा तु प्रथममेवानुभवः प्रवर्तते तदा किं वासनानिमित्तक उत निर्निमित्तक इति शङ्कां व्यपनेतुमाह ॥

२ तासां वासनानामनादित्वं न विद्यते आदिर्यस्य तस्य भावस्तमासामादिर्नास्तीत्यर्थः कुत आशिषो नित्यत्वात् । येयमाशीर्महामोहरूपा सदैव सुखसाधनानि मे भूयासुर्मा कदाचित् तैर्वियोगो मम भूयादिति यः सङ्कल्पविशेषो वासनानाङ्कारणं तस्य नित्यत्वादनादित्वादित्यर्थः ॥

३ एतदुक्तम्भवति कारणस्य संनिहितत्वादनुभवसंस्कारादीनाङ्कार्य्याणाम्प्रवृत्तिः केन वार्य्यते । अनुभवसंस्काराद्यनुविद्धं सङ्कोचविकाशधर्मि चित्तं तत्तदभिव्यञ्जकविपाकलाभात् तत्तत्फलरूपतया परिणमत इत्यर्थः ॥

४ आसामानन्त्याद्धानङ्कथं सम्भव[illegible]त्याशङ्क्य हानोपायमाह ॥

५ वासनानामन्तरानुभवो हेतुस्तस्याप्यनुभवस्य रागादयस्तेषामविद्या इति साक्षात् पारम्पर्य्येण च हेतुः । फलं शरीरादि. स्मृत्यादिश्च । आश्रयो बुद्धित्वमालम्बनं यदेवानुभवस्य तदेव वासनानाम् ॥

---

१ अतस्तैर्हेतुफलाश्रयालम्बनैरनन्तानामपि वासनानां सङ्गृहीतत्वात् तेषां हेतुत्वादीनामभावे ज्ञानयोगाभ्यां दग्धबीजकल्पत्वे विहिते निर्मूलत्वाच्च वासनाः प्ररोहं यान्ति न कार्य्यमारभन्त इति तासामभावः ॥

२ ननु प्रतिक्षणं चित्तस्य नश्वरत्वोपलब्धेर्वासनानां तत्फलानाञ्च कार्य्यकारणभावेनायुगपद्भावित्वाद्भेदे कथमेकत्वमित्याशङ्क्य एकत्वसमर्थनायाह ॥

३ इह ह्यसताम्भावानामुत्पत्तिर्न युक्तिमती तेषां सत्त्वसम्बन्धायोगान्नहि शशविषाणादीनाङ्क्वचिदपि सत्त्वसम्बन्धो दृष्टः । नीरूपाख्ये च कार्य्ये किमुद्दिश्य कारणानि प्रवर्तन्ते नह्यसन्तं विषयमालक्ष्य कश्चित्प्रवर्तते सतामपि विरोधात् । नाभावसम्बन्धोऽस्ति । यत्स्वरूपेण लब्धसत्ताकं तत्कथं नीरूपाख्यतामभावरूपतां भजते न विरुद्धं रूपं स्वीकरोतीत्यर्थः ॥

४ तस्मात्सतां नाशासम्भवादसताञ्चोत्पत्त्यसम्भवात् तैस्तैर्धर्मैर्विपरिणममानो धर्मी सदैवैकरूपतयैवावतिष्ठते ; धर्मास्तु त्रैविध्यकत्वेन त्रैकाल्यत्वेन व्यवस्थिताः स्वस्मिन् स्वस्मिन्नध्वनि व्यवस्थिता न स्वरूपं त्यजन्ति वर्तमानेऽध्वनि व्यवस्थिताः केवलं योग्यतां भजन्ते । तस्माद्धर्माणामेवातीतानागताद्यध्वभेदस्तेनैव रूपेण च कार्य्यकारणभावोऽस्मिन्दर्शने प्रतिपाद्यते ॥

Whatever has an existence of its own proper nature, how can that assume a state of non-entity—i. e. non-existence? that is it can never assume the contrary shape.

¹ Therefore, as destruction of existences is impossible and production of non-existences is not possible, the subject of the attributes, though modified by different properties arranged according to their three-fold nature, their three-fold time, standing in their respective courses [of past, present and future] do not abandon their forms, but while standing in the present course they acquire only their perceptibility

The difference of courses such as past and future &c. belongs exclusively to the properties. And the relation of cause and effect is stated in this series in the same manner only.

Therefore it cannot be denied that one sole intellect continues as the subject of attributes until final emancipation. G. D

*(To be continued.)*

# THE VAIŚESHIKA APHORISMS OF KAṆÁDA.

## SEVENTH BOOK, SECOND DAILY LESSON.

*(Continued from page 326.)*

Priority and posteriority एकदिक्काभ्यामेककालाभ्यां सन्निकृष्टविप्रकृष्टाभ्यां परमपरञ्च ॥ २१ ॥

Aph 21. The prior and posterior [are produced] by two [objects] occupying the same space and time and near and remote

¹ The term 'prior and posterior' is used in an abstract sense. The words 'are produced' are to be supplied; also the prior and posterior may be an elliptical expression for the convention of the prior and posterior, the particle *iti* having to be supplied. By two objects occupying the same space, that is of which there is the same space, and occupying the same time, that is, synchronous,—by these priority and posteriority are not produced, or come into use. It is therefore stated that they are produced by two objects near and remote, that is possessed of contiguity or paucity of conjunctions

¹ परमपरञ्चेति भावप्रधानो निर्देशः उत्पद्यत इति शेषः यद्वा परमापरञ्चेति व्यवहार इति शेषः इतिरध्याहार्यम् एका दिग् ययोस्तावेकदिक्कौ ताभ्यामेकदिक्काभ्यां पिण्डाभ्यामित्यर्थः तुल्यदेशावप्येकदिक्कौ भवतः नतु ताभ्यां परत्वापरत्वे उत्पद्येते व्यवह्रियेते वेत्यत उक्तं सन्निकृष्टविप्रकृष्टाभ्यामिति सन्निकर्षः संयुक्तसंयोगाल्पत्वम् विप्रकर्षस्तद्भूयस्त्वम् तद्वद्भ्यामित्यर्थः एतेन समवायिकारणमुक्तम् दिक्पिण्डसंयोगस्त्वसमवायिकारणम् तथाहि प्राङ्मुखस्य पुरुषस्य प्राच्यवस्थितयोः पिण्डयोरेकस्मिन् संयुक्तसंयोगभूयस्त्वमपरस्मिन् संयुक्तसंयोगाल्पतरत्वञ्चापेक्ष्य परत्वमपरत्वञ्चोत्पद्यते असमवायिकारणमुक्तम् सन्निकृष्टविप्रकृष्टाभ्यामिति विषयेण विषयिणीं प्रत्ययमुपलक्षयति तथाचापेक्षाबुद्धेः निमित्तकारणत्वमुक्तम् एकदिगवस्थितयोरेव परत्वापरत्वे उत्पद्येते इति न सर्वत्रोत्पत्तिः एकस्यैव द्रष्टुरपेक्षाबुद्धिः समुत्पद्यते इति न सर्वयोत्पत्तिः अपेक्षाबुद्धिनियमाच्च सर्वदोत्पत्तिः कारणशक्तेरुत्पन्नयोः प्रत्यक्षसिद्धत्वाच्च परस्पराश्रयत्वम् अन्यथाहि नोत्पद्येयातां नवा प्रतीयेयातां परस्परापेक्षायां हि द्वयोरनुत्पत्तिरप्रतीतिश्च स्यात् प्रतीयेते च परत्वापरत्वे प्रतीतिश्च तयोर्नोत्पत्तिमन्तरेणेति एककालाभ्यामिति कालिकपरत्वापरत्वे अभिप्रेत्य तत्रैककालाभ्यामिति एकोवर्तमानः कालोययोर्युवस्थविरपिण्डयोः तावेककालौ ताभ्यामेककालाभ्य मित्यर्थः सन्निकर्षोऽल्पतरतपनपरिस्पन्दान्तरितजन्मत्वं विप्रकर्षश्च बहुतरतपनपरिस्पन्दान्तरितजन्मत्वम् अत्रापि विषयेण विषयिणीं बुद्धिमुपलक्षयति तेन युवस्थविरपिण्डौ समवायिकारणे कालपिण्डसंयोगश्चासमवायिकारणम् अल्पतरतपनपरिस्पन्दान्तरितजन्मत्वबुद्धिरपरत्वे बहुतरतपनपरिस्पन्दान्तरितजन्मत्वबुद्धिः परत्वे निमित्तकारणम् एतेव परत्वापरत्वे अनियतदिग्देशयोरपि पिण्डयोरुत्पद्येते तत्र दैशिकपरत्वापरत्वयोः सप्तधा विनाशः उत्पादस्तु युगपदेव द्वयोरन्यथाऽन्योन्याश्रयः स्यात् अपेक्षाबुद्धिनाशात् संयोगस्य समवायिकारणस्यनाशात् द्रव्यस्य च समवायिकारणस्य नाशात् निमित्तासमवायिकारणयोर्नाशात् निमित्तसमवायिकारणयोर्नाशात् निमित्तनाशासमवायिकारणनाशसमवायिकारणनाशेभ्यः । तत्रापेक्षाबुद्धिनाशात् तावत् परत्वोत्पत्तिः परत्वसामान्यज्ञानं ततोऽपेक्षाबुद्धिविनाशस्तन्नाशात् परत्वविशिष्टद्रव्यज्ञानकाले परत्वनाशः द्वित्वनाशवदेव सर्वमूहनीयम् । असमवायिकारणनाशादपि तद्यथा यदैवापेक्षाबुद्धिस्तदैव परत्वाधारे पिण्डे कर्म ततो यदैव परत्वोत्पत्तिस्तदैव दिक्पिण्डविभागस्ततो यदा परत्वसामान्यज्ञानं तदा दिक्पिण्डसंयोगनाशः ततः सामान्यज्ञानादपेक्षाबुद्धिनाशस्तदैव दिक्पिण्डसंयोगनाशात् परत्वापरत्वयोर्नाशः तत्र चापेक्षाबुद्धिनाशस्य परत्वनाशसमकालत्वाच्च तन्नाशकत्वम् नन्वसमवायिकारणनाशादपि गुणनाशे आत्ममनःसंयोगनाशादपि संस्कारादृष्टादीनां विनाशे बहु व्याकुलं स्यादिति चेन्न विप्रकृष्टत्वेन परत्वस्य व्यापनात् परत्वाधारस्यान्यत्र गमने विप्रकर्षाभावात् परत्वनिवृत्तिरावश्यकी नच तदा नाशकान्तरमस्तीत्यन्यथाऽनुपपत्त्या संयोगनाश एव नाशकः कल्प्यते संस्कारादृष्टादेः कार्यस्य स्मृतिसुखादेश्चिरेणापि दर्शनाच्च तन्नाशकल्पना उपलक्षणञ्चैतत् अवधेर्द्रष्टुश्च तद्देशसंयोगनाशादपि परत्वापरत्वे विनश्यतः युक्तेस्तुल्यत्वात् समवायिकारणनाशादपि क्वचित् परत्वनाशः तथाहि यदा पिण्डावयवे समुत्पन्नेन कर्मणाऽवयवान्तराद्विभागस्तदैवापेक्षाबुद्धिः विभागात् पिण्डारम्भकसंयोगनाशः परत्वसामान्यज्ञानं द्रव्यनाशात् परत्वनाशोऽपेक्षाबुद्धिनाशश्च सामान्यज्ञानात् तथाच यौगपद्याच्चापेक्षाबुद्धिनाशात् परत्वनाश इति क्वचिद्द्रव्यनाशापेक्षाबुद्धिनाशाभ्यां परत्वनाशः तद्यथा पिण्डावयवे कर्मापेक्षाबुद्धेरुत्पादस्ततोऽवयवान्तरविभागः परत्वोत्पत्तिः तत आरम्भकसंयोगनाशसामान्यज्ञाने ततोद्रव्यनाशापेक्षाबुद्धिनाशौ ततश्च परत्वनाशः क्वचिद्द्रव्यस्य संयोगस्य च नाशाभ्यां परत्वनाशः तद्यथा यदा द्रव्यावयवविभागस्तदैव पिण्डकर्मापेक्षाबुद्ध्योरुत्पादस्तदनन्तरमवयवसंयोगनाशदिक्पिण्डविभागपरत्वोत्पत्तयः ततोद्रव्यनाशदिक्पिण्डसंयोगनाशपरत्वसामान्यबुद्धयः ततो द्रव्यनाशदिक्पिण्डसंयोगनाशाभ्यां परत्वनाशः सामान्यबुद्धेरपेक्षाबुद्धिनाश इति क्वचित् संयोगनाशापेक्षाबुद्धिनाशाभ्यां परत्वनाशः तद्यथा परत्वोत्पत्तिपिण्डकर्मणी सामान्यज्ञानविभागौ अपेक्षाबुद्धिनाशदिक्पिण्डसंयोगनाशौ ततः परत्वनाशः क्वचित् समवाय्यसमवायिनिमित्तनाशेभ्यः तद्यथा परत्वोत्पत्तिपिण्डावयवविभागपिण्डकर्माणि युगपत् तदनन्तरं परत्वसामान्यज्ञानावयवसंयोगनाशदिक्पिण्डविभागाः तदनन्तरमपेक्षाबुद्धिनाशद्रव्यनाशदिक्पिण्डसंयोगनाशेभ्यो युगपदुत्पन्नेभ्यः परत्वस्यापरत्वस्य वा दैशिकस्य नाशः कालकृतयोस्तु परत्वापरत्वयोरसमवायिकारणनाशाधीनोनाशोनास्ति दैशिकयोर्दिक्पिण्डसंयोगनाशे सन्निकर्षविप्रकर्षनाशो यथा न यथा कालिकयोरिति तयोः समवायिकारणनाशादपेक्षाबुद्धिनाशात् द्वाभ्याञ्चेति त्रयः पक्षाः पूर्ववदूहनीयाः ॥

with the conjunct, and of remoteness, that is of plurality of conjunctions with the conjunct. Hereby the coinherent cause is stated The non-coinherent cause is the state of conjunction of the object with space For example there are produced in a man standing with his face to the east priority and posteriority in relation to the plurality of conjunct conjunctions in one of two bodies situated in the east, and to paucity of conjunct conjunctions in another. The non-coinherent cause has thus been stated In the words near and remote' there is by the object an indication of the subjective cognition. It is accordingly stated that the efficient cause is the cognition of relativity Priority and posteriority are produced only between objects situated in the same space; they do not therefore arise everywhere. The relative conception belongs to only one observer; therefore they do not appear everywhere, for as determined by relative conception they are not everywhere produced It being established by perception that they are produced in consequence of the power of their causes, they do not inhere in one another : otherwise they would not be produced or would not appear, for there could be no genesis or cognition of two objects mutually involving and involved, whereas priority and posteriority do appear, and this appearance without their production would be impossible. The words 'by two objects occupying the same time' have reference to priority and posteriority in time This priority and posteriority is produced by two objects one young and the other old in which there is existent the same time Their contiguity is the being born at an interval of fewer revolutions of the sun, their remoteness is the being born at an interval of more revolutions of the sun There is in this case also indicated by the object a subjective idea The two objects young and old are, therefore, the co-inherent cause The conjunction between time and these objects is the non-coinherent cause The conception of the being born at an interval of fewer revolutions of the sun is the efficient cause of priority, and the conception of the being born at an interval of more revolutions of the sun is the efficient cause of posteriority This priority and this posteriority arise also in objects of indeterminate position in space. Of these there is a seven-fold destruction of priority and posteriority in space, but the production of the two is simultaneous, else there would be a regress to infinity Their destruction results from destruction of the relative conception from destruction of the non-coinherent cause of the conjunction, from destruction of the substance which is the co-inherent cause, from destruction of the efficient, and non-coinherent causes, from destruction of the efficient and co-inherent causes, and from the destructions of the efficient, non-coinherent, and co-inherent causes. From destruction of the relative conception, thus :—the destruction of the cognition of relativity is from the production of posteriority, that is from the general knowledge of posteriority ; from the destruction of the relative conception there results destruction of the posteriority in cognising a substance qualified by posteriority , and the whole process may be inferred on the analogy of the destruction of duality. From destruction of the non-coinherent cause as when there is first there is a cognition of relativity, then action in the object which is the substratum of posteriority, thence disjunction of the object and space when posteriority is produced, thence destruction of the conjunction between space and the object, thence in consequence of the universal cognition destruction of the cognition of relativity, then from the destruction of the conjunction of the object with space. destruction of the priority and posteriority In this instance the conception of relativity, though synchronous with the destruction of posteriority is not destructive of it. If it be urged that there is much confusion involved in the supposition of the destruction of reproduction, necessity &c., consequent on destruction of the conjunction of the soul and the internal organ in the destruction of qualities resulting from the destruction of the non-coinherent cause, we reply that it is not so, for inasmuch as posteriority is pervaded by remoteness, there must needs be a cessation of posteriority consequent on non-existence of remoteness on the removal of the substratum of posteriority Nor is there at that time another agent of destruction, for it is the destruction of conjunction which is conceived as the agent of destruction, such destruction being otherwise impossible. Inasmuch as we observe long afterwards memory, pleasure &c the effect of reproduction, necessity &c, we cannot suppose these to be destroyed. This also implies the percipient as a limit, and posteriority and priority are destroyed by the destruction of the conjunction between the percipient and space, this being equally efficient. Destruction of posteriority sometimes also results from destruction of the co-inherent cause, as for instance when by action produced in a portion of a body there is produced disjunction from another portion, then a conception of relativity ; from this disjunction results destruction of the conjunction originative of the body and production of posteriority ; in the succeeding moment from destruction of the conjunction there results destruction of the substance, and the universal conception of posteriority ; from the destruction of the substance there results destruction of posteriority, and destruction of the cognition of relativity results from the universal cognition. Destruction of

posteriority, therefore, does not result from destruction of the cognition of relativity, for they are simultaneous Destruction of posteriority is sometimes by destruction of the substance and of the cognition of relativity, as for instance when there arises in the portion of a body a relative cognition of action, thence disjunction from other constituent parts and production of posteriority, thence destruction of the originative conjunction and [production of] a universal cognition, thence destruction of the substance and of the relative cognition, thence destruction of posteriority. Sometimes destruction of posteriority is by destruction of the substance and of conjunction, as when there arises disjunction of the constituent parts of a substance, then production of action in the body and of a relative cognition, next the production of destruction of the conjunction of the parts, of disjunction between the body and space, and of posteriority, thence destruction of the substance, destruction of the conjunction of the body, a universal cognition of posteriority, thence destruction of posteriority by destruction of the cognition of the body and space and destruction of the substance, according to the rule that a universal [or simple] cognition destroys a relative cognition. Destruction of posteriority is sometimes by destruction of conjunction and of the relative cognition, as when there successively ensue production of posteriority and action in the body, a universal cognition and disjunction, destruction of the relative cognition and of the conjunction of the body with space, and thence destruction of posteriority. Destruction of posteriority at other times results from destruction of the co-inherent, non-coinherent, and efficient causes, as when there simultaneously arise production of posteriority, disjunction of the parts of the body, and action in the body, next a universal cognition of posteriority, destruction of the conjunction of constituent parts, and disjunction of the body from space, next from simultaneously produced destruction of the relative cognition, of the substance, and of the conjunction of the body with space there results destruction of priority or posteriority in space. Of priority and posteriority in time there is no destruction dependant upon destruction of the non-coinherent cause, nor is there detruction of contiguity and remoteness in temporal priority and posteriority as there is destruction of contiguity and remoteness in priority and posteriority in space where there is destruction of the conjunction of the body with space. The three cases, therefore, of destruction of temporal priority and posteriority, from destruction of the co-inherent cause, from destruction of the relative cognition, and by both conjointly, are to be inferred according to the analogy of the preceding. U.

[1] The usage [notion and expression] of prior and posterior [is produced] by two portions of matter occupying the same space, that is, having the same space as their site, and contiguous or remote, that is objects of a cognition of inherence in a substratum of more or less conjunctions with the sun. The efficient cause, therefore, of posteriority in space is the cognition of the substratum of more numerous conjunctions with the sun, the non-coinherent cause is conjunction of space in the matter which is the substratum of [this quality of posteriority], and the co-inherent cause is the matter which is the object of such cognition. The efficient cause of priority in space is the cognition of a substratum of fewer conjunctions of the sun; its co-inherent cause is the matter [which is the object of such a cognition]; thenon-coinherent cause is conjunction of space in such matter. For there is such a usage [judgment and proposition] as that to one living at Páṭaliputra [Patna] Káśi [Benares] is nearer than Prayága [Allahabad], and Prayága further than Káśi. The object of this cogni-

[1] एका दिक् आधारतया ययोस्तावेकदिक्कौ मूर्तौ ताभ्यां मूर्ताभ्यां सन्निकृष्टविप्रकृष्टाभ्यां बहुतरसूर्यसंयोगाश्रयत्वाल्पतरसूर्यसंयोगाश्रयत्वज्ञानविषयाभ्यां परमपरञ्चेति व्यवहारो जायते इत्यर्थः तथाच दैशिकपरत्वं प्रति बहुतरसूर्यसंयोगाश्रयत्वज्ञानं निमित्तकारणं तदाश्रये मूर्ते दिक्संयोगोऽसमवायिकारणं तादृशज्ञानविषयोमूर्तः समवायिकारणम् दैशिकापरत्वस्याल्पतरसूर्यसंयोगाश्रयत्वज्ञानं निमित्तकारणं तद्विषयोमूर्तः समवायिकारणं तादृशमूर्ते दिक्संयोगोऽसमवायिकारणमिति भवति हि पाटलिपुत्रस्थस्य काशीमपेक्ष्य प्रयागः परः प्रयागमपेक्ष्य काश्यपरेतिव्यवहारः तद्विषयः परत्वं प्रयागे उत्पद्यते तत्र बहुतरसूर्यसंयोगाश्रयत्वेन तस्य ज्ञातत्वात् काश्याञ्चापरत्वं जायते अल्पतरसूर्यसंयोगाश्रयत्वेनतस्या ज्ञातत्वात् एककालाभ्यामिति एकः कालः संयोगितया ययोः पिण्डयोस्ताभ्यामेककालाभ्यां पिण्डाभ्यां सन्निकृष्टविप्रकृष्टाभ्याम् अल्पतरतपनपरिस्पन्दबहुतरतपनपरिस्पन्दाश्रयतया ज्ञाताभ्यां परमपरञ्चेति व्यवहारो भवति भवति हि युवानमपेक्ष्य स्थविरः परः स्थविरमपेक्ष्य युवाऽपर इत्यादिको व्यवहारस्तद्विषयत्वं परत्वस्य समवायिकारणं स्थविरः तत्र महाकालस्य संयोगोऽसमवायिकारणम् बहुतरसूर्यक्रियाश्रयत्वज्ञानं निमित्तकारणम् अपरत्वस्य च युवा समवायिकारणम् युवशरीरमहाकालयोः संयोगोऽसमवायिकारणम् स्थविराश्रिततपनस्पन्दापेक्षयाऽल्पतरतपनस्पन्दाश्रयत्वेन यूनोज्ञानं निमित्तकारणम् यद्यपि शरीराणां बाल्ययौवनवार्द्धक्यभेदेन भिन्नत्वात् युवस्थविरगततपनपरिस्पन्दानां वैपरीत्यमपि सम्भवति तथापि बहुतरतपनपरिस्पन्दसमानाधिकरणवैजात्यवत्त्वज्ञानमेव स्थविरे कालिकपरत्वस्य कारणम् अल्पतरतपनस्पन्दसमानाधिकरणवैजात्यज्ञानञ्च यून्यपरत्वस्य कारणमिति नच घटाद्यपेक्षया परमाणोरपि बहुतरसूर्यक्रियासमानाधिकरणपृथिवीत्वादिजातिमत्त्वज्ञानात् परत्वं कथं नोत्पद्यते इति वाच्यं बहुतरसूर्यक्रियासमानाधिकरणैककालीनद्व्याव‍ृत्तिजातिमत्त्वस्य विवक्षितत्वात् तादृशजातिञ्च चैत्रत्वादिः सूर्यक्रियाऽपि तत्कालोत्तरकालीनान्यत्वेन विशेषणीया नातोऽशीतिवर्षजीविस्थविरचैत्रापेक्षयो शतवर्षजीवियुवमैत्रे परत्वोत्पत्तिः अथवा सूर्यपरिस्पन्दपूर्वोत्पन्नत्वं विप्रकर्षः तदनन्तरोत्पन्नत्वं सन्निकर्षः युवचैत्राद्युत्पत्त्यधिकरणं यः सूर्यस्पन्दस्तत्पूर्वोत्पन्नत्वं स्थविरमैत्रादो वर्तते इति स्थविरे परत्वम् स्थविरमैत्राद्युत्पत्त्यधिकरणसूर्यस्पन्दानन्तरोत्पन्नत्वं युवचैत्रादावस्तीति तत्रापरत्वं जायते अचेतने कालिकपरत्वापरत्वव्यवहाराभावे तु प्राणित्वे सतीति विशेषणं देयम् तत्तच्छरीरमादायातिप्रसङ्गस्तु जातिविशेषनिवेशेन वारणीय इति संक्षेपः। द्विविधयोः परत्वापरत्वयो नाशकोऽपेक्षाबुद्धिनाश इति मुक्तावलीकारः उपस्कारे तु त्रिविधकारणनाशस्यैव परत्वापरत्वनाशकत्वमुक्तमिति ॥

tion, posteriority, arises in reference to Prayága, because Prayága is there cognised as the site of more numerous conjunctions with the sun, and the priority in reference to Káśi arises from its being known that Káśi is the site of less numerous conjunctions with the sun. The usage [notion and expression] of prior and posterior [is produced] by two bodies occupying the same time, that is, by two bodies which have one time to conjoin them, contiguous and remote, that is cognised as substrata of more or less numerous revolutions of the sun. For there arise such cognitions [and expressions] as that an old man is posterior in relation to a young man, and a young man prior in relation to an old man. The old man is the co-inherent cause of the posteriority which is the object of this cognition, the non-coinherent cause is conjunction with a greater time; the efficient cause is the cognition of the substratum of more numerous revolutions of the sun. The young man is the co-inherent cause of priority; the non-coinherent cause is the conjunction of the body of the young man with a great time; the efficient cause is the cognition of the young man as the substratum of less numerous revolutions of the sun than those inherent in the old man. Although bodies differ according to childhood, youth, and old age, and there is consequently possible therein the contrariety of the revolutions of the sun existent in the old man and the young, yet it is the cognition of heterogeneity in the common substratum of more numerous conjunctions with the sun that is the cause of temporal posteriority in the old man; and the cognition of heterogeneity in the substratum of less numerous conjunctions with the sun that is the cause of priority in the youth. It cannot therefore be asked in objection why posteriority is not produced in an atom, as compared with a water-pot &c, inasmuch as there is cognised in the atom the possession of the general attribution terrestriality &c. the common substratum of more numerous movements of the sun. For by this is meant possession of a general attribution non-existent in two contemporaneous common substrata of more numerous movements of the sun. Such a general attribution is the being Chaitra, &c. The solar motion is also to be characterised as other than that which is subsequent to that time Hence it is that there is not produced posteriority in Maitra as a youth a hundred years old as compared with Chaitra an old man of eighty. Or remoteness may be defined as production prior to revolutions of the sun, and contiguity as production subsequent thereto. Production prior to the revolution of the sun which was the substratum of the production [i. e. year of the birth] of Chaitra the young man &c., exists in the old man Maitra &c., and therefore there is priority in the senior. Production subsequent to the revolution of the sun which was the substratum of the production of Maitra the senior exists in Chaitra the junior &c., and posteriority is therefore produced in him. Inasmuch as there is in the unsentient non-existence of the cognition of priority and posteriority in time, we must add to the definition the condition of there being a sentiency. Undue width [in the definition] when we consider such and such a particular body is to be prevented by the addition of a certain universality. It is to be observed that the author of the Muktávalí states that the destruction of the cognition of relativity is destructive of priority and posteriority in both their forms [that is, of both local and temporal priority and posteriority], while in the Upaskára it is laid down that it is the destruction of their three-fold causes that is destructive of priority and posteriority. V.

कारणपरत्वात् कारणापरत्वाच्च ॥ २२ ॥

Aph. 22. [Priority and posteriority result] from posteriority of the cause, and from priority of the cause.

[1] Time is the cause of priority and posteriority. There is here stated by indication conjunction with time as the non-coinherent cause of posteriority, and conjunction with time as the non-coinherent cause of priority, in relation to the priority and posteriority of the time. Otherwise [were not this implied] there would be no connection [between the words of the aphorism], for priority and posteriority could not be produced merely by priority and posteriority. The terms priority and posteriority have, therefore by implication the meaning of conjunction with time productive thereof. U.

परत्वापरत्वयोः परत्वापरत्वाभावो ऽणुत्वमहत्त्वाभ्यां व्याख्यातः ॥ २३ ॥

Aph. 23. The non-existence of priority and posteriority in priority and posteriority is explained by minuteness and greatness.

कर्मभिः कर्माणि ॥ २४ ॥

Aph. 24. Actions [are void] of actions.

गुणैर्गुणाः ॥ २५ ॥

Aph. 25. Qualities [are void] of qualities.

इहेदमिति यतः कार्यकारणयोः स समवायः ॥ २६ ॥

Aph. 26. That is co-inherence by virtue of which it may be said of cause and effect that the one is in the other.

[1] परत्वापरत्वयोः कारणं कालस्तस्य परत्वापरत्वे परत्वासमवायिकारणकालसंयोगोऽपरत्वासमवायिकारणकालसंयोगश्च लक्षणयोक्तः अन्यथाऽनन्वयापत्तेः नहि परत्वापरत्वाभ्यामेव परत्वापरत्वे उत्पद्येते तस्मात् परत्वापरत्वपदयोस्तदुत्पादककालसंयोगावर्थौ लक्षणया ॥

प्रयुक्तभोगप्रसरेऽप्युदासः
सदापि दक्षः श्रियमीक्षते स्वाम् ॥ २० ॥
श्लथीकृतोद्दामतपोनयोक्तिः
सुखैरशेषैर्विषयोपयुक्तैः ।
जानन् विभोः पञ्चमुखस्य मूर्ति-
मात्मानमानन्दयते महात्मा ॥ २१ ॥
स्वात्मप्रशंसापरदूषणार्थि-
नकारयाञ्चावचनेषु मूकाः ।
नराः परानन्दसुधापयोधि-
तरङ्गरङ्गद्यशसो जयन्ति ॥ २२ ॥
जित्वारिषड्वर्गमुदग्रतेजाः
शमद्रुमच्छत्रतले चकास्ति ।
कश्चित् कृती जह्नुकलिन्दकन्या-
वीचीचलच्चामरवीजिताङ्गः ॥ २३ ॥
यथोक्तदानव्यसनी यथोक्त-
श्राद्धी यथोक्ताखिलतीर्थसेवी ।
यथोक्तसांसारिकतात्त्विकश्री-
र्जनो मनोज्ञानि यशांसि धत्ते ॥ २४ ॥
धन्याः सुधाधामकलाकिरीट-
माराधयन्ति स्मितभक्तयस्तम् ।
यस्य प्रभावं य इवाद्भुतश्री-
र्वक्तुं विविक्तो हरिरेव देवः ॥ २५ ॥
इत्युक्तिभाजि द्युधुनीतनूजे
भूजेतरि प्रश्नपरे मुरारिः ।
वाचं समुच्चारयति स्म कुक्षि-
प्रक्षिप्तसप्ताम्बुधिशब्दमुद्राम् ॥ २६ ॥
सर्वज्ञमानी सततोद्यदुद्य-
ज्ज्ञानप्रधानोऽपि स योगिवर्गः ।
व्योम्नो यदङ्गाष्टमभागभाव-
भाजो न पर्यन्तपदं ददर्श ॥ २७ ॥
ईदृग्विधाः सन्ति न रोम्णि रोम्णि
ब्रह्माण्डपिण्डाः कति यस्य भर्तुः ।
संभूय तत्तद्गतविष्णुधातृ-
श्रेण्यापि वर्ण्ये क्व नु यन्महत्त्वम् ॥ २८ ॥

लोलं मनः श्लिष्यति यद्यदाशु
चक्षुश्चलं चुम्बति यद्यदग्रे ।
वाक् स्वैरिणी यद्यदुपैति तत्
तन्मुक्तिप्रदं यन्मयविश्वबोधात् ॥ २९ ॥
यन्मौलिजस्वेदजलप्रवाह-
निस्यन्दसंदोहनदैकदेशे ।
नाभीसरोजस्थितविश्वकर्ता
हरिस्त्रिलोकीजठरोऽपि शेते ॥ ३० ॥
स एव देवः परमस्तमांसि
महांसि चातीत्य कृतप्रतिष्ठः ।
इच्छाक्रियाज्ञानकृतप्रशास्ति-
लुप्तत्रिलोको जयति त्रिनेत्रः ॥ ३१ ॥
इदं वदन्नेव महेशमन्त-
र्निधाय स ध्यानदृशावतस्थे ।
रोमाञ्चवद्भिः करसंपुटानि
भाले न्यधीयन्त युधिष्ठिराद्यैः ॥ ३२ ॥
अथो तथोद्यन्महनीयमोह-
निशावसानक्षणजागरूके ।
जनेऽखिलेऽस्मिन् कृकवाकुवाक्य-
ध्वनिर्धुनीसूनुरिलापमूचे ॥ ३३ ॥
चेतश्चलं गच्छति यत्र यत्र
तृणेऽपि तत् तत् कुशला रसेन ।
ध्यायन्ति तत्कालभवद्भुजंग-
गङ्गादिशृङ्गारिततत्स्वरूपम् ॥ ३४ ॥
तदीदृगेकैकगुणाश्रितोऽपि
कर्मावलीं कर्मकरीं करोति ।
यस्त्वीदृशाशेषगुणाभिरामः
समानधाम्नः परमस्य धाम ॥ ३५ ॥
धर्मज्ञ सत्कर्मनिधे कुकर्म-
हृतेषु वंश्येषु वृथाभिशङ्की ।
तन्मा मुहः पालय भूमिपाल
महीमहीनाखिलधर्मकर्मा ॥ ३६ ॥
वियद्गतं सिन्धुसुतं स्वशिष्यं
द्रष्टुं तदा वाक्पतिरागतश्च ।

नत्वार्थितः कर्मगती: शरीर-
शरीरिणोराह च खं गतश्च ॥ ३७ ॥
प्रणम्य भूपेन जगत्स्वरूपं
पृष्टस्तदा नाकनदीकुमार: ।
समग्रमावेदयति स्म वेद-
श्रुत्यादिविद्यार्णवपारदृश्वा ॥ ३८ ॥
सदः पदे निर्धनिके तदानीं
व्यासाज्ञया शन्तनुनन्दनेन ।
ते प्रेषिता जग्मुरथो रथोर्मि-
पश्चात्पतद्वायुरयाः पुराय ॥ ३९ ॥
द्विजैस्तदानीं परिषेव्यमाणः
स्वःसिन्धुजन्मा विमलात्मवृत्तिः ।
शिलीमुखश्रेण्यनुविद्धमूर्ति-
र्बभौ मरालैरिव पद्मखण्डः ॥ ४० ॥
निशानिशानामभिदानिदानं
दानी तदा नीतिपरः पुरान्तः ।
सद्धर्मकर्मा स्मयमानशर्मा
भिन्नाघमर्मा नृविभुर्बभासे ॥ ४१ ॥
भजत्यथाशां धनदस्य दीने
कालक्रमक्षीणवशौ दिनेशे ।
जनार्दनाद्यैः सह भूमिकान्तः
पितामहोपान्तमहीमियाय ॥ ४२ ॥
उन्मीलितध्याननिमीलिताक्षं
मन्दाकिनीनन्दनमिन्दुकीर्तिम् ।
युधिष्ठिरस्त्वां नमतीत्युदीर्य
नत्वा निषण्णो नृपतिः पुरस्तात् ॥ ४३ ॥
भृशं विशब्दैरवलोक्यमान-
मुखारविन्दः परमर्षिवृन्दैः ।
दृशौ समुन्मील्य सभां निभाल्य
गङ्गात्मभूर्भूमिविभुं बभाषे ॥ ४४ ॥
दिष्ट्याद्य दृष्टोऽसि तपस्तनूज
सुप्तोऽस्मि मासद्वयमाशुगेषु ।
इहोनराभाजि रवौ भवन्त-
मामन्त्र्य याम्येष शिवाय धाम्ने ॥ ४५ ॥
उक्त्वेति किंचित्परिवृत्तचक्षु-
र्भीष्मोऽम्बिकासूनुमिदं जगाद ।
न शोचनीयो भवताभितोष्यः
संतोषभाजा सुत एष राजा ॥ ४६ ॥
अथाच्युतं क्लृप्तनुतिर्विनम्य
गन्तुं तमामन्त्र्य तदाज्ञयाशु ।
प्राणानिलस्तम्भनशक्तिनिर्य-
च्छल्यौघमङ्गं मुमुचे महात्मा ॥ ४७ ॥
अभूतपूर्वामहिमद्युतोऽपि
छायां क्षणं नर्तयदङ्गसीम्नि ।
भित्त्वा शिरः शन्तनुनन्दनस्य
ज्योतिर्विहायो विमलं विवेश ॥ ४८ ॥
निर्माय दिव्यां शिविकां युयुत्सु-
धृतातपत्रः क्षितिपेन भीष्मः ।
नीतश्चितायां चितचन्दनायां
भीमार्जुनान्दोलितचामराग्रः ॥ ४९ ॥
प्रभोर्मिमैच्यादिव पावकेन
क्रोडीकृतायामथ भीष्ममूर्तौ ।
राजानुगैः साकमकारि नाक-
तरङ्गिणीवारिणि वारिकृत्यम् ॥ ५० ॥
हा हा वत्स शिखण्डिनापि मशकेनेव त्वमस्तः करी
क्वेति स्वीकृतपूर्वमूर्तिरतुलाक्रन्दाथ मन्दाकिनी ।
इन्द्राद्यैरपि दुर्जयस्तव वपुःसूनुर्मृतः स्वेच्छया
मा रोदीरिति बोधिता मधुजिता निष्यन्दमौनाभवत् ॥५१॥
आनम्य धूर्जटिजटावलयस्य विश्व-
कल्याणपुण्यकलशस्य जलं त्रिमार्गाम् ।
आविर्भविष्यदधिकाधिकवीरसंपद्
भूयः पुरीं सहचरैः सहितस्ततोऽगात् ॥ ५२ ॥
भेजे श्रीजिनदत्तसूरिसुगुरोरर्हन्मतार्हस्थितेः
पादाब्जभ्रमरोपमानममरो नाम व्रतीन्द्रः कृती ।
तद्भाषाभुवि बालभारतमहाकाव्येऽनुशास्तिक्रमं
श्रेयःश्रीसदनं त्रयोदशमिदं पर्व प्रपेदे शमम् ॥ ५३ ॥
अमुनैकेन सर्गेण पर्वण्यत्रानुशासने ।
अनुष्टुभां विनिर्दिष्टा सप्ततिः षड्भिरुत्तरा ॥ ५४ ॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रविरचिते बालभारतनाम्नि महाकाव्ये वीराङ्केऽनुशासनपर्वणि भीष्मस्वर्गगमनो नामैकचत्वारिंशः सर्गः ॥ ४१ ॥ पर्व १३ ॥

---

## ॥ अथ बालभारतकाव्यस्य ॥

॥ अश्वमेधपर्वारम्भः ॥

भवाकूपारपारद्रुः पाराशर्यमुनिर्मुदे ।
नैति यद्वार्तागुच्छस्तुच्छभाग्यस्य भोग्यताम् ॥ १ ॥
स्रवन्तीसूनुशोकाब्धौ क्ष्मापतिः पतितस्ततः ।
कौरवोत्तंसकंसारिव्यासैराकृष्यत द्रुतम् ॥ २ ॥
तदा तदुक्तिभिः पापशाखिप्लोषिशिखित्विषे ।
अधत्त हयमेधाय मेधामयमिलाधवः ॥ ३ ॥
विग्रहग्रस्तनिःशेषलक्ष्मीरेष मखोदये ।
दुःखं दधौ गुणाधाने धिया हीन इवाधिकम् ॥ ४ ॥
मखशेषो मरुत्तस्य राज्ञः कनकसंचयः ।
अङ्के हिमालयस्यास्ति हेमाचलकुमारवत् ॥ ५ ॥
तमाप्नुहि महीनाथ समाप्नुहि महामखम् ।
विधेहि विश्वमनृणं पिधेहि दुरितच्छटाः ॥ ६ ॥
इत्युक्त्वा नृपमामन्त्र्य वन्द्यमानो विमानिभिः ।
द्यां ययौ तडिदुल्लासः श्रीव्यासः शर्मभिः शमम् ॥७॥
विशेषकम् ।
समोद्यानविहारेऽथ तां गीतां पुनरैन्द्रिणा ।
पृष्टोऽनु गीतामाचष्ट कंसारिः सा पुनः क्व गीः ॥ ८ ॥
ततः कृतमखारम्भसमागमनसंविदा ।
गत्वा मुरारिणाकारि द्वारिका हर्षकारिका ॥ ९ ॥
हिमाद्रितो महादेवसेवावल्लिफलान्यथ ।
आनिनाय महीजानिस्तानि हेमानि यज्ञधीः ॥१०॥
वसत्येव हरिर्देवः सत्यसूनोः सदा हृदि ।
तदाशु तदभिप्रायं मत्वेवायं यदागतः ॥ ११ ॥
द्रौण्यस्त्रदग्धं कालेऽस्मिन्नसूत सुतमुत्तरा ।
प्रतानिनीव दुर्वातजलोल्कानिष्कलं फलम् ॥ १२ ॥
ततः कुन्तीसुभद्रादिक्रन्दार्द्रहृदयो हरिः ।
तं दृष्ट्याजीवयद् वृष्ट्या सद्यो भेकमिवाम्बुदः ॥१३॥
मृतो जातः परिक्षीणे कुरूणामयमन्वये ।
परिक्षिदितिनामानमेनमूचे तदच्युतः ॥ १४ ॥
अथ व्यासाज्ञया राज्ञा यज्ञाय बहुकौतुकम् ।
संभारः स्फाररत्नाढ्यः प्रावर्तत महाधनः ॥ १५ ॥
कृष्णसारमथोत्सृज्य हरिमर्जुनरक्षितम् ।
विधिना चैत्रशुक्लान्ते दीक्षितः क्षितिपोऽभवत् ॥ १६ ॥
कोऽपि हन्त न हन्तव्य इति राजाज्ञयार्जुनः ।
क्षत्राणि नमयन्नेव तृणानीव समीरणः ॥ १७ ॥
प्राग्ज्योतिषपतिं जित्वा वज्रदत्तं त्रिभिर्दिनैः ।
सिन्धुदेशं ययौ युद्धचतुरस्तुरगानुगः ॥ १८ ॥
युग्मम् ।
अथाङ्के बिभ्रती बालं मरालमिव बाष्पदृक् ।
अवश्यायलवाकीर्णसरोजेव सरोजिनी ॥ १९ ॥
मृधोग्रसैन्धवक्रोधधूमध्वजपयोधरम् ।
एत्यार्जुनं दयालीनं दीनाभ्यर्थित दुःशला ॥ २० ॥
युग्मम् ।
भ्रातर्भर्गाभिधानेन भवाभोग इवाङ्गिनाम् ।
अभावमभजत् पुत्रस्त्वन्नाम्नैव श्रुतेन मे ॥ २१ ॥
पौत्रो जयद्रथस्यायं शिशुः स्वस्रेयजस्तव ।
गुरुर्भवान् भवत्वस्य राज्यश्रीपाणिपीडने ॥ २२ ॥
स्वस्रेयस्यैवमश्रेयः श्रुत्वा निन्दन् निजोद्यमम् ।
बालं भूपालयन्नैन्द्रिर्बान्धवीं तामबोधयत् ॥ २३ ॥
अथार्जुनो ययौ तेजःशुष्यद्वैरियशोजलः ।
मणिपूरपुरीमर्कः पाशपाणिपुरीमिव ॥ २४ ॥
बलेन बभ्रुवद्बभ्रुवाहनस्तत्पुरीपतिः ।
तत्पुत्रः पितृभक्त्यामुमाजगाम ननाम च ॥ २५ ॥
सुतस्य तस्य तेजांसि द्रष्टुमुत्कण्ठितस्ततः ।
वाचमूचे चमूचेतश्चमत्कारकरीं नरः ॥ २६ ॥
न मे विमुक्तखड्गस्य त्वत्प्रणामः प्रियंकरः ।
शूद्राणां वयसा ज्यैष्ठ्यं क्षत्राणामूष्मणा पुनः ॥ २७ ॥
पार्थप्रिया तदोलूपी भूपीठभिदयोत्थिता ।
महाभुजं भुजङ्गीयमब्रवीद्बभ्रुवाहनम् ॥ २८ ॥
अयं वत्स भवत्सत्त्वविलोकनकुतूहली ।
त्वत्पिता तापितारातिरातिथ्यं मृधमीहते ॥ २९ ॥

निशम्येदं तदारुह्य मुह्यत्कृत्यपथो रथम् ।
चापमारोपयत् साकं स्वभ्रुवा बभ्रुवाहनः ॥ ३० ॥
पितृपुत्रावथो विश्वे स्वं दर्शयितुमक्षमौ ।
ह्रियेव चक्रतुः काण्डच्छन्नार्ककिरणं रणम् ॥ ३१ ॥
गत्वा दिवं भुवं स्पृष्ट्वा पातालस्य तलेऽविशन् ।
एतयोर्यशसां स्थानं दर्शयन्त इवेषवः ॥ ३२ ॥
अथार्जुनिः पृथासूनुहतसारथितो रथात् ।
उत्ततार गिरेः शृङ्गादिव क्रुद्धो मृगाधिपः ॥ ३३ ॥
अपतन्मणिपूरेन्द्रमार्गणैरैन्द्रिमार्गणाः ।
छिन्नाः शिखित्विषो धाराधरधाराभरैरिव ॥ ३४ ॥
स्वनन्दनमृधास्कन्दसानन्दहृदयस्तदा ।
पृथाभूः प्रथयामास शिथिलं शिथिलं शरान् ॥ ३५ ॥
बभ्रुवाहनबाणेन गाढं हृदि हतोऽर्जुनः ।
आकुलः कुलिशाग्रेण कुलशैल इवापतत् ॥ ३६ ॥
जगत्त्रयजयोन्मुद्रे रुद्रेणाप्यजिते युधि ।
शब्दोऽभूद्दिवि हा हेति हेतिभिन्नेऽर्जुने तदा ॥ ३७ ॥
पतितं पितरं भानुमिवालोक्य विमूर्च्छितः ।
सूर्यकान्तशिलोत्थाग्निरिव चित्राङ्गदाङ्गजः ॥ ३८ ॥
तत्र चित्राङ्गदागत्य दृष्ट्वा सुतहतं पतिम् ।
विललापतमां तापतमांस्येकत्र बिभ्रती ॥ ३९ ॥
हा चित्तेश ह हा कान्त ह ह हा शान्तमानस ।
किं धाम्नि मम जायायाः समायातस्य तेऽभवत् ॥४०॥
चिरागतोऽप्यनालप्य स्वामिन् दास्योचितं जनम् ।
आतिथ्येन तनूजस्य सुखिनः स्वपिषीति किम् ॥४१॥
इत्युच्चैः प्रलपन्ती सा रोदयन्ती खगानपि ।
सपत्नीमुरगीं गाढमाश्लिष्य क्ष्मातलेऽलुठत् ॥४२॥
अथ संज्ञां समासाद्य स्वं निन्दन् विलपन् मुहुः ।
मृत्यौ दधे धियं दुःखवाहनो बभ्रुवाहनः ॥४३॥
सत्याहिसुतया ध्यातस्तदायातस्तलाद्भुवः ।
भोगिलोकशिरोरत्नमिव संजीवनो मणिः ॥ ४४ ॥
यदैव स तया दत्तो हृदये हृदयेशितुः ।
तदैव दैवमाक्रम्य तस्य चात्मानमानयत् ॥ ४५ ॥
हर्षाश्रुधौतशोकाश्रुतापदूषितचक्षुषम् ।
सुप्तोत्थित इवापश्यदथ पार्थः परिच्छदम् ॥ ४६ ॥

अथोचे वाक्सुधाकूपी तमुलूपी कृताञ्जलिः ।
नाथ धन्योऽसि धन्यानामेव पुत्रात् पराजयः ॥४७॥
किंतु जघ्ने यदा भीष्मः शप्तोऽसि वसुभिस्तदा ।
वध्योऽस्त्वसौ सुतस्येति कोऽन्यथा त्वज्जयी भवेत् ॥४८॥
मत्पित्रा मत्कृपार्द्रेण ते भक्त्याभ्यर्थितास्तदा ।
त्वत्कालरजनिव्योममणिं प्राहुरमुं मणिम् ॥ ४९ ॥
इत्युक्त्या प्रीतिमान् पार्थस्ते पत्न्यौ च सुतं च तम् ।
आमन्त्र्यार्णवमर्यादां क्ष्मां जिगाय हयानुगः ॥ ५० ॥
सर्वैर्यज्ञे समेतव्यमित्याज्ञाप्य महीपतीन् ।
उत्सवी नर्तयन् कीर्तिं प्राप पौरंदरिः पुरीम् ॥ ५१ ॥
राज्ञाथ रुक्मसर्वाङ्गः कारितः क्रतुमण्डपः ।
दानद्वेषिनिशापोषिनित्यवासरवानिव ॥ ५२ ॥
भूदेवनरदेवानां प्रियमेलकतीर्थवत् ।
हृष्यद्विश्वमनोभावः प्रावर्तत ततः क्रतुः ॥ ५३ ॥
अथ सत्यसुतप्रीतिकृते सत्यवतीसुतः ।
स्वयं क्रियाचयं चक्रे दिव्यदीक्षाकृतेक्षणः ॥ ५४ ॥
विशुद्धध्यानदीधित्या महामखशिखित्विषा ।
दानकाञ्चनकान्त्या च राज्ञो भिन्नं त्रिधा तमः ॥ ५५ ॥
क्रियान्तरेषु देवर्षिसिद्धगन्धर्वकिंनराः ।
मङ्गलान्न जगुस्तत्रानृत्यन्नप्सरसो रसात् ॥ ५६ ॥
धूमभ्रमच्छलोत्क्षिप्तक्ष्मापपापं हविर्भुजम् ।
धिन्वन्तो विधिना यज्ञकर्मपारं ययुर्द्विजाः ॥ ५७ ॥
अथ कृष्णमुनीन्द्राय दक्षिणां क्षोणिपः क्षितिम् ।
ददौ दानैकचतुरश्चतुरब्धिसरोजिनीम् ॥ ५८ ॥
कोटिं हाटककोटीनां विप्रेभ्यः संप्रदाय सः ।
द्वैपायनगिरा प्रापदुर्वीमुर्वीधवः पुनः ॥ ५९ ॥
क्रीडन्तो मेरुकूटाभैः स्वर्णकूटैर्नृपार्पितैः ।
महामुदो महीदेवा देवा इव तदा बभुः ॥ ६० ॥
अथौचित्यलसत्कृत्यं सत्कृत्य विषयाधिपान् ।
नृपतिः प्राहिणोत् तेऽपि तद्गुणग्राहिणो ययुः ॥ ६१ ॥
घृतदुग्धनदीमुग्धास्रग्धान्नशिखरिव्रजः ।
राज्ञा तेने तदा ब्रह्मसंघभोज्यमहोत्सवः ॥ ६२ ॥
अथाम्बिकेयं गान्धारीं विदुरं संजयं तदा ।
पार्थिवोऽपूजयत् पुण्यप्रत्यक्षा इव देवताः ॥ ६३ ॥

तदा च प्राचरत् तत्र स च धात्रीतले बिलात् ।
नकुलः स्वर्णवर्णैकपार्श्वः पार्श्वे द्विजन्मनाम् ॥ ६४ ॥
रूपविस्मापितान् भूपमुख्यान् विस्मापयन् पुनः ।
वाचमव्याकुलोऽवोचन्नकुलो नृकुलोचिताम् ॥ ६५ ॥
प्रीतेन्द्रादिसुरः प्रीतश्रीव्यासादिद्विजो मखः ।
व्यनक्तु सक्तुप्रस्थस्य क्व तुलां कलयाप्ययम् ॥ ६६ ॥
वित्तवृष्टिमयो दृष्टिमदायैव महोत्सवः ।
अल्पः फले यथानल्पः कायच्छायो वटद्रुमः ॥ ६७ ॥
स व्याचष्ट द्विजैः पृष्टः सक्तुप्रस्थकथामथ ।
पुण्याङ्कुरः कुरुक्षेत्रे द्विजराजः पुराजनि ॥ ६८ ॥
शिलोञ्छवृत्तेः कार्श्येन कृशस्तस्य भवोऽप्यभूत् ।
किं चित्रं शत्रवोऽपि स्युः सतां कष्टेन कष्टिनः ॥ ६९ ॥
दुर्भिक्षे महति क्षीणशिले क्षोणितलेऽखिले ।
भ्रान्त्वा क्षोणितलं सक्तुप्रस्थं प्राप कदापि सः ॥ ७० ॥
विधिमावश्यकं कृत्वा वैश्वदेवादिकं वशी ।
भोक्तुं स्थितोऽर्थिनं प्रेक्ष्य प्रियामुत्पुलकोऽवदत् ॥ ७१ ॥
प्रिये पश्य प्रसन्नोऽद्य मम धर्मो व्रतोर्मिभिः ।
अर्थेषु सत्सु कालेऽच दर्शयन् प्राप्तमर्थिनम् ॥ ७२ ॥
प्रशंसन्नपि सत्पात्रं दाने कालविलम्बकृत् ।
तदर्तिक्षणसत्ताया: पापं लुम्पति कैर्व्रतैः ॥ ७३ ॥
अथ हर्षाश्रुपूर्णाक्षिपुटः पुलकमुद्वहन् ।
क्षुधितः स स्वभागान्नं क्षुधितायार्थिने ददौ ॥ ७४ ॥
दध्युस्तस्य द्विजेन्द्रस्य प्रिया पुत्रः स्नुषाप्यथ ।
अस्मै ददुः स्वभागान्नमन्नेनानेन तृप्यतु ॥ ७५ ॥
इत्थं मनोरथैस्तेषां न शान्तस्य क्षुधा तदा ।
ते सर्वे स्वस्वभागान्नं तदा तस्मै ददुर्मुदा ॥ ७६ ॥
तेषां सुकृतिनामन्नैस्तृप्तोऽयमतिथिर्जगौ ।
धर्मसत्त्वमहत्त्वाद्वः प्रीतोऽहं सिद्धिमाप्नुहि ॥ ७७ ॥
इत्युक्त्वान्तर्हिते धर्मे दुःकर्मेन्धनवह्नयः ।
जग्मुस्तिग्मांशुमानैस्ते विमानैर्देहिनो दिवम् ॥ ७८ ॥
जगाम तामहं सक्तुगन्धसंबन्धतो धराम् ।
विप्रोच्छिष्टपयःस्पृष्टं पार्श्वं हैममभून्मम ॥ ७९ ॥
द्वितीयपार्श्वहेमत्वचिन्तया कुत्र कुत्र न ।
द्विजभोज्यभुवि भ्रान्तः संप्राप्तोऽचापि संप्रति ॥ ८० ॥

क्वापि प्रापि पुनस्तादृक्प्रीत्यै नायं प्रभाकणः ।
सक्तुप्रस्थस्य साम्यं तत् किमयं क्रामतु क्रमम्[1] ॥ ८१ ॥
इत्युदीर्य गते तत्र चित्रकान्तावदर्शनम् ।
भूकान्ते संभ्रमभ्रान्ते वाचं व्यासः समासदत् ॥ ८२ ॥
शुद्धो भावः क्वचिल्लक्ष्मीः क्वचिन्नोभावपि क्वचित् ।
सर्वेभ्यः सर्वशुद्धोऽयं क्रतुभ्योऽभ्यधिकः क्रतुः ॥ ८३ ॥
सुरासुरमखेभ्योऽपि शुद्धे यौधिष्ठिरे क्रतौ ।
नकुलोऽस्मिन्ननार्यत्वमनार्यः कार्यतो जगौ ॥ ८४ ॥
बोद्धुं कोपः पुरा श्राद्धे यमदग्निमुनेः शमम् ।
पिठरस्थं पयः पित्र्यं श्वा भूत्वा जिह्वया लिहन् ॥ ८५ ॥
धर्मः शुनामयं नाम दोषोऽयमिह रक्षितुः ।
इत्यसौ न शशापैनं सारमेयममेयदृक् ॥ ८६ ॥
अशप्तस्तेन कोपोऽयं कम्पमापोग्रपापकृत् ।
दुरन्तस्यापि पापस्य मुनिशापो हि शोधनः ॥ ८७ ॥
शप्तस्तत्पितृभिः कोपः स्वोपयोगिपयो लिहन् ।
अदभ्रविभ्रमो भूमौ भवान् बभ्रुर्भवेदिति ॥ ८८ ॥
यदा यौधिष्ठिरे यज्ञे करिष्यसि विमाननाम् ।
तदा विमुच्यसे सत्यं दत्तस्तैरित्यनुग्रहः ॥ ८९ ॥
अयं स कोपनकुलः कुर्वन्निह विमाननाम् ।
राज्ञो यज्ञोद्भवां मानमूर्च्छामुक्त्वा व्यमुच्यत ॥ ९० ॥
बभ्रोरित्यद्भुतकथाश्रवणप्रवणाशयाः ।
भूदेवनरदेवाद्याः सर्वे विस्मयमाश्रयन् ॥ ९१ ॥
इतियतिशतहर्षस्फायमानप्रकर्षः
प्रततहुतिविधानः प्रौढसत्पात्रदानः ।
दलितदुरितभारः सोऽभवत् पुण्यसारः
कृतकुगतिनिषेधस्तस्य राज्ञोऽश्वमेधः ॥ ९२ ॥
भेजे श्रीजिनदत्तसूरिसुगुरोरर्हन्मतार्हस्थितेः
पादाब्जभ्रमरोपमानममरो नाम व्रतीन्द्रः कृती ।
तद्विद्याहृदि बालभारतमहाकाव्येऽश्वमेधोद्भवं
पर्व प्रीतिपदं चतुर्दशमिदं संप्राप संपूर्णताम् ॥ ९३ ॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रविरचिते बालभारतनाम्नि महाकाव्ये वीराङ्के चतुर्दशमाश्वमेधिकं पर्व ॥ १४ ॥ :: :: ॥

१ गच्छतु क्रतुः इति पा० ।

## ॥ अथ बालभारतकाव्यस्य ॥

॥ आश्रमवासिकपर्वारम्भः ॥



अथास्मिन् वसुधां पाति धर्मेणाप्यचिकित्सितम् ।
अभूदर्थिकराप्राप्तिरेव दुःखं जगज्जुषाम् ॥ १ ॥
तदाघमर्षणे तस्य नामन्येव श्रुते स्मृते ।
श्रुतिस्मृतिपरीवारा व्यवहाराय जज्ञिरे ॥ २ ॥
नित्य नत्वाम्बिकासूनुं निदिदेशाधिकारिणः ।
तस्य राजार्हभोगार्थं राजा निर्व्याजभक्तिधीः ॥ ३ ॥
राज्ञा स पुनरज्ञातस्तपस्वीव प्रियासखः ।
इलाशायी फलाहारी ब्रह्मचारी सदा स्थितः ॥ ४ ॥
इति पाति क्षितिं राज्ञि नाजानन् सुखतत्पराः ।
कालेन कृत्यमानानि जीवितव्यान्यपि प्रजाः ॥ ५ ॥
अब्दे पञ्चदशे भीमोऽघुष्यत् कौरवदुर्नयान् ।
तच्छ्रुत्वा धृतराष्ट्रोऽभूज्जित्वा कोपं वनस्पृहः ॥ ६ ॥
सोऽभ्यधाद्भूपतिं वत्स याचे किंचिद्ददासि चेत् ।
इति प्रह्वे नृपेऽयाचद्वस्तुं वृद्धोचितां महीम् ॥ ७ ॥
इति श्रुत्वाश्रुमिश्राक्षः पादलग्नो जगौ नृपः ।
मा तात मुञ्च मामेकं त्रस्तो मृग इवार्भकम् ॥ ८ ॥
इति दीनं वदत्युर्वीवासवे वासवीसुतः ।
एत्याभ्यधाद्गवाम्भोधिसारं पीयूषवद्वचः ॥ ९ ॥
जानन् मुह्यसि किं राजन् कृत्येषु जयिनी त्वरा ।
पश्य देहप्रदीपस्य तैलमायुः प्रलीयते ॥ १० ॥
आसन्नमृत्युदावाग्नेर्धर्मं देहतरोः फलम् ।
गृह्णतः कुरुवृद्धस्य विघ्नीभवसि मूढ किम् ॥ ११ ॥
पूर्यते देहगेहस्य यावत्पुण्यमयक्रयः ।
उत्तमैरुत्तमस्थानयोग्यं तावत् तदर्प्यते ॥ १२ ॥
इति व्यासोक्तिभिः कृच्छ्रादोमित्युक्ते महीभुजा ।
प्रणवश्रवणं श्रेय इति प्रीतः कुरूद्वहः ॥ १३ ॥
भीष्मादीनामथ श्राद्धं कृत्वासौ नृपसंमतः ।
दानं दानपयःशान्तविश्वदौःस्थ्यमलं ददौ ॥ १४ ॥
श्राद्धे दुर्योधनादीनामुद्यद्धनधनव्यये ।
अभूद्भीमप्रकोपाग्नेर्ज्वलतो जलदोऽर्जुनः ॥ १५ ॥
अथामन्त्र्य कुलं पौरानप्यरण्याय बुद्धिदृक् ।
श्रीरामवत् कनिष्ठेन कान्तया च युतोऽचलत् ॥ १६ ॥
दीनदीनैर्[1]निषिद्धापि सुतैः कुन्ती तमन्वगात् ।
संजयोऽपि ययौ जज्ञे वनी पञ्चेन्द्रियेव तैः ॥ १७ ॥
मुनीभूतेन भूपेन शतयूपेन संगतः ।
तत्र तेपे तपः प्रज्ञाचक्षुः सानुचरश्चिरम् ॥ १८ ॥
आत्मेश ईश आत्मेति तेषां ध्यानलयस्पृशाम् ।
अङ्गानि सभुजंगानि बभुः कार्श्यनिशानिभात् ॥ १९ ॥
एत्य तीर्थोपमं तीर्थयात्रोत्का नारदादयः ।
प्राक्चरित्रैश्चिरादेनमानन्द्य दिवमुद्ययुः ॥ २० ॥
रथैरथैतन्नतिधीस्तां वनीमवनीधवः ।
सार्धं कुरुपुरन्ध्रीभिः समगादनुगावृतः ॥ २१ ॥
दूरवारितराजार्हलाञ्छनः शुभलाञ्छनः ।
बहिर्बद्धबलस्कन्धः सबन्धुः सोऽविशद्वनम् ॥ २२ ॥
नमन् गुरून् कुरूत्तंसः प्रतेने पुण्यमुत्तमम्[2] ।
वर्षन् हर्षाम्बुवारीणि भवदोषमशोषयत् ॥ २३ ॥
शुद्धिजुष्टं च पुष्टं च दधतोऽङ्गं यशोमयम् ।
श्यामक्षामशरीरास्ते नृपाय ददुराशिषम् ॥ २४ ॥
क्व क्षत्तेति क्षितीन्द्रेण पृष्टः प्रोचेऽम्बिकासुतः ।
स स्वैरी वातभुक् पुत्र दृश्यादृश्यश्चरेद्वने ॥ २५ ॥
इतश्च विदुरोऽप्यत्र समागच्छन् यदृच्छया ।
वनं प्रेङ्खज्जनं प्रेक्ष्य दूरान्मृग इवात्रसत् ॥ २६ ॥
तमन्वधावदेकाकी साश्रो भूपाकशासनः ।
दूरं दूरं स यातोऽस्मान्निर्भाग्याद्विभवो यथा ॥ २७ ॥
मूले शालस्य कस्यापि तं स्थितं पृथिवीपतिः ।
नमन् युधिष्ठिरोऽस्मीति प्राह प्रत्युत्तरोत्सुकः ॥ २८ ॥
स्फीताक्षस्तन्मुखप्रेक्षी नेत्रप्राणेन्द्रियैर्नृपम् ।
स तु प्राविशदर्कोऽग्निमिव भाभिर्निशागमे ॥ २९ ॥
तदास्मिन् सामरस्येन समाविष्टे महात्मनि ।
बभूव भूभुजंगोऽयमद्भुतज्ञाननिर्भरः ॥ ३० ॥
यं न्यषेधद्वियद्वाणी तद्देहदहनं तदा ।
तपोऽग्निनैव तन्मन्ये तत्परोऽपि निवर्तिनाम् ॥ ३१ ॥
अथेदं धृतराष्ट्राय विनिवेद्यात्मपञ्चमः ।
तृष्णामिवेन्द्रियगणो भूपः कुन्तीमभिस्थितः । ३२ ॥

१ दीनाननैः इति पा० ।
२—मुत्तमम् इति पा० ।

फलभक्ष: क्षमाशायी क्षपयित्वा नृप: क्षपाम् ।
ववर्ष वसुभि: प्रातर्भानुवद्भुवनप्रिये: ॥ ३३ ॥
पितृव्यमथ राजर्षिराजराजितसंनिधिम् ।
ननाम नामग्रहणादप्यस्तजनपातकम् ॥ ३४ ॥
अथ त्रिजगतीचित्त[1]विलोचनसुधाञ्जनम् ।
तेषां दृङ्मार्गमागच्छत् पुण्यैर्द्वैपायनो मुनि: ॥ ३५ ॥
स सर्वै: प्रणत: क्षत्तुर्गतिं राज्ञ: पुर: स्तुवन् ।
पुत्रमाचष्ट कश्चित् ते चित्ते किंचिन्न बाधते ॥ ३६ ॥
इति वागमृतं पीत्वा तद्द्वारत्वमागताम् ।
गिरं दधार गान्धारधराधवसुतापति: ॥ ३७ ॥
तैस्तैर्ञ्जितरणाभोगै: संभोगैरपि निर्भरै: ।
अप्रीणयन्त सुपाचाणि गाचाणि च[2] मया चिरम् ॥ ३८ ॥
चतुर्भिरिन्द्रियैर्दृष्ट्या संविभज्य गृहीतया ।
मम तत्त्वार्थपर्यन्तं स्पर्शाद्यैर्दर्शितं जगत् ॥ ३९ ॥
दूत्या भवत्प्रसत्त्यैव विरक्तीकृत्य संपदि ।
आनीतोऽहमिदं सिद्धिसंकेतस्थानकं वनम् ॥ ४० ॥
तत् किं मे बाधतां किंतु कान्तिर्दृष्ट्यैव गृह्यते ।
तदद्दृष्टं कुलभुवां चाकचक्यं दुनोति माम् ॥ ४१ ॥
इत्यस्मै वादिने दिव्यां दृशं द्वैपायनो ददौ ।
आजन्म दौस्थ्यदूनाय चिन्तामणिमिवेश्वर: ॥ ४२ ॥
अथैवं मुक्तदृग्युग्मावरण: सौबलीसख: ।
श्रियं श्रेय: सुतादीनां पश्यन् प्राप परां मुदम् ॥४३॥
सोऽथ व्यासाज्ञयाऽपश्यद् गङ्गाम्भसि भृशप्रभान् ।
तान् दुर्योधनसौभद्रमुख्यान् पक्षद्वयीभटान् ॥ ४४ ॥
न लिप्तो रागदोषेण तान् पश्यन्नप्यसौ सुधी: ।
आत्मेश्वराणां यत् प्रीतिपदं मुक्तिपदं हि तत् ॥ ४५ ॥
किं ध्यानविघ्नकारिण्या दृष्टद्रष्टव्यया दृशा ।
इत्यभ्यर्घ्य मुनिं धीमान् पुनर्धीनेचतां गत: ॥ ४६ ॥
अथ व्यासाज्ञया वध्वो मुक्तमानवविग्रहा: ।
तैस्तैर्विमानिभि: साकं नाकं जग्मुर्निजप्रिये: ॥ ४७ ॥
अथ मासमिह स्थित्वा नृपति: पितुराज्ञया ।
गतोऽरण्यात् पुरं राम: पुरारण्यं पुरादिव ॥ ४८ ॥

१–वृत्त–इति पा० ।
२–णीव–इति पा० ।

धर्माब्धौ तरणं दोर्भ्यां शिष्यमाणामुना मही ।
डिण्डीरपाण्डुरैरस्य मण्डिता कीर्तिमण्डलै: ॥ ४९ ॥
यशोऽधिदैवतमिव क्ष्मापतेरस्य संसदि ।
कदाचिदाययौ स्वैरी नारद: पारदद्युति: ॥ ५० ॥
कृष्यत्त्वचं तमर्चित्वा पप्रच्छ पृथिवीपति: ।
श्रद्धालु: कुरुवृद्धानां प्रवृत्तिं वनवर्तिनाम् ॥ ५१ ॥
किं वक्तायमिति व्यक्तं वीक्ष्यमाणाननो जनै: ।
हर्षोर्मिषु श्लथो वाचमथोवाच मरुन्मुनि: ॥ ५२ ॥
स प्रभञ्जनभुग्वर्षं वर्षं भोजनमुक्तित: ।
राजन् रराज राजर्षिरुत्कर्षिततप:स्थिति: ॥ ५३ ॥
किमेभिस्तप एवास्तु कर्मप्राणि ममेत्यसौ ।
मुमुक्षुर्निष्क्रियो वह्नीनपि तत्याज कानने ॥ ५४ ॥
एष तेषु प्रदीप्तेषु जरत्तरुघने वने ।
ध्यानामृताब्धौ गान्धारीपृथाभ्यां सहितोऽविशत् ॥५५॥
समाधिना परं धाम गतैस्तैरुज्झितासुभि: ।
अदहद्बाष्पवान् दीप्तशब्दोऽग्निश्चिरसेवित: ॥ ५६ ॥
तेषां विरहसंतापं स बाढं वोढुं[1]मक्षम: ।
संजयस्तु व्रतकृशो ययौ राजन् हिमालयम् ॥ ५७ ॥
इत्युक्त्वास्मिन् मुनौ याते शोकोत्पाते पतन् नृप: ।
चक्रे तेषां स्फुरन्मोहकलिल: सलिलक्रियाम् ॥ ५८ ॥
अथ द्विजवितानेभ्यस्तानेवोद्दिश्य भूपति: ।
अमन्दपुण्यसंदानं दानं दान्तमना ददौ ॥ ५९ ॥
इत्याश्रमे विमलयोगपतत्तनूनां
शोकं विवेकनिकष: परिहृत्य तेषाम् ।
भूवल्लभो हरिहरद्रुहिणादिपाद-
ध्यानप्रपञ्चितरुचि: सुचिरं ननन्द ॥ ६० ॥
भेजे श्रीजिनदत्तसूरिसुगुरोरर्हन्मतार्हस्थिते:
पादाब्जभ्रमरोपमानममरो नाम व्रतीन्द्र: कृती ।
जाड्योत्खण्डिनि बालभारतमहाकाव्येऽच पर्वाश्रमा-
वासं पञ्चदशं तदुक्तिसदने प्रत्यासदत् पूर्णताम् ॥ ६१ ॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रविरचिते बालभारतनाम्नि महाकाव्ये वीराङ्के आश्रमवासिकं नाम पञ्चदशं पर्व ॥ १५ ॥ :: :: ॥

१–सोढु–इति पा० ।

## ॥ अथ बालभारतकाव्यस्य ॥

॥ मौशलपर्वारम्भः ॥

प्रध्याय तनुवित्तानां सत्यसूनुरनित्यताम् ।
धर्माधाने च दाने च व्यदधादरमादरम् ॥ १ ॥
ददौ धर्माय धर्मैकचतुरश्चतुरः क्रमान् ।
चक्रे दानैश्च निःशेषामवनीमवनीयकाम् ॥ २ ॥
वसुधां वसुधाराभिर्नित्यमित्यस्य सिञ्चतः ।
अयतस्तत्फलं श्रेयः षट्त्रिंशदगमन् समाः ॥ ३ ॥
पुरीं द्वारवतीं जग्मुः कालेऽस्मिन् कालदूतवत् ।
मुनीन्द्रा नमदुन्निन्द्रतपसः कौशिकादयः ॥ ४ ॥
शाम्बं स्त्रीवपुषं कृत्वा वृष्णयो मदविह्वलाः ।
तानपृच्छन् मुनीन् पुत्रः पुत्री वास्या भविष्यति ॥ ५ ॥
मुशलं ब्रह्मदण्डाभिभावि लौहं कुलान्तकृत् ।
इत्युक्त्वामी तिरोऽभूवन् शाम्बस्याविरभूच्च तत् ॥ ६ ॥
आहुकेन भियाक्षेपि भस्मीकृत्य तदम्भसि ।
मत्वा कुलान्तं चायान्तं तीर्थयात्रां ययौ हरिः ॥ ७ ॥
अथो रथो रथाङ्गं च केतुश्च पतगाधिपः ।
सर्वं तिरोऽभवत् तस्य लब्धं मित्रमिवापदि ॥ ८ ॥
अपूर्वाः सर्वतश्चन्द्राः सद्योऽज्वरकराः पुरि ।
मुखं मृत्युप्रपातानामुत्पाताः शतशोऽभवन् ॥ ९ ॥
अभासयत् प्रभासं च यात्रया विहरन् हरिः ।
कालेऽथ कालकृष्टाश्च तं देशं यदवो ययुः ॥ १० ॥
इह ते विहितोत्साहा लीलोद्यानेषु खेलिनः ।
विदधुर्मधुपानानि मधुपा इव पङ्कजे ॥ ११ ॥
तेऽद्भुतानन्दसंदर्भास्तदा नात्मानमुन्मदाः ।
कालदंष्ट्राङ्कुरघटाघरट्टस्थमजानत ॥ १२ ॥
तेषां तन्मुशलक्षोदकणबीजगणोद्भवैः ।
तृणकाशैर्वृते स्थाने धीर्योद्धुमुदभून्मिथः ॥ १३ ॥
त्वं रे सौप्तिकसुप्तघ्नस्त्वं रे प्रायस्थवीरहा ।
इत्थं मिथः कथा जज्ञे शैनेयकृतवर्मणोः ॥ १४ ॥
इत्युक्तिपारे प्रबलैर्बलैः पक्षद्वयस्थितैः ।
स्वेच्छासमरमारम्भे यदूनामन्वयस्तृणैः ॥ १५ ॥
क्षिप्रं तृणमपि क्षिप्रमुद्भवन्मुशलाकृति ।
मांसास्थिरक्तपङ्कत्वमेव निन्ये बलद्वयीम् ॥ १६ ॥

प्रद्युम्नशाम्बशैनेयकृतवर्ममुखान् भटान् ।
खेलतः क्षीयमाणांश्च हरिरैक्षत तुल्यदृक् ॥ १७ ॥
अहो बभूव भूस्तेषां या पूर्वं रतिनृत्यभूः ।
सैवाभून्मृतभुग्वर्गनिरर्गलविलासभूः ॥ १८ ॥
जज्ञे यदुकुलं दुह्यद्वीरं मुह्यद्वधूजनम् ।
निशि नश्यदलिम्लायत्पद्मिनीकमिवोदकम् ॥ १९ ॥
अथेदमैन्द्रये विष्णुराख्यातुं प्रेष्य दारुकम् ।
वज्रमादिश्य दस्युभ्यो योषितः परिरक्षितुम् ॥ २० ॥
स्वयं हलधरालोकसमुत्सुकमना ययौ ।
द्वारकां नायिकावृन्दक्रन्दमन्दार्णवध्वनिम् ॥ २१ ॥
युग्मम् ।
ततो जनकमामन्त्र्य कामपालं जगाम सः ।
तदा तदास्यान्निर्यातः श्वेताहिः पश्यतो हरेः ॥ २२ ॥
अहिः सहस्रशीर्षोऽयं बलक्षो जलधिं प्रति ।
मैनाकदर्शनोत्कण्ठी हिमाचल इवाचलत् ॥ २३ ॥
स वासुकिमुखैः सर्पैः समं संमुखमागतैः ।
विवेश वारिधौ धर्तुं धरां वीरोज्झितामिव ॥ २४ ॥
इत्यनन्तपदं प्राप्ते बले वरुणपूजिते ।
प्रविश्य विपिनं योगी सुष्वाप सुखतो हरिः ॥ २५ ॥
निजे ज्योतिषि संपृक्तो लुब्धकेन पदस्तले ।
कृष्णसारधिया कृष्णो हतस्तीव्रेण पत्रिणा ॥ २६ ॥
सुरसिद्धर्षिगन्धर्वैः श्रिया च प्रीतितत्परैः ।
पूज्यमानोऽविशद्धाम नित्यं नारायणाभिधम् ॥ २७ ॥
विष्वग्दिग्वृन्दमुद्द्योत्य भास्वतीव गते हरौ ।
बभूव भुवनं क्षुभ्यत् तमोमयमिवाभितः ॥ २८ ॥
इहान्तरे यदूच्छेदकथामाकर्ण्य दारुकात् ।
शोकं दैन्यं भयं पार्था निर्नाथा इव भेजिरे ॥ २९ ॥
अथ क्ष्मापगिरा गत्वा दारुकेण सहार्जुनः ।
विवेश द्वारकां द्रष्टुं सशोकं जनकं हरेः ॥ ३० ॥
नष्टवीरगणां नष्टेन्द्रियां बन्धुतनूमिव ।
पश्यन् पुरीं ययौ पार्थः परां शोकस्य भूमिकाम् ॥ ३१ ॥
सुभद्रेश कथं दीनाः स्यास्याम इति सर्वतः ।
फूत्कुर्वद्भिर्वृतोऽभ्येत्य जिह्मवृष्णिवधूजनैः ॥ ३२ ॥
पतितं भुवि हा पुत्र हा पुत्रेति प्रलापिनम् ।

वसुदेवं नरः पश्यन् पपात च रुरोद च ॥ ३३ ॥
युग्मम् ।
मृगैः सिंहा इवास्माभिर्यत्प्रसादाज्जिता द्विषः ।
स गतः क्वाऽधुनास्माकं शरणं शरसंकटे ॥ ३४ ॥
स्तौमि तान् यादवान् जग्मुर्ये दिवि प्रथमं हरेः ।
योग्यान् यस्यापि कस्यापि धिङ्मां तेन विनाधुना ॥ ३५ ॥
हा जनार्दन हा राम हा शैनेय ह हा स्मर ।
भवन्तः क्व गताः प्राप्तमालपन्त्यपि मां न किम् ॥ ३६ ॥
इति प्रलापैः पतितो नरो रोदितदिङ्मुखैः ।
सर्वगान् रोदयामास योगीन्द्रानप्यगोचरान् ॥ ३७ ॥
यत्रानैषीन्निशां पूर्वं लीलागीतेन फाल्गुनः ।
तत्रैव तां निशां निन्ये स्त्रीणां क्रन्देन धिग्विधिम् ॥३८॥
प्रातः पुत्रवियोगेन तनुमानकदुन्दुभिः ।
तत्याज देवकीमुख्यैरनुयातः प्रियाजनैः ॥ ३९ ॥
संस्कृत्य सात्वतादीनां तनुं कृत्वा जलक्रियाम् ।
पार्थो वज्रं हरेः पौत्रं स्त्रीश्चादाय ततोऽचलत् ॥ ४० ॥
क्रन्दन्ती तत्क्षणत्रस्तोड्डीयमानखगस्वनैः ।
तदा स्वामिशुचेवाब्धौ ममज्ज नगरी हरेः ॥ ४१ ॥
इन्द्रप्रस्थं व्रजन् प्राप्तो विकटामटवीं नरः ।
सालंकारवधूवारलुब्धै रुद्धो वनेचरैः ॥ ४२ ॥
तानुच्चलगुडाटोपान् गोपान् कोपाद्विलोकयन् ।
बलाधिकमिवाधिज्यं कृच्छ्राच्चक्रेऽर्जुनो धनुः ॥ ४३ ॥
तस्य नष्टास्तदा पृष्ठादधमर्णा इवेषवः ।
आकृष्टापि नवोढेव न ज्या संमुखमाययौ ॥ ४४ ॥
किं स्वप्नोऽयं किमन्योऽहमिति भूरिवितर्किणः ।
पार्थस्य पश्यतः कामं कामिनीर्दस्यवोऽहरन् ॥ ४५ ॥
न शेकिरे ग्रहीतुं तैर्दृश्यभासो वरस्त्रियः ।
अदृष्टरक्षिता भाग्यहीनैरोषधयो यथा ॥ ४६ ॥
प्रवेष्टुं वर्त्म देहीति पृथिवीं प्रणमन्निव ।
न्यङ्मुखोऽजनि मन्वानो जीवितं फल्गु फाल्गुनः ॥ ४७ ॥
गतेषु हृतदारेषु तेषु दुःखाज्जना जगुः ।
अहो विश्वजयी जिग्ये गोपैर्धिग्विधिवल्गितम् ॥४८॥
इत्युक्तीः कर्णयन्नैन्द्रिरिन्द्रप्रस्थपुरं गतः ।
प्रधानवृष्णिवामाक्षीवज्रदारुकसंगतः ॥ ४९ ॥
वज्रे राज्यमिह न्यस्य गते दुःखिनि फाल्गुने ।
सत्यभामादयो देव्यः कृशानुं विविशुः शुचा ॥ ५० ॥
श्रीविष्णुव्ययगोपालपराभवमहाशुचम् ।
हस्तिनापुरवर्त्मस्थमेत्य व्यासोऽर्जुनं जगौ ॥ ५१ ॥
मित्रगोत्रप्रभाभूतिप्रभावविभुता हृता ।
विडम्बितो न कालेन कुत्र कः पुत्र मा मुहः ॥ ५२ ॥
हराद्यैरप्यनिग्राह्यो लसदर्केन्दुदीपकः ।
सर्वं हरति सर्वस्य कालोऽयं पश्यतोहरः ॥ ५३ ॥
सूर्येन्दुचक्रविक्रीडदनित्यत्वरथोऽङ्गिनाम् ।
अधर्मविजयी कालो हरत्यर्थानसूनपि ॥ ५४ ॥
जगद्विडम्बनाद्येकनटं कौतूहली हसन् ।
अनित्यतानटीकान्तं कालमालोकते कृती ॥ ५५ ॥
पर्यन्तविरसा भावा न भवेयुर्भवे यदि ।
तत् परोक्षसुखे साक्षात् दुःखे तपसि कः स्फुरेत् ॥५६॥
यदुषु मुशलपातप्रेङ्खितैरात्मनि क्ष्मा-
धरवनचरगोपक्रीडितैश्च प्रतप्तः ।
इति मुनिपतिवाणीपुण्यपीयूषसिक्तो
गजनगरमगच्छन्मध्यमः पाण्डुपुत्रः ॥ ५७ ॥
भेजे श्रीजिनदत्तसूरिसुगुरोरर्हन्मतार्हस्थितेः
पादाब्जभ्रमरोपमानममरो नाम व्रतीन्द्रः कृती ।
तज्जिह्वाम्बुललोलतल्पतरलब्राह्मीस्मिते षोडशं
पर्वैतत् किल बालभारतमहाकाव्येऽगमन्मौशलम् ॥५८॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रविरचिते बालभारतनाम्नि महाकाव्ये वीराङ्के षोडशं मौशलपर्व ॥ १६ ॥ :: :: ॥

---

## ॥ अथ खण्डप्रशस्तौ

कृष्णावतारवर्णनम् ॥



(१२२) कौन्तेयस्य सहायतां करुणया गत्वा विनीतात्मनो
येनोल्लङ्घितसत्पथः कुरुपतिश्चक्रे कृतान्तातिथिः ।
त्रैलोक्यस्थितिसूत्रधारतिलको देवः स वः संपदे
साधूनामसुराधिनाथमथनः स्ताद्देवकीनन्दनः ॥

स देवः कृष्णो वो युष्माकं साधूनां सतां संपदे लक्ष्म्यै स्ताद्भवतु, येन कृष्णेन करुणया कृपया कौन्तेयस्य युधिष्ठिर-

स्य सहायतां गत्वा सहायीभूय कुरुपतिर्दुर्योधनः कृतान्तातिथिर्यमातिथिश्चक्रे कृतो मारितः, किंभूतस्य युधिष्ठिरस्य, विनीतात्मनो विनीतो विनययुक्त आत्मा यस्य तस्य, किंविशिष्टः कुरुपतिः, उल्लङ्घितोऽतिक्रान्तः सत्पथः सन्मार्गो येन सः, किंविशिष्टो देवः, त्रैलोक्यस्य जगत्त्रयस्य स्थितौ व्यवहारे सूत्रधारस्येव तलकः श्रेष्ठो यः सः, यथा नाटकादौ सूत्रधार एव सर्वं प्रदिशति यतस्तदधीनाःसर्वे अत एव तत्र स श्रेष्ठस्तथा जगतः स्थितावयं जगत्कर्तृत्वादिति भावः, पुनः किंविशिष्टः, असुराधिनाथमथनः असुराधिनाथाश्चैद्यादयस्तान्मथ्नातीति सः, पुनः किंविशिष्टः, देवक्या नन्दनः पुत्र इति ॥ १२२ ॥

(१२३) भ्राम्यन्मन्दरकन्दरोदरदरीव्यावृत्तिभिर्वारिधेः
कल्लोलैरलमाकुलं कलयतो लक्ष्म्या मुखाम्भोरुहम् ।
औत्सुक्यात्तरलाः स्मराद्विकसिता भीत्या समाकुञ्चिताः
क्रोधेनाज्वलिता मदान्मुकुलिताः शौरेर्दृशः पान्तु वः ॥

लक्ष्म्या मुखकमलं कलयतः पश्यतःशौरेर्हरेर्वो दृशो नेत्राणि पान्तु, किंविशिष्टं मुखकमलं, भ्राम्यन्यो मन्दरो मेरुस्तस्य यानि कन्दरोदराणि गुहामध्यानि दर्यो गिरिगर्ता स्ततश्च व्यावृत्तिभिः परावर्तनशीलैर्वारिधेः समुद्रस्य कल्लोलैर्वीचिभिरलमत्यर्थमाकुलं त्रस्तम्, किंविशिष्टा दृशः, औत्सुक्यात्तरलाश्चपलास्तथा स्मरात्कामा द्विकसिता विकस्वरास्तथा भीत्याऽदत्तपरपुत्रिकाप्रार्थकत्वेन समाकुञ्चिता ईषन्मुकुलीकृतास्तथा क्रोधेनाऽऽज्वलिता ईषल्लोहितास्तथा मदान्मुकुलिता मुकुलभावं प्राप्ता इति ॥ १२३ ॥

(१२३) आकृष्टिः सुखसंपदां सुमहतामुच्चाटनं चांहसा
माचण्डालममूकलोकसुलभं वश्यं च मुक्तेः स्त्रियाः ।
नो दीक्षा न च दक्षिणा न च पुरश्चर्या मनाग् दृश्यते
मन्त्रोऽयं रसनास्पृगेव फलति श्रीकृष्णनामाभिधः

श्रीकृष्णेति नाम्ना संकेतेनाभिधीयते आख्यायते यः सः श्रीकृष्णेति रूपो मन्त्रोरसनास्पृगेव जिह्वयोच्चारित एव फलति फलदो भवति, अयं सुखसंपदामाकृष्टिराकर्षणं तथा सुमहता मंहसां पापानामुच्चाटनं नाशनं चण्डालपर्यन्तं अन्यनधिकारिणाममूकानामुच्चारणे समर्थानां लोकानां सुलभं सुप्रापं तथा मुक्तिरूपस्त्रिया अपि वश्यं वशीकरणं यतो यत्राम्नाऽचेतनेन क्लीबेनाचेतनाया मुक्तेः स्त्रिया वशीकरणं कर्तुं शक्यतेऽतस्तदधिष्ठानेन कमनीयेन पुंसा गोपगोपिकादीनां वशीकरणे किमाश्चर्यमिति भावः ॥ १२३ ॥

(१२४) क्षीरक्षालितपाञ्चजन्यकिरणश्रीगर्वसर्वंकषा
श्रीकृष्णार्जुनसारथे ऽसुररिपो त्वत्कीर्तिविस्फूर्तयः ।
कैलासन्ति हिमाचलन्ति विलसत्कुन्दन्ति कन्दन्ति च
क्षीरोदन्ति हलायुधन्ति विबुधाहारन्ति हीरन्ति च ॥

हे श्रीकृष्ण अर्जुनसारथे कृष्णसहायेनैवार्जुनेन सर्वं यशो लब्धमिति भावः, असुररिपो दैत्यशत्रो अस्मिन्नप्यवतारे चैद्यादयो बहवो दैत्या हता इति भावः, तव कीर्तिविस्फूर्तयः कैलासन्ति कैलासइवाचरन्ति कैलासस्य श्वेतत्वात्त्वत्कीर्तिरुपमानं, एवमग्रेपि, हिमाचलन्ति हिमाचलइवाचरन्ति, विकसत्कुन्दन्ति विकसन्ति यानि कुन्दपुष्पाणि तानीवाचरन्ति, तथा कन्दइवाचरन्ति कन्दन्ति, क्षीरोद इवाचरन्ति क्षीरोदन्ति, हलायुधो बलभद्रः सइवाचरन्ति हलायुधन्ति, विबुधानां देवानामाहारः पीयूषं सइवाचरन्ति विबुधाहारन्ति, हीरक एव हीरः सइवाचरन्ति हीरन्ति, अत्र सर्वेषां श्वेतत्वादुपमानत्वं, सर्वप्रातिपदिकेभ्यइत्याचारार्थे सर्वत्र क्विप् ज्ञेयः, किंविशिष्टा विस्फूर्तयः, क्षीरक्षालितपाञ्चजन्यकिरणश्रीगर्वसर्वंकषाः क्षीरेण पयसा क्षालितः पवित्रीकृतो यः पाञ्चजन्योविष्णुशङ्खस्तस्य या किरणश्रीः कान्तिस्तस्या गर्वं सर्वं कषन्तीति, अत्र सर्वोपपदकङ्कषेः खचि मुमागमः ॥१२४॥

(१२५) देव क्षीरसमुद्रसान्द्रलहरीलावण्यलक्ष्मीमुषस्त्वत्कीर्तेस्तुलनां कलङ्कमलिनो धत्ते कथं चन्द्रमाः ॥
स्यादेवं त्वदरातिसौधवलभीप्रोद्भूतदूर्वाङ्कुरग्रासव्यग्रमतिः पतेद्यदि मृगस्तस्याङ्कशायी मृगः ॥

हे देव कृष्णचन्द्र कलङ्केन मलिनश्चन्द्रमास्तव कीर्तेर्यशसः स्तुलनां निर्मलतया साम्यं कथं धत्ते बिभर्ति, किंविशिष्टायाः कीर्तेः, क्षीरसमुद्रस्य सान्द्राणां घनानां लहरीणां कल्लोलानां लावण्यलक्ष्मीं सुभगश्रियं या मुष्णातीति तस्याः, अथ यदि तस्य कलङ्कत्वं भवे त्तर्हि साम्यमपि संभावितं भवेदत स्तस्याकलङ्कत्वसंभावनां ब्रूते, स्यादेवं यदि पुनस्तस्य चन्द्रमसोऽङ्कशायी मृगस्त्वदरातीनां सौधवलभीषु प्रोद्भूतानां दूर्वाङ्कुराणां ग्रासस्य लोलुपतया भूमौ समागच्छेत्तदा तस्याकलङ्कता स्यात्ततश्च चन्द्रः कथंचित्त्वत्कीर्तिसाम्यं समासादयेदिति, एतेन कृष्णसर्वगुणसंपन्नो निर्मलः शूरश्चेति सूचितम्, ॥ १२५ ॥

॥ इति श्रीखण्डप्रशस्तिविवृतौ श्रीकृष्णावतारवर्णनम् ॥

# THE APHORISMS

OF THE

# YOGA PHILOSOPHY

OF

## PATAÑJALI.

*(Continued from page 24.)*

[1] Of what kind are these subjects of attributes? To this he replies :—

**ते व्यक्तसूक्ष्मा गुणात्मानः ॥ १३ ॥**

Aph 13. These individualised and subtile [objects] consist of qualities.

[2] These same subjects of attributes consist of—i. e. are of the nature of the qualities—that is they are modified forms of the qualities, purity, passion and darkness, existing in the different forms of gross and subtile. For concomitance—attendance of all individuals or entities differing as internal and external has been seen with purity, passion and darkness, full of pleasure, pain and indifference; and what is seen as concomitant with any thing, that is seen to be the modified form of that, just as jars &c., which are concomitant with earth, are modified forms of earth.

[3] If these three qualities are the material causes of everything, how is the expression "one subject of attributes" to be employed? having raised this doubt he states :—

**परिणामैकत्वाद्वस्तुतत्त्वम् ॥ १४ ॥**

Aph 14. Unity of thing results from unity of modification.

[4] Although there are three qualities, still unity—i. e. sameness of thing is spoken of, for there is unity of their [the qualities'] modification, characterised by the relation of secondary and primary, viz, in some cases purity is secondary, in others passion and in others darkness. For instance in the example This is earth, this is air &c., [earth is a modification of the quality of darkness and the air is a modification of that of passion]

[1] त एते धर्म्मिणः किंरूपा इत्यत आह ।

[2] य एते धर्म्मिणः प्रोक्तास्ते व्यक्तसूक्ष्मभेदेन ये ऽवस्थिता गुणाः सत्त्वरजस्तमोरूपास्तदात्मानस्तत्स्वभावास्तत्परिणामरूपा इत्यर्थः ॥ यतः सत्त्वरजस्तमोभिः सुखदुःखमोहमयैः सर्वासां बाह्याभ्यन्तरभेदभिन्नानाम्भावव्यक्तीनामन्वयो ऽनुगमो दृश्यते यच्च यदन्वयि तत्तत्परिणामरूपं दृष्टं यथा घटादयो मृदन्विता मृत्परिणामरूपाः ॥

[3] यद्येते त्रयो गुणाः सर्वत्रमूलकारणं कथमेको धर्म्मीति व्यपदेश इत्याशङ्क्याह ॥

[4] यद्यपि त्रयो गुणास्तथापि तेषामङ्गाङ्गिभावलक्षणो यः परिणामः क्वचित्सत्त्वमङ्गं क्वचिद्रजः क्वचित्तम इत्येवं रूपस्तस्यैकत्वाद्वस्तुनस्तत्त्वमेकत्वमुच्यते । यथेयम्पृथिवी अयं वायुरित्यादि ॥

[1] It may be objected that the object may be called one or many if it differs from the cognition, but when the cognition itself, from the influence of impressions, existing in the relation of cause and effect, appears in different shapes, how then can it be so called? To this he replies :—

**वस्तुसाम्ये चित्तभेदात्तयोर्विविक्तः पन्थाः ॥ १५ ॥**

Aph. 15. The course of these two [that is, the thing and the object] is distinct, for there is a diversity of thoughts regarding one thing.

[2] "Of these two"—i e. of the knowledge and thing "The course is distinct"—i. e the path is different. Why? inasmuch as there is a diversity of thoughts regarding one thing—i. e. even in regard to the same thing that is being perceived such as a woman &c. difference of thoughts in the shape of pleasure, pain and indifference has been observed among various observers. For instance, on seeing a lovely and beautiful woman pleasure arises in an amorous person, aversion in her rival, and disgust in an ascetic; and thus, since various thoughts take place even in regard to one thing, how can a thing be an effect of the principle of thought? For were it the effect of one thought, the thing would appear uniformly.

[3] Besides if a thing were an effect of mind, then if that mind were engrossed by another object, that thing would be nothing. If it be replied, Be it so, we deny this; for then how could this same thing be perceived by many others? and as it is perceived, therefore it is not an effect of the thinking principle. If it be replied that that thing is created by many simultaneously, then there should be a difference between a thing that is created by many, and a thing which is created by one. And if the difference is not admitted then there being difference of causes and non-existence of difference of effect, the universe would become causeless or uniform.

[1] ननु च ज्ञानव्यतिरिक्ते सत्यर्थे वस्त्वेकमनेकं वा वक्तुं युज्यते यदा विज्ञानमेव वासनावशात्कार्य्यकारणभावेनावस्थितं तथा तथा च प्रतिभाति तदा कथमेतच्छक्यते वक्तुमित्याह ।

[2] तयोर्ज्ञानार्थयोर्विविक्तः पन्था विविक्तो मार्ग इति यावत् कथं वस्तुसाम्ये चित्तभेदात् समानेपि वस्तुनि स्त्र्यादावुपलभ्यमाने नानाप्रमातॄणां चित्तस्य भेदः सुखदुःखमोहरूपतया समुपलभ्यते तथाहि । एकस्यां रूपलावण्यवत्यां योषित्युपलभ्यमानायां सरागस्य सुखमुत्पद्यते सपत्न्यास्तु द्वेषः परिव्राजकादेर्घृणेत्येकस्मिन्नपि वस्तुनि नानाविधचित्तोदयात्कथञ्चित्तकार्य्यत्वं वस्तुन एकचित्तकार्य्यत्वे वस्त्वेकरूपतयैवाभासेत ॥

[3] किञ्च चित्तकार्य्यत्वे वस्तुनो यस्य चित्तस्य तद्वस्तुकार्य्यं तस्मिन्नर्थान्तरव्यासक्ते चित्ते तद्वस्तु न किञ्चित्स्यात् । भवत्विति चेन्न तदेव कथमन्यैर्बहुभिरुपलभ्येत । उपलभ्यते च तस्मान्नचित्तकार्य्यम् । अथ युगपद्बहुभिः सोऽर्थः क्रियते तदा बहुनिर्मितस्य तस्यार्थस्यैकनिर्मिताद्वैलक्षण्यं स्यात् । यदि च वैलक्षण्यं नेष्यते तदा कारणभेदे सति कार्य्यभेदस्याभावे निर्हेतुकमेकरूपं वा जगत्स्यात् ॥

[1] What is to be stated is this, that even the cause being different, if the effect is not different, the universe created by many causes may be of one and the same form; or in consequence of its not following the difference of causes it would be independent and causeless. And if it is so [it may be asked] why does the same object which consists of three qualities not produce cognitions full of pleasure, pain and indifference in one percipient? we reply that this is no valid objection. For as the object consists of three qualities the mind likewise consists of three qualities, and the merits, demerits are its [the mind's] accessories in the production of an object [in different shapes] from the manifestation of these [merits demerits &c] manifestation of mind takes place in such and such a form. Thus when the woman is in the presence of an amorous person, his mind auxiliary whereto is merit, undergoing modification through the predominance of purity, becomes full of pleasure. The mental state of the rival alone likewise through the predominance of passion subsidiary whereto are wealth and merit, becomes full of pain. The mental state of the irate rival through the predominance of darkness, accessory whereto is violent demerit, becomes full of dullness. Therefore the sensible object is different from the sensation. Therefore there is thus no identity between the sensation and its object. There is no relation of cause and effect, inasmuch as there is a contradiction. For [were it not so] it would follow that even there being a difference of cause there would be non-existence of difference of effect. Thus it is established that the object is distinct from the cognition.

G. D.

# THE VAIŚESHIKA APHORISMS OF KAṆĀDA.

## EIGHTH BOOK, FIRST DAILY LESSON.

*(Continued from page 30.)*

**द्रव्येषु ज्ञानं व्याख्यतम् ॥ १ ॥**

Aph. 1. Cognition was explained among substances.

१ एतदुक्तं भवति सत्यपि भिन्ने कारणे यदि कार्य्यस्याभेदस्तदा समयं जगन्नानाविधकारणजन्यमेकरूपं स्यात् कारणभेदाननुगमनात् स्वातन्त्र्ये निर्हेतुकं वा स्यात् । यद्येवं कथं तेन त्रिगुणात्मनार्थेनैकस्यैव प्रमातुः सुखदुःखमोहमयानि ज्ञानानि न जन्यन्ते मैवं यथाऽर्थस्त्रिगुणस्तथा चित्तमपि त्रिगुणं तस्य चार्थप्रतिभासोत्पत्तौ धर्माधर्मादयः सहकारिणस्तदुद्भववश त्तस्य तेन तेन रूपेणाभिव्यक्तिस्तथा च कामुकस्य सन्निहितायां योषिति धर्मसहकृतं चित्तं सत्त्वस्याङ्कितया परिणममानं सुखमयम्भवति तदेवार्थधर्मसहकारिरजसोङ्कितया दुःखरूपं सपत्नीमात्रस्य भवति तीव्राधर्मसहकारितया तमसोङ्कित्वेन कोपनायाः सपत्न्या मोहमयं भवति तस्माद्विज्ञानव्यतिरिक्तोऽस्ति ग्राह्योऽर्थः ॥ तदेवं विज्ञानार्थयोर्न तादात्म्यं विरोधान्न कार्य्यकारणभावः कारणभेदे सत्यपि कार्य्यस्याभेदप्रसङ्गादिति ज्ञानाद् व्यतिरिक्तत्वमर्थस्य व्यवस्थापितम् ॥

[1] The [foregoing] digression was intended to favour the curiosity of the learner. The order of enunciation is again embraced. According to this the examination of intelligence is the object of the eighth book. Intelligence has been previously described The present aphorism is stated with the purpose of recalling this. By the words 'Among substances,' through the object, the third book which treats of that object [i. e of substances] is implied. The meaning is that cognition has been explained by the two aphorisms, The universal notion of organs and their objects is a mark of an entity other than organs and objects, and, That which is brought into being from contiguity of soul, organ, and object is other than they. In the common declaration of intelligence that Intelligence, apprehension, cognition and affection are synonyms, the equivalent terms are enumerated in order to contravene the Sánkhya doctrine For the Sánkhyas maintain a distinction of meaning in the terms intelligence, &c. Thus matter *(prakṛiti)* is a state of equipoise between purity, passion, and darkness. This [ matter ] is one, and one only, while spirits are divided to infinity. These [spirits] are uniform, constant, unchangeable, characterised by eternal consciousness. These moreover are lame, being incapable of modification, while matter is blind, be-

[1] शिष्यजिज्ञासानुरोधात् क्रमलङ्घनमिदानीमुद्देशक्रममालम्बते तत्र बुद्धिपरीक्षा अष्टमाध्यायार्थः आत्मसाधनाय पूर्वं बुद्धिरुक्ता तां स्मारयन्नाह । द्रव्येष्विति विषयेण विषयिणं तृतीयाध्यायमुपलक्षयति । इन्द्रियार्थप्रसिद्धिरिन्द्रियार्थेभ्योऽर्थान्तरस्य हेतुः आत्मेन्द्रियार्थसन्निकर्षाद्यन्निष्पद्यते तदन्यत् इत्येताभ्यां सूत्राभ्यां ज्ञानं व्याख्यातमित्यर्थः । तत्र बुद्धिरुपलब्धिर्ज्ञानं प्रत्ययइति पर्यायाः इति समानतन्त्रे बुद्धिलक्षणे साङ्ख्यमतनिरासार्थं पर्यायाभिधानम् । साङ्ख्याहि बुद्ध्यादिशब्दानामर्थभेदमाचक्षते तथाहि सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः सा चैकैव पुरुषास्तु, परं भिद्यन्ते तेच कूटस्था नित्या अपरिणामिनो नित्यचैतन्यस्वभावाः तेच पङ्गवोऽपरिणामित्वात् प्रकृतिस्त्वन्धा जडत्वात् यदा विषयभोगेच्छा प्रकृतिपुरुषभेददिदृक्षा च प्रकृतेर्भवति तदा सा पुरुषोपरागवशात् परिणमते तस्याश्चाद्यः परिणामोबुद्धिरन्तःकरणविशेषः बुद्धिरेव महत्तत्त्वं तदुक्तम् प्रकृतेर्महान् इति साच बुद्धिर्दर्पणवन्निर्मला तस्याश्च बहिरिन्द्रियप्रणाडिकया विषयाकारो यः परिणतिभेदो घट इति पट इत्याद्याकारस्तज्ज्ञानं वृत्तिरिति चाख्यायते स्वच्छायां बुद्धौ वर्तमानेन ज्ञानेन चैतन्यस्य पुरुषस्य भेदाग्रहादहं जानामीति योऽभिमानविशेषः सैवोपलब्धिः स्रक्चन्दनादिविषयसन्निकर्षादिन्द्रियप्रणाडिकयैव सुखदुःखाद्याकारो बुद्धेरेव यः परिणामविशेषः स प्रत्ययः अतएव ज्ञानसुखदुःखेच्छाद्वेषप्रयत्नसंस्कारधर्माधर्माः सर्व एव बुद्धेः परिणामविशेषाः सूक्ष्ममात्रया प्रकृतावेव वर्तमाना अवस्थाभेदादाविर्भवन्ति तिरोभवन्ति च पुरुषस्तु पुष्करपलाशवन्निर्लेपः प्रतिबिम्बते परं बुद्धाविति यन्मन्यन्ते तदनेन पर्यायाभिधानसूचितप्रमाणेन निराक्रियते तथाहि बुद्धिशब्दो यदि बुध्यतेऽनयेति करणव्युत्पन्नस्तदा मन एव तत्पर्यवस्यति नच मनः प्रत्यक्षम् बुद्धिस्त्वहं बुध्ये इति प्रत्यक्षवेद्यैव नचान्तःकरणस्य ज्ञानादयोधर्माः कर्तृधर्मत्वेनैव तेषां सिद्धेः भवति हि अहं जाने अहं प्रत्येमि अहमुपलभे इत्यहन्त्वसामानाधिकरण्येन प्रतिभासः अभिमानोऽसाविति चेत् तात्त्विकत्वे बाधकाभावात् पुरुषस्यागन्तुकधर्मानाधारत्वं कूटस्थत्वं तदेव बाधकमिति चेन्नागन्तुकधर्माधारत्वेऽपि नित्यत्वसम्भवात् नहि धर्माधर्मश्चेत्येकं तत्त्वं येन धर्मोत्पादविनाशावेव धर्म्मोत्पादविनाशौ स्यातां तथाच य एव चेतयते स एव बुध्यते जानात्युपलभते प्रत्येति चेति नार्थान्तरकल्पना युक्तेतिदिक् ॥

ing unsentient. When there arises in matter a desire of the fruition of sense-objects, or the wish to see the difference between matter and spirit, matter is modified in virtue of throwing as it were a tint of colour upon spirit. The first modification of matter is intelligence, a kind of internal sense. Intelligence it is that is the infinite principle, wherefore it has been said, From matter the infinite. This intelligence is like a clear mirror, and the particular modification in the form of an object such as a water-pot, a piece of cloth &c., by the channel of the external organs, of intelligence, is called the cognition, the function, of intelligence. Apprehension is [according to them] that particular conceit, whereby, in consequence of the non-discrimination of spirit or consciousness by reason of the cognition existing in pure intelligence, [it is affirmed] 'I know.' Affection [or sensation] is the particular modification of intelligence, in the form of pleasure, pain &c., by the channel of the sense-organs, in consequence of the presence of objects of sense such as garlands, sandal wood, and the like. Hence it is that all the particular modifications of intelligence, cognition, pleasure, pain, desire, aversion, volition, reminiscence, right, and wrong, existing only in matter [*prakṛiti*] in their minute proportions, according to diversity of conditions, appear and disappear, while spirit, like a lotus-leaf free from stain reflects them externally in intelligence. This doctrine which they hold, is rejected by the evidence indicated in the enumeration of the convertible terms. If, then, the word intelligence be derived from agency, inasmuch as it is the instrument of understanding, it may be concluded that it is identical with the internal sense, and the internal sense is not perceptible. But intelligence is known by the [internal] perception 'I understand.' Moreover the qualities cognition &c., do not belong to the internal organ, for they are proved to exist only as being qualities of an agent. For the phenomena of personal knowledge, personal sensation, personal apprehension, are manifested only as having personality [or egoity] as their common substratum. If they reply that this [phenomenon] is conceit, we rejoin that there is nothing to prove the impossibility of the reality. If they say that spirit is a non-substratum of adventitious modes, and unmodified, and that this shews the impossibility of their reality, we deny this, eternity being compatible with the nature of a substratum of adventitious modes. For substance and attribute are not one single principle, that production and destruction of the attribute should be production and destruction of the subject. He then who is conscious, understands, knows, apprehends, and conceits. The hypothesis, therefore, of a distinct entity is not allowable. U.

**तत्रात्मा मनश्चाप्रत्यक्षे ॥ २ ॥**

Aph. 2. Therein soul and the internal sense are imperceptible.

[1] This cognition moroever is twofold—science and nescience. Science is of four kinds, characterised by perception, inference, memory and testimony. Nescience likewise is of four kinds, characterised by doubt, uncertainty, sleep, and inattention. Of these [kinds of science] that which is inferential is not produced by the sense-organs. Why this is so is stated in the text. The soul is here is the soul of another or one's own. The imperceptibility of one's own soul has been [already] declared inasmuch as such occasional personal cognitions as of one's own paleness, attenuation, length of arm &c. have been rejected in relation [that is, proved irrelevant] to the soul. The particle 'and' implies the applicability of the predicate to ether, time, space, air, and atoms Senseborn knowledge is of two degrees omniscient, and non-omniscient. Omniscient is the knowledge of such and such complements of objects by cognition characterised by the merit springing from devotion. Thus atoms fall within its sphere, as demonstrable, nameable, and existent. If it be objected :—Since there

[1] तच्च ज्ञानं द्विविधं विद्या चाविद्या च विद्या चतुर्विधा प्रत्यक्षलैङ्गिकस्मृत्यार्षलक्षणा अविद्याऽपि चतुर्विधा संशयविपर्ययस्वप्नानध्यवसायलक्षणा तत्र यल्लैङ्गिकं तदनिन्द्रियजम् कुत एतदित्याह । आत्माऽत्र परात्मा स्वात्मा वा स्वात्मनि मानसस्य क्वाचित्काहम्प्रत्ययस्याहं गौरः कृशो महाबाहुरित्यादिप्रत्ययतिरस्कृतत्वात् स्वात्मनोऽप्यप्रत्यक्षतोक्ता चकारादाकाशकालदिशां वायोः परमाणूनाञ्च द्रव्याणामुपग्रहः । इन्द्रियजमपि द्विविधं सर्वज्ञीयमसर्वज्ञीयञ्च सर्वज्ञीयं योगजधर्मलक्षणया प्रत्यासत्त्या तत्तत्पदार्थसार्थज्ञानं तथाहि परमाणवः प्रसक्ताः प्रमेयत्वादभिधेयत्वात् सत्त्वात् सामग्रीविरहात् कथमेवं महत्त्वस्यापि प्रत्यक्षं प्रति कारणत्वात् नच परमाणवो महान्तः रूपवत्त्वस्यापि चाक्षुषप्रत्यक्षकारणत्वात् नच दिगादयोरूपवन्त इति चेन्न योगजधर्मसहकारिणो मनसैव तत्सम्भवात् तदुपग्रहाच्चक्षुरादिना वा अचिन्त्यप्रभावोहि योगजोधर्मो न सहकार्यन्तरमपेक्षते । विवादाध्यासितः पुरुषो न सर्वज्ञः पुरुषत्वादहमिवेत्यादि तु प्राभाकरो न मीमांसाभिज्ञः पुरुषत्वादहमिवेत्यादिवद्विपक्षबाधकतर्कशून्यत्वादप्रयोजकम् असर्वज्ञीयञ्च प्रत्यक्षं द्विविधं सविकल्पकं निर्विकल्पकञ्च सविकल्पकं ज्ञानं न प्रमाणमिति कीर्तिदिङ्नागादयः तथाहि अभिलापसंसर्गयोग्यप्रतिभासं हि तत् नह्यभिलापेन नाम्ना सम्भवत्यर्थस्य सम्बन्धो येन घट इति पट इति वा नामानुरञ्जितः प्रत्ययः स्यात् नच जात्यादि परमार्थसत् येन तद्वैशिष्ट्यं विषयेषु इन्द्रियेण गृह्येत नच सतः स्वलक्षणस्यासता सम्बन्धः सम्भवति नचासत् इन्द्रियगोचरः तस्मादिन्द्रियेणालोचनं जन्यते आलोचनमहिम्नाच सविकल्पकमुत्पद्यमानं तत्रार्थे प्रवर्तयत् प्रत्यक्षमिति प्रमाणमिति चोच्यते इति तच्चैतदनुपपन्नमभिलापसंसर्गयोग्यप्रतिभासञ्च भवेत् प्रमाणञ्चेन्द्रियार्थसन्निकर्षजन्यं स्यादिति सन्दिग्धव्यतिरेकित्वं नामवैशिष्ट्यञ्च चाक्षुषज्ञाने सम्भवत्येव सुरभिचन्दनमितिवदुपनीतभानसम्भवात् यद्वा संज्ञावैशिष्ट्यप्रत्यक्षज्ञाने न भासते संज्ञायाः स्मरणमात्रम् स्मृतेव सार्थव्यावर्तिका अभावज्ञाने प्रतियोगिस्मरणवत् जात्यादिकञ्च वस्तुभूतं साधितमेवातः सविकल्पकमपीन्द्रियार्थसन्निकर्षजत्वात् प्रत्यक्षम् । ननु निर्विकल्पकं न व्यवहारप्रवर्तकं नवा व्यवहारविषय इति किन्तत्र प्रमाणमिति चेत् सविकल्पकमेव तद्धि विशिष्टज्ञानम् नच विशेषणज्ञानमन्तरेण तदुत्पद्यते विशिष्टज्ञाने हि विशेषणज्ञानविशेष्येन्द्रियसन्निकर्षतदुभयासंसर्गाग्रहस्य कारणत्वावधारणात् ॥

तज्जन्मदानातिशयेऽपि राज्ञो
न तुत्रुटे यत् सदने धनेन ॥ २२ ॥
जनेषु मामीजयते सुहृत्सु
द्विषज्जनानेजयते परायम् ।
इति प्रतेने जगतीभुजंग-
स्तनूजमेनं जनमेजयाह्वम् ॥ २३ ॥
माधुर्यधुर्याणि किमु ब्रवीमि
नृपप्रियायाः स्तनयोः पयांसि ।
यानि प्रकामं पिबति स्म तस्य
शिशोर्मुखीभूय सुधाकरोऽपि ॥ २४ ॥
दृशा स्मितं नासिकयास्यगन्धं
मुखेन दुग्धं श्रवसा चटूक्तिम् ।
अङ्गेन पाणिद्वयलालनं च
मातुः प्रमोदेन पपौ स बालः ॥ २५ ॥
विलोलदोलाशयनः समस्तं
बालोऽयमालोक्य विलोलमेव ।
एकात्मतातत्त्वविवेकबोधि-
लयोद्गतानन्द इवाप निद्राम् ॥ २६ ॥
स्फुरत्प्रभायामुरसा रसायां
चचाल बालः स्फटिकाचितायाम् ।
तरन्निवात्यद्भुतरूपकीर्ति-
दुग्धाम्बुधौ लोलकरक्रमोऽयम् ॥ २७ ॥
उत्तिष्ठतो वीक्ष्य जनान् सहेलं
बालोऽप्यसावुत्थित एव तद्वत् ।
न बद्धमुष्टित्वमियेष बन्धु-
वर्गाङ्गुलीषु ग्रहणं चकार ॥ २८ ॥
यः कोऽपि यत् किंचिदपि प्रतन्वन्
दृष्टोऽमुना तद्विदधे तदेव ।
असावसाधारणबोधशक्ति-
रालोकि कौतूहलिना जनेन ॥ २९ ॥
तत् सत्यमेव श्रुतिवाक्यमात्मा
वै जायते पुत्र इति प्रतीतम् ।
तत्रैव पुत्रे नृपमद्रवत्योः
कथं मिथः स्नेहरसोऽन्यथागात् ॥ ३० ॥

परस्परेर्ष्यानिधिरेककालं
कालेऽभिसर्तुं तरला कलाली ।
बोधाभिधानेन विलोचनेन
विलोकयामासतमां तमेकम् ॥ ३१ ॥
भाग्योदयैरेव सुतस्य तस्य
क्षीणे च रीणे च गणे रिपूणाम् ।
भूपः शरासारयशांसि पातुं
मृगव्यमव्यग्रमतिस्ततान ॥ ३२ ॥
मध्येवनं मार्गणविद्धनष्ट-
मृगानुसारी मृगयाविहारी ।
भाग्योर्मिनिर्मुक्त इवार्थकाम-
श्चिरं स बभ्राम न कुत्र कुत्र ॥ ३३ ॥
मौनी मुनिस्तेन शमीकनामा
दृष्टश्च पृष्टश्च मृगप्रवृत्तिम् ।
अदत्तवाक् चापमुखोद्धृतेन
मृताहिनाकारि स हारकण्ठः ॥ ३४ ॥
प्राप्ते गते राजनि कोपपिङ्गः
शृङ्गी मुनेस्तस्य सुतः शशाप ।
यः पन्नगं मत्पितरि न्यधत्त
तं तक्षको भक्षतु सप्तमेऽह्नि ॥ ३५ ॥
शमी शमीकः कृपयार्द्रितस्तं
भूपालशापं कथयांचकार ।
भूपोऽपि संमन्त्रितमान्त्रिकौघः
स्वरक्षणोपायपरायणोऽभूत् ॥ ३६ ॥
संमन्त्र्य मन्त्रिप्रवरैरथैक-
स्तम्भाग्रदेशस्थितसंनिवेशम् ।
सौधं विधायाशु सुधीः स दुष्-
परप्रवेशं नरपो विवेश ॥ ३७ ॥
जगत्त्रयीलङ्घनजाङ्घिकाहि-
हलाहलालीभिरलङ्घनीयम् ।
पार्श्वेषु रक्षौषधिमान्त्रिकौघ-
मयं स यत्नचितयं ततान ॥ ३८ ॥
अथाह्नि दिष्टे मुनिशापनुन्नः
पृथासुतद्वेषविशेषतप्तः ।

मूर्तोऽयमक्रोधशिखीव नागः
स नागसाह्वं नगरं प्रतस्थे ॥ ३९ ॥
विषद्विषन्मन्त्रसुधाब्धिमेष
द्विजं द्विजिह्वः पथि काश्यपाख्यम् ।
यान्तं रयात् पार्थिवपालनाय
दरिद्रमिष्टद्रविणं ददर्श ॥ ४० ॥
स पश्यतस्तस्य वटं विषाग्नि-
पातेन दग्ध्वा तमुवाच विप्रम् ।
स तक्षकोऽहं नृपरक्षणे चेत्
क्षमोऽसि तज्जीवय वृक्षमेनम् ॥ ४१ ॥
अहेर्ग्दत्ताथ सुधौघवृष्ट्या
दृष्ट्वा तरूज्जीवनमुत्तरं सः ।
महात्मनां वाग्भिरसूचितैव
क्रिया विशत्युज्ज्वलकार्यनाट्ये ॥ ४२ ॥
मर्त्यैरदेयं द्रविणं प्रदाय
स तक्षकेण प्रहितोऽथ विप्रः ।
चेष्टाचयज्ञातनृपालकालः
संपूर्णकामः स्वगृहं जगाम ॥ ४३ ॥
क्ष्मापं ययुस्तापसवेषभाजो
भुजंगमाः केऽप्यथ तक्षकोक्त्या ।
अत्रान्तरे भीतिभिरस्पृशन्तो
विशेषधीधर्मविधिच्छलेन ॥ ४४ ॥
दत्त्वाशिषं तत्स्वयमर्पितानि
फलानि पुष्पाणि च पाणियुग्मे ।
दधौ नृपस्तत्क्षणवीक्षणीय-
कृतान्तदेवार्चनवाञ्छयेव ॥ ४५ ॥
दृष्ट्वा कृमिं शोणदृशं पिशङ्गं
सूक्ष्मं फले मन्त्रिणमाह भूपः ।
शापेन मुच्येय दशत्वसौ मां
कीटो मृषाकल्पिततक्षकाख्यः ॥ ४६ ॥
एवं नृदेवे निगदन्तमेव
दग्ध्वा स सौधं विषवह्निवीच्या ।
धृतस्वरूपश्च्युतकीटरूपः
खं तक्षकस्तत्क्षणमुत्पपात ॥ ४७ ॥

जनमेजयनामाथ तत्सूनुर्भासुरं भुवम् ।
स बालोऽप्युज्ज्वलत्तेजा दिवाकर इवाकरोत् ॥ ४८ ॥
अब्धेरप इवाम्भोभृद्गुरुतः कलिताः कलाः ।
अन्या इव व्यधादेष जगदास्वादकर्मणि ॥ ४९ ॥
सुवर्णवर्णकाशीशकुमारीमुदवाह सः ।
नृपो वपुष्टमां नाम पुष्टमाङ्गलिकोत्सवः ॥ ५० ॥
दिव्यदम्पतिभिः प्रेक्ष्य तं खेलन्तं तयान्वितम् ।
निद्रा तादृक् प्रिया नास्ति दुःखितैरिव दूरिता ॥ ५१ ॥
भूभृन्मौलिमिलत्पादः प्रतापाक्रान्तभूतलः ।
सर्वलोकदुरालोकः स बभौ भानुमानिव ॥ ५२ ॥
प्रवर्षन्नमृतं गोभिः कुर्वन् कुवलयस्मितम् ।
कस्य कस्य न सेव्यत्वं स सुधांशुरिवासदत् ॥ ५३ ॥
वपुष्टमा क्रमादेनं सेवमाना ततोऽसुवत् ।
जितारातिशतानीकं शतानीकं तनूद्भवम् ॥ ५४ ॥
सहस्रानीक इत्यस्य शतानीकस्य नन्दनः ।
भाव्यश्वमेधाद्वैदेहीभवो देहीव विक्रमः ॥ ५५ ॥
इति श्रुत्वा वचो वैशम्पायनाज्जनमेजयः ।
ननन्द निभृतानन्दः सदानिष्क्रन्दनो द्विषाम् ॥ ५६ ॥
युग्मम् ।
जगत्त्रयजयोपायस्फायमानमतिं मुनिः ।
उत्तङ्कस्तं कदाप्येत्य लीलावनगतं जगौ ॥ ५७ ॥
कान्तायै कुण्डले वेदगुरुणा गुरुदक्षिणाम् ।
याचितः पौष्यभूपस्त्रीमदयन्तीधृतेऽप्यहम् ॥ ५८ ॥
ते पुरा कुण्डले प्राप्य गुर्वर्थं मम धावतः ।
नीरमुक्ते सरित्तीरस्पर्शिनस्तक्षकोऽहरत् ॥ ५९ ॥
तत्पथेनाहमुत्तालपातालतलमाविशम् ।
तं जित्वाग्निप्रसादेन तूर्णं पूर्णस्पृहोऽभवम् ॥ ६० ॥
ताटङ्कहृतिविद्वेषं तदाद्येव वहन्नहम् ।
कंचिन्नालोकयं लोकनाथं येन स जीयते ॥ ६१ ॥
दृष्टेऽद्य त्रिजगज्जैत्रचरित्रे त्वयि मन्मनः ।
तथा व्यकासीत् तच्छल्यशैथिल्यमभवद्यथा ॥ ६२ ॥
तत् साधय धराधीश मुदे स्वपितृवैरिणम् ।
परिच्छिद्भक्षकं क्षीणरक्षकं मङ्क्षु तक्षकम् ॥ ६३ ॥
तक्षकः पितृवैरीति तद्गिरा वैरकारणम् ।

तज्जन्मदानातिशयेऽपि राज्ञो
न तुत्रुटे यत् सदने धनेन ॥ २२ ॥
जनेषु मामीजयते सुहृत्सु
द्विषज्जनानेजयते पुरायम् ।
इति प्रतेने जगतीभुजंग-
स्तनूजमेनं जनमेजयाह्वम् ॥ २३ ॥
माधुर्यधुर्याणि किमु ब्रवीमि
नृपप्रियायाः स्तनयोः पयांसि ।
यानि प्रकामं पिबति स्म तस्य
शिशोर्मुखीभूय सुधाकरोऽपि ॥ २४ ॥
दृशा स्मितं नासिकयास्यगन्धं
मुखेन दुग्धं श्रवसा चटूक्तिम् ।
अङ्गेन पाणिद्वयलालनं च
मातुः प्रमोदेन पपौ स बालः ॥ २५ ॥
विलोलदोलाशयनः समस्तं
बालोऽयमालोक्य विलोलमेव ।
एकात्मतातत्त्वविवेकबोधि-
लयोद्गतानन्द इवाप निद्राम् ॥ २६ ॥
स्फुरत्प्रभायामुरसा रसायां
चचाल बालः स्फटिकाचितायाम् ।
तरन्निवात्यद्भुतरूपकीर्ति-
दुग्धाम्बुधौ लोलकरक्रमोऽयम् ॥ २७ ॥
उत्तिष्ठतो वीक्ष्य जनान् सहेलं
बालोऽप्यसावुत्थित एव तद्वत् ।
न बद्धमुष्टित्वभियेव बन्धु-
वर्गाङ्गुलीषु ग्रहणं चकार ॥ २८ ॥
यः कोऽपि यत् किंचिदपि प्रतन्वन्
दृष्टोऽमुना तद्विदधे तदैव ।
असावसाधारणबोधशक्ति-
रालोकि कौतूहलिना जनेन ॥ २९ ॥
तत् सत्यमेव श्रुतिवाक्यमात्मा
वै जायते पुत्र इति प्रतीतम् ।
तत्रैव पुत्रे नृपमद्रवत्योः
कथं मिथः स्नेहरसोऽन्यथागात् ॥ ३० ॥

परस्परेर्ष्यानिधिरेककालं
कालेऽभिसर्तुं तरला कलाली ।
बोधाभिधानेन विलोचनेन
विलोकयामासतमां तमेकम् ॥ ३१ ॥
भाग्योदयैरेव सुतस्य तस्य
क्षीणे च रीणे च गणे रिपूणाम् ।
भूपः शरासारयशांसि पातुं
मृगव्यमव्यग्रमतिस्ततान ॥ ३२ ॥
मध्येवनं मार्गणविद्धनष्ट-
मृगानुसारी मृगयाविहारी ।
भाग्योर्मिनिर्मुक्त इवार्थकाम-
श्चिरं स बभ्राम न कुत्र कुत्र ॥ ३३ ॥
मौनी मुनिस्तेन शमीकनामा
दृष्टश्च पृष्टश्च मृगप्रवृत्तिम् ।
अदत्तवाक् चापमुखोद्धृतेन
मृताहिनाकारि स हारकण्ठः ॥ ३४ ॥
प्राप्ते गते राजनि कोपपिङ्गः
शृङ्गी मुनेस्तस्य सुतः शशाप ।
यः पन्नगं मत्पितरि न्यधत्त
तं तक्षको भक्षतु सप्तमेऽह्नि ॥ ३५ ॥
शमी शमीकः कृपयार्द्रितस्तं
भूपालशापं कथयांचकार ।
भूपोऽपि संमन्त्रितमान्त्रिकौघः
स्वरक्षणोपायपरायणोऽभूत् ॥ ३६ ॥
संमन्त्र्य मन्त्रिप्रवरैरथैक-
स्तम्भाग्रदेशस्थितसंनिवेशम् ।
सौधं विधाप्याशु सुधीः स तद्व-
प्रप्रवेशं नरगो विवेश ॥ ३७ ॥
जगत्त्रयीलङ्घनजाङ्घिकाहि-
हलाहलालीभिरलङ्घनीयम् ।
पार्श्वेषु रत्नौषधिमान्त्रिकौघ-
मयं स यत्नाचितयं ततान ॥ ३८ ॥
अथाह्नि दिष्टे मुनिशापनुन्नः
पृथासुतद्वेषविशेषतप्तः ।

मूर्तोऽयमक्रोधशिखीव नाग:
स नागसाह्वं नगरं प्रतस्थे ॥ ३९ ॥

विषद्विषन्मन्त्रसुधाब्धिमेष
द्विजं द्विजिह्व: पथि कश्यपाख्यम् ।
यान्तं रयात् पार्थिवपालनाय
दरिद्रमिष्टद्रविणं ददर्श ॥ ४० ॥

स पश्यतस्तस्य वटं विषाग्नि-
पातेन दग्ध्वा तमुवाच विप्रम् ।
स तक्षकोऽहं नृपरक्षणे चेत्
क्षमोऽसि तज्जीवय वृक्षमेनम् ॥ ४१ ॥

अहेरदत्ताथ सुधौघवृष्ट्या
दृष्ट्या तरूज्जीवनमुत्तरं स: ।
महात्मनां वाग्भिरसूचितैव
क्रिया विशत्युज्ज्वलकार्यनाट्ये ॥ ४२ ॥

मर्त्यैरदेयं द्रविणं प्रदाय
स तक्षकेण प्रहितोऽथ विप्र: ।
चेष्टाचयज्ञातनृपालकाल:
संपूर्णकाम: स्वगृहं जगाम ॥ ४३ ॥

क्ष्मापं ययुस्तापसवेषभाजो
भुजंगमा: केऽप्यथ तक्षकोक्त्या ।
अचान्तरे भीतिभिरस्पृशन्तो
विषौषधीधर्मविधिच्छलेन ॥ ४४ ॥

दत्त्वाशिषं तत्स्वयमर्पितानि
फलानि पुष्पाणि च पाणियुग्मे ।
दधौ नृपस्तत्क्षणवीक्षणीय-
कृतान्तदेवार्चनवाञ्छयेव ॥ ४५ ॥

दृष्ट्वा कृमिं शोणदृशं पिशङ्गं
सूक्ष्मं फले मन्त्रिणमाह भूप: ।
शापेन मुच्येय दशत्वसौ मां
कीटो मुधाकल्पिततक्षकाख्य: ॥ ४६ ॥

एवं नृदेवं निगदन्तमेव
दग्ध्वा स सौधं विषवह्निवीच्या ।
धृतस्वरूपश्च्युतकीटरूप:
खं तक्षकस्तत्क्षणमुत्पपात ॥ ४७ ॥

जनमेजयनामाथ तत्सूनुर्भासुरां भुवम् ।
स बालोऽप्युज्ज्वलतेजा दिवाकर इवाकरोत् ॥ ४८ ॥

अब्धेरप इवाम्भोभृद्गुरुत: कलिता: कला: ।
अन्या इव व्यधादेष जगदास्वादकर्मणि ॥ ४९ ॥

सुवर्णवर्णकाशीशकुमारीमुदवाह स: ।
नृपो वपुष्टमां नाम पुष्टमाङ्गलिकोत्सव: ॥ ५० ॥

दिव्यदम्पतिभि: प्रेक्ष्य तं खेलन्तं तयान्वितम् ।
निद्रा तादृक् प्रिया नास्ति दु:खितैरिव दूरिता ॥ ५१ ॥

भूभृन्मौलिमिलत्पाद: प्रतापाक्रान्तभूतल: ।
सर्वलोकदुरालोक: स बभौ भानुमानिव ॥ ५२ ॥

प्रवर्षन्नमृतं गोभि: कुर्वन् कुवलयस्मितम् ।
कस्य कस्य न सेव्यत्वं स सुधांशुरिवासदत् ॥ ५३ ॥

वपुष्टमा क्रमादेनं सेवमाना ततोऽसुवत् ।
जितारातिशतानीकं शतानीकं तनूद्भवम् ॥ ५४ ॥

सहस्रानीक इत्यस्य शतानीकस्य नन्दन: ।
भाव्यश्वमेधाद्वैदेहीभवो देहीव विक्रम: ॥ ५५ ॥

इति श्रुत्वा वचो वैशम्पायनाज्जनमेजय: ।
ननन्द निभृतानन्द: सदानिष्क्रन्दनो द्विषाम् ॥ ५६ ॥
युग्मम् ।

जगत्त्रयजयोपायस्फायमानमतिं मुनि: ।
उत्तङ्कस्तं कदाप्येत्य लीलावनगतं जगौ ॥ ५७ ॥

कान्तायै कुण्डले वेदगुरुणा गुरुदक्षिणाम् ।
याचित: पौष्यभूपस्त्रीमदयन्तीधृतेऽप्यहम् ॥ ५८ ॥

ते पुरा कुण्डले प्रार्थ्य गुर्वर्थं मम धावत: ।
तीरमुक्ते सरित्तीरस्पर्शिनस्तक्षकोऽहरत् ॥ ५९ ॥

तत्पथेनाहमुत्तालपातालतलमाविशम् ।
तं जित्वाग्निप्रसादेन तूर्णं पूर्णस्पृहोऽभवम् ॥ ६० ॥

ताटङ्कहृतिविद्वेषं तदाद्येव वहन्नहम् ।
कंचिन्नालोकयं लोकनाथं येन स जीयते ॥ ६१ ॥

दृष्टेऽद्य त्रिजगज्जैत्रचरित्रे त्वयि मन्मन: ।
तथा व्यकासीत् तच्छल्यशैथिल्यमभवद्यथा ॥ ६२ ॥

तत् साधय धराधीश मुदे स्वपितृवैरिणम् ।
परिक्षिदभक्षकं क्षीणरक्षकं मङ्क्षु तक्षकम् ॥ ६३ ॥

तक्षक: पितृवैरीति मद्गिरा वैरकारणम् ।

सभ्यानापृच्छ्य जज्वाल स रुषा पुरुषाधिपः ॥ ६४ ॥
ततस्त्रिजगतीहोमक्षमानक्षीणतेजसः ।
द्विजानामन्त्र्य धात्रीशः सर्पसत्रमसूचयत् ॥ ६५ ॥
तदाहिकुलदाहाय भूपकोप इवाङ्गवान् ।
प्राविशत् क्रतुकुण्डान्तः प्रज्वलन् ज्वलनच्छलः ॥ ६६ ॥
निर्दम्भमन्त्रसंरम्भभासुरैरथ भूसुरैः ।
कृष्टा विश्वधृतिव्यक्तशक्तयोऽप्युरगा न के ॥ ६७ ॥
निसर्गभूषणं भर्ग भगवन् भवतो वयम् ।
तदस्मान् भालदृग्वासोपरोध्यात् पाहि पावकात् ॥ ६८ ॥
आकल्पमाप्य तल्पत्वमस्मदीशेन सेव्यसे ।
अस्मानस्मान्न किं पासि क्रतुतः क्रतुपूरुष ॥ ६९ ॥
त्वत्सर्गस्य तृतीयोंऽशः पश्यतस्ते विलीयते ।
वेदज्ञैः क्लिश्यमानान् नः पासि वेदकवे न किम् ॥ ७० ॥
कदा रज्जुक्रियाकारि नास्माभिः स्यन्दने तव ।
तन्नः किं त्रायसे नैभ्यस्त्रयीविद्भ्यस्त्रयीतनो ॥ ७१ ॥
अस्मन्मुक्ता मही मङ्क्ता साद्रिस्तन्मेरुमन्दिरा ।
का वो गतिर्वयं पाल्यास्तत् संमील्याग्निमाननम् ॥ ७२ ॥
इत्यारटन्तस्तैः सर्वैरपि रक्षितुमक्षमैः ।
साक्षं निरीक्ष्यमाणास्ते दीप्तेऽग्नौ भोगिनोऽपतन् ॥ ७३ ॥
स्वमित्रमारुतभुजो भुञ्जानो भुजगव्रजान् ।
स्फुटत्फणामणिस्वानैः सोऽग्निरट्टाहसदिव ॥ ७४ ॥
अनलादुच्छलन्तः खे श्यामाङ्गा मणिमौलयः ।
धूमेषु सस्फुलिङ्गेषु नोपालक्ष्यन्त पन्नगाः ॥ ७५ ॥
दग्धा मखाग्निकीलाभिरुद्भूतनवमूर्तयः ।
सद्योऽपि द्यामगुर्नागास्ते धूमोत्कलिकाच्छलात् ॥ ७६ ॥
दह्यमानकुलालोकहृदयस्फुटनव्यसोः ।
निर्ममेमृतकर्मैव कस्यचिद्भोगिनोऽग्निना ॥ ७७ ॥
गलद्गरलविध्मातं महाहिः कोऽपि पावकम् ।
अज्वालयत् स्वफूत्कारैरकर्णानां कुतो मतिः ॥ ७८ ॥
प्रसह्य दह्यमानेषु तदा भोगिकुलेष्वभूत् ।
दुर्भिक्षभयभृद्विष्णुगुहवाहनयोर्मनः ॥ ७९ ॥
रविस्यन्दनसंदानभर्गभूषणभोगिनाम् ।
नाभूत् तदाग्निभीः सोढतद्भा तद्भालचक्षुषाम् ॥ ८० ॥
ता धारावाहिपीवाहिरक्तनद्यस्तदाभवन् ।
वालासु यासु लोलासु सागरो रागमागतः ॥ ८१ ॥
एवं हुताहिव्यूहेषु द्विजेषु जनमेजयः ।
महानागकुलस्तोमहोममप्यादिशत् क्रुधा ॥ ८२ ॥
ततस्तक्षकहोमाय मन्त्रमाहुश्च सोमपाः ।
त्रस्तः स्वस्रीयमास्तीकमित्युवाच च वासुकिः ॥ ८३ ॥
अनादेशविधानाग्निदग्धा कद्रूः पुरोरगान् ।
दाहोऽस्तु सर्पसत्रे व इति माताशपत् सुतान् ॥ ८४ ॥
क्षयं यास्यन्ति सर्वेऽपि किं सर्पा मातृशापतः ।
इति पृष्टस्तदा देवैर्जगाद जलजासनः ॥ ८५ ॥
जरत्कारुमुनेः पत्नी जरत्कारूरिति श्रुता ।
प्रसविष्यति सा पुत्रमास्तीकं वासुकिस्वसा ॥ ८६ ॥
अहीन् वेदविदग्धस्तान् दग्धशेषान् स पास्यति ।
लोकश्छायामयं भानुहतशेषं यथा तमः ॥ ८७ ॥
ततस्त्वं भागिनेयं स्वं भागधेयमिवागतः ।
अहीनर्ह नचारिक्ष्य रक्षयैष तव क्षणः ॥ ८८ ॥
इत्यास्तीको गिरं श्रुत्वा मातुलस्यातुलोद्यमः ।
चचाल सर्पसत्राय चेतःसहचरक्रमः ॥ ८९ ॥
तक्षकाकर्षरुहर्षसंरब्धस्तब्धपाणयः ।
द्विजास्तदा च राजानं जगदुर्जगदुत्तमाः ॥ ९० ॥
तक्षकेण शरण्यस्त्वत्पितामहपितामहः ।
चक्रे शक्रः स किं मान्यः कृष्यः सोऽपि सहैव किम् ॥ ९१ ॥
तक्षकं रक्षकोपेतं कोपेन मनसो रसात् ।
द्रुतं जुहुत यज्ञाग्नौ तानित्यूचे तदा नृपः ॥ ९२ ॥
अथावेशोच्छ्रसद्दृष्टिभीमभ्रुकुटयो द्विजाः ।
सेन्द्राय तक्षकायेति मन्त्रपूर्वां जगुर्गिरम् ॥ ९३ ॥
क्रोशन्तीष्वथ कोटीषु त्रयस्त्रिंशति नाकिनाम् ।
मन्त्रशक्त्या खमानीतो नाकिनाथः सतक्षकः ॥ ९४ ॥
तौ वीक्ष्य खाण्डवप्लोषरक्षकौ शक्रतक्षकौ ।
होमाय कृष्टौ व्योमाग्रे जिह्वां व्यावल्गयच्छिखी ॥ ९५ ॥
दिक्पालमय भूपाल द्युपालोंऽशस्तवाष्टमः ।
हुतेऽस्मिन् पौरुषं ते किमित्यरोदीत् तदा शची ॥ ९६ ॥
स्वर्गस्वाम्ये तवेच्छा चेत् तदिन्द्रोऽस्तु त्वदाज्ञया ॥
जनमेजय मुञ्चामुमित्यूचुः सर्वतः सुराः ॥ ९७ ॥
इति द्युलोके साक्रन्दे संक्रन्दनकरग्रहात् ।

सावेशविग्रहहुङ्कारैर्व्यच्छुटन्मङ्क्षु तक्षकः ॥ ९८ ॥
यावत् पतति होमाग्नौ स नागो मा पतेति तम् ।
व्योम्नि व्यालम्बयंस्तावदित्यास्तीकोऽस्तुवन्नृपम् ॥ ९९ ॥
स्वस्ति ते पाण्डुवंश्याय यत्कीर्तेर्मुखबिम्बवत् ।
इन्दुर्मरकतादर्शनिभे नभसि भासते ॥ १०० ॥
आस्ते यावदखर्वपर्वतघटागुर्वीयमुर्वी भृशं
तावन्नन्दतु भूमुकुन्द जगतीपुण्यैरगण्यैर्भवान् ।
येनैतां भुजगाधिपस्तव भुजे विन्यस्य नागाङ्गना-
गोष्ठीगीतभवद्यशःश्रुतिरसादाचान्तचिन्तोऽभवत् ॥१०१॥
स्वान् वत्सान् पितृदेवमानवऋषीन् यावद्धिनोति स्वधा-
स्वाहाहन्तवषट्कृतिस्तनचतुष्केण त्रयीधेनुका ।
तावल्लालय भूमिपाल भुवि तद्गोपालरूपानमू-
त्रानान् पूर्वजवृत्तिलाभमुदितान् सन्मानदानादिना॥१०२॥
नित्यं यद्वदनारविन्दसदनं वाग्देवता सेवते
त्वं पद्माश्रयभासुरोऽसि जयति त्रैलोक्यसूत्रं त्वयि ।
भूभृन्मण्डलमौलिमण्डनगुणैरेभिः स्वयं ब्रह्मणः
साधर्म्यं वहसि प्रियंवद मदाशीर्भिस्तदायुर्भव ॥१०३॥
कल्पान्तेषु यशोभरे तव हरेर्दुग्धाब्धिवासः स्वयं
मार्कण्डस्त्रिदशापगारयपयःस्नानोत्सवं लप्स्यते ।
अत्युक्तिः कवितेति नात्र वचसि श्रद्धास्ति चेत् तच्चिरं
नन्द त्वं दलितारिपक्ष भवतु प्रत्यक्षमेतत् तव॥१०४॥
वितन्वाते विश्वाङ्गणसदसि यावत् तव यशः-
प्रतापाभ्यामभ्युल्लसितरुचिवादं विधुरवी ।
भज स्थैर्यं सोमान्वयतिलक तावत्कसुकृतेः
कृतैर्लभ्यः सभ्यस्त्वमिव गुणदोषैकनिकषः ॥ १०५ ॥
क्व यातु त्वां विना धर्मः क्व ते धर्मं विना रतिः ।
मा द्वयोर्युवयोरस्तु पृथ्वीनाथ पृथग्गतिः ॥ १०६ ॥
अशक्तमेकाङ्घ्रितया विहर्तुं
महीन्द्र मूर्ध्ना वह धर्ममेनम् ।
चतुष्पदीं प्राप्य कृतिन् कृतिज्ञो
विशृङ्खलं खेलति यावदेषः ॥ १०७ ॥
यावद्धर्मस्तावदेव त्रिलोकी
यावच्च त्वं तावदेवास्ति धर्मः ।
तत् त्रैलोक्याधारभूतस्त्वमेकोऽ-
नन्तं कालं नन्द कल्याणकन्द ॥ १०८ ॥
सर्गेऽस्मिन् जनिते पुराणकविना शीतांशुबिम्बं भवद्-
वक्त्रश्रीपुनरुक्तमङ्कमिषतश्छिन्नं मषीरेखया ।
क्ष्मानिर्दूषणभूषण त्वयि गुणैस्त्रैलोक्यलोकं वशी-
कुर्वाणे कुसुमायुधोऽप्यधिकतादोषादनङ्गीकृतः॥१०९॥
चोरस्त्रीकुलटाकुलाश्रुतटिनीसंभेदगर्भे मुहुः
स्नानाधानपरोऽवनीतलकृतस्थानः प्रभावास्पदम् ।
एष न्यायतपोधनः किमपि तद्वृत्तं वितेनेऽन्तरा-
त्मानं त्वां कलयत् कलाढ्य जगदप्यासीद्यथा तन्मयम्११०
पौरुषतरुमारूढा-
वनीश तव संततं लता नीतिः ।
रिपुनिश्वासोल्लसितैः
सुरभयति दिशो यशःकुसुमैः ॥ १११ ॥
न व्यामोहं क्वचन तनुते यत्र धत्ते विरोधं
धातुः पुत्र्या सह न सहजं चापलं चातनोति ।
हस्ते कृत्वा जगदिव कृतिन् तत् किमेषापि लक्ष्मी-
र्भद्रापौत्रप्रभव भवताशिक्षि वृत्तं स्वमेव ॥ ११२ ॥
विश्वं न स्यादनीदृङ्निखिलमपि कदाप्येष लोकप्रवादः
कल्पे कल्पे ततस्त्वं मदयसि वसुधां लब्धपुण्यावतारः ।
कल्पद्रुः कामधेनुस्त्रिदशमणिरपि श्रीनिकेत स्रवन्ती-
भूयाम्भोधिं गतानामिति भवति भवद्दानवारां विवर्तः११३
दत्से दानमिदं सदा यदि ततः श्रीसोमवंश्य स्वयं
प्राक्तोयप्रथनौचितीं शुचिकलाविस्मेर विस्मारय ।
तत्तत्पूरमयीषु सिन्धुषु पयः पीत्वाध्वनि प्रोद्धतै-
र्याच्ञादैन्यपराङ्मुखैः पृथुगुण प्रार्थिष्यसे नार्थिभिः॥११४॥
आजन्मापि कृशाकृतिं द्विजपतिं स्वे मूर्धनि स्वर्धुनी-
धौते धारयते जगत्पतिरसावग्र्यो गुणग्राहिणाम् ।
सद्यः संगतमप्यमुं वसुभरैः पुष्णाति पूषा शिरो-
भूषा दानवतामुभावपि शुभावेतौ गुणौ तु त्वयि ॥११५॥
भद्रापौत्रतनूज पूजनविधिं वागीश्वरीजङ्गम-
प्रासादेषु विशारदेषु विशदं कंचित् त्वया तन्वता ।
दारिद्र्यौघरजःप्रमार्जनकृते दत्ता स्वयं शाश्वती
लक्ष्मीः कर्मकरीव मुञ्चति पुरोभागं न तेषां क्वचित् ॥११६॥
तादृग्दारिद्र्यमुद्रातुरचतुरचमूहर्षहेलानिदानै-
र्दानैरुद्यन् जगत्यां जयति तव महीपाल पाणिर्महीयान् ।

साकल्य: कल्पशाखी त्रिदिवभुवि मुधा मार्गणानां सुराणां
मिथ्या वित्तानि दत्ते यदभिनयनटीभूय भूयस्तराणि ॥११७॥

किं वर्ण्य: कलिगन्धसिन्धुरहरिर्भूवल्लभ त्वं कला-
वल्लीनामवनी वनीयकवनीधारालधाराधर: ।
कल्पोर्वीरुहमूर्ध्नि मौक्तिकमयानूनप्रसूनच्छवि-
च्छद्मान: प्रथमानदानजनिता: क्रीडन्ति यत्कीर्तय: ११८॥

विश्रामाय न कल्पवृक्षवनमप्यालोकते नोच्चकै-
श्चिन्तारत्नधराधरेऽपि कषणक्रीडारसं काङ्क्षति ।
वृन्दे कामदुहां क्व वाञ्छतु समं धुर्यं धरायां भवा-
नेको वीरवृषो वहत्यहरहर्दानस्य दीर्घां धुरम्॥११९॥

अचेतन्याश्चिन्तामणिसुरगवीकल्पतरव:
पयोधेरत्नस्थुर्यदि सति महादानिनि बलौ ।
तदेते भूनेत: कथमिव भवन्तं क्षितितले
भविष्यन्तं मत्वा प्रथममगमन्मेरुशिखरम् ॥ १२० ॥

दाता येन रसातलं व्रजति तद्दानं बलिर्दत्तवान्
क्वास्तु स्व:सुरभीमणिक्षितिरुहां दाने गुणग्राहिता ।
मातु: प्रार्थनयापि विश्वजयिने कर्णोऽपि निर्भीतये
नाभीतिं जयिने ददौ कमिव तत् त्वां स्तौमि भूमिप्रभो१२१

अर्हद्भक्तसुहृद्विभक्तविभवश्रीवल्लिशालद्विषत्-
क्षोणीपालकपालपाटनपटुप्रोद्दामवामभ्रुव: ।
विद्वत्पुण्यपुरैकगोपुरपुरोभागीनि भागीरथी-
भासां भासितभूनभांसि न भृशं जग्मुर्यशांसि क्व ते ॥ १२२ ॥

शश्वत्त्वत्कलचनेत्रसलिलैर्जम्बालजालस्पृशि
भ्रान्त्वा भूपतिभालभूषण भवत्कीर्तिर्भुवो मण्डले ।
यद्यान्ती विबुधालयं प्रति सुधाकुण्डे सुधांशौ न्यधा-
दङ्घ्रिक्षालनमित्ययं खलु मलस्तस्मिन् गत: स्मेरताम्॥१२३॥

त्वद्यशश्छविलवापहारिणी
नैव दैवतधुनीति घुष्यताम् ।
यां शिव: शिरसि केशवक्रम-
स्पर्शदिव्यविमलामलालयत् ॥ १२४ ॥

खर्व: पार्वणशर्वरीवरयिता गर्वो न दर्वीकरा-
धीश: श्रीद धराधरोऽतिविधुर: स्व:सिन्धुरो नोद्धुर: ।
ईशोत्तंसधुनी च नीचमहिमा सान्द्रो हिमाद्रिश्च न
श्रीसोमान्वयशक्र तावकयशश्चक्रे दिश: क्रामति ॥१२५॥

व्याषेधो धरणीधरेशितुरनध्याय: सुधाया विधो-
रन्तर्धिर्धनदाचलस्य निधनं दुग्धोदसिन्धो: पिधा ।
प्रत्याख्यानममानवद्विपमहादेहद्युतेर्निह्नवो
जाह्नव्यास्तव भूभुजंग यशसां भारो दिशां हारति ॥१२६॥

गङ्गां शृङ्गारयद्भिस्तुहिनकरकलाशेखरं रेखयद्भि:
खीखण्डं मण्डयद्भिर्भुजगविभुविभासंचयं चञ्चयद्भि: ।
चन्द्रं निस्तन्द्रयद्भि: स्फटिकगिरिशिरोवृन्दमानन्दयद्भि-
र्भूसुभ्रूकान्त शुभ्रैस्त्रिभुवनमभित: शोभितं त्वद्यशोभि:१२७

शेषं नि:शेषयन्त्यो हरशिखरिशिखासंधमालङ्घमाना
मन्दारं मन्दयन्त्यो हरिचरणसरिद्गाहमागाहमाना: ।
कर्पूरं दूरयन्त्य: सुरसुरभिपय: संचयं वञ्चयन्त्यो
विश्वं विश्वंभराया रमण तव यशोराजयो राजयन्ति १२८

उक्त: सर्वग एव तत्त्वविदुरैर्देव: शिवोऽसौ न तत्-
मिथ्या यत्कुसुमै: प्रपूजयसि यै: सर्वाङ्गमेनं विभुम् ।
द्वीनार्तिद्रमदाव तावक यशस्तोमच्छविच्छद्मना
तुल्यं सर्वगतानि तानि सुरभीकुर्वन्ति सर्वं जगत् ॥ १२९ ॥

शेते पश्य चतुर्मुखोऽपि जगतामन्ते तदन्ते हरि-
स्तस्यान्ते च हर: स्फुरद्दिननिशायुग्मव्यवस्थावशात् ।
सर्वान्तोऽपि नरेश न स्वपिति ते कीर्ति.पुन:संकट-
व्यामोक:स्थितिचिन्तया भवतु किं तस्यादिनं का निशा१३०

मन्येऽब्धौ वडवानलं फणिपुरे कालाग्निरुद्रं दिवि
च्यक्षाक्षिज्वलनं पयोधरपथे सौदामिनीडम्बरम् ।
सर्वस्यां दिशि शक्रशस्त्रमधुना कार्यं किमत्रात्मभि-
र्भानुर्मन्त्रयतीति सोमकुलज त्वत्तेजसि स्फूर्जति ॥ १३१ ॥

तव प्रतापस्तपनस्तदन्त:
पुमांस्त्वमेकोऽसि हिरण्यवर्ण: ।
भवद्द्विषां सत्त्वजुषां महांसि
त्वय्येव मज्जन्ति महीभुजंग ॥ १३२ ॥

नि:शेषं भवभालभीमनयनं दम्भोलिकीलागल-
ल्लीला लुम्पति दावपावकविभापूर: परक्रूरताम् ।
अर्क: कर्कशतां समुज्झति वहत्यौर्वो न गर्वोद्यमं
श्रीसोमान्वय विश्वलानकलामत्ते भवत्तेजसि ॥ १३३ ॥

व्योम्नि व्योममणिर्वने दवशिखिज्वालाकलाप: पयो-
राशौ वाडवपावको जलधरस्तोमे तडिद्विभ्रम: ।

एते पौरववंशसंभवभवत्तेजोभिरस्तौजसो
मग्ना दुर्यशसो भान्ति विलसज्जम्बालजालप्रभा ॥१३४॥

पङ्क्तिः प्रतापदीप्रानां महीप तव दीप्यते ।
ब्रह्मणोऽपितमस्विन्यां भावी दीपोत्सवो यया ॥१३५॥

यत्र संचलति संचलत्यदः
सुस्थिते भवति सुस्थितं जगत् ।
तद् ध्रुवं भुवि भवानवातरत्
ख्यातमेव मतमद्वयं विभो ॥ १३६ ॥

देव त्वज्जैत्रयात्रासमयसमुदयत्तुङ्गमातङ्गशुण्डा-
दण्डाग्रप्रायतुरगखुरभरैः सानुमन्तः समन्तात् ।
सातङ्कं कम्पमानाः शकुनिकलकलैः प्रस्तरव्रातपातैः
शङ्के निष्कासयन्ति स्वकुहरविहरत्प्रत्यनीकावनीपान्१३७

शक्रः संक्रन्दनोऽभूदकलयदनलस्तापमापत् कृतान्तः
कार्ष्ण्यं क्रव्यादभर्त्ताजनि रजनिचरोऽम्बुप्रविष्टः प्रचेताः ।
वायुर्न क्वापि तस्थावधित धनदतां गुह्यकेन्द्रो गतोऽद्रिं
शूली धूलीधुतार्के भरनतभुजगे दिग्जिति त्वत्प्रयाणे १३८

त्वत्प्रारब्धप्रचण्डप्रधननिधनितारातिवीरातिरेक-
क्रीडत्कीलालकुल्यावलिभिरलभत स्यन्दमाक्रन्दमुर्वी ।
दम्भोलिस्तम्भभास्वद्भुजभुजगजगद्भर्तुराभर्तुरेनां
तेनायं मूर्ध्निरत्नद्युतिततिमिषतः शोभते शोणभावः १३९॥

विघ्नैरागमतो मतो यदि बलीहेतुर्न तद्भास्वता
बिम्बं भिन्नमरातिभिस्तव शिवप्रस्थायिभिः पार्थिवैः ।
भिन्नस्तैः पृथिवीपुरंदर परं प्रालेयरश्मिर्यत-
स्तस्मिन् कज्जलकश्मलच्छविविलं लक्ष्मच्छलं लक्ष्यते १४०

कल्पे कल्पे भवसि भुवनानन्दविद्वेषिवृन्दा-
वस्कन्देषु त्वमसमगुणः सत्प्रतापः क्षमापः ।
तद्रोमाञ्चं भजति गिरिभिर्भूतधात्री धुनोति
चन्द्रादित्यच्छलपरिचलत्कुण्डलं व्योममौलिम् ॥१४१॥

अमी प्राज्यं राज्यं जगति रचयिष्यन्त्यरिनृपा-
निमान् भेत्स्यामीति द्रुहिण भवतो निश्चयलयः ।
प्रतिज्ञातं धाता तव तु तनुते निष्फलमदो
मदोग्रत्वत्पादप्रणतिमतिमित्रेषु वितरन्नग ॥ १४२ ॥

अदन्तैर्मातङ्गैर्विटपिभिरपुष्पैरनुडुभि-
स्तमिस्राभिः सर्पैरमणिभिरफेनैर्जलधिभिः ।
अमीभिः श्रीसोमान्वयतिलक विश्वत्रयमपि
प्रसर्पद्भिः पूर्णं त्वदरिकुलदुःकीर्तिनिकरैः ॥ १४३ ॥

त्वत्तेजस्ततितापिता इव विपल्लीलाकटाक्षच्छटा-
संश्लिष्टा इव संनिधिस्थितवधूनिःश्वासदग्धा इव ।
दुःकीर्तिव्यतिषिक्तमूर्तय इव क्ष्माकान्तभान्ति ध्रुवं
दुर्ध्यानद्युतितन्मया इव वने श्यामत्विषस्त्वद्द्विषः१४४॥

त्वद्विद्वेषिपुरे पुरा निवसते प्रासादवृन्दध्वज-
च्छायां केलिकलापिनः फणिगणभ्रान्त्या निहत्यार्दिताः ।
शून्ये संप्रति सर्वतो निजपतिप्रध्वंसवैराग्यतो
निर्वैरा इव ते क्षिपन्ति न मुखं सर्पेत्सु सर्पेष्वपि॥१४५॥

शिखरिषु हृदभूतैर्भूमिनेतः प्रभूतै-
स्त्वदहितयुवतीनां दृग्जलैः कज्जलाढ्यैः ।
अहह विरहखिन्नाः खेचराणां रमण्यः
प्रतिपदमनुयत्नं प्रीतिलेखान् लिखन्ति ॥ १४६ ॥

स्तुत्वा पार्थप्रपौत्रं किमपि तव नवं वर्णनिस्वर्णकर्णा-
लंकारं कारयिष्ये किमियमिति वधूर्त्तंसिताली दलालीम् ।
आदायादाय देशान्तरचरकवयोऽरण्यदेशे विशत्रु-
त्रस्तीनेत्रबाष्पाञ्जनदरिषु लिखन्त्यद्भुतत्वत्प्रशस्तीः१४७

दिगन्तान् दिग्दन्तावलकरभिया तावकभुज-
भ्रमान् मुक्त्वा जग्मुर्गिरिविवरमागरहिपुरम् ।
अहीन्द्रं तद्रूपं नृपतिवर तत्रापि रिपवो
निरूप्याशु त्रासाद् द्युगतिमतिदीना विदधतु॥१४८॥

जम्भजित्करिकरो भवद्भुजः
पन्नगेन्द्र इति सोदरास्त्रयः ।
संविभज्य जयिनो जगत्त्रयं
भूमिपाल परिपालयन्त्वमी ॥ १४९ ॥

त्वद्भुजभ्रमकणः फणीन्द्रदिग्-
दन्तिहस्तपविदण्डमण्डनः ।
दैन्यतोऽब्धिजलदुर्गविष्टरे
विष्टरश्रवसि याति विष्टपम् ॥ १५० ॥

स्पर्धां कुतो धास्यति भूभुजंग
भुजंगराजः स भवद्भुजेन ।
यस्त्वत्क्षतारिव्रजपातभुग्न-
धराभरेणापि बिभर्ति खेदम् ॥ १५१ ॥

रङ्गभुजंगकुलहोमबलप्रलीना-
धारां धरां क इव धारयितुं क्षमः स्यात् ।
इत्थं जना निजगदुर्न विदुर्जडास्ते
रात्रन् भवद्भुजभुजंगकृतिस्थितिं ताम् ॥ १५२ ॥
स्वयं जगत्त्रयं चातुं शक्तः शक्तित्रयीयुतः ।
भवान् जुहोतु होमाग्नौ नाके नागपतिः कृती ॥१५३॥
हसत्यसौ भूतलशर्व सर्वान्
सुरासुरोर्वीशमखान् मखस्ते ।
तापोच्छलत्पन्नगरत्नराजि-
व्याजोत्थताम्बूलकणप्रतानः ॥ १५४ ॥
हिमांशोर्मालिन्यं दलयसि यशोभिश्चलचमू-
धुतैर्धूलीभारैः शिथिलयसि भारं फणिविभोः ।
नृणां दौस्थ्यं दानैरपनयसि सोमान्वयशिरः-
किरीटत्रैलोक्योपकृतिसुकृती त्वं विजयसे ॥ १५५ ॥
भुजाग्रमभजंस्तवाङ्गुलिनिभेन नाकद्रुमाः
सुरारिभयभीरवः सुरवराश्च हृत्पञ्जरम् ।
अतोऽनुसृतवत्सलत्रिविधवीरकोटीरक-
स्तुलां रिपुकुलान्तक व्रजतु भूभुजंगत्वया ॥ १५६ ॥
स्पर्धां बध्वा तत्वदङ्गं सपदि गगणा गुयेऽविशंस्तत्प्रवेश-
द्वाररूपा रोमकूपास्त्वदवयवभरं निर्भरं शोभयन्ते ।
तैरेवान्तः क्षितीश त्वमसि शशिनिभैर्भासितस्तत्तमिस्रं
रोमस्तोमच्छलेनान्तरमिव निरयद्भाति मार्गेषु तेषु ॥१५७॥
सर्वज्ञनामपरिपूर्तिकृते हरोऽपि
मृत्युंजयस्तव गुणान् गणयन् गुणाग्र ।
अम्भोधिपट्टमभिवीचिनिभान्तिजेन
भूत्यन्तरेण कुरुते मरुतैष रेखाः ॥ १५८ ॥
न लीलादोलायां न कनकनिकेताग्रशिखरे
न तल्पे नाकल्पे न मृदुपवने नाप्युपवने ।
रतिं क्वापि प्रापुर्नृवर कवयस्त्वद्गुणगणा
नुरूपार्थध्यानभ्रमितमतिशून्यभ्रमिकृतः ॥ १५९ ॥
उन्नित्योन्नित्य किंचित्
क्वचिदपि वचनप्रक्रमं विक्रमश्री-
विश्रामावास विश्वो-
त्तरगुण तनुतां कः स्तुतिप्रस्तुतिं ते ।
दृग्लीलादग्धदाह्य-
प्रत्यय रचयति त्वत्प्रशंसां न शर्वः
सर्वज्ञोऽपि स्वयं तुत्वत्
स्तुतिकृतिषु कृतिन् कस्य न स्यात् त्रयोर्मिः ॥१६०॥
इत्येष स्वस्तिपूर्वस्तवननवसुधावृष्टिमान् हृष्टिमग्न
तत्र त्रचावतंसे कथय किमु ददे तुभ्यमित्युक्तिभाजि ।
आस्तीकस्तक्षकाहिप्रभृतिफणभृतां चक्रमुन्मोच्य चक्रे
तोषं शक्रेऽपि विश्वत्रयहृदयमदाऽद्वैतवैतण्डिकश्रीः १६१॥
श्रियोधामनि मन्त्रदामनि भवन्नाम्निश्रुतेस्मद्विषं
जन्तोर्न प्रभविष्यतीत्यहिकुलैः सोत्कर्षहर्षाकुलैः ।
दत्तोदारवरस्तदेव स जरत्कारोः कुमारोऽनिशं
कालाहेर्निजनामगर्भमवतु ग्रन्थं यशोगं मम ॥ १६२ ॥
वीरेन्दोर्जनमेजयस्य पुरस्तत्राहिसत्रान्तरे
वैशम्पायनतो निशम्य किल यां सूतः स उग्रःश्रवाः ।
आख्यन्नैमिषकानने कुलपतेः श्रीशौनकस्य क्रतौ
सेयं लालयतु स्वबालमिव मद्ग्रन्थं कथा भारती ॥१६३॥
भेजे श्रीजिनदत्तसूरिसुगुरोरर्हन्मतार्हस्थितेः
पादाब्जभ्रमरोपमानममरो नाम व्रतीन्द्रः कृती ।
एतन्नन्दतु बालभारतमहाकाव्यं तदुल्लासितं
वाग्देवीगृहकोविदेन्द्रहृदयश्रेयःसुधास्वस्तिकः ॥ १६४ ॥
श्रीआस्तीकप्रभावाख्ये सर्गेऽमुष्मिन्ननुष्टुभाम् ।
शतद्वयं समुद्दिष्टमष्टपञ्चाशदन्वितम् ॥ १६५ ॥

इति श्रीजिनदत्तसूरिशिष्यपण्डितश्रीमदमरचन्द्रविरचिते श्रीबालभारतनाम्नि महाकाव्ये वीराङ्के आदिपर्वसंबन्धी श्रीआस्तीकप्रभावतो नाम चित्वारिंशत्तमः-सर्गः ॥ १६ ॥ :: :: ॥

---

## ॥ अथ खण्डप्रशस्तौ

बुद्धावतारवर्णनम् ॥

(१२६) षट्चक्रे क्रमभावनापरिगतं हृत्पद्ममध्यस्थितं
संपश्यन् शिवरूपिणं लयवशादात्मानमध्यासितः ।
युष्माकं मधुसूदनो बुधवपुर्धारी स भूयान्मुदे
यस्तिष्ठेत्कमलासने कृतरुचिर्बुद्धैकलिङ्गाकृतिः ॥

स मधुसूदनो मधुदैत्यहन्ता बुधवपुर्धारी बुधावतारो हरिर्युष्माकं मुदे हर्षाय भूयात्, यो बुद्धानां ज्ञानिनां यल्लिङ्गं

लिङ्ग्यते ज्ञायते ऽनेनेति व्युत्पत्तेर्ज्ञानं तदेवाकृतिः स्वरूपं यस्य सः बुद्धैकलिङ्गाकृतिः ज्ञानरूप इति यावत्, कमलासने पद्मासने कृतरुचिर्विहिताभिलाषस्तिष्ठेत् पद्मासनस्वरूपं च योगशास्त्रे हेमाचार्याः प्राहुः, यथा

जङ्घाया मध्यभागे तु संश्लेषो यत्र जङ्घया ।
पद्मासनमितिप्रोक्तं तदासनविचक्षणैः ॥ १ ॥

इति । पुनः किंविशिष्टः, षट्चक्रे क्रमः परिपाटी तस्या भावनया वासनया परिगतं व्याप्तं हृदयकमलान्तःस्थितमात्मानं शिवरूपिणं लयवशाच्चित्तैकाग्र्यवशात्संपश्यन्नध्याश्रितः स्थितः अभेदाध्यवसायादिति भावः, षट्चक्राणि यथा,

१ आधारचक्रम् २ मणिपूरचक्रम् ३ अधिष्ठानचक्रम् ४ आज्ञाचक्रम् ५ बिन्दुचक्रम् ६ लयचक्रं चेति ॥ १२६ ॥

(१२७) बद्ध्वा पद्मासनं यो नयनयुगमिदं न्यस्य नासाग्रदेशे
धृत्वा मूर्तौ च शान्तौ शमरसमिलितौ चन्द्रसूर्याख्यवातौ ।
पश्यन्नन्तर्विशुद्धं किमपि च परमं ज्योतिराकारहीनं
सौख्याम्भोधौ निमग्नः सदिशतु भवतां ज्ञानबोधं बधोयम् ॥

अयं स बुधोबुधावतारो हरिर्भवतां युष्माकं ज्ञानबोधं ज्ञानस्फूर्तिं दिशतु ददातु, स इति कः, यो यथोक्तं पद्मासनं बद्ध्वा नयनयुगं च नासाग्रे न्यस्य संस्थाप्य नासाग्रदृष्टिर्भूत्वेति यावत्, च पुनर्मूर्तौ शरीरे शान्तौ शमरस मिलितौ सूर्याचन्द्रमसाख्यवातौ धृत्वा किमप्यनिर्वाच्यमन्तर्विशुद्धं चेतसि निर्मलं परमं प्रधानमाकारहीनं निराकृति ज्योतिरात्मस्वरूपं पश्यन् सुखमेव सौख्यं सुखसमुद्रे निमग्न इति ॥ १२७ ॥

(१२८) रेतो रक्तमयान्यमूनि भविनां विण्मूत्रपूर्णोदराण्यालोक्येव कलेवराणि विगलत्तोयार्द्ररन्ध्राणिय: ।
मायाजालनियन्त्रितानि घृणया नोन्मीलयत्यक्षिणी
निर्व्याजप्रणिधाननिश्चलमतिर्बुध्यै स बुद्धोऽस्तु वः ।

स बुद्धावतारो हरिर्वो बुद्ध्यै विशदमतयेऽस्तु भवतु, स इति कः, यो भविनां संसारिणाममूनि प्रत्यक्षोपलभ्यानि कलेवराणि शरीराण्यालोक्येव दृष्ट्वेव घृणया जुगुप्सया अक्षिणी चक्षुषी नोन्मीलयति न विकासयति, किंविशिष्टानि कलेवराणि, रेतोरक्तमयानि शुक्ररुधिराश्लिष्टानि, पुनः किंविशिष्टानि, विण्मूत्राभ्यां पूर्णानि उदराणि येषां तानि, पुनः कथंभूतानि, विगलत्क्षरत्त्तोयं मूत्रादिजलं तेनार्द्राणि क्लिन्नानि रन्ध्राणि विवराणि येषां तानि, पुनरपि मायैव जालं तेन नियन्त्रितानि बद्धानि, किंभूतः सः, निर्व्याजेन निष्कपटेन प्रणिधानन चेतःसमाधिना निश्चलामतिर्यस्य स इति ॥ १२८ ॥

इति श्रीगुणविनयविरचितायां खण्डप्रशस्तिवृत्तौ बुद्धावतारवर्णनम् ॥

---

## ॥ अथ खण्डप्रशस्तौ

कल्क्यवतारवर्णनम् ॥

(१२९) प्रेङ्खद्वाजितरङ्गमुन्मदगजग्राहप्रगल्भं भटव्यावल्गत्स्फुटपुण्डरीकनिलयं भिण्डीरपिण्डावलिम् ।
म्लेच्छानीकमहार्णवं सुविपुलं संग्रामकल्पावधौ
यश्चौर्वाग्निरिवाभवद् द्यतु स वः कल्कानि कल्की हरिः ॥

स कल्की हरिर्वः कल्कानि पापानि द्यतु खण्डयतु, यः सुविपुलं सुष्ठु विस्तीर्णं म्लेच्छानां यवनादीनां यदनीकं सेना तदेव महार्णवः प्रलयसमुद्रस्तं प्रति संग्रामकल्पावधौ संग्राम एव कल्पो युगान्तस्तस्य योवधिर्मर्यादातस्मिन्नौर्वाग्निरिव बडवानल इवाभवत्, यथा प्रलये ओर्वाग्निना समुद्रः शोष्यते तथाऽयं भगवान् म्लेच्छानीकसागरं शोषयतीति भावः, किंविशिष्टमर्णवं, प्रेङ्खद्वाजितरङ्ग प्रेङ्खन्तो व्यावल्गन्तो ये वाजिनोऽश्वास्तरङ्गाः कल्लोला यस्मिन् स तम्, पुनः किंविशिष्टम्, उन्मदगजग्राहप्रगल्भं उन्मदा उन्मत्ता ये गजास्त एव ग्राहास्तन्तुनागास्तैः प्रगल्भं, पुनः किंविशिष्टम्, भटव्यावल्गत्स्फुटपुण्डरीकनिलयं भटाः शूरास्त एव व्यावल्गन्ति स्फुटानि प्रकटानि यानि पुण्डरीकाणि तेषां निलयो गृहं यः स तम्, पुनः किंविशिष्टम्, भिण्डीरपिण्डावलिं भिण्डीरपिण्डाः फेनपिण्डास्तेषामावलिः श्रेणिर्यस्मिन् स तम्, एतच्च विशेषण प्रलयमहार्णवस्यैव घटत इति ध्येयम् ॥ १२९ ॥

॥ इति श्रीगुणविनयविरचितायां खण्डप्रशस्तिवृत्तौ श्रीकल्क्यवतारवर्णनं संपूर्णम् ॥

तदेवं श्रीमद्धनूमद्भिर्मितं खण्डप्रशस्तिनामकं पद्यात्मकं काव्यं सुललितपद विष्णोर्मीनादिदशवतारचरितवर्णनात्मकं जैनजयसोमगणिशिष्यगुणविनयविरचितपदार्थविवृतिसहितमतिप्राचीनं सुन्दरमपीदानीं दुर्लभं तस्य च पुस्तकं परमप्राचीन मेकमेव मया लब्धमतो महताप्रयासेन तत्सम्यक्संशोध्य श्रीमन्महाशयप्रभुवरग्रिफिथसाहिबवर्याणामनुमत्या काशीविद्यासुधानिधौ मुद्रितम् । एतच्च सकलविबुधजनमुदे भूयादिति शम् ॥

काशीकराजकीयपाठशालाया
ज्योतिश्शास्त्राध्यापको
वामनाचार्यः

# THE APHORISMS

OF THE

# YOGA PHILOSOPHY

OF

## PATAÑJALI.

(*Continued from page* 51 )

[1] If this, the cognition, being the illuminator is perceptive by nature, and the object being liable to be illuminated is natually perceptible, why then does not perception and recollection of all objects take place simultaneously. In order to obviate this difficulty he states.

**तदुपरागापेक्षित्वाच्चित्तस्य वस्तुज्ञाताज्ञातम् ॥ १६ ॥**

Aph. 16. An object is known or unknown to the mind inasmuch as the tint of the object is required [to it ]

[2] An external object is known and unknown from the tint of the object—i. e. from bestowing its shape upon the mind. The meaning is that every thing when taking place requires an apparatus [of conditions]. The cognition of blue &c. when taking place requires a tint from the object derived through the channel of the organs of sense as its accessory cause; for a different object could not be perceived because that has no relation [with the knowledge]. Thence the same object which tinged the intellect with its colour—or bestowed its shape upon it, is brought by the cognition into use [as known], and the object that has not given its shape is not used as known.

And recollection takes place in regard to that object alone, which has been previously perceived and regarding which an object by resemblance &c. exciting the self reproductive thought becomes the accessory cause of it (recollection.)

Thus peception of all things does not take place simultaneously. Therefore there is no contradiction.

[3] If, thus the percipient soul also does not perceive yellow at the same time when it perceives blue, then incidentalness—i. e. liability of becoming modified in perceiving the shape [of the object] becomes necessary to the soul inasmuch as it is a percipient.

To remove this doubt he states :—

**सदा ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणामित्वात् ॥१७॥**

Aph 17. The modifications of the mental states are always known, because the presiding spirit is not modified.

These modifications of the thinking principle in the shape of changes and misconceptions are always—at all times-known to the governing principle—the soul conscious of the mental state, because the soul whose essence is consciousness is not modified—does not undergo a modification. For if the soul also be modified then the modifications [or the mental states] being occasional cannot possibly be known at all times.

What is meant is this—what is knowable in the interior to the soul existing always as a ruling principle in the form of consciousness is the clear Pure element, which also is constantly permanent, and by whatever object it is tinged, that object is reflected in the intelligence. And when the shadowing of consciousness takes place it is proved that the soul is always percipient Thus there cannot be doubt that the soul is modifiable.

[1] But it may be objected that if the mind itself from the prevalence of the Pure element is illuminant, and illumination being illuminant of itself and of other objects illuminates itself as well as the objects, then the business [or the process] is accomplished by that alone, what need is there of another percipient? To remove this doubt he states :—

**न तत्स्वभासं दृश्यत्वात् ॥ १८ ॥**

Aph. 18 It is not self-illuminative inasmuch as it is cognisable.

[2] If mind is not self-illuminative—the illuminator of objects, in other words it is perceptible by the soul. If it be asked why : we reply that it is so because it is perceptible,and that which is perceptible is cognisable by the percipient as a jar &c. And the mind [or thinking principle] is perceptible, therefore it is not self-illuminative G. D.

---

[1] यद्येवञ्ज्ञानञ्चेत्प्रकाशत्वाद्ग्रहणस्वभावमर्थश्च प्रकाश्यत्वाद्ग्राह्यस्वभावस्तत्कथं युगपत्सर्वानर्थान्न गृह्णाति न स्मरति चेत्याशङ्क्य परिहारं वक्तुमाह ॥

[2] तस्यार्थस्योपरागादाकारसमर्पणाच्चित्ते बाह्यं वस्तु ज्ञातमज्ञातञ्च भवति । अयमर्थः सर्वःपदार्थश्चात्मलाभे सामग्रीमपेक्षते नीलादिज्ञानञ्चोपजायमानमिन्द्रियप्रणालिका समागतमर्थोपरागं सहकारिकारणत्वेनापेक्षते व्यतिरिक्तस्यार्थस्य सम्बन्धाभावाद्ग्रहीतुमशक्यत्वात् ततश्च येनैवार्थेनास्य ज्ञानस्य स्वरूपोपरागः कृतस्तमेवार्थञ्ज्ञानं व्यवहारयोग्यतां नयति ततश्च सोऽर्थोज्ञात इत्युच्यते येनाकारो न समर्पितः स न ज्ञातत्वेन व्यवह्रियते यस्मिंश्चानुभूतेऽर्थे सादृश्यादिनाऽर्थः संस्कारमुद्बोधयन् सहकारिकारणतां प्रतिपद्यते तस्मिन्नेवार्थे स्मृतिरुपजायत इति न सर्वत्र ज्ञानं नापि स्मृतिरिति न कश्चिद्विरोधः ॥

[3] यद्येवम्प्रमातापि पुरुषो यस्मिन् काले नीलं संवेदयति तस्मिन्नेव काले पीतमतश्चित्तवत्तस्यापि कादाचित्कत्वं ग्रहीतृरूपत्वादाकारग्रहणे परिणामित्वम्प्राप्तमित्याशङ्क्य परिहारं वक्तुमाह ॥

[1] या एताश्चित्तस्य परिणामविपर्य्ययादिरूपा वृत्तयस्तास्तत्प्रभोस्तस्य चित्तस्य ग्रहीतुः पुरुषस्य सदा सर्वकालमेव ज्ञेयास्तस्य चिद्रूपतयाऽपरिणामात् परिणामित्वाभावादित्यर्थः ॥ यदाऽसौ परिणामीस्यात्तदा परिणामस्य कदाचित्कत्वात्तासाञ्चित्तवृतीनां सदा ज्ञातत्वं नोपपद्यते ॥

[2] अयमर्थः पुरुषस्य चिद्रूपस्य सदैवाधिष्ठातृत्वेन व्यवस्थितस्य यदन्तरङ्गं ज्ञेयं निर्म्मलं सत्त्वं तस्यापि सदैवावस्थितत्वाद्येन येनार्थेनोपरक्तम्भवति तथाविधस्य दृश्यस्य सदैव चिच्छायासङ्क्रान्तिसद्भावस्तस्यां सत्यां सिद्धं सदाज्ञातृत्वमिति न कदाचित्परिणामित्वाशङ्का ॥

[3] ननु च चित्तमेव सत्वोत्कर्षाद्यदिप्रकाशकं प्रकाशश्च स्वपरप्रकाशरूपत्वादात्मानमर्थम्प्रकाशयतीति तावतैव व्यवहारसमाप्तिः किङ्ग्रहीत्रन्तरेणेत्याशङ्कामपनेतुमाह ॥

[4] तच्चित्तं स्वभासं दृश्यप्रकाशकन्नभवति पुरुषवेद्यम्भवतीति यावत् कुतो दृश्यत्वाद्यत्किञ्चिद्दृश्यं तद्द्रष्टृवेद्यं यथा घटादि वेद्यञ्च चित्तं तस्मान्न स्वभासम् ॥

# THE VAIŚESHIKA APHORISMS OF KANÁDA

## EIGHTH BOOK, FIRST DAILY LESSON.

*(Continued from page 54.)*

**द्रव्ये द्रव्यगुणकर्मापेक्षम् ॥ ७ ॥**

Aph 7 [Cognition] of substance supposes substance, quality, and action

[1] In the cognition, The white cow with bells is walking, the bell a substance is an attribution white is a quality, is walking is an action. There is, therefore, no determinate idea without a determination [or predicate] apprehended, nor can such exist without connection with a determination. Substances, qualities and actions, are therefore supposed in the idea of a substance U

**गुणकर्मसु गुणकर्माभावाद्गुणकर्मापेक्षं न विद्यते ॥ ८ ॥**

Aph. 8 Inasmuch as there exist no qualities and actions in qualities and actions, there is no [cognition thereof] which supposes qualities and actions

[2] The aphorism is given in reply to the question, Why therefore do not quality and actions suppose quality and action? There is an ellipsis of the word cognition Inasmuch as of quality there is no conception determined by quality, and of action no conception determined by action, there is no conception thereof which supposes qualities and actions For quality does not exist in quality, or action in action, that it should appear therein as a predicate [or determination] U

**समवायिनः श्वैत्याच्छ्वैत्यबुद्धेश्च श्वेते बुद्धिस्ते एते कार्यकारणभूते ॥ ९ ॥**

Aph 9 The cognition of a white object results from the whiteness of the substratum, and from the cognition of whiteness, and those same stand in a relation of cause and effect

[3] From the whiteness or white colour of the substratum, and from the cognition of whiteness or the cognition of an attribute consisting of white colour, there results in relation to a white object, a conch-shell &c, possessed of white colour, a cognition that it is white that is, a sense-given certainty determined by white colour The possession, therefore, of white colour, and the cognition of white colour are the causes of an effect, viz of sense-given certainty the form of which is white colour The relation, then, of coinherence affords no conditions of sense given assurance in the form of white colour, viz possession of white colour, and cognition of white colour There is, therefore, in consequence of the absence from qualities and actions of qualities and actions as determinations, no perceptive assurance in the form of qualities and actions V

**द्रव्येष्वनितरेतरकारणाः ॥ १० ॥**

Aph 10 [Cognitions] of substances are not causes one of the other.

[1] It might be urged that in cases where after the perception, This a water-pot, there arises the perception, This is a piece of cloth, the knowledge of the water-pot is a cause of the knowledge of the piece of cloth, inasmuch as it is antecedent to it, and that consequently there could be no knowledge of the piece of cloth without a knowledge of the water-pot This outlying objection is denied Cognitions—for this word is to be supplied—are not the causes one of the other, that is, the mutual causes, in the case of cognitions of substances not determinant of substances fixed in the relation of prior and posterior among substances Though, therefore, the knowledge of the water-pot be antecedent to the knowledge of the piece of cloth, it is not its cause, inasmuch as it is not its invariable antecedent V.

**कारणायौगपद्यात् कारणक्रमाच्च घटपटादिबुद्धीनां क्रमो न हेतुफलभावात् ॥ ११ ॥**

Aph 11 The sequence of the cognitions of the water-pot, piece of cloth &c, resulting from non-simultaneity of the causes [of the cognitions], and from the sequence of [their] causes, does not result from a relation [between the cognitions] of cause and effect.

[2] The sequence, constituted by priority and posteri-

---

[1] ज्ञानमुत्पद्यते इति प्रकृतं घण्टावान् शुक्लो गौर्गच्छतीति ज्ञानम् तत्र द्रव्यं घण्टा विशेषणम् शुक्ल इति गुणः गच्छतीति कर्म तथाच नागृहीतविशेषणा विशिष्टप्रतीतिर्नवा विशेषणसम्बन्धमन्तरेणेतिभवति द्रव्यज्ञाने द्रव्यगुणकर्मापेक्षेति भावः ॥

[2] तत किं गुणकर्मणोरपि गुणकर्मापेक्षा नेत्याह । ज्ञानमितिशेषः । गुणे गुणविशिष्टबुद्धेः कर्मसु कर्मविशिष्टबुद्धेरभावात् गुणकर्मापेक्षा न तद्गतबुद्धिः नहि गुणेषु गुणो नवा कर्मसु कर्म येन तत्र विशेषणत्वेन भासेतेति भावः ॥

[3] समवायिन इत्यभिधानात् सम्बन्धस्य कारणतामाह । तथाच गुणे गुणसमवायाभावात् कर्मसु कर्मसमवायाभावाच्च न तत्तज्ज्ञाने गुणकर्मापेक्षा विशेषणत्वेन विशेष्यत्वेन त्वस्त्येव एवञ्च श्वेतः शङ्ख इत्यादिप्रतीतौ श्वैत्यसमवायस्य श्वैत्यगुणस्य श्वैत्यविशेषणज्ञानस्य च कारणत्वमित्युक्तं तथाच विशेषणसम्बन्धविशेषणतज्ज्ञानानां विशिष्टप्रत्यक्षप्रमां प्रति कारणत्वमिति तेन पूर्वोक्तं सर्वं सिध्यति ॥

[1] समवायिनः श्वैत्यसमवायिनः श्वैत्यात् शुक्लरूपात् श्वैत्यबुद्धेः शुक्लरूपात्मकविशेषणबुद्धेश्च श्वेते शुक्लरूपवति शङ्खादौ बुद्धिः शुक्लोऽयमिति शुक्लरूपविशेषणिका प्रत्यक्षप्रमितिर्भवति अतस्ते शुक्लरूपवत्त्वशुक्लरूपबुद्धी कार्यस्य शुक्लरूपप्रकारकप्रत्यक्षप्रमात्मकस्य कारणभूते इत्यर्थः तथाच समवायसम्बन्धेन शुक्लरूपप्रकारकप्रत्यक्षप्रमां प्रति शुक्लरूपवत्त्वं शुक्लरूपज्ञानञ्च द्वयमेव तन्त्रमिति गुणकर्मसु गुणकर्मरूपविशेषणविरहान्न तत्प्रकारकप्रत्यक्षप्रमितिरिति भावः ॥

[2] घटपटादिबुद्धीनां क्रमः पौर्वापर्यरूपः न हेतुफलभावात् न कार्यकारणभावात् किन्तु तादृशबुद्धिकारणानां घटपटादिसन्निकर्षादीनां क्रमात् पौर्वापर्यात् चकारोऽनुक्रमयौगपद्यं समुच्चिनोति अयञ्चकारः क्रम-

ority, of the cognitions of the water-pot, piece of cloth &c, does not result from the relation of reason and consequent, or of cause and effect, but from the sequence, that is from the priority and posteriority, of the contacts &c. of the water-pot, piece of cloth &c, which are the causes of such cognitions. The particle and implies the addition of an unmentioned non-simultaneity, and this word is to be construed after the term sequence. The meaning is, therefore, that the non-simultaneity of the cognitions of the water-pot, piece of cloth &c., results from the non-simultaneity of the contacts &c. with them that are the causes of those cognitions. But where there is a simultaneity of contacts &c. of water-pots, pieces of cloth &c., there is produced simultaneously a cognition which is a support or basis of an aggregate, and which has for its objects the things in contact so many as they may be It is, therefore, to be understood that there results from simultaneity of cause simultaneity of effect, and from non-sequence of cause non-sequence of effect Intelligence is primarily divided into experience, and memory. Experience, according to the doctrine of Kaṇáda is of two kinds, being divided into perception and inference Perception is of six kinds, as derived from smelling &c [from the five external, and from the internal sense]; and is twofold as discriminative and non-discriminative; and twofold as divided into physical and hyperphysical Inference is threefold, as produced by illation from only positive conditions, from only negative conditions, and from both positive and negative conditions. For example, This is a proposition inasmuch as it is knowable &c is an illation from only positive conditions; Earth differs from other substances inasmuch as it is possessed of odours, &c is an illation from only negative conditions; The mountain is fiery inasmuch as it smokes, &c is an illation from both positive and negative conditions Memory is uniform, dependent on the reproduction called permanent mental impression, the universal form whereof is dependent on assurance not characterised by inattention In another point of view also intelligence is twofold, science, and nescience Science is a cognition in a certain form of that which has that form Nescience is a cognition in a certain form of that in which there is non-existence of that form Intelligence is also twofold, accordingly as it is divided into certainty and uncertainty Uncertainty is a cognition whereof the form is [mutually] repugnant existence and non-existence in one and the same subject of attributes, certainty in regard to a thing is cognition in the form thereof, and not in the form of the non-existence thereof. According to this doctrine in the case of cognition of similarity, and in that of knowledge of terms, an inference takes place by the production of a judgment respecting a mark [or middle term], subsequently thereto. Evidence is of two kinds, perception and inference, and accordingly science is exact experience, as will be explained by the author of the aphorisms himself in the sequel V

## SECOND DAILY LESSON.

**अयमेष त्वयाकृतं भोजयैनमिति बुद्ध्यपेक्षम् ॥ १ ॥**

Aph. 1 This, That, Done by thee, Feed him,—such expressions are relative to cognition

[1] It is stated that certain cognitions are determinant of other cognitions The cognition This is a water-pot, This is a piece of cloth, is relative to cognition, that is determinant of a cognition. This and that being capable of being made objects of perception, cognition in the form of perception, is a determination of such a cognition. The word Thou being capable of being made the object of the speaker's intention, inasmuch as it is the subtratum of a self-manifested knowledge, the cognition produced by the expression Done by thee, is determinant of a cognition. In the behest Feed him, also the cognition produced by the word him, which has the sense of this one, is determinant of a cognition which is a perception. V.

**दृष्टेषु भावाददृष्टेष्वभावात् ॥ २ ॥**

Aph. 2. Inasmuch as [such expressions] exist in reference to objects seen, and do not exist in reference to objects unseen.

---

इत्यनन्तरं योजनीय· एवञ्च घटपटादिबुद्धीनामयौगपद्यं तत्कारणानां सन्निकर्षादीनामयौगपद्यादित्यर्थः यत्र तु घटपटसन्निकर्षादीनामस्ति यौगपद्यम् तत्र युगपदेव सन्निकृष्टयावत्पदार्थविषयिणी समूहालम्बनात्मिका बुद्धिरुत्पद्यते इति कारणयौगपद्यात् कार्ययौगपद्यं कारणाक्रमात् कार्याक्रमश्चेत्यपि बोद्धव्यम् । बुद्धिः प्रथमतो द्विविधा अनुभूतिः स्मृतिश्च अनुभूतिरपि कणादमते द्विविधा प्रत्यक्षानुमितिभेदात् प्रत्यक्षमपि घ्राणजादिभेदेन षड्विधं सविकल्पकनिर्विकल्पकभेदेन च द्विविधं लौकिकालौकिकभेदेन द्विविधञ्च अनुमितिरपि केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिरूपत्रिविधानुमानजन्यत्वात् त्रिविधा तत्रेदं वाच्यं ज्ञेयत्वादित्यादिकं केवलान्वय्यनुमानम् पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वादित्यादिकं केवलव्यतिरेक्यनुमानम् अन्वयव्यतिरेक्यनुमानन्तु पर्वतो वह्निमान् धूमादित्यादिकमिति । स्मृतिश्चोपेक्षानात्मकनिश्चयाधीनसमानाकारकभावनाख्यसंस्काराधीना एकविधैव प्रकारान्तरेणापि बुद्धिर्द्विविधा प्रमाऽप्रमा चेति तद्वति तत्प्रकारिका बुद्धिः प्रमा तदभाववति तत्प्रकारिका बुद्धिस्तदप्रमा संशयनिश्चयभेदेनापि बुद्धिर्द्विधा तत्रैकधर्मिणि विरुद्धभावाभावप्रकारकज्ञानं संशयः तदभावाप्रकारकं तत्प्रकारकं ज्ञानं तन्निश्चयः एतन्मते सादृश्यज्ञानस्थले पदज्ञानस्थले च तदुत्तरं लिङ्गपरामर्शोत्पत्त्यैवानुमितिर्भवति प्रमाणं द्विविधं प्रत्यक्षमनुमानञ्चेति यथार्थानुभवश्च प्रमा एतच्चाग्रे सूत्रकृदेव वक्ष्यतीति संक्षेपः ॥

[1] बुद्धिविशेषणिका अपि काश्चिद्बुद्धयो भवन्तीत्याह । अयमेष इति अयं घट एष पट इतिज्ञानं बुद्ध्यपेक्षं बुद्धिविशेषणकम् इदमेतदोः प्रत्यक्षविषये शक्तत्वात् प्रत्यक्षरूपा बुद्धिस्तादृशज्ञाने विशेषणम् युष्मच्छब्दस्य स्वजन्यबोधाश्रयतया वक्तुरभिप्रायविषये शक्तत्वात् त्वयाकृतमितिवाक्यजन्यं ज्ञानं बुद्धिविशेषणकं भोजयैनमिति इदमर्थकैनशब्दजन्यज्ञानमपि प्रत्यक्षात्मकबुद्धिविशेषणकम् ॥

[1] It is shown that this is inductively proved by concomitance and exclusion. When there exists the contiguous object of the cognition This, and the remote object of the cognition That, when there exists the contiguous agent the object of the cognition By thee, and the object of the action, the object of the notion, Done, and when there exists the giver and the receiver of the order, the objects of the notion, Feed, in contiguity, then a cognition of this kind [i e one determined by another cognition] is produced. But in the case of unseen objects these cognitions are not manifested This therefore may be inferred by the methods of agreement and disagreement. U.

[2] That these terms are applicable to an object differentiated by a mode constituted by cognition, may be inferred by the methods of agreement and disagreement These [expressions] have applicability to an object differentiated by modes constituted by cognition, inasmuch as the use of the words This &c, exists in relation to objects seen, or known, that is essentially by modes consisting of cognition, and inasmuch as such use does not exist in relation to objects unseen, or unknown, that is not essentially determined by modes consisting of cognition. V

अर्थ इति द्रव्यगुणकर्मसु ॥ ३ ॥

Aph 3 The term object applies to substances, qualities and actions

द्रव्येषु पञ्चात्मकत्वं प्रतिषिद्धम् ॥ ४ ॥

Aph. 4 Under substances identity with the five elements was denied

[3] This aphorism is stated as the basis of a treatment of the sense-organs, their nature, and the nature of the objects which they apprehend. Under substances, that is, in the aphorisms describing substances, identity with the five elements, possession of the matter of the five elements, was denied or refuted No substance, then, whether the body or any other, has the nature of the five elements, but all bodies and organs of sense have the nature of some one or other single element V

[1] अन्वयव्यतिरेकपरिच्छेद्यमेवैतदित्याह । यदा,यमितिबुद्धेः सन्निकृष्टोविषयः एष इतिबुद्धेर्विप्रकृष्टोऽपि बुद्ध्यारूढोविषयः त्वयेतिबुद्धेः सन्निकृष्टः कर्ता विषयः कृतमितिबुद्धेः कर्म विषयः भोजयेतिबुद्धेर्नियोज्यनियोक्तारौ विषयौ एनमितिबुद्धेस्तदुभयव्यापारो विषयः सन्निकृष्टो भवति तदैतादृशी बुद्धिरुत्पद्यते अदृष्टेषु तु विषयेषु नैता बुद्धयः प्रादुर्भवन्तीत्यन्वयव्यतिरेकगम्यमेवैतदित्यर्थः ॥

[2] एतेषां पदानां ज्ञानघटितधर्मावच्छिन्ने शक्तिरन्वयव्यतिरेकगम्येत्याह। दृष्टेषु ज्ञातेषु ज्ञानघटितधर्मावच्छिन्नेष्वितियावत् भाजात् इदमादिशब्दप्रयोगस्य सत्त्वात् अदृष्टेषु अज्ञातेषु ज्ञानघटितधर्मानपरिच्छन्नेष्वितियावत् अभावात् तादृशप्रयोगस्यासत्त्वात् बुद्धिघटितधर्मावच्छिन्न एव तेषां शक्तिरित्यर्थः ॥

[3] किमिन्द्रियं किम्प्रकृतिकं किमर्थग्राहकमित्यभिधातु पाठं रचयति । द्रव्येषु द्रव्यनिरूपणसूत्रेषु पञ्चात्मकत्वं पञ्चभूतप्रकृतिकत्वं प्रतिषिद्धं निराकृतं तथाच शरीरादिकं किञ्चिदपि द्रव्यं न पञ्चभूतप्रकृतिकं किन्त्वेकैकभूतप्रकृतिकान्येव सर्वाणि शरीराणीन्द्रियाणि चेतिभावः ॥

भूयस्त्वाद्गन्धवत्त्वाच्च पृथिवी गन्धज्ञाने प्रकृतिः ॥ ५ ॥

Aph 5. In the cognition of odour earth is the matter inasmuch as it possesses plurality and odorousness

[1] Accordingly it is stated that the organ of smell apprehends only smell among the qualities, and has the nature of earth only The cognition of odour means that from which the cognition, or sensation, of smell is derived, that is the organ of smell Earth the subtile element is the nature or material cause, inasmuch as it has plurality, or is originated by particles not overpowered by water &c, and possesses odour The olfactory organ is not originated by water &c, inasmuch as it does not apprehend taste &c Possession of odour exists therein inasmuch as, in its relation as percipient it apprehends odours. In like manner the organ of smell is terrestrial inasmuch as it reveals odour only among colour and the other qualities, just as clarified butter, &c manifests the odour of saffron By this inference it is established that earth is the material cause of the organ of smell V

तथापस्तेजोवायुश्च रसरूपस्पर्शविशेषात् ॥ ६ ॥

Aph 6 In like manner water, light, and air, are [the material causes of the organs of taste, sight and touch] inasmuch as they have no difference from taste, colour, and touch

[2] The words Are the material causes of the organs of taste, sight, and touch are to be supplied Water &c are respectively the material causes of the organs of taste &c, inasmuch as they respectively apprehend those determinate objects In these plurality is the condition of the determination It has been declared that it is determination by possession of the particular qualities of apprehensible kind, that is the proof of the possession of taste &c by the organs of taste &c In like manner the organ of hearing is a place in ether essentially determined by the outer ear influenced by particular destiny U

NINTH BOOK, FIRST DAILY LESSON

क्रियागुणव्यपदेशाभावात् प्रागसत् ॥ १ ॥

Aph 1 [An effect] is antecedently non-existent, inasmuch as there is non-existence of assertion of actions and qualities

[1] एवं घ्राणेन्द्रियं गुणेषु गन्धमात्रग्राहकं पृथिविमात्रप्रकृतिकश्चेत्याह। गन्धस्य ज्ञानं प्रत्यक्षं यस्मात् तद्गन्धज्ञानं घ्राणेन्द्रियं तत्र पृथिवी तन्मात्रं प्रकृतिः समवायिकारणम् भूयस्त्वात् जलाद्यनभिभूतभागारब्धत्वात् गन्धवत्त्वाच्च रसाद्यग्राहकत्वात् घ्राणेन्द्रियं न जलाद्यारब्धम् गन्धवत्त्वञ्चात्र ग्राहकतासम्बन्धेन गन्धग्राहकत्वादिति फलितार्थः तथाच घ्राणेन्द्रियं पार्थिवं रूपादिषु मध्ये गन्धस्यैव व्यञ्जकत्वात् कुङ्कुमगन्धाभिव्यञ्जकताद्विवदित्यनुमानेन घ्राणस्य पृथिव्युपादानकत्वं सिध्यतीति भावः ॥

[2] रसनचक्षुस्त्वगिन्द्रियाणां प्रकृतिरितिशेषः तेन यथासंख्यं रसनादानामबादयः प्रकृतयः तत्तत्प्रतिनियतार्थग्राहकत्वात् अत्रापि नियमे भूयस्त्वमेव तन्त्रम् रसादिमत्त्वे च रसनादीनां ग्राह्यजातीयविशेषगुणवत्त्वनियम एव प्रमाणमित्युक्तम् एवञ्च विशिष्टादृष्टोपगृहीतकर्णशष्कुल्यवच्छिन्नोनभोदेश एव श्रोत्रम् ॥

' The words an effect are to be supplied. Antecedently, that is before the production of an effect, an effect [or product,] such as a water-pot or piece of cloth, is non-existent, that is non-existent by self-determined negation during that time The reason assigned is the absence of predication of actions and qualities If the effect, the water-pot &c, were existent during that time, it would be affirmed to possess actions and qualities ; as in the case of a water-pot already produced, such affirmations are made as that the water-pot is at rest, or in motion, or seen to be coloured There is no such assertion antecedent to its production. It is therefore inferred that it is during that time non-existent While straws are in course of weaving, or threads of joining, or when clay is placed on the potter's wheel, while the work of the potter &c is yet going on, there is a universally experienced sensitive cognition that there will be in that place a mat, or a piece of cloth, or a water-jar, inasmuch as it is producing during the tension of the eyes Herein a cognition constituted either by conjunction, or by comherence, could not be efficient, the presentation is therefore a possession of determinations related to the sense-organs. Such is the condition [of such a cognitive act] If it be objected that we are arguing in a circle inasmuch as the cognition thereof depends on the determination, and the determination on the cognition, we reply that such is not the case, for the determination is the proper form of both [the cognition and its object,] and is capable of producing a proximate assurance, and this [proper form] has an existence antecedent to the cognition It has accordingly been stated in the Nyáya-várttika that in comherence, and in non-existence, there is relation of cause and effect This antecedent non-existence produces a non-existent, for when a water-pot has been produced, that self-same water-pot is not then brought into existence, for even if there exist therein another cause an ensuing defect of the cause much follow the defect of its own anterior non-existence If this self-same water-pot is what prevents the production of that water-pot then its causality is inevitable by reason of the non-existence of that which prevents It may be urged that if there be in the water-pot non-existence of the same, then it follows that it will emerge when the water-pot is destroyed This we deny, inasmuch as the very destruction of the water-pot is repugnant thereto For one of two contradictories cannot be manifested during the existence of the other contradictory For between these two there is no repugnance effected by space [i e no exclusion] that as in the case of the real natures of the cow and the horse, there could be a simultaneity How then could there be a repugnance effected by time and how could there be a synchronous existence? U

' कार्यमितिशेषः प्रागिति कार्योत्पत्तेः प्राक् कार्यं घटपटादि असत् तत्कालीनस्वजनकाभावप्रतियोगीत्यर्थः अत्र हेतु क्रियागुणव्यपदेशाभावात् यदि तदानीमपि कार्यं घटादि सदेव स्यात् तदा क्रियावत्त्वेन गुणवत्त्वेन च व्यपदिश्येत यथोत्पन्ने घटे घटस्तिष्ठति घटश्चलति रूपवानयं दृश्यते घट इत्यादि प्रकारेण व्यपदिश्यते न तथोत्पत्तेः प्रागपि व्यपदेशोऽस्ति तेन गम्यते तदानीमसदिति सच्च व्यूह्यमानेषु वीरणेषु योज्यमानेषु तन्तुषु चक्रारूढायां मृदि कुलालादिव्यापारेषु अनुवर्तमानेषु भविष्यत्यत्र कटः पटो घटो वेति सार्वलौकिकी प्रत्यक्षप्रतीतिः चक्षुर्विस्फारणानन्तरं जायमानत्वात् नच संयोगसमवायान्यतरघटिता प्रत्यासत्तिरत्र प्रभवति तस्मादिन्द्रियसम्बद्धविशेषणता प्रत्यासत्तिरत्र तन्त्रम् ननु चान्योन्याश्रयः सत्यां विशेषणतायां तत्प्रतीतिः प्रतीतौ च विशेषणतेति चेन्न विशेषणता हि तदुभयस्वरूपमेव उपश्लिष्टप्रत्ययजननयोग्य तच्च प्रतीतेः पूर्वमपि सदेव तदुक्तं न्यायवार्त्तिके समवायेऽभावे च विशेषणविशेष्यभावः इति सत्तायं प्रागभावः प्रतियोगिजनकः नहि घटे जाते स एव घटस्तदानीमेवोत्पद्यते तत्र कारणान्तरसत्त्वेऽपि कारणवैकल्यमनुस्रियमाणं स्वप्रागभाववैकल्यमेवानुसर्तुमर्हति तद्घटोत्पत्तौ स एव घटः प्रतिबन्धक इति चेत्तर्हि प्रतिबन्धकाभावत्वेन तस्य कारणत्वमवर्जनीयम् ननु यदि घट एव तस्याभावस्तदा घटे नष्टे तदुन्मज्जनापत्तिरिति चेन्न घटनाशस्यापि तद्विरोधित्वात् नहि विरोधिसत्त्वकालेऽपि विरोध्यन्तरप्रादुर्भाव इति नह्यनयोर्देशकृतो विरोधो येन गोत्वाश्वत्ववत् समानकालीनत्वं स्यात् तर्हि कालकृतस्तयोश्च कथमेककालावस्थायित्वम्भवेत् ॥

' This aphorism is stated as a basis for a description of perception of non-existence An effect, as a water-pot and the like is non-existent previous to its production inasmuch as there is non-existence of assertion or expression of action and quality There is antecedently no such expression of qualities and action as there is after the pot is produced, as that the jar is at rest, or in motion, or that it is dark Thus the doctrine of the pre-existence of effects in their causes is rejected Previous, therefore, to the production of the water-jar, there is antecedent non-existence thereof, and this produces a non-existent Else how, when there exists another cause could there not be reproduction of the produced? A perception such as that there will presently exist a water-pot in this place, is a proof of antecedent non-existence. V. A E G

' अभावप्रत्यक्षमभिधित्सुर्भूमिकामाह । घटादिकार्यं स्वोत्पत्तेः प्रागसत् क्रियाया गुणस्य च व्यपदेशस्य व्यवहारस्याभावात् घटे जाते यथा घटस्तिष्ठति घटश्चलति घटः श्यामइत्यादि क्रियागुणव्यवहारो भवति पूर्वन्तु न तथा व्यवहार इत्यर्थः अतः सत्कार्यवादे निरस्त इति घटोत्पत्तेः पूर्वं घटप्रागभावस्तिष्ठतीति सच प्रतियोगिजनकः कथमन्यथा कारणान्तरसत्त्वे उत्पन्नस्य न पुनरुत्पादः इहेदानीं घटो भविष्यतीत्यादि प्रत्यक्षमपि प्रागभावे मानमिति ॥



PRINTED AND PUBLISHED BY THE PROPRIETORS, E. J. LAZARUS AND CO., AT THE MEDICAL HALL PRESS, BENARES.

# काशीविद्यासुधानिधिः

श्रीगणेशाय नमः

श्रीमद्विजयिनीदेवीपाठशालोदयोदितः । प्राच्यप्रतीच्यवाक्पूर्वापरपक्षद्वयान्वितः ॥ १ ॥
अङ्करश्मिः स्फुटयतु काशीविद्यासुधानिधिः । प्राचीनार्यजनप्रज्ञाविलासकुमुदोत्करान् ॥ २ ॥

A Monthly Journal, of the Benares College, devoted to Sanskrit Literature.

No. 64. Benares, September 1st, 1871. Vol. VI.

## ॥ भाट्टचिन्तामणेस्तर्कपादः ॥

अपादानत्वं पञ्चम्यर्थः । "अपादाने पञ्चमी"ति सूत्रात् । अपादानत्वं च परसमवेतक्रियाजन्यविभागाश्रयत्वं, विभागहेतुक्रियानाश्रयत्वे सति विभागाश्रयत्वमिति तदर्थः । "ध्रुवमपायेऽपादान"मिति सूत्रात् । अपायो विश्लेषः विभागवियोगादिशब्दवाच्यः । अन्यस्य विभागवियोगादिक्रियाश्रयस्य विभागादौ सति विभागवियोगाश्रयत्वेन ध्रुवं स्थिरं विभागवियोगादिनिरूपकमिति यावत्, तदपादानमिति सूत्रार्थः । यथा वृक्षात्पर्णं पतति, अधःसंयोगानुकूलक्रिया पतेरर्थः । अधःसंयोगप्रयोजकविभागानुकूलक्रिया वा । एवं चाधःसंयोगानुकूलक्रियानाश्रयत्वे सति तादृशक्रियाजन्यविभागाश्रयत्वाद् वृक्षस्यापादानत्वम् । इत्थ च तत्तद्धात्वर्थतावच्छेदकफलजनकक्रियानाश्रयत्वे सति तादृशक्रियाजन्यफलनिरूपकत्वं तादृशक्रियानिरूपकत्वं चेति निष्कर्षः । एवं चौराद्व्याघ्राद्बिभेति, चौरात्त्रायते, अध्ययनात्पराजयते, यवेभ्यो गां वारयति, मातुर्निलीयते, उपाध्यायादधीते, ब्रह्मणः प्रजाः प्रजायन्ते, हिमवतो गङ्गा प्रभवति, इत्यादौ भयादिहेतुचौरव्याघ्रादीनां "भीत्रार्थानां भयहेतुः" । "पराजेरसोढः" । "वारणार्थानामीप्सितः" । "अन्तर्धौ येनादर्शनमिच्छति" । "आख्यातोपयोगे" । "जनिकर्तुः प्रकृतिः" । "भुवः प्रभवः" । इत्याद्यनुशासनिकं मुख्यमेवापादानत्वम् । अत्र चापह्नवानुकूलक्रिया बिभेतेरर्थः । तदनुकूलरक्षणं त्रायतेः । ग्लानिजनकक्रिया पराजयतेः । दूरदेशसंयोगानुकूलक्रिया वारयतेः । दर्शनाभावानुकूलक्रिया निलीयतेः । गुरुमुखोच्चारणानुकूलक्रिया ऽधीतेः । उत्पत्त्यनुकूलक्रिया जायतेः । प्रकाशजनकवृद्ध्यादिक्रिया प्रपूर्वकभवतेरर्थः । तदनाश्रयत्वे सति तत्तत्क्रियानिरूपकत्वाद् भीत्रार्थाना भयहेतुरित्याद्यनुशासनानामपादानत्वबोधकता, न तु पञ्चम्या उपपदविभक्तित्वबोधकतेति वैयाकरणाः ॥

मीमांसकाश्चारण्यादेर्निरूपकत्वाभावान्नापादानत्वम् । अत एव अरण्याद्बिभेति इति न प्रयोगः । यदि वनाद्बिभेतीति प्रयोगः तदा वनपदस्य वनस्थितव्याघ्रादौ लक्षणा । मध्याद्व्रजतीत्यादौ विभागप्रयोजकक्रियानाश्रयस्य तन्निरूपकस्याधोभागस्यापादानत्वम् ॥

नैयायिकास्तु विभागाश्रयत्वमेवापादानत्वमिच्छन्तो व्याघ्राद्बिभेतीत्यादौ लक्षणया प्रयोगं क्रियान्तरकल्पनेन वा उपपदविभक्तित्वमिच्छन्ति । एवं धावतो ऽश्वात्पतति इत्यत्राश्वस्योक्तक्रियाश्रयत्वेपि तस्य विभागहेतुत्वाभावादपादानत्वोपपत्तिः । न चैवं मेषान्मेषो ऽपसरति इत्यत्र मेषस्य कथमपादानत्वम, उभयकर्मजविभागस्यैक्येन तज्जनकक्रियानाश्रयत्वाभावादिति वाच्यम् । विभागजनकक्रियाभेदादेकक्रियामादायापादानत्वम् । अन्योन्यस्मादपसरत इत्यत्रोभयकर्मजविभागस्यैक्येपि तत्तज्जनकक्रियामादाय परस्परस्य तदनाश्रयत्वोपपादनात् । वृक्षाद्दुस्त्वं पततीत्यत्र पतनक्रियाधात्वर्थमादाय संगमनीयम् । न चैवं वृक्षात्स्पन्दत इत्यापत्तिः । गृहाच्चलितो राज्याच्चलित इत्यादिवदिष्टत्वात् ॥ के चित्तु पञ्चमीजन्यापादानत्वबोधेन द्वितीयाया असाधुत्वादित्याहुः ॥ बलाहकाद्विद्युद्विद्योतते इत्यत्र निःसृत्येत्यध्याहारेणोपपदविभक्तिः । एवमन्यादिपदसमभिव्याहारे ऽपि पञ्चम्युपपदविभक्तिः । "अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते" इति सूत्रात् । अ-

स्यपदेन अन्यार्थकेनरादिपदग्रहणम्। कृष्णादन्यस्तिष्ठति, आराद्वनात्, कृष्णादितरः, ऋते कृष्णात्। कालदेशसमभिव्याहारे ग्रामात्पूर्वश्चैत्रात्पूर्वः। अञ्चूत्तरपदं प्राक्प्रत्यगादिपदं तत्समभिव्याहारे ग्रामात्प्राक्। आच्प्रत्ययान्तदक्षिणासमभिव्याहारे दक्षिणा ग्रामात्। दूरवाचकाहिपदसमभिव्याहारे दक्षिणाहि ग्रामात्। अत्र पञ्चम्यर्थस्य उपपदार्थान्वयः। इदं च प्रभृत्यादिपदानामुपलक्षणम्। भवात्प्रभृति आरभ्य। ग्रामाद्बहिः। एवं विनापृथगित्यादिपदसमभिव्याहारे द्वितीयातृतीयाभ्यां विकल्पिता पञ्चम्युपपदविभक्तिः। एवं दूरान्तिकार्थकपदसमभिव्याहारे द्वितीयाषष्ठीभ्यां विकल्पिता पञ्चम्युपपदविभक्तिः। ग्रामस्य ग्रामाद् ग्रामं दूरेणान्तिकेनेति॥

इति कारकवादे पञ्चम्यर्थनिरूपणम्॥

सप्तम्या अधिकरणत्वमर्थः। "सप्तम्यधिकरणे चे"ति सूत्रात्। अधिकरणत्वं चाधारत्वम्, "आधारोऽधिकरण"मिति सूत्रात्। तच्चाश्रयत्वं, तच्च साक्षात्परंपरासाधारणम्। परंपरा कर्तृकर्माद्याश्रयद्वारा। तेन स्थाल्यां पचति भूमौ वसति कटे शेते इत्यादिप्रयोगः। अधिकरणं च त्रिविधम्, औपश्लेषिकं वैषयिकमभिव्यापकं चेति, तेन गुरौ वसति घटे ज्ञानं तिलेषु तैलमित्यादिप्रयोगः। चर्मणि द्वीपिनं हन्ति इत्यत्र निमित्तत्वे लक्षणा। चर्मनिमित्तं हन्तीत्यर्थः। निमित्तत्वं च धात्वर्थजनकेच्छादिविषयत्वम्। गोषु दुह्यमानास्वागत इति सति सप्तमी। "यस्य च भावेन भावलक्षण"मिति सूत्रात्। क्रियान्तरोपलक्षणं यत्रान्या क्रिया तद्वाचकपदोत्तरं सप्तमीति तदर्थः। तेन क्रियान्तरोपलक्षणत्वं सप्तम्यर्थः। उपलक्षणत्वं च क्रियाकालान्तरव्यावर्त्तकत्वम्। एवं मुख्यक्रियाप्रतिबन्धकक्रियानादरे लक्षणा। यथा रुदति प्राव्राजीदिति। रोदनमनादृत्येत्यर्थः। अत्र षष्ठ्या अपि लक्षणा। "षष्ठी चानादरे" इति सूत्रात्। एवं गोषु गवां वा स्वामी, ईश्वरः, अधिपतिः। वैश्वामित्राणां विश्वामित्रेषु वा दायादो देवरात इत्यादिषु च। साक्षी चैत्रस्य धने वा प्रतिभूः गवां गोषु वा प्रसूत इत्यादौ षष्ठीसप्तम्योरुपपदविभक्तित्वं, श्रूयमाणस्वामित्वादिक्रियाऽसंबन्धेन मुख्यक्रियासंबन्धित्वात्। गोषु प्रसूत इत्यत्र कल्पितज्ञानक्रियायामन्वयाच्च। गोज्ञानार्थं प्रसूत इत्यर्थः। एवं हरिपूजने आयुक्तः आसक्तः कुशल इत्यत्रापि। एवं निर्धारणमपि षष्ठीसप्तम्यर्थः। जातिगुणक्रियाणामेभिरभिव्यज्यमानभेदनिरूपकत्वं निर्द्धारणत्वम्। अत्र भेदाधिकरणभेदनिरूपकयोर्व्याप्यव्यापकरूपावच्छिन्नत्वं बोध्यम्। तेन नराणां नरेषु वा क्षत्रियः शूरः, गोषु कृष्णा संपन्नक्षीरा, गच्छत्सु धावन् शीघ्रः, छात्रेषु मैत्रः प्रिय, इति प्रयोगो न तु विप्रेषु क्षत्रियः शूर इत्यादिप्रयोगः। नरत्वावच्छिन्ननिरूपितभेदानधिकरणत्वे सति क्षत्रियत्वावच्छिन्ननिष्ठमन्यनरभेदसमानाधिकरणं शूरत्वमिति बोधः। न चैवम्

इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम्।
अयं तु परमो धर्मो यद्योगेनात्मदर्शनम्॥

इत्यत्र

"मणिमुक्ताप्रवालानां सर्वस्यैव पिता प्रभुः।
स्थावरस्य तु सर्वस्य न पिता न पितामहः"॥

इत्यत्र च निर्धारणषष्ठी न स्यादभेदभानादिति वाच्यम्। कर्मभेदस्य आत्मदर्शने निर्धारणसंभवाद्, द्वितीये तु सर्वस्येति षष्ठ्या निर्धारणत्वसंभवात्। अत एव माथुराः पाटलिपुत्रकेभ्य आढ्यतरा इत्यत्र निर्धारणैकदेशे पञ्चम्या लक्षणा। अभेदभानाभावात्। एवं मातरि साधुर्निपुणो वेत्यत्रापि। हरिं हरौ वा उत्सुकः प्रसितः। मूलेनावाहयेदित्यत्रापि लक्षणेति दिक्॥ अत्र चोपपदविभक्तितः कारकविभक्तेर्बलीयस्त्वम्। कारकविभक्त्यर्थस्य श्रुतक्रियान्वयित्वात्। उपपदविभक्त्यर्थस्य कल्पितक्रियान्वयित्वादिति दिक्॥

॥ इति गागाभट्टकृते भाट्टचिन्तामणौ कारकवादः॥

समासश्चतुर्विधः। अव्ययीभावतत्पुरुषद्वन्द्वबहुव्रीहिभेदात्। तत्र पूर्वपदार्थप्रधानोऽव्ययीभावः। यद्वा अव्ययार्थप्रधानोऽव्ययीभावः तेन सूपप्रतीत्याद्यव्ययीभावे नाव्याप्तिः। उत्तरपदार्थप्रधानस्तत्पुरुषः। उभयपदार्थप्रधानो द्वन्द्वः। अन्यपदार्थप्रधानो बहुव्रीहिः। इति लक्षणानि। उपकुम्भं, राजपुरुषः, धवखदिरौ, चित्रगु,रित्याद्युदाहरणानि। नीलोत्पलमिति कर्मधारयः पञ्चपूलीति द्विगुश्च तत्पुरुषस्यैव भेदौ। ननून्मत्तगङ्गमित्यव्ययीभावे तल्लक्षणमव्याप्तमतिव्याप्तं च बहुव्रीहिलक्षणम्। एवं सूपप्रतीत्यादावव्ययीभावे सुप्प्रतिना मात्रार्थे इति सूत्रविहिते तत्पुरुषलक्षणातिव्याप्तिरुत्तरपदार्थप्राधान्यात्। एवमर्द्धं नपुसकम् इत्यादिसूत्रविहिते ऽर्धपिप्पली पूर्वकाय इत्यादि तत्पुरुषे ऽव्ययीभावलक्षणातिव्याप्तिः। एवं द्वित्रा इति बहुव्रीहौ तल्लक्षणाव्याप्तिः द्वन्द्वलक्षणातिव्याप्तिश्च। एवं शशकुशपलाशमिति समाहारद्वन्द्वे समाहारप्राधान्याद् द्वन्द्वलक्षणस्याव्याप्तिः बहुव्रीहिलक्षणस्य चातिव्याप्तिरिति चेन्न। तेषां प्रायिकत्वेन लक्षणत्वाभावात्। तत्तदधिकारपठितत्वमेव तत्तल्लक्षणमिति वैयाकरणाः॥

वस्तुतोऽव्ययार्थप्रधानत्वाविद्यमानावयवार्थत्वविशिष्टान्यपदार्थप्रधानत्वान्यतरत्वमव्ययीभावत्वं, तेनोन्मत्तगङ्गं सूपप्रतीत्याद्यव्ययीभावे नाव्याप्तिर्न वा तत्पुरुषलक्षणातिप्रसङ्गः। समस्यमानान्यतरपदार्थप्रधानत्वे सति सुब्लोपाभाववत्पदा-

न्तत्वं तत्पुरुषत्वं, तेन राजपुरुषो ऽर्द्धपिप्पलीत्यादितत्पुरुषे न लक्षणाव्याप्तिर्न वा ऽव्ययीभावलक्षणातिप्रसङ्गः । एवमन्यपदार्थप्रधानत्वं बहुव्रीहित्वम् । द्वित्रा इत्यत्रापि समस्यमानपदार्थसंख्याप्राधान्येन द्वन्द्वत्वे ऽप्यन्यपदार्थसंख्येयप्राधान्येन बहुव्रीहित्वमन्यपदार्थतावच्छेदकं चात्राल्पत्वम् । एवं च संख्ययाव्ययेति सूत्रं संख्येयप्राधान्यगमकसंख्यावाचकाव्ययादिपदानां बहुव्रीहिविधायकमिति संगच्छते । एवं दिङ्नामान्यन्तरालइत्यादिसूत्राण्यन्यपदार्थप्राधान्येन बहुव्रीहिविधायकानि भवन्ति । यथा उत्तरपूर्वा केशाकेशि भुजाभुजि सपुत्र इति । अत्रांशे तुल्यसंबन्धित्वमन्यपदार्थतावच्छेदकम् । अत एव

एकद्वैरथ वा द्वित्रैर्भ्रमरा मधुसीकरैः ।
कुक्षिंभराः परं तेपि न सन्ति खलु केतके ॥

इत्यादावल्पत्वपरिच्छिन्नव्यक्तीनां बोधः । एवमुपदशा इत्यत्राल्पपदार्थैकादशव्यक्तीना बोधः । अतो ऽत्राप्यन्यपदार्थप्राधान्यमव्याहतम् । एवं तेन सहेति तुल्ययोगे इतिसूत्रविहिते सपुत्र इति बहुव्रीहौ तुल्यक्रियान्वयी पिता ऽन्यपदार्थ इति बहुव्रीहित्वं सुस्थम् । समाहारद्वन्द्वे तु समाह्रियमाणानामेव क्रियान्वयित्वेन समाहारस्याप्राधान्याच्च द्वन्द्वलक्षणाव्याप्तिर्बहुव्रीहिलक्षणातिव्याप्तिश्चेति युक्तम् ॥

अन्ये तु उन्मत्तगङ्गमित्यादीनां बहुव्रीहित्वं द्वित्रा इत्यादौ द्वन्द्वत्वादिकमेव । अव्ययीभावबहुव्रीह्यधिकारपाठस्तु तद्धर्मनपुंसकत्वस्वरादिप्राप्त्यर्थः । अन्यथाधिकारसूत्रविरोधापत्तेः । न च तथापि प्रकरणविरोधापत्तिः । अधिकारसूत्रश्रुत्यनुरोधेन प्रकरणबाधस्य न्याय्यत्वात् । अन्यपदार्थे च संज्ञायामित्यव्ययीभावस्य समभिव्याहारविशेषे ऽन्वर्थताबाधवत् तेन प्रकरणबाधाच्च । अत उक्तान्येव लक्षणानीत्याहुः ॥

अत्र वैयाकरणाः । राजपुरुष इत्यादितत्पुरुषादीनां राजविशिष्टपुरुषादौ शक्तिः । न तु समासान्तर्गतराजादिपदशक्त्या राजादिबोधः । "समर्थः पदविधि" रिति महाधिकारेणैकार्थीभावलक्षणे सामर्थ्ये समासादिसकलवृत्तिविधानात् । पदोद्देशेन विधीयमानः समासादिः समर्थः विग्रहवाक्यार्थाभिधाने शक्तिं प्राप्त इति सूत्रार्थः । एकार्थीभावश्च समस्यमानपदद्वयस्य स्वार्थपरित्यागेनैकार्थप्रतिपादकत्वम् । स चार्थो ऽराजकीयभिन्नो राजसंबन्धवांश्चायमिति भेदरूपः संसर्गरूपश्च । न च क्लृप्तराजादिपदशक्तित एव तादृशोपस्थितिसंभवे किं समासशक्तिकल्पनेनेति वाच्यम् । राजपुरुषादिपदे उक्तरूपेणोपस्थितये चित्रग्वादिपदे स्वामित्वोपस्थितये च तत्कल्पनात् । अन्यथा पङ्कजादिपदेपि पद्मत्वेनोपस्थितये ऽतिरिक्तशक्तिकल्पनं न स्यात् । किं च समासगतराजपदेन राज्ञः स्वतन्त्रोपस्थिते राजा पुरुष इत्यत्रेव विशेषणान्वयापत्तिः । न च सविशेषणानां वृत्तिर्न वृत्तस्य च विशेषणयोगो नेति निषेधेन तदनापत्तिः । तस्य विशिष्टशक्तिसिद्धपदार्थैकदेशत्वकृतानन्वयानुवादकत्वात् । अपि चैवं वाक्यसमासयोस्तुल्यार्थत्वेन विभाषावचनस्य समासनियमनिवारणार्थत्वं कल्प्यमिति गौरवम् । किं च कृतविश्वः प्राप्तोदक उद्धृतौदन इत्यादिबहुव्रीहिषु विश्वजनककृतिमान् उदककर्तृकप्राप्तिकर्म ओदनोद्धरणावधिरित्याद्यर्थकेषु कृतादिपदानां लक्षणासंभवात् । चित्रग्वादिपदे च विनिगमनाविरहेण चित्रपदे गोपदे वा लक्षणासंभवादुभयत्र लक्षणायां बोधावृत्तिप्रसक्तेः । न च प्रत्ययार्थान्वयानुरोधेन चरमपदे लक्षणेति वाच्यम् । अनेकपदानामन्यपदार्थप्रतिपादकत्वाभावेन बहुव्रीहित्वभङ्गापत्तेः । न च तात्पर्यग्राहकतया ऽन्येषां तत्प्रतिपादकत्वम् । घटादिपदेष्वप्याद्यवर्णानां तात्पर्यग्राहकतयान्त्यवर्णे शक्त्यापत्तेः । किं च शिवो नामगायको यस्येति शिवनामगायक इति बहुव्रीहौ शिवकर्तृकगानकर्मीभूतनामवानिति बोधस्य शक्तिकल्पनं विना सुतरामनुपपत्तिः । अतः समासेषु विशिष्टशक्तिरङ्गीक्रियते । किं च तत्र शक्त्यनङ्गीकारे ऽर्थवत्त्वाभावेन प्रातिपदिकसंज्ञा न स्यात् । न च चित्रगुमानयेत्यादिषु कर्मत्वाद्यर्थबोधकत्व समस्यमानोत्तरपदार्थगतस्वार्थबोधकत्व वा समासोत्तरविभक्तीनामिति वाच्यम् । अर्धपिप्पलीत्यादौ व्यभिचारात् । क्लृप्तव्युत्पत्तिभङ्गापत्तेश्च । किं च समासस्य प्रातिपदिकतया तदेकदेशपुरुषादिपदार्थस्य पुरुषादेः प्रातिपदिकार्थत्वाभावेन तत्प्रकारकबोधो न स्यात् । न स्याच्च समस्यमानपदार्थयोः परस्परान्वयः । विभक्तिजन्योपस्थित्यभावेन राजपदार्थप्रकारकबोधायोगात् । अभेदातिरिक्तसंबन्धेन नामार्थप्रकारकबोधे विभक्तिजन्योपस्थितेर्हेतुत्वात् । किं च राजपदस्य संबन्धिनि संबन्धे वा लक्षणा । नाद्यः । राज्ञः पुरुष इति वाक्यस्य समासभिन्नार्थकतया तेन विवरणविरोधात् । नान्त्यः, विरुद्धविभक्तिरहितप्रातिपदिकार्थयोरभेदान्वयव्युत्पत्त्या राजसंबन्धरूपः पुरुष इति बोधापत्तेः । अतः समासेषु शक्तिरङ्गीकार्येत्याहुः ॥

अत्र गौतमीयाः । समासेषु क्लृप्तराजपदादेरेव संबन्धिलक्षणया राजसंबन्ध्यभिन्नः पुरुष इति बोधसंभवे न शक्तिकल्पनं युक्तम् । महाधिकारस्याप्यजहत्स्वार्थलक्षणाद्यपेक्षारूपसामर्थ्ये समासादिविधानेनोपपत्तेः । पदोद्देशेन विधीयमानः समासादिः समर्थः स्वार्थवाचकपदनिष्ठ इति सूत्रार्थः । एतेन राजपदार्थे शोभनादिविशेषणान्वयापत्तिः, निष्कौशाम्बिः गोरथ इत्यादौ क्रान्तयुक्तादिपदकल्पनापत्तिश्च परास्ता । राज्ञः पु-

दार्थैकदेशतया तत्र विशेषणानन्वयात्, लक्षणया क्रान्ताद्युपस्थितिसंभवाच्च । लक्षणाशक्तिभ्यां बोधेच्छायां समासविग्रहनियमेन विभाषासूत्रोपपत्तेः । राजादिपदशक्त्यग्रहे राजपुरुषश्चित्रगुरित्यादौ बोधाभावेन तत्र शक्तिग्रहस्यावश्यकतया पङ्कजादिपदेष्ववयवशक्त्यग्रहेऽपि बोधोदयेन तच्छक्तिग्रहस्यानावश्यकतया पङ्कजादिपदवैलक्षण्यस्य स्पष्टत्वात् । किं च चित्रगुरितिसमासस्य न स्वामित्वादौ शक्तिः संभवति, तत्तत्पदेन सेवकदेशादिप्रतीत्या नियमेन तदप्रतीतेः तत्रतत्र शक्तिकल्पनायां नानार्थतापत्तिः, पद्मत्वस्य तु नियतप्रतीत्या तत्र शक्तिरिति वैलक्षण्यम् । किं च प्राप्तोदक इत्यादावपि उदकपदे लक्षणा, प्राप्तादिपदस्य धातुप्रत्ययतदर्थज्ञानविलम्बेन तत्र लक्षणाया विलम्बितत्वात् । प्रत्ययार्थस्य सन्निहितपदार्थगतत्वानुरोधाच्च । अत एव चित्रग्वादिपदेऽपि गोपदे लक्षणा । विरुद्धविभक्तिरहितप्रातिपदिकार्थयोरभेदान्वयव्युत्पत्त्यङ्गीकाराच्च चित्रराजादिपदार्थान्वयसिद्धिः । न चैकलक्षणायामनेकमन्यपदार्थ इति व्याकरणविरोधः तेनानेकस्यान्यपदार्थे वर्त्तमानस्य समासानुशासनादिति वाच्यम् । सर्वपदस्यापि तात्पर्यग्राहकतया परंपरया ऽन्यपदार्थबोधकत्वात् । अतोन्यपदे लक्षणा । घटादिपदशक्तिस्तु विशिष्टस्य संकेतितत्वाद्विशिष्टे कल्प्यते । अस्तु वान्त्यवर्णे शक्तिः । अत्र क्लृप्तराजादिपदादेव लक्षणया तादृशार्थबोधसंभवे शक्तिकल्पनमन्याय्यम् । यत्तु समासे ऽर्थवत्त्वाभावात् प्रातिपदिकसंज्ञा न स्यादिति । तन्न । कृत्तद्धितसमासाश्चेति तद्विधानात् शशशृङ्गमित्याद्यनर्थकेषु तद्विधानप्रयोजनकत्वात् । एतेन तत्र कर्मत्वानन्वयदूषणमपास्तम् । समस्यमानपदलक्ष्यार्थगतस्वार्थबोधकत्वव्युत्पत्त्यङ्गीकारात् । विशिष्टशक्तिस्वीकारे उक्तरीत्या उक्तस्मृतिविरोधः । विशिष्टस्यातिरिक्ततयानेकत्वासंभवात् । अतो लक्षणैव युक्तेत्याहुः ॥

आचार्यादयस्तु बहुव्रीहौ शक्तिरेव, तस्य मतुबर्थसमानार्थकत्वात्, मतुपो गोमाश्चैत्र इत्यादावभेदान्वयाय संबन्धिवाचित्वनिश्चयात् । अत एवेन्द्रपीताधिकरणे तत्पुरुषाद्बहुव्रीहौ लाघवमङ्गीकृतमित्याहुः ॥

अत्र मीमांसकैकदेशिनः

"सर्वत्र यौगिकैः शब्दैर्द्रव्यमेवाभिधीयते"

इति वार्त्तिकात् सर्वेषां कृत्तद्धितसमासरूपयौगिकशब्दानां द्रव्ये शक्तिमाहुः ॥

परे तु अनिर्ज्ञातशक्तिकैकदेशयौगिकपदपरमिदं वार्त्तिकं तेन पाचको गोमानित्यादिकृत्तद्धितानां द्रव्यवाचित्वेपि बहुव्रीहेर्न तद्वाचित्वं तत्रापि विशेष्ये द्रव्याविनाभूतगुणवाचकपदबहुव्रीहेरेकहायनी पिङ्गाक्षीत्यादेर्द्रव्यवाचित्वे द्रव्याक्षेपकत्वे वा चित्रगुरित्यादौ तदसंभवेन द्रव्यलक्षणाया आवश्यकत्वात् । अतः क्व चिद्बहुव्रीहौ लक्षणा । न चैवमिन्द्रपीताधिकरणविरोधः । इन्द्रपीतपदे तत्पुरुषेपि पूर्वपदलक्षणया पीतपदे हुताहुतशेषलक्षणया लक्षणाद्वयापत्त्या लाक्षणिकबहुव्रीह्यपेक्षया तत्पुरुषस्य दुर्बलत्वात्सिद्धान्तसिद्धिः । अत एव निषादस्थपत्यधिकरणे लक्षणापत्त्या तत्पुरुषापेक्षया कर्मधारयस्य प्राबल्यमुक्तम् । अन्यथा तत्र ज्ञानोपायाक्षेपलाघवेन बहुव्रीह्यापत्तेर्दुरुद्धरत्वात् । अतः क्व चिद्बहुव्रीहौ लक्षणेत्याहुः ॥

ये तु सर्वत्र बहुव्रीहौ शक्तिं मन्यन्ते तेषां भावं नाकलयामः ॥

अन्ये तु मतुपोपि संबन्धो वाच्यः । तस्य चैत्रे प्रकारतया ऽन्वयः । संबन्धिनि वा लक्षणा । तेन बहुव्रीहेर्न मतुबर्थकत्वमित्याहुः ॥

अहं तु ब्रुवे । समासेषु न शक्तिर्न वा लक्षणा, किं तु समासोपस्थितविग्रहवाक्यादेव बोधः । श्लोकादावन्वयवाक्यादिवत् । अत एव रामेश्वर इत्यादौ

रामस्तत्पुरुषं प्राह बहुव्रीहिं महेश्वरः ।
अन्ये तु ऋषयः सर्वे कर्मधारयमूचिरे ॥

इत्यादौ तादृशविग्रहवाक्योपस्थित्यैव बोधः । एवं च विग्रहसंदेहे बोधसंदेहो ऽप्युपपद्यते । अतः समासवाक्यस्य विग्रहवाक्योपस्थित्या बोधजनकत्वं युक्तम् । न च बहुव्रीहौ विग्रहवाक्यात्पुरुषप्रकारको बोधः समासे तु पुरुषस्य विशेष्यत्वेन भानमिति कथं वैषम्यमिति वाच्यम् । चित्राणां गवां यः प्राप्तस्योदकस्य यः कृतस्य विश्वस्य य इति विग्रहवाक्यस्यापि तादृशस्याङ्गीकारात् । न चैवं सर्वत्र षष्ठीबहुव्रीह्यापत्त्या शेषो बहुव्रीहिरिति सूत्रानुपपत्तिरिति वाच्यम् । तस्योक्ताव्ययीभावादिसंज्ञसमासभिन्नपरत्वात् । अत एव निषादस्थपतिमित्यादौ व्यधिकरणतत्पुरुषात् समानाधिकरणतत्पुरुषस्य ज्यायस्त्वं संगच्छते । सामानाधिकरण्यवैयधिकरण्ययोर्विग्रहवाक्याधीनत्वादिति । विशेषणपदे सामानाधिकरण्य च विशेष्यसमानलिङ्गरूपत्वानुरोधकृतसमानविभक्तिविशेषकत्वम् । तेन देवदत्तस्य पत्न्या इत्यत्र विशेषलिङ्गकत्वाभावाद्देवदत्तः पचतीत्यादौ समानविभक्तिकत्वाभावाच्चातिप्रसङ्गः । सामानाधिकरण्यं च भिन्नप्रवृत्तिनिमित्तकानामेकत्र प्रवृत्तिः । अत्र लिङ्गनियमाननुशिष्टविभक्त्यन्तत्वं विवक्षणीयम् । तेन देवदत्तो मित्रमित्यादौ न व्यभिचार इति दिक् ॥ अथ राजपुरुष इति तत्पुरुषे पूर्वपदे लक्षणा । न च तत्र लुप्तषष्ठ्यैव संबन्धबोधान्न शक्तिर्न वा लक्षणेति वाच्यम् । षष्ठीलोपमजानतोप्यर्थप्रत्ययात् ।

किं चैवं साधुशब्दस्मारकत्वेनापभ्रंशोपयोगवद्विग्रहस्मारकत्वमात्रेण समासोपयोगः स्यात् । न च संबन्धस्य संसर्गतया भानोपपत्तेर्न लक्षणेति वाच्यम् । विग्रहसमासयोर्भिन्नार्थत्वापत्तेः । विग्रहवाक्ये संबन्धस्य प्रकारतया समासे संसर्गत्वायोगात् । अतो लक्षणावश्यकी ॥

अत्र पक्षधरः । राजपदेन राजसंबन्धी लक्ष्यते । राजसंबन्धी पुरुष इत्यनुभवात् । विरुद्धार्थकविभक्त्यवरुद्धयोः प्रातिपदिकार्थयोर्भेदान्वयस्य व्युत्पत्तिसिद्धत्वात् । एवं घटो नेत्यत्रापि घटपदेन घटप्रतियोगिकलक्षणया घटप्रतियोगिकाभावयोरभेदान्वयानुभवः । अतो राजपदेन संबन्धी लक्ष्यत इत्याह ॥

अन्ये तु राजपदेन संबन्ध एव लक्ष्यते लाघवात् । न चात्राभेदस्यनियमतः प्रतीतिः । नीलोत्पलमित्यादिसमानाधिकरणतत्पुरुषे ऽपि नीलस्यैव समवायेन प्रकारत्वाद्भेदान्वयः । नीलमुत्पलमिति वाक्ये तु समानविभक्त्यवरुद्धत्वस्य विरुद्धविभक्त्यनवरुद्धत्वापेक्षया लघुतया तन्त्रत्वादस्त्वभेदान्वयः । एवं च भिन्नप्रवृत्तिनिमित्तकत्वे सति एकधर्म्युपस्थापकत्वरूपं सामानाधिकरण्य नीलघटयोरभेद इत्यादिव्यवहारश्च युज्यते । नीलरूपघटत्वयोराश्रयाभेद इति वाक्यार्थः । तेन समासे समानविभक्तिकत्वाभावादभेदप्रत्ययायोगेन संबन्धमात्रं लक्ष्यते । अर्धपिप्पलीत्यत्रापि पिप्पलीपदेन संबन्ध एव लक्ष्यतइत्याहुः ॥

परे तु नीलोत्पलमिति कर्मधारये नीलपदस्य नीलवति लक्षणा । अभेदश्चोत्पले प्रकारतया भासते, व्याससमासयोः समानप्रकारकभानजनकत्वनियमात् । यदि च व्यासेपि कर्मत्वार्थकद्वितीयाया अभिन्ने लक्षणा तस्य चोत्पले ऽभेदेनान्वयस्तदा समासे ऽप्यभिन्ने लक्षणेति समानार्थकत्वोपपत्तिरित्याहुः ॥

अन्ये तु विशेषणविभक्तेः साधुत्वार्थत्वादभेदस्य व्यासे समासेपि संसर्गतयैव भानम् । अन्यथा ऽभिन्नलक्षणायां नीलाभिन्नाभिन्नमुत्पलमिति बोधः स्यात् । अभेदलक्षणायामपि लक्षणैव दोषः । अतः कर्मधारये न लक्षणा । अत एव निषादस्थपतिशब्दे तत्पुरुषबहुव्रीह्यपेक्षया लक्षणाभावलाघवेन कर्मधारयोऽङ्गीकृतः । अङ्गीकृतं च फलमुखमध्ययनप्रयुक्तं गौरवमित्याहुः ॥

"चार्थे द्वन्द्व" इति विहिते द्वन्द्वे पदद्वये लक्षणा । तथाहि । समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चत्वारश्चार्थाः । तुल्यवदुभयोः क्रियाप्रयोजकत्वे समुच्चयः । अन्यतरस्याप्रयोजकत्वेन्वाचयः । चकारसमभिव्याहार एवैतद्बोधक इति न तयोः समासः । चार्थे द्वन्द्व इति सूत्रेण चकारमात्रबोधितेर्थे द्वन्द्वविधानादनयोश्चकारं विना अपिशब्देनापि बोधाच्च । इतरेतरयोगसमाहारयोस्तु चकारमात्रार्थत्वात्तत्रैव समासः । यथा धवखदिरौ छिन्धि कुशपलाशमानयेति । अत्रेतरेतरयोगद्वन्द्वस्थपदोपस्थितयोर्धवखदिरयोश्छिदिक्रियान्वयेन द्वित्वान्वयेन च कुत्रापि न शक्तिर्लक्षणा वा, घटौ घटा इत्यादिसरूपैकशेषेपि न लक्षणा, घटपदाच्च शक्त्यैव युगपन्नानाघटोपस्थितौ द्वित्वबहुत्वान्वयसंभवात्, पितरावित्यादिविरूपैकशेषेषु पितृपदेन जनकदांपत्ये लक्षिते द्वित्वान्वये लक्षणैव, पाणिपादमित्यादौ समाहारद्वन्द्वेप्येकत्वान्वयानुरोधेन तावत्पदार्थेतरैकबुद्धिविषयरूपः समाहारो लक्षणयोपस्थाप्यते इति सिद्धान्तः ॥

अत्र केचिद् । इतरेतरयोगे विभक्त्युपस्थिते द्वित्वादिसंख्याया धवे खदिरे चान्वयः । तत्र च न धवत्वाद्यन्वयितावच्छेदकं द्वित्वपर्याप्त्यधिकरणत्वानवच्छेदकत्वाद्, विभक्तेः प्रकृत्यर्थतावच्छेदकव्याप्यसंख्याभिधायकत्वनियमात् । अतो धवपदं साहित्याश्रयतया धवखदिरौ लक्षणयोपस्थापयतीति साहित्यावच्छिन्ने द्वित्वान्वयः । न चैवं खदिरपदवैयर्थ्यम् । साहित्याश्रयविशेषलाभतात्पर्यकत्वात् । वृत्तिद्वयविरोधापत्त्या धवेपि लक्षणैव अत इतरेतरयोगद्वन्द्वे लक्षणा ऽऽवश्यकी । एवं च मित्रावरुणपदे मित्रयोर्वरुणयोरिति विग्रहोपदर्शक वाक्यमुपपद्यते । अन्यथा द्विवचनानुपपत्तेः । एवं समाहारद्वन्द्वेप्येकत्वान्वयार्थं साहित्ये लक्षणावश्यकी । परं त्वितरेतरयोगद्वन्द्वे साहित्याश्रये लक्षणा, एवं च विभक्तेः प्रकृत्यर्थगतस्वार्थबोधकत्वव्युत्पत्तिरपरित्यक्ता भवति । एवं सरूपैकशेषस्थलेपि साहित्योपस्थित्या द्वित्वान्वयार्थे लक्षणेत्याहुः ॥

तन्न, प्रत्यक्षेणेव पदद्वयेनोपस्थिते ऽर्थद्वये द्वित्वान्वयसंभवात् । योग्यतावच्छेदकप्रकारकज्ञानस्य शाब्दबोधहेतुत्वे मानाभावाद् विभक्तेः पदार्थतावच्छेदकधर्मसमानाधिकरणसंख्याभिधायकत्वाच्च । अत एव घटेन जलमाहरतीत्यत्र सच्छिद्रेतरत्वेन न घटोपस्थितिः किं तु घटत्वेनैव, घटश्च पटश्च स्त इति द्वित्वान्वयश्च । एतेन सुप्तिङ् रेकसंख्याभिधायकत्वलक्षणसामानाधिकरण्यनियमादेकत्वेनोपस्थिते द्वित्वान्वयासंभवाच्चैत्रो मैत्रश्च गच्छत इत्यादौ चकारोपात्तसाहित्यान्वयिनि द्वित्वान्वयेन क्रियायां वा द्वित्वान्वयेन बोधः । अन्यथा एकत्वेनोपस्थिते द्वित्वान्वये एको द्वाविति प्रतीत्यापत्तिरिति परास्तम् ॥ वस्तुतो यत्र सुबुपस्थाप्यसंख्या तिङुपस्थाप्यसंख्याविरोधिना तत्र सामानाधिकरण्यानुपपत्तिः । सुब्द्वयोपस्थाप्यक वद्वयस्य तिङुपस्थाप्यद्वित्वेन विरोधाभावाद् घटश्च पटश्च स्त इति प्रयोगो युक्तो न त्वेको द्वाविति तत्रकत्वस्य विरोधित्वादिति । न च समाहारलक्षणायां पाण्यादीनां क्रियान्वयो न स्यादिति वाच्यम् । परंपरासंबन्धेन पाण्यादौ क्रियान्वयाङ्गीकारात् ॥

केचित्तु एवं नञ्तत्पुरुषे ऽप्यघटः पट इत्यादौ घटप्रतियोगिकान्योन्याभावे नञो लक्षणा, तत्राप्यन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वस्य व्युत्पत्तिलभ्यत्वादन्योन्याभावमात्रे लक्षणा । एवं च घटप्रतियोगिकान्योन्याभाववान् पट इति बोधः । एवं न घट इति वाक्ये ऽपि लक्षणैव । नञः संसर्गाभावे शक्तत्वादिति दिक् ॥

इति श्रीगागाभट्टकृते भाट्टचिन्तामणौ समासवादः ॥

अथ नञर्थो विचार्यते । घटो नास्तीत्यादौ घटपदस्य घटप्रतियोगिकाभावे लक्षणा, नञ् तूपसर्गवल्लक्षणातात्पर्यग्राहक इति नास्त्येव नञर्थ इति के चित् ॥

तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः ॥

इत्युक्तेः षट्सु शक्तिरित्यन्ये ॥

संसर्गाभाव एव नञर्थो न भेदः । घटो न पट इत्यादौ नञर्थभेदस्याभेदातिरिक्तसंबन्धेन पटे ऽन्वयासंभवात्तद्वति लक्षणाया आवश्यकत्वात् । अतः ससर्गाभाव एव नञर्थ इत्यन्ये ॥

संसर्गाभावो ऽन्योन्याभावश्च नञर्थः । तादात्म्यसंसर्गावच्छिन्नप्रतियोगिताकाभावत्वं तादात्म्यारोपजन्यप्रतीतिविषयाभावत्वं प्रतियोग्यवच्छेदकदेशकालावच्छेदेन प्रतियोगिसमानाधिकरणाभावत्वं वा ऽन्योन्याभावत्वम् । तदन्याभावत्वं ससर्गाभावत्वम् । आरोपश्च प्रत्यक्ष इव शाब्देपि ग्राह्यः । तेनातीन्द्रियप्रतियोगिकाभावे नाव्याप्तिः । अभावबुद्धौ प्रतियोग्यारोप एव नियामको न तु तदारोपसंबन्धो नियामकः । तत्संसर्गे गौरवात्, घटो भविष्यति नष्ट इत्यादौ प्रतीतिविषययोः प्रागभावध्वंसयोर्नञर्थत्वायोगात्कपाले घटो नेत्यादौ अत्यन्ताभावस्यैव प्रतीतेः । अत्यन्ताभावान्योन्याभावावेव नञर्थौ न संसर्गाभावत्वेन तस्य शक्तिरिति पितृचरणाः । एतेन पीतघटवति नीलघटो नास्तीति प्रयोगप्रत्ययौ न वा घटवति नीलो घटो नास्तीति प्रयोगः । तत्र च नञर्थान्वयितावच्छेदकस्य प्रतियोगितावच्छेदकत्वनियमः । घटो नास्तीत्यत्र घटत्वस्योभयरूपत्वात् । कम्बुग्रीवादिमान्नास्तीत्यत्र कम्बुग्रीवादिमत्त्वमेव तथा । न च तस्यान्वयितावच्छेदकत्वेपि गौरवान्न प्रतियोगितावच्छेदकत्वमिति वाच्यम् । उपस्थितस्यैव प्रतियोगितावच्छेदकत्वे लाघवात् । अननुप्रविष्टत्वेन गौरवाभावात् । अन्वयितावच्छेदकता च पर्याप्तिसंबन्धेन बोध्या । तेन घटवति घटपटौ न स्त इति प्रत्ययप्रयोगौ घटत्वपटत्वयोरन्वयितावच्छेदकत्वेपि तत्पर्याप्त्यनधिकरणत्वात् । द्वित्वस्यैव तादृशत्वेन प्रतियोगितावच्छेदकत्वाद् इति के चित् ॥

अन्ये तु कम्बुग्रीवादिमान्नास्तीत्यत्रान्वयितावच्छेदकं न प्रतियोगितावच्छेदकं गौरवात् । घटपटौ न स्त इत्यत्रान्वयितानवच्छेदकमपि प्रतियोगितावच्छेदकं प्रतीतिबलादित्याहुः ॥

अत्र चाभावाधिकरणभूतलादिप्रकारकाभावविशेष्यकबोधे ऽधिकरणप्रकारकप्रतियोगिविशेष्यकबोधसामग्रीहेतुः । सा च सप्तम्यन्तभूतलादिपदसमभिव्याहारः । एवमभावप्रकारकाधिकरणविशेष्यकबोधे ऽपि तेन भूतलं घटे भूतले न घटः चैत्रः पचति न पचति चैत्र इत्यादिप्रयोगप्रत्ययाः । अन्यथा भूतलं न घटः चैत्रो न पाककृतिरित्यत्राधिकरणवाचिसप्तम्यन्तपदाभावेप्यत्यन्ताभावबोधः स्यात् । अत एव पृथिव्यां गन्धो न जल इत्यादौ गन्धविशेष्यक एव बोधः ॥

अन्ये तु नञो ऽभावमात्रे शक्तिः । शक्यतावच्छेदकं च लाघवादभावत्वम् । अतो नान्योन्याभावे लक्षणा । न चैवमपि घटपदान्नीलघटत्वप्रकारकप्रतीतौ घटपदलक्षणेवान्योन्याभावप्रकारकप्रतीत्यर्थं नञो लक्षणावश्यकी । अन्यथा न घट इत्यत्राभावाप्रकारकप्रतीतौ घटः पटो नेति प्रतीत्यनन्तरं घटः पटो न वेति संशयः स्यात्, भिन्नप्रकारकत्वेनाभावनिश्चयस्याप्रतिबन्धकत्वात् । एवं वाक्ये प्रतिषेधस्थले ऽपि संसर्गाभावप्रतीत्यर्थं लक्षणावश्यकीति वाच्यम् । प्रतियोग्यधिकरणवाचकपदयोः समानविभक्तिकत्वस्यान्योन्याभावबोधहेतुत्वस्य तयोः प्रथमादिविभक्तिकत्वस्यात्यन्ताभावबोधे हेतुत्वस्य च कल्पनया लक्षणाया अभावात् । यद्वा नञसमभिव्याहारे यत्पदार्थयोराधाराधेयभावसंसर्गेणान्वयः तत्रात्यन्ताभावप्रत्ययः । यत्राभेदसंसर्गेणान्वयस्तत्रान्योन्याभावभावमिति व्युत्पत्तिः । तेन न पचति चैत्र इत्यत्रात्यन्ताभावबोधः सुवचः । किं चात्रात्यन्ताभावबोधो न नियतः । कदा चिदस्मादेव वाक्यात्पाकानुकूलकृतिमद्भिन्नश्चैत्र इत्यन्योन्याभावस्यापि बोधात्, अतस्तादृशतात्पर्यज्ञानात्तादृशो बोध इति न लक्षणावश्यकीति । न चैवं प्रतिषेधपर्युदासयोस्तुल्यत्वापत्तिः । इष्टापत्तेः । नानुयाजेषु न होतारं वृणीतइत्यत्र वाक्यभेदकरोत्यनुषङ्गविकल्पपरिहाराणां पर्युदासबीजत्वात् । न तौ पशावित्यत्र पशुप्रकरणाभावस्य निषेधबीजत्वात् । एवं च समासे वाक्ये वा क्वापि न लक्षणेति के चित् ॥

दीधितिकारास्तु संसर्गाभावत्वमन्योन्याभावत्वं च नञः शक्यतावच्छेदकमिति नञो नानार्थत्वं, तथाप्यघट इति समासे ऽन्योन्याभाववदुपस्थित्यर्थं नञो लक्षणा । अत एव प्रतिषेधापेक्षया पर्युदासो दुर्बलत्वेन गीयते । नानुयाजेष्वित्यत्र प्रतिषेधेपि न विकल्पापत्तिः । अन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वस्यापि विशेषविधिनिषेधयोर्विशेषनिषेधाभ्यनुज्ञाफ-

लकत्वनियमस्य व्युत्पत्तिसिद्धतया विधिप्रतिषेधयोरुद्देश्यतावच्छेदकैक्ये विधेयप्रतिषेध्यतावच्छेदकैक्ये च विकल्पस्य युक्तत्वात् । यथा ऽतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णातीत्यादौ न तौ पशौ करोतीत्यत्र च । तत्राप्यतिदेशशास्त्रस्य पशूद्देशेनाज्यभागजन्योपकारविशेषविधिपरत्वेन विधिनिषेधयोरेकविषयत्वात् । नानुयाजेष्वित्यत्र तदभावेन वैषम्यात् । अतो ऽत्र पूर्वोक्तयुक्त्यैव पर्युदाससिद्धिरित्याहुः ॥

के चित्तु निषेधस्य प्रसक्तिपूर्वकतया इष्टसाधनत्वेन प्रमितस्य निषेधविषयत्वनियमः । एवं च विध्यर्थव्यतिरेकबोधकनिषेधेनानिष्टसाधनत्वं निष्फलत्वं वा निषेधस्य बोध्यतद्त्युभयोः प्रामाण्यायोगाद् व्रीहिशास्त्रयवशास्त्रयोरिवांशतः पाक्षिकप्रामाण्याङ्गीकारेण विकल्पापत्त्या सामान्यविधेर्विशेषविधिसमभिव्याहारेण तदितरपरत्वरूपपर्युदासाङ्गीकार इत्याहुः ॥

अत्रेदमाभाति । सर्वत्र नञर्थस्यान्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वव्युत्पत्तिः । अन्यथा नीलघटवति नेह घट इत्यत्यन्ताभावव्यवहारस्य, नीलघटो न घट इत्यन्योन्याभावव्यवहारस्य चापत्तिः । न च पदार्थैकदेशस्य घटत्वस्य कथमभावान्वयः । अभावस्यैव घटेन सममन्वये घटत्वावच्छिन्नप्रतियोगितायाः संसर्गत्वात् । सा च विलक्षणप्रतियोगिताविशेष इति के चित् । यत्रानुयोगिवाचकपदे सप्तमी तत्रात्यन्ताभावबोधः, यत्र प्रथमा तत्रान्योन्याभावबोध इतिव्युत्पत्तिमाहुः ॥

परे तु तादृशव्युत्पत्तेर्न पचति चैत्र इत्यादावत्यन्ताभावप्रत्यये व्यभिचारादेवं वाच्यं, नञसमभिव्याहाराभावे यत्पदार्थयोराधाराधेयभावसंसर्गेणान्वयस्तत्रात्यन्ताभावप्रत्ययः । यत्राभेदसंसर्गेणान्वयस्तत्रान्योन्याभावभानमिति । एवं च चैत्रः पचतीत्यादावाख्यातार्थयत्नस्य समवायेन चैत्रे भानम् । न पचतीत्यत्र यत्नाभावस्तत्संबन्धावच्छिन्न एवाधाराधेयभावनियामकस्वरूपसंबन्धेन चैत्रे भासतइति । एवं चैत्रस्य धनमित्यत्रापि षष्ठ्यर्थस्वामित्वस्य धने निरूपकत्वसंबन्धावच्छिन्नप्रतियोगिताकाभावो विशेषणतया भासते । यदि तु स्वत्वं षष्ठ्यर्थस्तदा चैत्रनिरूपितस्वत्वाभाव आश्रयतासंबन्धेन भासतइति । एवं नञ्समभिव्याहाराभावे यादृशप्रतियोग्यनुयोगिवाचकपदयोर्विरुद्धविभक्त्यर्थानवरुद्धयोरभेदान्वयव्युत्पत्तिस्तत्समभिव्याहृतनञा ऽन्योन्याभावबोधः । अत एव समानविभक्तिकप्रतियोग्यनुयोगिवाचकसमभिव्याहृतनञ्पदजन्यबुद्धिविषयत्वमन्योन्याभावलक्षणमित्याहुः ॥

अन्ये तु भूतले न घटः, घटो न पट इत्यत्र भूतलाधिकरणको घटप्रतियोगिको भावः पटप्रतियोगिकभेदवान् घट इति बोधः । यत्र तु घटो नास्ति घटपटौ न स्त इति क्रियासमभिव्याहारस्तत्र लडर्थवर्तमानत्वेन नञर्थान्वयः, तत्रैव च भूतलाधेयत्वान्वयः, एकत्वान्वयस्तु प्रथमान्तघटपदार्थे, तथा च भूतलवृत्तिवर्तमानत्वाभावाश्रय एकत्वाश्रयो घटः, भूतलवृत्तिवर्तमानत्वाभाववन्तौ द्वित्वावच्छिन्नौ घटपटाविति बोधः । एवं जातौ सत्ता नास्तीत्यत्र सत्ताभावो जाताविति बोधो जात्याधेय इति वा बोध इत्याहुः ॥

अत्र च सर्वत्र प्रातिपदिकार्थे नञर्थे घटपटादीनामभेदातिरिक्तेन प्रतियोगित्वसंबन्धेनान्वयः । निपातेषु भिन्नव्युत्पत्तिस्वीकारादिति के चित् । घटपदस्य घटप्रतियोगिके लक्षणाङ्गीकारे न कोपि दोष इति दिक् ॥

इति श्रीगागाभट्टकृते भाट्टचिन्तामणौ नञ्वादः ॥

---

## ॥ अथ बालभारतस्य ॥

॥ प्रशस्तिसर्गारम्भः ॥

किंचित् संचलितेऽपि वस्तुनि भृशं यत्संभवान्मन्महे
विश्वं यन्मयमीश्वरादिमयतास्पष्टप्रमाणोज्झितम् ।
संसारप्रसरः परस्तनुमतां यस्यानुरोधेषु यत्-
संरोधेषु शिवं स यच्छतु सतां श्रीचारुतां मारुतः ॥ १ ॥

देशे सत्तीर्थसार्थत्रुटदुरुदुरिते श्रीहनूमत्तनूजोत्-
पत्तौ तेन प्रतेने द्युजगदिव महास्थानमस्थानमाधेः ।
स्वाख्याङ्कज्ञातिनाम्ना मरकतमणिकामिश्रमुक्ताफलस्रग्-
भूषाबद्धमृगाक्ष्या द्विजपटलमिहास्थापि साकं वणिग्भिः ॥ २ ॥

श्रीमद्वायटनाम्नि सारसुकृतश्रीधाम्नि तस्मिन् महा-
स्थाने माननिदानमानसरसास्ते वायटीया द्विजाः ।
स्तोमस्तोमसमुत्थधूमनिवहैर्मालिन्यमालम्बया-
मासुर्यां वणिजो जिनार्चनघनोद्यद्धूपधूमोत्करैः ॥ ३ ॥

ध्वजमिषभुजमूलस्थूलकुम्भैकवक्षो-
रुहमहह महीयोऽधःकृतस्फाटिकाद्रि ।
विलसति वणिजां सत्कीर्तिधर्मार्धनारी-
श्वरवपुरिव तत्र श्रीमहावीरचैत्यम् ॥ ४ ॥

श्रीश्वेताम्बरमौलिमौक्तिकमणिस्तस्मिन् जिनेन्द्रालये-
ऽधिष्ठाता जिनदत्तसूरिरजनि ज्ञानैकवैज्ञानिकः ।

श्रेयस्तुङ्गयदङ्गसंगमसमुद्भूतप्रभूतस्फुरत्-
पुण्यैः पश्य गुणैर्गतं दिवि सितच्छायैरुडुच्छद्मना ॥५॥

तत्पट्टोर्वीधरवरमणिर्द्योमणिद्योतजैत्रै-
स्तेजःपुञ्जैः किमपि ककुभोऽपूरि रासिल्लसूरिः ।
यस्य व्योमच्छलकलशभृत्कीर्तिधारापयोभि-
र्गोभिर्भुक्ता घनजनमनःकानने मोहवल्ल्यः ॥ ६ ॥

सुरगजरजनीभुजङ्गगङ्गा-
भुजगपतिप्रतिशूरकीर्तिपूरः ।
तदनु मुनिपतिर्मतिप्रतिष्ठा-
जनितरसोऽजनि जीवदेवसूरिः ॥ ७ ॥

वयस्यद्विद्याभिः खलु सह कलाभिर्गुणगणाः
सहेलं खेलन्तो बहुमतिलते यत्तनुवने ।
यशःश्रीपुष्पस्रक्चयसुरभयः संशयमयीं
महादोलां मुक्त्वा सुकृतरसवापीषु विहृताः ॥ ८ ॥

महायोगी भोगिप्रभुनिभभुजस्तस्य शमिनः
सभायामायातः क्वचिदहनि कश्चिद्दहनदृक् ।
असावुद्यद्विद्याचयजयपताकामिव सुखं
मुखाज्जिह्वां कृष्ट्वा कृतपरिकरोऽग्रे न्यविशत ॥ ९ ॥

प्रीतिव्यालोलमौलिच्छलचलकमलामुच्छलन्युञ्छनालि-
भ्राजभ्राजिष्णुवीचिं स्तिमिततिमिसदृक्दृक्कुलाकेलिकभ्राम् ।
अत्तुभ्यंस्तत्प्रभावादपि सुकृतसुधासिन्धुधाराधरोऽयं
दूरं सूरिः प्रपूरे सर इव वरवागवृष्टिभिः संसदं सः ॥१०॥

अथ सुकृतकथान्ते गन्तुमिच्छन् रसज्ञां
न स परिकरबन्धात् क्रष्टुमीष्टे स्म योगी ।
भषण इव तदस्मिन्नुल्लसद्दीनशब्दे
किमिदमिति जनेनापृष्टमाचष्ट सूरिः ॥ ११ ॥

शक्तः पातयितुं नभस्तरुफलं हुङ्कारतोऽर्कं चमो
मूलस्तम्भमपि त्रिलोकभुवनं भङ्क्तुं भुजङ्गेश्वरम् ।
योगीन्द्रोऽद्भुतभूरिसिद्धिरसिकोऽसौ मत्कपालाग्रये
प्राप्तः स्तम्भनमाचरन् मयि मया द्राक् प्रत्युत स्तम्भितः ॥१२॥

वक्त्रायलम्बितलसद्रसनावबद्ध-
पर्यस्तिकोऽत्र मदमर्षदवानलेन ।
कुञ्जाधनिःसृतमहोरगवेष्टिताङ्गः
शाखीव शुष्यतुतरामयमित्थमेव ॥ १३ ॥

जिनेश्वरमतामृतार्णववितन्द्रचन्द्रोदय
प्रमोदय दयां हृदि क्रुधममुं च मुञ्च प्रभो ।
सदःसदि वदत्यदस्तदनु साधुवर्गे गुरुं
क्षितौ खटिकयाक्षराण्यलिखदेष योगी तदा ॥१४॥

उपकृतिमुपकर्तुः सर्वतः कुर्वते ये
क्षति धरति न धात्री तानसौ मानशौण्डान् ।
अपकृतिकृतिनस्तामेव कुर्वीत गुर्वीं
वहति सततमुर्वीमुद्विवेकः स एकः ॥ १५ ॥

आमृश्यैवं स यतिपतिना कृष्णभोगीव योगी
बन्धान्मुक्तः क्रुधमधिवहन् निःश्वसन् निःससार ।
यातो यस्यां दिशि रिपुरसौ गम्यतां नाद्य तस्या-
मस्मद्वर्ग्यैरिति च वचनं स्पष्टमाचष्ट सूरिः ॥ १६ ॥

रतिरिव पतिनाशे श्रीरिवास्थैर्यदोषे
स्ववशगकविदौरथ्ये वागिवाप व्रतं या ।
नगरबहिरगच्छद्गच्छसाध्वी न्यवेशि
स्वतनुमनु च तेन द्रोहिणा मोहिता सा ॥ १७ ॥

मत्वेत्यथो कुशमयं तमयं मुनीशः
कृत्वा ततान वितते तपनस्य तापे ।
स प्रस्फुरज्ज्वरभरोऽथ विहाय साध्वीं
लूनाङ्गुलिर्गलितगर्वगुणो जगाम ॥ १८ ॥

अयमुदयममन्दव्यक्तशक्तिर्व्यनक्ति
क्वचन वचनसङ्गी नास्य सादृश्यभङ्गी ।
सततमिति यतीन्दोस्तस्य नर्नर्ति कीर्ति-
र्जगति जगति गङ्गार्णस्तरङ्गाङ्गहारैः ॥ १९ ॥

पूर्वार्वीधरगन्धसिन्धुरशिरःसिन्दूरदूरप्रभां
बिभ्राणे तरणौ कदाचन कृतप्राभातिकप्रक्रियः ।
सूरिर्भूरिभिरेत्य तत्पुरवरैः संमान्य मान्यः सतां
प्रीतिश्रीरसभावितैर्निजसभावर्ती बभाषे द्विजैः ॥ २० ॥

गौरेका पतिता कथंचन मृता श्रीब्रह्मशालान्तरे
म्लेच्छा न प्रविशन्ति तत्र न मृतं कर्षन्ति विप्राः पशुम् ।
धर्माधार कृपाधुरीण तरसा तस्मान्महाकश्मला-
दस्मादन्यपुरप्रवेशकलयैवोत्कर्षतः कर्ष तत् ॥२१॥

मन्त्राकृष्टविशिष्टचेटकचयत्रातात देहं त्यजन्
स्वामी सोऽन्यपुरप्रवेशनमथ ध्यानं दधौ शुद्धधीः ।

सा गौरुक्कृषिता ततो निजमतस्यापि प्रदर्श्योन्नतिं
तस्माद्ब्रह्मगृहाद्बहिर्निरगमद् दुःखं द्विजानां हृदः ॥२२॥

स्वस्थानस्थापितात्मा तदनु मुनिरसावुत्सवेन द्विजेन्द्रै-
रानिन्ये ब्रह्मशालामथ च पृथुमदैर्वायटादित्यदेवम् ।
हैमं यज्ञोपवीतं तदिह सह महास्थानवृन्देन दत्त्वा
जैनोऽपि ब्रह्ममुख्यस्त्वमसि शमनिधेऽस्माकमेवं जगे च॥२३॥

जलद इव तडित्वान् मेरुशृङ्गाग्रसेतु-
र्जलधिरिव करीवाबद्धकल्पायकच्छः ।
ध्वनिभरभृतदिक्को लब्धनिष्कोपवीत-
स्तदनु मुनिरकार्षीद्धर्मकर्मोपदेशम् ॥ २४ ॥

पदपदमदगायद्गायनस्तोमनृत्यन्-
नटपटलकजल्पद्बन्दिवृन्दोद्भटेन ।
मुदितजनमुदश्रु स्निग्धसान्द्रेण सूरिः
स्वमतमथ ययागाज्जग्मुरन्येऽप्यथौकः ॥ २५ ॥

यतीन्दोस्तस्याथोल्लसदसमशक्तेः परपुर-
प्रवेशावेशर्द्धिः परमतमनुत्कर्षमगमत् ।
अमुक्तस्वाङ्गोऽपि श्वसनसुभगस्यापि यदसा-
वनेकस्याप्येकः समसमयमेवान्तरविशत् ॥ २६ ॥

यन्मार्गाग्रतृणालिरिक्षुलतिका यद्वालुकामण्डलं
खण्डो यत्तटगर्वनीरममृतं यत्कर्कराः शर्कराः ।
यत्फेनप्रचयः सुधारुचिरयं यत्संरवोऽनाहत-
ध्वानस्ताः शतशोऽस्फुरन् क्व न यतेस्तस्य प्रबन्धापगाः ॥२७॥

तेनाकारि पुरारिपर्वतशिरोधिक्कारि धौतीतला-
लङ्कारि स्फुटपापहारि भुवने वृन्दं जिनेन्द्रौकसाम् ।
आरोपोन्नमितेन यस्य नियतं दण्डोच्चयेनोच्चकै-
र्विद्धं व्योम दधाति किं न परितश्छिद्राण्युडुच्छद्मना ॥२८॥

गाम्भीर्ये च गुरुत्वे च माधुर्ये च ध्वनौ च कः ।
पर्यन्ताब्धेर्जलाधार इव तस्यैतु तुल्यताम् ॥ २९ ॥

आह्वान् श्रद्धाभाजन-
मुदितसभाजनविराजिनो विप्रान् ।
पौरांश्च भक्तिगौरान्
कदाचिदाचष्ट स मुनीन्द्रः ॥ ३० ॥

ग्रहीतुमतुलाग्रहः परपुरप्रवेशव्यसोः
कपालमथ पालनाद्वपुष एकखण्डं मम ।
स योगिपुरुषोऽकृत प्रमृतगोप्रयोगं मया
स्वरक्षणविचक्षणा त्वघटि चेटकानां घटा ॥ ३१ ॥

भुवनविजयविद्यां सिद्धिकर्मण्यवद्या-
मसुमदसुविनाशैः साधयिष्यन् स योगी ।
चिरविरचितयत्नो मत्कपालग्रहार्थं
विहरति परितो मन्मृत्युकालप्रतीक्षः ॥ ३२ ॥

व्यसोर्नगरनिर्गमे डमरुकध्वनिर्व्योमनि
स्फुटः स्फुरति तद्यदा मम शिरोऽस्थि चूर्ण्यं तदा ।
इतीद्धमतिलीलया स मुदमुद्वहन् मञ्चितां
चिराय परिपूरयत्यगुरुचन्दनौघैः पुरा ॥ ३३ ॥

इति विरचितशिष्यः स क्षमी ध्यानशुद्धि-
त्रुटितविकटकर्मा निर्मलीभूतचित्तः ।
अमृगयत नटन्तीरष्ट सिद्धीः कदाचि-
द्दिशि विदिशि कदाचिद्धीःश्रियौ युक्तपाणी ॥ ३४ ॥

नेत्रे निमीलयति चेद्भववृद्धिहेतू
भूलोकदर्शनभिया स पतिर्यतीनाम् ।
तद्भूरिभावभरभासुरभूतिमाला-
मालोकते त्रिजगतीरपि किं मुनीन्द्रः ॥ ३५ ॥

इति सुकृतनिधानध्याननिर्धारितायु-
र्भुवमवदिव नात्मध्यान — — — — — ।
— — — — — — — ने वा रेजतुस्तत्र तत्तत्-
सति विफलितनादैर्दुष्टयोगिप्रयोगः ॥ ३६ ॥

— — — — — — — — — — — — त्तादिनामभिः ।
सूरयो भूरयोऽभूवंस्तत्प्रभावास्तपस्विनः ॥ ३७ ॥

एकः प्रौढ — — — — — — — — पु — — — — — — —
— — श्रीजिनदत्तसूरिहृदयद्भूरिप्रभावोऽभवत् ।
तादृग्विस्तृतहृन्निपीतनभसि — — — — — — —
— — ऽम्भोधरसिन्धुसिन्धुरजयी व्याख्यासु शब्दो गुणः ॥३८॥

श्रीविद्याश्रीविलासाद्यैर्यत्प्रबन्धैः सहस्रशः ।
नष्टं मोहतमोऽकारि करैरिव रवेर्जगत् ॥ ३९ ॥

आयुष्यं कथयन्ति जन्तुषु पयःसारः पयोधेः पुनः
पीयूषं पृथिवीजुषामनिमिषीभावाय संभाव्यते ।
विद्वः श्रीजिनदत्तसूरिवचनं सारः सुधानामपि
व्यक्तं मुक्तिमपि प्रयच्छति सतां यत् प्रीतमुत्प्रीतिकृत् ॥४०॥

श्रीजीवदेवसूरीणां त एव परमाणव: ।
जग्मुर्यदङ्गतां भेजे तद्गुणैस्तद्विधेव य: ॥ ४१ ॥
श्रीवायटस्थाननिवासिनस्ते
संभूय भूयस्तरहर्षभाज: ।
कदाचिदागत्य निदेशवेश्म
जगुर्द्विजास्तं मुनिचक्रशक्रम् ॥ ४२ ॥
मरुद्भातास्माकं भुवनजयिनौ तस्य तनयौ
तयो: सङ्गो यस्यामजनि हनुमद्भीमभटयो: ।
तथा संक्षेप्यासौ पृथुरपि महाभारतकथा
यथा स्वल्पाभि: स्यात् तिथिभिरतिथि: कर्णपथयो: ॥ ४३ ॥
आज्ञापितस्तदिह कर्मणि सूरिभिस्तै:
ख्यात: क्षितावमरचन्द्र इति स्वशिष्य: ।
श्रीबालभारतमिति प्रततान काव्यं
वीराङ्कमेतदविनश्वरमात्मनोऽङ्गम् ॥ ४४ ॥
शस्ते प्रशस्तिसर्गेऽत्र रङ्गत्कविगुरुक्रमे ।
निश्चित्य स्पष्टतां नीता नवाशीतिरनुष्टुभाम् ॥ ४५ ॥
चतुर्युक्तचत्वारिंशत्सर्गैरासन्ननुष्टुभाम् ।
षट्सहस्रं पञ्चशती पञ्चाशद्बालभारते ॥ ४६ ॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रविरचिते बालभारतनाम्नि महाकाव्ये वीराङ्के चतुश्चत्वारिंश: प्रशस्तिसर्ग: ॥ ४४ ॥ समाप्तश्चायं बालभारतनामा प्रबन्ध: ॥ : : : : ॥

---

## ॥ अथ बालभारतस्योपसंहारवर्णनम् ॥

यद्भक्तलवेन संसृतिरियं संजायतेऽनारतं
यत्पादाम्बु पुनाति भूमिवलयं शंभोर्जटालंकृति: ।
यं ध्यात्वा निजकर्मसिद्धिमनिशं सर्वे लभन्ते जना-
स्तं नौमि प्रतिसंध्यमीश्वरमहं भक्तानुकम्पापरम् ॥ १ ॥

अपि च ।

यदीयदयया मयैतदुरुकाव्यमुद्राङ्कनं
समापितममायया$वति निजं जनं योऽञ्जित: ।
तडिल्लसितविभ्रमा ननु रमापि यं सेवते
त्रिसंध्यमनुवासरं शिरसि तत्पदं धारये ॥ २ ॥

अथेदं बालभारतनामकं काव्यमष्टादशपर्वघटितं चतुश्चत्वारिंशत्सर्गमितं कविहृदयहारकमनवलोकितचरं महाशयपाञ्चालदेशजातचरगवर्नरश्रीमेक्लौट्साहेबवर्येण काशिकराजकीयपाठशालायां कुतश्चित् परिक्रीय स्वनाम्ना संस्थापितं विदुषां दृग्गोचरीभावाय काशीविद्यासुधानिधिनामके पण्डितपत्रे मुद्रणार्हमाकलय्यैकमेव पुस्तकमालम्ब्याशुद्धिबाहुल्यान्महता प्रयत्नेन मया परिशोध्य परिशोध्यारम्भत एकादशसर्गपर्यन्तं मुद्रितम् ।

अथ पुस्तकस्यैकस्यैवावलम्बतो मुद्रणेन कारणेन नातितुष्टमनसा प्रति पुस्तकालयं वाराणस्यामस्यां पुन: पुनरन्विष्यमाणं पुस्तकान्तरं महामनस: श्रेष्ठिवरस्य निसर्गतो विद्वदुपकृतिपरस्य हरिश्चन्द्रेतिसुगृहीतनामधेयस्य धनिकवर्यस्य सरस्वतीसदनस्तदात्वयैकमपरमपि पुस्तकमासादितम् । ततश्च पुस्तकान्तरसाहाय्यान्नातिश्रमभृता मया ऋजुरीत्यैव द्वादशतमसर्गमारभ्य त्रिचत्वारिंशत्तमसर्गपर्यन्तं समङ्कितम् । मध्ये मध्ये च समीचीनं तदीयं पाठमासाद्य पाठान्तरमपि मुद्रितम् ।

अथ चतुश्चत्वारिंशत्तमसर्गमुद्रणावसरे प्रोक्तचरपुस्तकान्तरमपि खण्डितमालक्ष्य पुनस्तदेकमेव पुस्तमालम्ब्य मुद्रयितुकामेन मया दैववशान्मध्ये कतिपयैरक्षरै: पदै: पादैश्च रिक्ततां विभाव्य पुस्तकान्तरं चालभमानेन तत्पुस्तकस्यपाठं यथावस्थितमेवागत्याङ्गीकृत्य रिक्तस्थानेषु — — — — एवमाकाराक्षराद्यभावसूचकरेखालेखपुर:सरं नातिहृष्टमनसा चतुश्चत्वारिंशत्तमसर्गोऽपि मुद्रित इति ।

यदा च क्वचिच्चत्वारिंशत्तमसर्गस्यादर्शान्तरं लप्स्ये तदा पुनर्मुद्रयिष्य इति मदीयां प्रार्थनामाकलयन्तु गुणैकग्राहिण: सुधिय इति ।

अथ च प्रतिसर्गमाद्यावधिमसर्गश्लोकसंख्यासूचकं ग्रन्थाग्रम् (२५८) इत्येवमङ्कघटितं प्रकारमन्तेऽपि विधान्तरेण दृश्यमानत्वादुपेक्षितम् । सर्गसमाप्तिसमये च पुस्तकद्वयेऽपि इति श्रीत्यादिघटितेषु वाक्येषु पण्डितश्रीमदमरचन्द्रविरचिते इति श्रीबालभारतनाम्नीति क्वचिदुपलभ्य क्वचिच्चानुपलभ्यैकयैव परिपाट्या श्रीमदमरचन्द्रविरचिते बालभारतनाम्नीत्येव प्रायो विनिवेशितमिति ।

तदित्थमिदं बालभारतनामकं काव्यं सहृदयकविहृदयाह्लादजनकं परमकारुणिकस्य सकलजनमनोऽभिलषितपरिपूर्तिकारकस्य समग्रपरिश्रमान्तर्यामिणो दयाब्धे: श्रीमतो भगवत: परमेश्वरस्यानुकम्पयातिमहदपि मुद्रणविधया समाप्तिं नीतम् । अस्यैव च भगवत: कृपया दिगन्तेषु व्याप्य मुदमावहतु सुधियामवलोकनेनेति ।

अत्राज्ञानाद्भ्रान्तिवशाद्वानवहितचित्ततो वा यत् किंचिदशुद्धिमत् पद्यं मुद्रितमुपलक्ष्येत तदनुकम्पया सुधिय: शोध-

यन्तु क्षाम्यन्तु च मदीयमागः स्वतः सदुपकृतिपराः सन्तो महामहिमान इत्यलं बहुविलेखनेन तथाविधेषु महात्मसु विपश्चिद्वरेष्विति शिवम् ॥ :: :: ॥

सांख्यशास्त्रप्रधानाध्यापकः कान्यकुब्जस्त्रिपाठ्युपनामको वेचनरामशर्मा ॥

---

## ॥ अथ तत्त्वमुक्तावल्याः ॥

॥ प्रस्तावना ॥

जगज्जयति यत्कृपाविलसितेन यस्योदरा-
दिदं भवति यत्र वै लयमुपैति चान्तेऽखिलम् ।
स्वभक्तमनसेप्सितं सपदि यः प्रभुः साधय-
त्यमुं सकलमङ्गलप्रभवमीशमीडेऽन्वहम् ॥ १ ॥

अथेयं तत्त्वमुक्तावली ब्रह्मजीवयोरत्यन्तभेदः सेव्यसेवकभावश्च, तयोश्चाखण्डा सेव्यसेवकभावबुद्धिर्मुक्तिरित्येवंविधद्वैतमतप्रचारकस्य मध्वाचार्यस्य मतानुसारिणा नारायणभट्टशिष्येण वङ्गदेशीयेन चक्रवर्त्युपनामकेन पुराणश्रवणवृत्तिना गौडेन पूर्णानन्दकविना विरचिता श्लोकशतमात्रघटिता अद्वैतमतस्योपरि दूषणशतप्रतिपादिका प्रायो गुप्ततमा लोकेऽनुपलभ्यमाना समासादिता ।

ततश्चैतादृशीं विचित्रां तत्त्वमुक्तावलीं विद्वज्जनमनोरञ्जनाय पर्याप्तामाकलय्य काशीविद्यासुधानिधेः पण्डितपत्रे मुद्रणेन सर्वविपश्चितामवलोकनपथमागत्याद्वैतमते द्वैतमतरीत्या दोषशतोद्भावनेन विचित्रचमत्कारप्रदर्शकतया प्रमोदमेषा जनयिष्यतीति प्रार्थितेन श्रीमन्महामहाशयमहामहिमविद्वद्वरप्रभुवर्यगाफसाहेबवर्येण प्रोक्तचरपत्रे मुद्रणाय कृतानुमतिकस्तत्संपादनाय मुद्रणे संप्रति प्रवृत्तोऽस्मीति शिवम् ॥::::॥

सांख्यशास्त्रप्रधानाध्यापकः कान्यकुब्जस्त्रिपाठ्युपनामको वेचनराम शर्मा ॥

---

## ॥ अथ तत्त्वमुक्तावल्याः ॥

॥ प्रारम्भः ॥

अनुगतजनपालः क्रूरभूपालकाल-
स्तरुणतरतमालश्यामलो नन्दबालः ।
बहुकिरणकरालः सर्वशत्या विशालः
स जयति धृतमालश्चन्द्रकोद्भासिभालः ॥ १ ॥

पौराणिकोऽयं स्वमतानुसारी
प्रातः पुराणं पठति प्रकामम् ।
शृणोति भक्तः प्रणिधानपूर्वं
ग्रन्थार्थतात्पर्यनिविष्टचेताः ॥ २ ॥

जीवात्मनोरैक्यमतं विहाय
भेदं तयोः स्थापयति स्म युक्त्या ।
श्रुतिं स्मृतिं तत्र बहुप्रमाणं
कृत्वानुमानं बहुधातनोति ॥ ३ ॥

जीवोऽयं ब्रह्मणो भिन्नः परिच्छिन्नो यतः सदा ।
इत्यादिबहवो ज्ञेया अनुमानेषु हेतवः ॥ ४ ॥

ननु घटपटयोरैक्यं
घटेत वक्तुं प्रमेयत्वात् ।
अनयोर्नहि नहि तद्व-
द्यस्माद्ब्रह्माप्रमेयमेव स्यात् ॥ ५ ॥

साक्षात् तत्त्वमसीति वेदविषयं वाक्यं तु यद्विद्यते
तस्यार्थं कुरुते स्वकीयमतविद्वेदैर्मथित्वा मतिम् ।
तच्छब्दोऽव्ययमेव भेदक इह त्वं तत्र भेद्यो यतः
षष्ठीलोपमिता त्वमेव न हि तद्वाक्यार्थ एतादृशः ॥ ६ ॥

सर्वज्ञः सर्वदर्शी त्रिभुवनमखिलं त्वं तु यस्योदरान्तः
सर्वेषां सृष्टिरक्षालयमपि कुरुते भ्रूविभङ्गेन सद्यः ।
अज्ञः सापेक्षदर्शी त्वमसि स भगवान् सर्वलोकैकसाक्षी
नानात्वं ते स एको जडमलिनतरस्त्वं हि नैवंविधः सः ॥ ७ ॥

ब्रह्माहमस्मीति यदस्ति वाक्यं
ज्ञेया त्वयार्षप्रथमैव तत्र ।
दृष्टान्तवाक्ये कथमन्यथा चेत्
षष्ठी तु वह्नेरिव विस्फुलिङ्गाः ॥ ८ ॥

अग्निं माणवकं वदन्ति कवयः पूर्णेन्दुबिम्बं मुखं
नीलेन्दीवरमीक्षणं कुचतटीं मेरुं करं पल्लवम् ।
आहार्यभ्रमतो भवेत् पुनरियं भेदेऽप्यभेदा मतिः
कर्तव्या गतिरीदृशी खलु तथा ब्रह्माहमस्मि श्रुतेः ॥ ९ ॥

यथा समुद्रे बहवस्तरङ्गा-
स्तथा वयं ब्रह्मणि भूरिजीवाः ।
भवेत् तरङ्गो न कदाचिदब्धि-
स्त्वं ब्रह्म कस्माद्भवितासि जीवः ॥ १० ॥

ज्ञानं चाज्ञानमेव द्वयमपि विदितं सर्वशास्त्रान्तराले
धर्माधर्मौ च विद्या तदनु तदितरा पृष्ठलग्ना विभाति ।

एवं सर्वत्र युग्मं भवति खलु तथा ब्रह्मजीवौ प्रसिद्धौ
स्मादैक्यं तयोः स्यादकपटमनसा हन्त सन्तो वदन्तु ॥११॥

तस्य श्रीपरमेश्वरस्य निखिलाधारस्य मायाविनो
जीव त्वं प्रतिबिम्ब एष भगवान् बिम्बः स्वयं राजते।
एकः खे खलु चन्द्रमा बहुविधस्तोयादिके दृश्यते
तद्विम्बप्रतिबिम्बयोरिव भिदा जीव त्वया ब्रह्मणः ॥१२॥

अप्रमेयमवितर्क्यमनीहं
ब्रह्म तत् कथितमागमवाक्यैः ।
गोचरोऽसि वचसो मनसस्त्वं
ब्रह्मणा तव कथं भवितैक्यम् ॥ १३ ॥

मायावादमतान्धकारमुषितप्रज्ञोऽसि यस्मादहं
ब्रह्मास्मीति वचो मुहुर्वदसि रे जीव त्वमुन्मत्तवत्।
ऐश्वर्यं तव कुत्र कुत्र विभुता सर्वज्ञता कुत्र ते
तन्मेरोरिव सर्षपेण हि भिदा जीव त्वया ब्रह्मणः ॥१४॥

परिच्छिन्नो जीवस्त्वमसि स खलु व्यापकतम-
स्त्वमेकत्र स्थाता भवसि स हि सर्वत्र सततम्।
सुखी दुःखी त्वं रे क्षणिक स सुखी सर्वसमये
कथं सोऽहं वाक्यं वदसि बत लज्जां न कुरुषे ॥१५॥

काचः काचो मणिरपि मणिः शुक्तिरेवास्ति शुक्ती
रूप्यं रूप्यं न भवति कदा व्यत्ययज्ञानमेषाम्।
अन्येषां तु स्फुरति यदिदं ज्ञानमन्यत्र तत् तु
भ्रान्त्या जीवः प्रवदति तथा तत्त्वमस्यादि वाक्यम् ॥१६॥

तच्छब्दार्थः प्रकटपरमानन्दपूर्णामृताब्धि-
स्त्वंशब्दार्थो भवभयभरव्यग्रचित्तोऽतिदुःखी ।
तस्मादैक्यं न भवति तयोर्भिन्नयोर्वस्तुगत्या
भेदः सत्यं सकलजगतां त्वं हि दासस्तदीयः ॥१७॥

शब्दैर्ब्रह्मणि वक्तव्ये व्यापारो नाभिधा भवेत्।
शक्तिर्नास्ति यतस्तेषां लक्षणा तेन कल्प्यते ॥१८॥

एवं चेल्लक्षणा कस्माच्छक्यसंबन्धजा यतः ।
संबन्धस्तत्र केन स्यादसङ्गाद्वैतवस्तुनि ॥ १९ ॥

मुख्यार्थबाधे खलु तेन योगे
प्रयोजनाद्वा खलु रूढितो वा ।
वृत्त्या ययान्यो ननु लक्ष्यतेऽर्थः
सा लक्षणा स्यास्त्रितयं च हेतुः ॥ २० ॥

अभिधा नास्ति चेत् कस्माल्लक्षणा तत्र जायते।
आदावेकत्र बाधः स्यात् पश्चादन्यत्र लक्षणा ॥२१॥

नाङ्गीकृताभिधा यस्य लक्षणा तस्य नो भवेत्।
नास्ति ग्रामः कुतः सीमा न पुत्रो जनकं विना ॥२२॥

कुन्ताः खड्गा धनुर्बाणाः प्रविशन्त्यत्र लक्षणा।
स्वसिद्धये पराक्षेपो यत्नो गतिरचेतने ॥ २३ ॥

गङ्गायां घोष इत्यत्र परार्थे स्वसमर्पणम् ।
घोषाधिकरणं यस्मान्न गङ्गा जलरूपिणी ॥ २४ ॥

तादूप्यमायुर्घृतमत्र जातं
यदायुरेवेदमभेदबुद्धिः ।
वाक्यार्थबोधो भवितोपचारा-
दैक्यं तु नो वास्तवमेव जातम् ॥ २५ ॥

अद्वैतं स्थापितं यत्नाल्लक्षणा समुपाश्रिता ।
शक्यो लक्ष्यश्च संबन्धस्ततस्त्रितयमागतम् ॥ २६ ॥

नाभिधा समयाभावाद्धेत्वभावान्न लक्षणा ।
मायावादिमते ब्रह्म बोध्यते केन हेतुना ॥ २७ ॥

वेदे तु मुख्यया वृत्त्या जगत्कर्तेति कथ्यते ।
सकर्तृकत्वमेतेषामनुमानाच्च सिध्यति ॥ २८ ॥

वेदाः प्रमाणं स्मृतयः प्रमाणं
प्रमेय आस्ते खलु तत्र तत्र ।
वेदैश्च सर्वैरहमेव वेद्यो
वेदस्ततस्तद्विषयीकरोति ॥ २९ ॥

अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि ।
किमुत ब्रह्मणीशाने स चराचरकर्तरि ॥ ३० ॥

वाचो निवृत्तिर्मनसा सहेति
तस्यायमर्थः क्रियते शृणुध्वम् ।
हृदा समं तद्विषयीकरोति
ततो निवृत्तानवगाह्यभावात् ॥ ३१ ॥

अगोचरं मनोवाचामिति शब्दात् प्रतीयते ।
शब्दस्यैव ततो वाच्यं नच शब्दः स्खलद्गतिः ॥३२॥

शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ।
इत्यादि मुनिवाक्यं तु भ्रान्तप्रलपितं नहि ॥ ३३ ॥

सच्चिदानन्दशब्दानां संकेतो ब्रह्मणि ध्रुवम्।
यथा घटपटादीनां तत्तदर्थावलोकनम् ॥ ३४ ॥

प्रयोज्यप्रेरकोक्तिभ्यां संकेतग्रह ईरितः ।
आपातोद्धारतः पश्चाद् व्युत्पन्नो बालको भवेत् ॥ ३५ ॥

श्रवणाद्गुरुवाक्यानां शास्त्राभ्यासात् पुनः पुनः ।
ब्रह्मादिपदसंकेतः शिष्यस्योत्पद्यते ध्रुवम् ॥ ३६ ॥

इयं सकर्तृका नूनं क्षितिर्भवितुमर्हति ।
कार्यत्वं तत्र हेतुः स्याद् घटादौ दृश्यते यथा ॥ ३७ ॥

कर्तृत्वसिद्धौ परमेश्वरस्य
शरीरसिद्धिः स्वत एव जाता ।
घटादिकार्येष्वपि दृश्यते स्म
कर्ता शरीरी खलु नाशरीरी ॥ ३८ ॥

यद्यस्ति देहः परमेश्वरस्य
तदास्मदादिप्रतिमो हि स स्यात् ।
व्यापारसत्त्वे सति कर्तृकत्वं
कंचिद्विशेषं न विलोकयामि ॥ ३९ ॥

तत् कथ्यते भगवतो महदन्तरं यत्
कुद्दालदातृहलपाणिभृतां जनानाम् ।
एते षडूर्मिविवशाः श्रमभारखिन्ना
भ्रूभङ्गमात्रविषये स करोति सर्वम् ॥ ४० ॥

अकर्तुमन्यथा कर्तुं कर्तुं प्रभवति प्रभुः ।
अतस्तयोर्विजानीयादन्तरं महदन्तरम् ॥ ४१ ॥

यद्यस्ति भोगायतनं शरीरं
लोके प्रसिद्धं तदपि प्रकामम् ।
लक्ष्मीपतित्वाद्भगवच्छरीरे
न्यूनं न किंचिद् घटते समग्रम् ॥ ४२ ॥

यद्यच्छरीरं तददृष्टयुक्त-
मेतादृशी व्याप्तिरुरीकृता चेत् ।
तदास्मदादिप्रबलैरदृष्टैः
संप्रेरितो यः खलु सर्वकर्ता ॥ ४३ ॥

यद्यच्छरीरं तदनित्यमेव
व्याप्तिस्ततोऽपीश्वरनित्यदेहः ।
सर्वत्र दर्शी खलु भूरनित्या
नित्या यथा सा परमाणुरूपा ॥ ४४ ॥

नादृष्टमेकस्य जनस्य कस्मा-
दन्यत्र लभ्यं भवतीति सिद्धम् ।
यस्माद्भजताहशुभाशुभाभ्या-
मतित्वरावान् खलु चक्रपाणिः ॥ ४५ ॥

श्रुतं पुरा यज्जगदीश्वरस्य
नाभ्यम्बुजात् सर्वमिदं बभूव ।
शरीरसिद्धिस्तत एव जाता
नाभिः कथं हन्त विना शरीरम् ॥ ४६ ॥

सर्वेन्द्रियास्वाद्यमतिप्रसन्नं
शरीरमीशस्य हि षड्गुणाढ्यम् ।
वेदैश्च सर्वैरधिगम्यमानं
तत्पादशौचोदकमेव गङ्गा ॥ ४७ ॥

अधर्मवृद्धिः खलु धर्महासो
यदा यदा कालवशादुपैति ।
तदा तदा साधुजनस्य रक्षा-
मसाधुनाशं भगवान् करोति ॥ ४८ ॥

अवतारावतारित्वादीशो हि द्विविधः स्मृतः ।
भक्ताभक्तविभेदेन जीवोऽपि भवति द्विधा ॥ ४९ ॥

तत्रैव केचित् परमेश्वरस्य
वदन्ति जीवं प्रतिबिम्बमेव ।
मतं तु तेषां घटते न सम्यग्-
यतो व्यवस्थापयितुं न शक्यम् ॥ ५० ॥

तथाहि कस्मात् प्रतिबिम्बमासीत्
तस्यापरिच्छिन्ननिरञ्जनस्य ।
जडस्य कस्मान्निगमोक्तधर्मा-
धर्मोत्थतत्तत्सुखदुःखभोगः ॥ ५१ ॥

प्रतिबिम्बं भवेन्नूनं परिच्छिन्नस्य वस्तुनः ।
अपरिच्छिन्नता यस्य तस्य तद्भविता कथम् ॥ ५२ ॥

रामानुजः शिष्टगणाग्रगण्यो
निनिन्द बिम्बप्रतिबिम्बवादम् ।
शिष्टैर्गृहीतं न यतो मतं तत्
तस्माद्भवेत् चारुतरं न नूनम् ॥ ५३ ॥

तयोरनादिभेदोऽस्ति द्वासुपर्णाविति श्रुतेः ।
सखायाविति निर्देशादैक्यं तु घटते कथम् ॥ ५४ ॥

ब्रह्मैवाहं न संसारी ब्रह्मण्यात्मन ऐक्यात् ।
शोकादिविनिवृत्तिः स्यात् फले नैक्यं कदाचन ॥ ५५ ॥

अहमेव खलु ब्रह्म ब्रह्मणस्त्वात्मनीक्षणात् ।
परोक्षविनिवृत्तिः स्यात् फलं नैक्यं कदाचन ॥५६॥

एकाग्रबुद्ध्या परिशीलनेन
ब्रह्मैव स स्यादिति नैव वाच्यम् ।
किंचिद्गुणस्यैव भवेत् प्रवेशो
यत् कीटभृङ्गादिषु दृष्टमित्थम् ॥ ५७ ॥

भक्त्या सदा ब्राह्मणपूजनेन
शूद्रोऽपि स ब्राह्मणतामुपैति ।
किंचिद्गुणस्यैव भवेत् प्रवेशो
न ब्राह्मणः स्यात् खलु शूद्रजातिः ॥ ५८ ॥

श्रीसूत्रकारेण कृतो हि भेदो
यत् कर्मकर्तृव्यपदेश उक्तः ।
व्याख्या कृता भाष्यकृता तथैव
गुहां प्रविष्टाविति भेदवाक्यैः ॥ ५९ ॥

स्मृतेश्च हेतोरपि भिन्न आत्मा
नैसर्गिकः सिध्यति भेद एव ।
न चेत् कथं सेवकसेव्यभावः
कण्ठोक्तिरेषा खलु भाष्यकर्तुः ॥ ६० ॥

अहं सुखी क्वापि भवामि दुःखी
सुखस्वरूपी सततं स आत्मा ।
एवं हि भेदः कथमैक्यमेव
तयोर्द्वयोर्भिन्नपदार्थयोः स्यात् ॥ ६१ ॥

नित्यं स्वयंज्योतिरनावृतोऽसा-
वतीव शुद्धो जगदेकसाक्षी ।
जीवस्तु नैवंविध एव तस्मा-
दभेदवृक्षोपरि वज्रपातः ॥ ६२ ॥

जीवात्मनोर्ये प्रवदन्त्यभेदं
तेषां मते द्वन्द्वसमासबाधः ।
उदाहृतं वा दृषदादिरूपं
द्वन्द्वो हि भेदे न कदाप्यभेदे ॥ ६३ ॥

अभेदे जायते नूनं समासः कर्मधारयः ।
सामानाधिकरण्येन नीलोत्पलमुदाहृतम् ॥ ६४ ॥

अन्नं ब्रह्मेति वाक्यानि यथा तिष्ठन्ति भूरिशः ।
तथा ब्रह्माहमस्मीति विज्ञेयोपासनापरा[१] ॥ ६५ ॥

अभेदो वास्तवो नैव श्रूयते यत्र कुत्रचित् ।
ज्ञेयं तदखिलं वाक्यं तदेवोपासनापरम् ॥ ६६ ॥

भेदेऽप्यभेदेऽपि बहूनि सन्ति
वाक्यानि नूनं निगमे पुराणे ।
मात्सर्यमुत्सार्य विचार्य तत्त्वं
पथ्यं स्वकीयं प्रवदन्तु धीराः ॥ ६७ ॥

भ्रान्तप्रतारितमतेन नु जीव रे त्वं
ब्रह्माहमस्मि वचनं कुरु दूरमास्यात् ।
तत् त्वं कथं भवसि दैवहत प्रकामं
संसारदुस्तरमहार्णवमध्यमग्नः ॥ ६८ ॥

लक्ष्मीकान्तः प्रकटपरमानन्दपूर्णामृताब्धिः
सेव्या रुद्रप्रभृतिविबुधैर्यस्य पादाम्बु गङ्गा ।
स्रष्टुः पूर्वं सृजति निखिलं भ्रूविभङ्गेन सद्यः
सोऽहं कस्माद्वदसि बत रे जीव रङ्को न राजा ॥ ६९ ॥

येन व्याप्तमखण्डमण्डलमिदं ब्रह्माण्डभाण्डादिकं
रेरे मन्दमते त्वया कथमहो सोऽहं वचः कथ्यते ।
पश्य त्वं निजवैभवं स्वहृदये कृत्वा मतिं निश्चलां
व्यूहः किं मशकोदरे प्रविशति प्रोद्दाममदिग्दन्तिनाम् ॥ ७० ॥

कस्य त्वं कुत आगतः कथमरे संसारबन्धक्रम-
स्तत्त्वं तत् परिचिन्तय स्वहृदये भ्रान्तस्य मार्गं त्यज ।
सोऽहंभावदसेव्यमेवकतया नित्यं भज श्रीहरिं
तेन स्यात् तव सद्गतिर्ध्रुवमधः पातो भवेदन्यथा ॥ ७१ ॥

नानायोनिषु गर्भवासविषये दुःखं महत् प्राप्यते
स्वर्गे वा नरके पुनः पुनरहो जीव त्वया भ्रम्यते ।
सोऽहं ज्ञानमिदं भ्रमस्तव भज त्वं पादपद्मं हरे-
स्तस्य त्वं किल सेवकः स भगवांस्त्रैलोक्यनाथो यतः ॥७२॥

अद्वैताख्यमतं विहाय झटिति द्वैते प्रवृत्तो भव
स्वान्ते संप्रति विद्यते यदि हरावेकान्तभक्तिस्तव ।
वाक्यं नारदपञ्चरात्रविषयेऽप्यन्यत्र सर्वत्र च
ज्ञात्वा वैष्णवतन्त्रसूक्तमखिलं निर्णीयतां यद्धितम् ॥७३॥

केनोपदिष्टोऽसि महाकुबुद्धिना
ब्रह्माहमस्मीति यतस्त्वयोच्यते ।

१ अत्र श्रुतिरित्यध्याहार्यम् ।

रुद्रादिदेवैः सततं यदर्च्यते
तत् त्वं कथं मूढ विचार्य दृश्यताम् ॥ ७४ ॥

शक्ता ज्ञातुमहो न भेदमनयोर्जीवात्मनोर्दुर्जना
मायावाददुराग्रहग्रसितधीस्तत्रैव हेतुर्महान् ।
पित्ताधिक्यवतां यथैव रसना खण्डस्थितां माधुरीं
शङ्खस्थां किल काचकामलवतां नेत्रे यथा शुभ्रताम् ॥७५॥

यस्यैव चैतन्यलवेन जीव
जातोऽपि चैतन्यवतां वरेण्यः ।
मा ब्रूहि सोऽहं शठ कः कृतघ्ना-
दन्यः पदं वाञ्छति हन्त भर्तुः ॥ ७६ ॥

न्यस्तः श्रीपरमेश्वरेण कृपया चैतन्यलेशस्त्वयि
त्वं तस्मात् परमेश्वरः स्वयमहो नायाति वक्तुं शठ ।
लब्ध्वा कश्चन दुर्जनः खलु यथा हस्त्यश्वपादातकं
भूपादेव तदीयराज्यपदवीं चक्रे ग्रहीतुं मनः ॥ ७७ ॥

माया यस्य वशं गता बलवती त्रैलोक्यसंमोहिनी
विज्ञेयः प्रभुरीश्वरः स भगवानानन्दसच्चिद्घनः ।
यस्तस्या वशमागतः खलु नसि प्रोतोष्ट्रकल्पः सदा
ज्ञातव्यः स हि जीव इत्यमनयोरस्त्येव भेदो महान् ॥७८॥

ज्ञात्वा सांख्यकणादगौतममतं पातञ्जलीयं मतं
मीमांसामतभट्टभास्करमतं षट्दर्शनाभ्यन्तरे ।
सिद्धान्तं कथयन्तु हन्त सुधियो जीवात्मनोर्वस्तुतः
किं भेदोऽस्ति किमेकता किमथवा भेदेऽप्यभेदस्तयोः ॥७९॥

शास्त्रेषु पञ्चसु मया खलु तत्र तत्र
जीवात्मनोरतितरां श्रुत एव भेदः ।
वेदान्तशास्त्रभणितं किमिदं शृणोमि
भेदं ततोऽन्यमुभयं त्रिविधं विचित्रम् ॥ ८० ॥

स्वातन्त्र्ययोगाद्भवति स्वतन्त्रो
विश्वस्य कर्ता जगदीश्वरो यः ।
जीवः पराधीनतया प्रसिद्धः
कस्मात् तयोरैक्यमहो वदन्ति ॥ ८१ ॥

नाना रसा मधुनि भिन्नतया तरूणां
सन्ति त्रिदोषहरणं कथमन्यथा स्यात् ।
जीवास्तथा भगवति प्रलये विलीना
नैक्यं गताः खलु यतः पृथगेव सृष्टौ ॥ ८२ ॥

नदीसमुद्रयोर्भेदः शुद्धोदलवणोदयोः ।
तथा जीवेश्वरौ भिन्नौ विलक्षणगुणान्वितौ ॥ ८३ ॥

नद्यः समुद्रे मिलिताः समन्ता-
न्नैक्यं गता भिन्नतया न भान्ति ।
क्षीरोदशुद्धोदकयोर्विभेदा-
दास्ते तयोर्वास्तव एव भेदः ॥ ८४ ॥

दुग्धे तोयं मिलितमपरे नैव पश्यन्ति भेदं
हंसस्तावत् सपदि कुरुते क्षीरनीरस्य भेदम् ।
एवं जीवा लयमधिपरब्रह्मणीशे विलीना
भक्ता भेदं विदधति गुरोर्वाक्यमासाद्य सद्यः ॥ ८५ ॥

दुग्धं दुग्धे जलमपि जले मिश्रितं सर्वथा त-
न्नैकीभूतं नियतमुभयोर्मानमस्त्येव यस्मात् ।
एवं जीवाः परमपुरुषे ध्यानयोगाद्विलीना
नैक्यं प्राप्ता विमलमतयः सन्त एवं वदन्ति ॥ ८६ ॥

केचिद्वादबलाः कुतर्कजलधौ मग्नाः कुमार्गे रता
मिथ्याजल्पनकल्पनाशतयुता भ्रान्ता जगद्भ्रामकाः ।
ब्रह्मैवाहमिदं चराचरमपि ब्रह्मैव दृश्याखिलं
प्राहुर्यत् तदसन्मनोरथ इति व्याख्यातमत्र स्फुटम् ॥ ८७ ॥

सकलमिदमहं च ब्रह्मभूतं यदि स्या-
महह खलु तदा स्यादावयोरैक्यमेव ।
तव धनसुतदारा मामकीनास्तदा स्यु-
र्मम च तव भवेयुर्नावयोरस्ति भेदः ॥ ८८ ॥

विधिर्निषेधश्च तदा कथं स्या-
दैक्यं यतो नास्ति च वर्णभेदः ।
निर्णीतमद्वैतमतं तथा चे-
द्द्वैतैस्तदा को विहितोऽपराधः ॥ ८९ ॥

भूतेन्द्रियान्तःकरणात् प्रधाना-
ज्जीवाभिधानादपि भिन्न आत्मा ।
इतीरितो भागवते तृतीये
स्कन्धे पुरस्तात् कपिलेन मातुः ॥ ९० ॥

ये ध्यायन्ति गुरूपदिष्टपदवीमालम्ब्य शून्यालये
शून्यान्तःकरणेन शून्यमखिलं शून्यं च तद्वैभवम् ।
किं वाच्यं बहु तत्र शून्यविषये नो वाक्प्रवृत्तिर्यत-
स्तेषां शून्यधियां भवेत् फलमपि प्रायेण शून्यं खलु ॥९१॥

शून्यवादस्य निन्दायां भारते व्यासभाषितम् ।
तेषां तमःशरीराणां तम एव परायणम् ॥ ९२ ॥

कपिलेन यदुद्दिष्टं सूमरश्मिपुरः पुरा ।
तदेव भारते पश्चाद्व्यासेन समुदाहृतम् ॥ ९३ ॥

नैर्गुण्यवादो गुणसागरेऽपि
तेषामहो गड्डरिकाप्रवाहः ।
सूत्रस्य भाष्यं पृथगेव कृत्वा
प्रतारयन्ति स्वमतप्रपन्नान् ॥ ९४ ॥

ऐश्वर्यकर्तृत्वमुखाः समग्रा
नित्या गुणास्ते परमेश्वरस्य ।
अतो गुणी निर्गुण एव कस्मान्-
नैर्गुण्यवादस्तु विवाद एव ॥ ९५ ॥

ज्ञानेच्छाकृतिमानयं स भगवान् निर्धर्मकत्वं कुतो
वेदैर्वा प्रतिपाद्यते कथमहो निर्धर्मकश्चेत् तदा ।
नैर्गुण्यं गुणसागरेऽपि गदितुं तूष्णीं कथं शक्यते
स्वीयान्तःकरणे विचार्य भवता निर्णीयतां यद्भवेत् ॥ ९६ ॥

प्रतीयते क्वापि न वेदलोके
निर्धर्मकं वस्तु खपुष्पतुल्यम् ।
प्रतीतिरास्ते यदि तस्य वेदा-
द्वेदाः प्रमाणं खलु नो तदा स्यात् ॥ ९७ ॥

प्रस्तरो यजमानो वै यथात्र यज्ञसाधनम् ।
धर्मबाधे तथाचापि निर्धर्मस्तु प्रतीयते ॥ ९८ ॥

न धर्मधर्मिभावस्तु कुत्रापि भवतादृतः ।
बाधे कल्पितधर्मस्याबाधः सर्वत्र जायते ॥ ९९ ॥

निर्धर्मब्रह्मबोधे नो सत्यादेरनुकूलता ।
स सत्यधर्म इत्यादौ प्रतिकूलत्वमागतम् ॥१००॥

किंच कुत्रापि धर्मित्वे सिद्धे सिध्यति कल्पना ।
शुक्तौ रजतमित्यत्र प्रसिद्धं रजतं भवेत् ॥ १०१ ॥

आत्मोपादानकं विश्वमविद्याकल्पितं भवेत् ।
केचिद्विवर्तमिच्छन्ति तत्र हृद्यान्तरं मम ॥१०२॥

मिथ्याभूतमिदं विश्वमिति वक्तुं न शक्यते ।
नित्यक्रीडाप्रवृत्तस्य क्रीडाभाण्डं यतो हरेः ॥१०३॥

न स्वप्नतुल्यो भवति प्रपञ्चः
स्वप्नेऽस्ति निद्रा खलु भूरिदोषः ।
भुक्तं न पीतं नहि तत्र तृप्ये
जाग्रद्दशायां कुरुते न तृप्तिम् ॥ १०४ ॥

यद्येन मिथ्या परिदृश्यमान-
मर्थक्रियाकारि तदा कथं स्यात् ।
घटेन तोयाहरणं तु जातं
मिथ्या न तन्नश्वरमेव नूनम् ॥ १०५ ॥

मिथ्याभूतं यदिदमखिलं सर्वमेतद्विरुद्धं
प्रायश्चित्तप्रभृति कथितं धर्मशास्त्रे किमर्थम् ।
एते चौराः किमिति धरणीनायकेनापि दण्ड्या
मायावादी सशपथमिदं वक्ति सर्वं तु मिथ्या ॥१०६॥

स्रग्भोगिभोगोपम एव वक्तुं
त्वया प्रपञ्चः खलु शक्यते नो ।
विशेषदृष्ट्या ननु नात्र बाधः
प्रवाहनित्यः सततं विभाति ॥ १०७ ॥

अयं प्रपञ्चः खलु सत्यभूतो
मिथ्या न च श्रीपतिसंग्रहेण ।
शुद्धत्वमेतस्य निवेदनेन
स्वर्णं यथा राजति धातुजातम् ॥ १०८ ॥

वैराग्यभोगावपि भक्तिमध्ये
स्थितावुदासीनतया खलु द्वौ ।
महाप्रसादग्रहणं तु नित्यं
भोगः कदाचिन्न हि भक्तिरेव ॥ १०९ ॥

अत्यन्ताभिनिवेशेन भोगीति विषयीभवेत् ।
विरक्तस्तदभावे तु स्यादेवं परमार्थता ॥ ११० ॥

सत्सङ्गेन पुनः पुनर्भगवतो लीलाकथाकर्णना-
दुत्थप्रेम विशुद्धभक्तिलहरीचेतः सरस्यामभूत् ।
अद्वैतं तु मतं विहाय सहसा द्वैते प्रवृत्ता वयं
लक्ष्मीकान्तपदारविन्दयुगलं स्वैरं भजामो वयम् ॥१११॥

अस्ति लोकविषये व्यवहारो
राजकीयपुरुषः खलु राजा ।
ब्रह्मजीवविषयेऽपि तथैव
श्रूयते विविधमागमवाक्यम् ॥ ११२ ॥

यस्मिन्नुत्पत्तिमापत् त्रिभुवनसहितं चन्द्रसूर्यादि सर्वं
यस्मिन्नाद्यान्तमास्ते व्रजति च विलयं स्वस्वकालेन यस्मिन् ।

वेदैर्ब्रह्मापि वक्तुं प्रभवति न कदा यं गुणातीतमीशं
सोऽहं वाक्यं तु कस्मादुपदिशसि गुरो मन्दभाग्याय मह्यम्॥११३॥
सूक्ष्मस्थूलसमस्तजन्तुसहितं ब्रह्माण्डभाण्डादिकं
पक्वोदुम्बरमध्यमग्नमशकश्रेणीव यस्मिन्नभूत् ।
यस्मिन्नाप्रलयं च तिष्ठति लयं प्राप्नोति यस्मिन्नहो
सोऽहं वाक्यमिदं मदीयवदनादायाति कस्माद्गुरो ॥११४॥
यस्य श्रीपरमेश्वरस्य कृपया मूकोऽपि वाचालतां
पङ्गुः पर्वतलङ्घने किल महासामर्थ्यमेति क्षणात् ।
जन्मान्धोऽप्यरविन्दसुन्दरदृशोर्द्वन्द्वं किमन्यत् परं
वन्दे नन्दकिशोरमिन्दुवदनं तं भक्तचिन्तामणिम् ॥११५॥
कालोऽनन्तः प्रशस्तोर्वी विष्णुभक्तिकुलं महत् ।
मद्गुणग्राहकः कश्चित् कदाचिद्भविता भुवि ॥११६॥
श्रीनारायणभट्टवर्यसविधे तद्भक्तिभूषाभिधं
साङ्गोपाङ्गमधीत्य भक्तकृपया ज्ञात्वा रहस्यव्रजम् ।
भक्त्याधारतया यथामति शतश्लोकी निबद्धा मया
जीवब्रह्मविभेदतत्त्वविषया सद्वाक्यमुक्तावली ॥११७॥
वयमिह यदि दुष्टं प्रोक्तवन्तः प्रमादात्
तदखिलमपि बुद्ध्वा शोधयन्तु प्रवीणाः ।
स्खलति खलु कदाचित् पद्यतो हन्त पादः
क्वचिदपि बत वक्ता वक्ति मोहाद्विरुद्धम् ॥११८॥
गुणगणगुम्फितकाव्ये
मृगयति दोषं खलो न जातु गुणम् ।
मणिमयमन्दिरमध्ये
पश्यति पिपीलिका छिद्रम् ॥ ११९ ॥
ये मत्सरा हृतधियो ननु ते तु दोषं
पश्यन्तु नाम न गुणं तु गुणं गुणज्ञाः ।
आलोकयन्ति किल ये न गुणं न दोषं
ते साधवः परममी परितोषयन्ति ॥ १२०॥
पूर्णानन्दकवेः कृतिर्भगवतो जीवस्य भेदाश्रिता
तत्त्वातत्त्वविवेकवाक्यसुभगा श्रीविष्णुभक्तैर्मता ।
माध्वी मुग्धपदप्रबन्धमधुरा तत् पठ्यतां श्रूयतां
भो भो भागवतोत्तमा मनसि चेद्भक्तिर्भवेद्वाञ्छिता ॥१२१॥
नानालंकारमुक्ता मृदुमधुरपदन्यासंवर्धितश्रीः
पीयूषप्रख्यवाक्यप्रकरसुललिता चारुसर्वोज्ज्वलाङ्गी ।
विज्ञानन्दैकभूमिर्गुणगणसुभगा दोषलेशेन हीना
भक्तानां कण्ठदेशे निवसतु सततं तत्त्वमुक्तावलीयम् ॥१२२॥

श्रीगौडपूर्णानन्दचक्रवर्तिविरचिता तत्त्वमुक्तावली मायावादशतदूषणी संपूर्णा ॥ :: :: ॥

## ॥ अथ तत्त्वमुक्तावल्याः ॥

॥ उपसंहारवर्णनम् ॥

अवतरति धराभरावतारो
भुवि दिवि देवसमर्पितोपहारः ।
वसति वश इव स्वभक्तचित्ते
भवतु शिवाय सदा स सन्निमित्ते ॥ १ ॥

अपि च ।

मेरुं रेणुं रेणुमप्याशु मेरुं
कर्तुं शक्तो यः परेशः कृपाब्धिः ।
तं वन्देऽहं नीलजीमूतभासं
बर्हापीडं स्वाभिलाषस्य सिद्धौ ॥ २ ॥

अथेयं तत्त्वमुक्तावली श्लोकशतमात्रनिर्मिता मायावादस्योपरि दोषशतोद्भावनेन मायावादशतदूषणीति नामान्तरमापिता नारायणभट्टशिष्यगौडपूर्णानन्दचक्रवर्तिविरचिता "माध्वी मुग्धपदप्रबन्धमधुरा" इति पद्यभागेन मध्वाचार्यमतसम्बन्धिनीति स्पष्टमेव प्रतीयमाना संदर्भरत्नभूता काशीविद्यासुधानिधिनामकेन पण्डितपत्रेण प्रायः सर्वत्र प्रकाश्यमाना विद्वन्मनःप्रमोदजननेन शोधनप्रयत्नमस्माकं सफलयतु विद्वन्मनःकुतूहलाय च विचित्रार्थप्रतिपादकत्वाद्भवतु परमानुकम्पापरपरमेश्वरकृपयेति शम् ॥ :: :: ॥

सांख्यशास्त्रप्रधानाध्यापकः कान्यकुब्जस्त्रिपाठ्युपनामको वेचनरामशर्मा ॥

## ॥ अथ भाषान्तरावतारविचारः ॥

यूरपदेशे प्रसिद्धानां तद्देशभाषानिबद्धानां विद्यानां भारतवर्षनिवासिजनोपकृत्यै प्रथमं कस्यां भाषायामवतारः समुचित इति जिज्ञासायां कस्यचिद्यूरपदेशीयविद्याप्रबन्धस्य संस्कृतावतारसाहाय्यमन्तरा भारतवर्षे प्रचरितास्वन्यासु भाषास्ववतारो नातिसमीचीनः, तत्साहाय्येन तु सुसमीचीनोऽलस्तादृशप्रबन्धस्य प्रथमं संस्कृतावतार एव समुचित इत्यस्मदीयं मतम् । यः कोऽपि जीवन्त्या सततं प्रतिपालयन्त्या च संस्कृतवाग्रूपया जनन्या सह भारतवर्षे प्रचरितानामितरवाचा-

मद्यापि विद्यमानं संबन्धं न जानाति तमिदमस्मदीयं मतमसम्भाव्यमिव प्रतिभायात् । स्वल्पेन विचारेण तु तत्रासंभाव्यत्वबुद्धिरपयाति । कस्यचिद्दूरपदेशीयप्रबन्धस्य कस्यामपि प्राच्यभाषायामवतारणे किमतीव काठिन्यमिति प्रश्ने प्राच्यैः प्रतीच्यैश्च विद्वद्भिर्यं कञ्चन विषयमवलम्ब्य महतायासेन कल्पितेषु पश्चात् स्वस्ववर्णनप्रकारेण निबद्धेषु तत्तद्ग्रन्थांशेषु कियत् सारूप्यं कियच्च वैरूप्यमिति निर्णय एव काठिन्यमित्युत्तरम् । विविधा हि शास्त्रसंबन्धिन्यो विद्यासंबन्धिन्यो वा कल्पना विविधान् वर्णनप्रकारान् जनयन्ति । यत्र चैतदुपेक्ष्यते विस्मर्यते वा तत्रातीव व्यत्यासो जायते । सम्प्रति भारते वर्षे प्रचरितायां यत्र यत्र भाषायां काञ्चिद्दूरपदेशीयां विद्यामवतारयितुं व्यवसीयते तत्र सर्वत्र कल्पनायां वर्णने चायं महान् स्वरूपभेद उपलभ्यते । तथा च निखिलस्य भरतखण्डस्योपकृतये प्रचिकाशयिषितः प्रबन्ध एकदा संस्कृतवाण्या सम्यङ्निबद्धश्चेत् तर्हि यदभिलषितं तत् प्रायः सम्पन्नमेव । यथा टङ्कशालाया उपस्थितौ सुवर्णपिण्डैर्दीनारार्द्धदीनारादयो मुद्राविशेषा अनायासेन निर्मीयन्ते तथा सकलजातीयानां विदुषामुपस्थितौ संस्कृतभाषानिबद्धस्य ग्रन्थस्य भरतखण्डप्रचरितासु सर्वासु भाषासु यस्यां कस्याञ्चिद्वा भाषायामवतारणे न किमपि काठिन्यम् । यदि कस्यचित् सुपरीक्षकस्याधिकारे किमपि पुस्तकमनवद्यायां संस्कृतवाण्यामवतार्येत तर्हि तत्र कस्यापि भ्रान्तिशङ्का नैव जायते । अङ्गलभाषातः साक्षादवतारिते तु ग्रन्थे विपरीतग्रहसन्देहोऽभीक्ष्णमुपजायते । अतिशुद्धः संस्कृतेऽवतारितः प्रबन्धो राज्ञः कोषगृहे निहितेन सुवर्णाद्युत्तमधातुघटितेन मानदण्डेन तुल्यः, येन तद्देशे व्यवहृता निखिला अपि पित्तलकाष्ठादिनिर्मिता वस्त्रादिमानदण्डा याथार्थ्येन निर्णेतुं शक्यन्ते । भ्रमवारणायैतदपि वक्तुमुचितं यत् संस्कृतावतारः केवलमर्थस्य याथातथ्यनिर्णयाय निकषोपलत्वेन स्वीकृतः स्यात् न तु विषयाणां पारिभाषिकशब्दानाञ्चार्पणेन संपादनीयाया भारतवर्षीयभाषास्ववतारणेऽनुसरणीयायाः वर्णनरीतेरिति शम् ॥

पण्डितशीतलप्रसादत्रिपाठी ।

## THE APHORISMS

OF THE

## YOGA PHILOSOPHY

OF

PATAÑJALI

(*Continued from page 74.*)

[1] But it may be objected that this argument is not attended by that which is to be proved, for it is no established that the perception is cognisable. Moreover it is by means of the consciousness of knowledge that activities of souls in acquiring good and avoiding evils are observed. For instance, "I am angry" "I am afraid" and "I have a desire in regard to this object, &c. do not take place without being known to the understanding. To refute, this he states :—

**एकसमये चोभयानवधारणम् ॥ १९ ॥**

Aph. 19. Attention to two [objects] cannot take place simultaneously.

The cognition of an object is that which makes it capable of being regarded as such and such ; viz., that such and such an object is cause of pain or pleasure ; and the perception of understanding is the making possible the notion of "ego," in the form of pain and pleasure—i e. painful or happy. These two kinds of process cannot take place simultaneously at the time of the perception of an object, for there is a contradiction ; two contradictory processes being simultaneously impossible

[2] Hence it is stated that as it is impossible to perceive both its own shape and an object at the same time, the understanding is not self-illuminative. Moreover as the two results of these two processes are not perceived ; being directed towards the external object and not existing in itself, the perception of understanding [cognition does not take place , consequently the result existing in the object takes place but not that which exists in itself the soul ]

[3] But it may be said Let the cognition not be self-perceptive, still it may be perceived by another cognition. He rejects this :—

**चित्तान्तरदृश्ये बुद्धिबुद्धेरतिप्रसङ्गः स्मृतिसङ्करश्च ॥ २० ॥**

Aph. 20 If one perception be cognisable by another then there would be the further necessity of cognition of cognition, and a confusion of recollection also would take place.

---

[1] ननु च साध्याविशिष्टोऽयं हेतुर्दृश्यत्वमेव चित्तस्यासिद्धं किञ्च स्वबुद्धिसंवेदनद्वारेण पुरुषाणां हिताहितप्राप्तिपरिहाररूपाः प्रवृत्तयो दृश्यन्ते तथा हि क्रुद्धोऽहं भीतोऽहमत्रमेरागः इत्येवमाद्या संविद् बुद्धेरवेदना नोपपद्येत्याशङ्क्य निरसितुमाह ॥

[2] अर्थस्य संवित्तिरिदं तया व्यवहारयोग्यतापादनम् । अयमर्थः सुखहेतुर्दुःखहेतुर्वेत्यर्थः । बुद्धेश्च संविदहमित्येवमाकारेण सुखदुःखरूपतया व्यवहारयोग्यतापादनम् । एवंविधञ्च व्यापारद्वयमर्थप्रत्यक्षताकाले न युगपत् कर्तुं शक्यं विरोधाचहि विरुद्धयोर्व्यापारयोर्युगपत् सम्भवोऽस्ति । अत एकस्मिन् काले उभयस्य स्वरूपस्यार्थस्य चावधारयितुमशक्यत्वान्न चित्तं स्वप्रकाशमित्युक्तम्भवति किञ्चैवंविधव्यापारद्वयनिष्पाद्यफलद्वयस्यासंवेदनाद्बहिर्मुखतयैवार्थनिष्ठत्वेन चित्तस्य संवेदनाभावादर्थनिष्ठमेव फलं न स्वनिष्ठमित्यर्थः ॥

[3] ननु माभूद्बुद्धेः स्वयङ्ग्रहणं बुद्ध्यन्तरेण भविष्यतीत्याह ॥

If one notion be perceived by another [and not by itself] then this notion also being unable to illuminate another notion, another cognition must be assumed for the perception of that, and another for the perception of that, and so on Thus there would be a regress ad-infinitum [of notions], and an object would not be perceived even in the whole life of a man. And while the knowledge is uncertain the object cannot be known.

[1] And confusion of recollections also would take place. On a notion taking place regarding a colour or taste, endless other notions would take place in order to perceive this. And when by the train of self-reproductive thought or mental impressions many recollections may be produced simultaneously, then as the notion of the object is not terminated the perceptions and recollection taking place simultaneously, and it being impossible to know regarding what object the recollection took place, confusion of recollections would take place And thus it would not be known that this recollection is conversant about colour, and this conversant about taste

[2] Having raised the doubt that if the notion is not self-illuminative, and it is not perceived by another notion, how then is it that the processes in the form of "knowledge of an object" are spoken of? He states his own opinion :—

चितेरप्रतिसङ्क्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम् ॥ २१ ॥

Aph 21. The self-knowledge of cognition takes place when the intelligence [soul] which is non-transeunt acquires the shape of understanding

[3] The soul as being the thinking principle is intelligence, which is non-transeunt, that is, it has no transition or passing into another place; that is to say, it is not confounded with any other thing. The qualities [Purity Passion and Darkness] in the modification characterised by the relation of secondary and primary pass over into the primary quality—*i e* they assume its proper nature as it were, or as the atoms in a state of transition give form to an object in the external world; not so the power of intellection, for that always remains uniform, inasmuch as it exists in itself. Hence when understanding in the vicinity of it [the soul] acquires the nature of intelligence, then it becomes like intelligence. And when the power of intelligence reflected upon the modification of understanding becomes undistinuishable from it—*i. e.* from the modification of the understanding, then the self-knowledge of understanding takes place G. D.

[1] यदि हि बुद्धिर्बुद्ध्यन्तरेण वेद्येत तदा सापि बुधिः स्वयम्बुद्ध्यन्तरम्प्रकाशयितुमसमर्थेति तस्या ग्राहकं बुद्ध्यन्तरङ्कल्पनीयं तस्याप्यन्यदित्यनवस्थानात्पुरुषायुष्येणाप्यर्थप्रतीतिर्न स्याच्चाहि प्रतीतावप्रतीतायामर्थः प्रतीतो भवति। स्मृतिसङ्करश्च प्राप्नोति रूपे रसे वा समुत्पन्नायाम्बुद्धौ तद्ग्राहिकाणामनन्तानां बुद्धीनामुत्पत्तेर्बुद्धिजनितैः संस्कारैर्यदा युगपद्बह्व्यः स्मृतयः क्रियन्ते तदाऽर्थबुद्धेरपर्य्यवसानाद्बुद्धिस्मृतीनां युगपदुत्पत्तेः कस्मिन्नर्थे स्मृतिरियमुत्पन्नेति ज्ञातुमशक्यत्वात् स्मृतीनां सङ्करः स्यादितीयं रूपे स्मृतिरियं रसेस्मृतिरिति न ज्ञायेत ॥

[2] ननु च बुद्धेः स्वप्रकाशत्वाभावे बुध्यन्तरेण चासंवेदने कथमयं विषयसंवेदनरूपो व्यवहार इत्याशङ्क्य स्वसिद्धान्तमाह ॥

[3] पुरुषश्चिद्रूपत्वाच्चितिः साऽप्रतिसङ्क्रमा न विद्यते प्रतिसङ्क्रमोऽन्यत्र गमनं यस्याः सा तथोक्ताऽन्येनासङ्कीर्णेति यावत्। यथा गुणा अङ्गाङ्गिभावलक्षणे परिणामेऽङ्गिनङ्गुणमुपसङ्क्रामन्ति तद्रूपतामिवापद्यन्ते यथा वा लोके परमाणवः प्रसरन्तो विषयमारूपयन्ति नैवञ्चितिः शक्तिस्तस्याः सर्वदैवैकरूपतया स्वप्रतिष्ठत्वेन व्यवस्थितत्वादतस्तत्सन्निधाने यदा बुद्धिस्तदाकारतामापद्यते चेतनेवोपजायते बुद्धिवृत्तिप्रतिसङ्क्रान्ता च यदा चिच्छक्तिर्बुद्धिवृत्त्यविशिष्टतया सम्पद्यते तदा बुद्धेः स्वस्यात्मनो वेदनम्भवतीत्यर्थः ॥

THE

# VAIŚESHIKA APHORISMS

OF

## KAṆĀDA.

### NINTH BOOK, FIRST DAILY LESSON

*(Continued from page 78.)*

सदसत् ॥ २ ॥

Aph 2 The existent [becomes] non-existent.

[1] It is stated that another non-existence is established by the force of perception. It is proved by perception and inference that an existent product, such as a water-pot, after the operation of a hammer &c. which destroys it, is now non-existent, in like maner as it is proved by perception and inference that an effect is, previous to the operation of its cause, non-existent. This mode of non-existence is commonly called destruction [or subsequent or emergent non-existence]; for there are such cognitions as that a water-pot is destroyed, or that the letter *ga* previously heard is now no more. U

असतः क्रियागुणव्यपदेशाभावादर्थान्तरम् ॥ ३ ॥

Aph. 3 [Existence] is a thing distinct from non-existence, inasmuch as actions and qualities are not ascribed [to the non-existent.]

[2] It may be objected that it is the water-pot that un-

[1] यथा कारणव्यापारात् पूर्वं प्रत्यक्षानुमानाभ्यां कार्यस्यासत्त्वं प्रमीयते तथा विनाशकस्य मुद्गरादेर्व्यापारानन्तरं सदेव कार्यं घटादि इदानीमसदिति प्रत्यक्षानुमानाभ्यामेव प्रमीयते सचायमभावोध्वंस इति गीयते भवति हि घटोनष्टोध्वस्त इदानीं श्रुतपूर्वोगकारोनास्तीत्यादिधीरितिभावः ॥

[2] ननु घट एवावस्थाविशेषं ध्वंसव्यवहारं करोति नतु घटादन्यस्तस्य ध्वंस इत्यत आह। सदिति सूत्रशेषः असतः सत् अर्थान्तरं कुत इत्यत आह क्रियागुणव्यपदेशाभावादिति नहि प्रध्वंसकालेऽपि वर्तते घटः अस्ति घटः इदानीं रूपवान् घटः घटमानयेत्यादिव्यपदेशस्तदितो वैधर्म्यादसतः सदर्थान्तरमिति ॥

der particular conditions produces the conventional notion of destruction, but the destruction of the water-pot is nothing else than the water-pot itself The aphorism is therefore laid down The word Existence is to be supplied Existence, then, is a thing distinct from non-existence If it be asked why, it is stated that it is so because actions and qualities are not ascribed to the non-existent. For there are not employed such phrases as, The water-pot exists during subsequent non-existence. There is a water-pot, The water-pot is now possessed of colour, Bring the water-pot In consequence of this difference the existent is a thing different from the non-existent U.

**सच्चासत् ॥ ४ ॥**

Aph. 4. The existent also is non-existent.

[1] Antecedent and subsequent non-existence being proved, the present aphorism is laid down with the purpose of establishing reciprocal non-existence. When the words Is not are asserted of an existent water-pot, there appears an absence of identity. For there are such cognitions as that a horse is not identical with a cow, a cow is non-existent as a horse, a piece of cloth is non-existent as a water-pot, a piece of cloth is not a water-pot, a cow is not a horse, a horse is not a cow. There appears, then, in such a cognition the fact that a cow possesses reciprocal non-existence with a horse, a water-pot is reciprocally non-existent with a piece of cloth; and this reciprocal non-existence is otherwise designated absence of identity. The identity then in this case is essentially non-existent, and this non-existence has a substratum common to the non-existent object, for there are such cognitions as that the water-pot is not the ground [on which it is placed.] This non-existence is eternal, for it is impossible that there should be at any time identity between a water-pot and a piece of cloth. U.

**यच्चान्यदसदतस्तदसत् ॥ ५ ॥**

Aph. 5. Whatever else, moreover than these is non-existent, is [absolutely] non-existent.

[1] प्रागभावप्रध्वंसौ साधयित्वाऽन्योन्याभावं साधयितुमाह। यत्र सदेव घटादि असदिति व्यवह्रियते तत्र तादात्म्याभावः प्रतीयते भवति हि असन्नश्वो गवात्मना असन् गौरश्वात्मना असन् पटो घटात्मना अघटः पटः अनश्वो गौः अगौरश्वश्च इत्यादिप्रतीतिः तदस्यामश्वान्योन्याभाववान् गौः पटान्योन्याभाववान् घट इत्यन्योन्याभाव एव तादात्म्याभावापरनामा भासते तदत्र तादात्म्यं प्रतियोगितावच्छेदकम् प्रतियोगिसमानाधिकरणश्चायमभावः भवति हि पटो न भूतलमिति प्रतीतिः नित्यश्च कदाचिदपि घटपटयोस्तादात्म्यासम्भवात् ॥

[1] The fourth non-existence, called absolute non-existence, is here described Whatever else than these, that is, than the three forementioned non-existences is non-existent, that is, is absolutely non-existent The final and complete sense of the aphorism, therefore, is that the non-existence which is distinct from these three non-existences is absolute non-existence. Of these antecedent non-existence has a subsequent limit; subquent non-existence as an anterior limit, reciprocal non-existence has a common substratum with that which is non-existent, but absolute non-existence differs from all the three, and is therefore a fourth non-existence. V.

[2] That which is non-existent, repugnant to existence, other than the three forementioned non-existences is non-existent absolutely non-existent. 'That' usually refers to the existent The complete sense is that it is [technically] designated absolute non-existence This absolute non-existence is the fourth non-existence, and is eternal There are three things repugnant to absolute non-existence, the object non-existent, and its prior and posterior non-existences. According to the ancients the cognitions that dark colour does not exist in a red water-pot, and that red colour does not exist in a dark water-pot, are conversant about the subsequent and antecedent non-existences; while the moderns have maintained that the subsequent and antecedent non-existences are not repugnant to absolute non-existence; and that consequently that there may be absolute non-existence even during the time of subsequent non-existence. They [the moderns] hold that when a water-pot &c. previously removed is brought back to a place, there is during the existence there of the water-pot no notion of absolute non-existence of the water-pot, inasmuch as the time during which the water-pot is there constitutes no connection with non-existence Some have

[1] इदानीं चतुर्थमभावमत्यन्ताभावाख्यमाह। अतः पूर्वोक्तादभावत्रयात् यदन्यदसत् तदसत् तदत्यन्तासत्त्वम् असदित्युभयत्र भावप्रधानो निर्देशः तत्रैकमसदुद्देश्यमपरमसद्विधेयम् तथाचोक्ताभावत्रयभिन्नो योऽभावः सोऽत्यन्ताभाव इति पर्यवसन्नोऽर्थः तत्र प्रागभावस्य उत्तरावधिकत्वम् प्रध्वंसस्य पूर्वावधिकत्वम् अन्योन्याभावस्य प्रतियोगिसमानाधिकरणत्वमत्यन्ताभावस्य तु त्रितयवैधर्म्यमतश्चतुर्थोऽयमभावः ॥

[2] अत उक्तादभावत्रयादन्यद् यत् असत् भावभिन्नम् तदसत् अत्यन्तासत्त्वं भावप्रधाननिर्देशोऽयम् अत्यन्ताभावाख्यमिति तु फलितार्थः अयञ्चात्यन्ताभावस्तुरीयोऽभावः सनातनश्च प्रतियोगि तत्प्रागभाव तद्ध्वंसास्त्रय एवात्यन्ताभावस्य विरोधिनः रक्तघटे श्यामं रूपं नास्ति श्यामघटे रक्तं रूपं नास्तीतिप्रतीतिश्च ध्वंसप्रागभावाववगाहेते नत्वत्यन्ताभावमिति प्राञ्चः नव्यास्तु ध्वंसप्रागभावयोर्नात्यन्ताभावविरोधित्वमतो ध्वंसादिकालावच्छेदेनाप्यत्यन्ताभावो वर्तत एव यत्रभूतले पूर्वमपसारितं घटादिकं पुनरानीतं तत्र घटकालस्याभावसम्बन्धाघटकत्वाद्घटसत्त्वकाले न घटात्यन्ताभावबुद्धिरित्याहुः केचित्तु यत्र भूतले पूर्वं घटादिकं स्थितमथापसारितं पुनरानीतञ्च तत्रोत्पादविनाशशाली सामयिकनामा चतुर्थः संसर्गाभाव एव प्रतीयते नात्यन्ताभावइत्याहुः ॥

taught that when there has formerly stood in any place a water-pot, &c and this has been removed and brought back again, there appears in this case a fourth kind of universal non-existence characterised by production and destruction, and designated temporary non-existence, and not absolute non-existence V

**असदिति भूतप्रत्यक्षाभावात् भूतस्मृतेर्विरोधिप्रत्यक्षवत् ॥ ६ ॥**

Aph. 6. [Perception] that a thing is non-existent results from non-existence of a past perception, and reminiscence of the past, like the perception of a repugnant object

¹ Another section is here commenced, in which this aphorism is stated enouncing the apparatus of the perception of emergent non existence. Cognition in the form of perception is implied by the particle *iti*. There is therefore a perceptive cognition that a water-pot, for instance, is non-existent, that a water pot has been destroyed or that a water pot is subsequently non-existent. This is exemplified by perception of the repugnant, there being as clear and distinct a perception of a repugnant [or at present non-existent] water-pot &c as of its subsequent non-existence The reason of this is non-existence of a past perception, the absence, that is to say, of a past, produced and destroyed, water-pot and the like The experience is thus accounted for. The following hypothetical argument is confirmatory of this; if there were a water-pot here it would be seen as the place is seen, but it is not seen, and consequently there is none. Another subsidiary is stated to be reminiscence of the past, by which is meant recollection of a past, and now non-existent, water-pot and the like, the recollection of a thing non-existent U.

² The four kinds of non-existence being analysed, the the perception of subsequent non-existence is analysed, Such perceptions as that a thing is non-existent, a water-pot is non-existent, a water-pot is destroyed a water-pot has ceased to be, are, like the perception of the repugnant, that is like the perception of a not now existing water-pot, proved by experience, or produced by ordinary contact [of subject and object] Of these, perception of an object non-existent is produced by conjunction with the eye &c, while perception of emergent non-existence is produced by determination related to the eye &c. Such is one difference another is stated to be that [the perception of subsequent non-existence] results from non-existence of past perception, that is from a cause in the form of possible non-apprehension consequent on non-existence of perception of a past, foregone, now non-existent water-pot, and also from reminiscence of a past water-pot &c, that is from a cognition, which is a recollection, of a non-existent object The perception, therefore, of subsequent non-existence is produced by non-apprehension of a non-existent object, and by knowledge of a non-existent object; but the perception of a non-existent object is not so, there being a difference. V

**तथा ऽभावे भावप्रत्यक्षत्वाच्च ॥ ७ ॥**

Aph. 7 Likewise also from perception of existence in non-existence.

¹ The word non-existence, through expressive of non-existence in general, is ascertained from the context to denote antecedent non-existence [or potential existence] There is then a perceptive knowledge of antecedent non-existence, as there is of emergent non-existence. Why? Because there is a perception of existence, a perception of the straws in course of weaving [into a mat, which is potentially existent in them], these being made the object of perception. Or it may mean that [the perception of antecedent non-existence] results from the perception or perceptibility of existence, that is, of the substratum and the object therein non-existent, since perceptibility of the substratum and of the object non-existent is the condition of apprehension of

¹ इदानीं प्रकरणान्तरमारभते तत्र प्रध्वंसे तावत् प्रत्यक्षसामग्रीमाह । असदितीतिकारेण प्रत्यक्षाकारं ज्ञानमाह तेनासन् घटः नष्टो घटः ध्वस्त इदानीं घट इति प्रत्यक्षप्रतीतिरस्ति तत्र दृष्टान्तो विरोधिप्रत्यक्षवदिति विरोधिनो घटादेर्यथा स्पष्टं प्रत्यक्षं तथा तत्प्रध्वंसस्यापि तत्र कारणमाह भूतप्रत्यक्षाभावादिति भूतस्य उत्पद्य विनष्टस्य घटादेः प्रत्यक्षाभावात् एतेन योग्यानुपलब्धिमाह तत्र चायं तर्कः सहकारी यद्यत्र घटोऽभविष्यत् भूतलमिवाद्रक्ष्यत नच दृश्यते तस्मान्नास्तीति सहकार्यन्तरमाह भूतस्मृतेरिति भूतस्य प्रतियोगिनो घटादेः स्मृतेरिति प्रतियोगिस्मरणमुक्तम् ॥

² अभावचतुष्टयं व्युत्पाद्य ध्वंसप्रत्यक्षं व्युत्पादयति । असदिति असन् घटः नष्टो घटः ध्वस्तो घट इत्यादिप्रत्यक्षं विरोधिप्रत्यक्षवत् प्रतियोगिघटप्रत्यक्षवत् अनुभवसिद्धं लौकिकसन्निकर्षजन्यञ्चेत्यर्थः तत्र च प्रतियोगिप्रत्यक्षं चक्षुरादिसंयोगजन्यं ध्वंसप्रत्यक्षन्तु चक्षुरादिसंयुक्तविशेषणताजन्यमिति विशेषः अपरमपि विशेषमाह भूतप्रत्यक्षाभावादिति भूतस्य अतीतस्य प्रतियोगिनो घटादेः प्रत्यक्षस्याभावाद्योग्यानुपलम्भरूपात् कारणात् भूतस्य अतीतघटादेः स्मृतेः स्मरणात्मकात् प्रतियोगिज्ञानाच्च जायमानमिति पूरणीयम् तथाच ध्वंसप्रत्यक्षं प्रतियोग्यनुपलब्धिजन्यं प्रतियोगिज्ञानजन्यञ्च प्रतियोगिप्रत्यक्षन्तु न तथा इतोऽपि विशेष इतिभावः अत्र स्मृतित्वमविवक्षितं ज्ञानमात्रन्तु विवक्षितमिति मन्तव्यम् । एवञ्च घटादयो यथा प्रत्यक्षसिद्धास्तथा तद्ध्वंसा अपीतिभावः ॥

¹ सामान्यवाच्यप्ययमभावशब्दः प्रकरणात् प्रागभावपरः यथा प्रध्वंसे प्रत्यक्षज्ञानं तथा प्रागभावेऽपि कुतः भावप्रत्यक्षत्वात् भावस्य व्यूह्यमानवीरणादेः प्रत्यक्षत्वात् प्रत्यक्षेण विषयीक्रियमाणत्वात् यद्वा भावस्याधिकरणस्य प्रतियोगिनश्च प्रत्यक्षत्वात् योग्यत्वादित्यर्थः संसर्गाभावग्रहेऽधिकरणयोग्यतायाः प्रतियोगियोग्यतायाश्च तन्त्रत्वात् चकारात् प्रतियोगिस्मरणमुक्तञ्च तर्कं समुच्चिनोति अनादेरपि प्रागभावस्यानन्तस्यापि प्रध्वंसस्यावस्थाविशेषमात्रे प्रत्यक्षत्वम् ॥

general non-existence The particle *also* implies recollection of the non-existent [or absent] object, and the hypothetical reasoning aforesaid Antecedent non-existence without beginning, also, and emergent non-existence without end, are perceptible only under particular circumstances U

¹ There being a restriction of the general term non-existence to antecedent non-existence, so there is also perception There is a perceptive knowledge of antecedent, as of subsequent, non-existence, by means of experience rendered possible by apposition of the sense-organ [and its object], and of knowledge of the non-existent It may be asked, Inasmuch as antecedent non-existence has no beginning, how is it that there is no perception of it long before the production of conjunction of the two halves of a water-jar &c, the forementioned causes [of such perception] being possible at that time also? It is therefore stated that such perception results from perception of existence The affix *ghan* [in the word *bháva*, 'existence'] denotes the material cause, the source of being. Existence is the ultimate sum of conditions [or causal apparatus], and that only is perceptible which is perceptible thereby, inasmuch as it must be manifested by the ultimate causal apparatus Such is the resultant meaning of the aphorism It is to be considered that the particle *also* is added to prevent the supposition of perception of supersensible antecedent non-existence of air &c , and that perceptibility as an absent object is thereby additionally implied V

**एतेनाघटो ऽगौरधर्मश्च व्याख्यातः ॥ ८ ॥**

Aph 8 Hereby are explained [the negations] not a water-pot, not a cow, and demerit

² The perceptibility of reciprocal non-existence, is declared The word Hereby suggests recollection of the absent object apprehension of the substratum [or site of the absent object], and the forementioned hypothetical reasoning. Non-observation of the perceptible is common to all these cases, the particle *and* implying the aforesaid addition By the word Demerit, while the perceptibility of reciprocal non-existence of merit, though supersensible, in its substratum [or site], knowledge, pleasure &c is affirmed, it is at the same time declared that perceptibility of the absent object is not a condition of the apprehension of reciprocal non-existence, and thus it is suggested that the perceptibility of the substratum [or site of the absent object] is the only condition of such apprehension. How else could there be apprehended reciprocal negation of a fiend in a post, when it, it is recognised that a post is not a fiend? For since non-apprehension of the fiend as identical with the post causes apprehension of their reciprocal non-existence, and since that same non-apprehension is repugnant to the existence of the absent object, it would be impossible were the post identical with a fiend, that there should be such non-apprehension It may argued. Identity with a fiend is not in this instance the absent object, may it then be the fiend? and supposing him though being in the post, to be, like its gravity, not apprehended, then the non-apprehension of him will not be repugnant to the existence of the absent object We reply that this argument is invalid, for non-perception of that the essential characteristic whereof is the being an absent object is, like non-observation of the absent object, a cause of apprehension of non-existence If it be urged that reciprocal non-existence depends on the apprehension, of the absence of an object, that absence of an object [or the state of an object which is non-existent], is identity with exemption from reciprocal non-existence; we reply that this is not the case, for it is an attribute which is cognised as non-existent in any given substratum that has for its essential characteristic the nature of being an absent object, but the condition of the perception of that attribute is not the having for its essential characteristic the nature of being an absent object U

अभावं प्रागभावे सामान्यवाचकशब्दस्य विशेषपरत्वात् तथा प्रत्यक्षम यथा ध्वंसे इन्द्रियसन्निकर्षयोग्यानुपलब्धिप्रतियोगिज्ञानैः प्रत्यक्षं ज्ञायते तथा प्रागभावोऽपीत्यर्थः । ननु प्रागभावस्यानादित्वात् कपालादिसंयोगजननादतिपूर्वमपि कथं न प्रागभावस्य प्रत्यक्षमुक्तानां कारणानां तदानीमपि सम्भवादित्यत आह भावप्रत्यक्षत्वादिति भवत्यस्मादित्यपादाने घञ् भावश्चरमकारणसामग्री तेन प्रत्यक्षं यस्य तत्त्वात् चरमकारणसामग्र्यग्राह्यत्वादिति फलितार्थं तथाचोक्तस्थले चरमकारणसामग्र्यभावान्न प्रागभावप्रत्यक्षमिति भावः अतीन्द्रियस्य वाय्वादेः प्रागभावस्य प्रत्यक्षवारणाय चकारेण च प्रतियोगियोग्यत्वं समुच्चितमिति मन्तव्यम् ॥

² अन्योन्याभावस्य प्रत्यक्षतामाह । एतेनेति प्रतियोगिस्मरणाधिकरणग्रहणप्रागुक्ततर्कानतिदिशति योग्यानुपलम्भः सर्वत्र समानः चकार उक्तसमुच्चयार्थः अधर्म इत्यतीन्द्रियस्यापि धर्मस्य सुखज्ञानाद्यधिकरणेऽन्योन्याभावस्य प्रत्यक्षतां वदन् अन्योन्याभावग्रहे प्रतियोगियोग्यता न तन्त्रं किन्त्वधिकरणयोग्यतामात्रं तन्त्रमित्युपदर्शयति कथमन्यथा स्तम्भः पिशाचो न भवतीति पिशाचान्योन्याभावः स्तम्भे गृह्येत स्तम्भात्मतया पिशाचानुपलम्भस्य तदन्योन्याभावग्राहकत्वात् तस्याप्यनुपलम्भस्य प्रतियोगिसत्त्वविरोधित्वात् स्तम्भे पिशाचतादात्म्ये सत्यनुपलम्भानुपपत्तेः । ननु पिशाचतादात्म्यमिह न प्रतियोगि किन्तर्हि पिशाचः स च स्तम्भे वर्तमानोऽपि गुरुत्ववन्नोपलभ्यते इति तदनुपलम्भः प्रतियोगिसत्त्वविरोधी न भवतीति चेन्न प्रतियोग्यनुपलम्भवत् प्रतियोगितावच्छेदकानुपलम्भस्याप्यभावग्रहकारणत्वात् ननु प्रतियोगित्वग्रहाधीनोऽन्योन्याभावग्रहः प्रतियोगित्वञ्चान्योन्याभावविरहात्मत्वं ततश्चान्योन्याभावग्रहाधीन एवान्योन्याभावग्रह इति चेन्नाधिकरणावृत्तित्वेन ज्ञायमानो धर्म एव प्रतियोगितावच्छेदको ननु प्रतियोगितावच्छेदकत्वेनापि तद्ग्रहस्तन्त्रमित्युक्तत्वात्

[1] The recognition of reciprocal non-existence, the form of which recognition is such as that a piece of cloth is not a water-pot, a horse is not a cow, pleasure is not demerit, has been already explained by the description of the perception of emergent and of antecedent non-existences Such is the sense of the aphorism as a whole The causes then, of the apprehension of reciprocal non-existence, are determination [or possession of attributions] in relation with the sense-organs, non-observation of the absent object, and cognition of the absent object The greatest difference is that the perceptibility of the absent object is the condition of apprehension of general non-existence, whereas it is the perceptibility of the substratum that is the condition of apprehension of reciprocal non-existence Thus, though merit be a supersensible thing, there is no impossibility in perceiving its reciprocal non-existence in pleasure &c, its sensible substratum Whereas some have taught that perceptibility of both the absent object and its substratum [or site] is requisite to the apprehension of general non-existence, this is inaccurate, for inasmuch as were this the case, the perception of non-existence of fragrance in a stone, of non-existence of bitterness in treacle, of non-existence of colour in air, and of non-existence of touch and sound in ether, would be impossible, inasmuch as the respective substrata are not perceptible to the several sense-organs [cognisant of the absent qualities]. It was from this consideration that Paksha-dhara Miśra maintained the perception of the destruction [or cessation] of the touch of the air, characterised by time conjoint with the skin [the organ of touch] V.

**अभूतं नास्तीत्यनर्थान्तरम् ॥ ९ ॥**

Aph. 9 [The negation] *Is not* designates nought else than that which has not been

[1] The recognition that what has been no longer is reposes upon emergent non-existence, and is not conversant about the having been, while the recognition by perception simply that such and such a thing is not, rests upon absolute non-existence The expression that which has not been points out independence of production and destruction Designating nought else means purporting that only. For example There exists not in water the essence of earth [or terrestriality] There exists not in earth the essence of water [or aqueousness], for if there existed terrestriality in that whereof the particles are aqueous it would be observed, whereas it is not observed, wherefore it is not;—a reference to such arguments is to be observed in this aphorism Thus we must hold that there is non-existence of an object where such object will never be and has never been. The recognition that an object is not relates to the substratum and is the support of emergent and antecedent non-existence, of that which has been, and will be therein Hence it is that this absolute non-existence is designated as of trinal time U. A. E G.

# SIDDHA'NTA-MUKTA'VALI'

ON

# BHA'SHA'-PARICHCHHEDA 11, 12

"Non-existence is twofold, as divided into general and reciprocal non-existence. General non-existence is declared to exist in three modes, as anterior, emergent, and absolute non-existence" Non-existence is here divided. The definition of non-existence is that which is contradictory to [or reciprocally non-existent with] substance and the next five categories. Reciprocal non-existence being uniform and consequently indivisible, the author proceeds to divide general non-existence General non-existence is defined as non-existence other than reciprocal non-existence. Reciprocal non-existence

[1] अघटः पटः अगौरश्वः अधर्मः सुखमित्याद्याकारकोऽन्योन्याभावप्रत्ययोऽपि एतेन प्रध्वंसप्रागभावप्रत्ययकथनेन व्याख्यातः कथित इति समुदितार्थः तथाचान्योन्याभावप्रत्यक्षेऽपि इन्द्रियसम्बद्धविशेषणता प्रतियोग्यनुपलम्भः प्रतियोगिज्ञानञ्चेतानि कारणानि इयान् परं विशेषो यत् संसर्गाभावग्रहे प्रतियोगियोग्यत्वं तन्त्रम् अन्योन्याभावग्रहे त्वधिकरणयोग्यत्वमिति धर्मस्यातीन्द्रियत्वेऽपि सुखादौ योग्याधिकरणे तदन्योन्याभावस्य प्रत्यक्षं निराबाधमेवेति यत्तु संसर्गाभावग्रहे प्रतियोग्यधिकरणोभययोग्यत्वं तन्त्रमिति कैश्चिदुक्तं तन्न समीचीनं तथा सति पाषाणे सौरभाभावस्य गुडे तिक्ताभावस्य वायौ रूपाभावस्य आकाशे स्पर्शाभावस्य शब्दाभावस्य च प्रत्यक्षानुपपत्तेस्तत्तदधिकरणानां तत्तदिन्द्रियायोग्यत्वात् अतएव त्वक्संयुक्तकालविशेषणतया वायुस्पर्शनाशप्रत्यक्षं पक्षधरमिश्रैः स्वीकृतमिति संक्षेपः ॥

[1] भूतमिदानीं नास्तीतिप्रतीतिर्ध्वंसमालम्बते भूतत्वं नोल्लिखति किन्त्विदं नास्तीतिमात्रोल्लेखिनी प्रत्यक्षप्रतीतिरत्यन्ताभावमालम्बते अभूतमित्युत्पादविनाशानालम्बनत्वं द्योतयति अनर्थान्तरत्वमपि तदभिप्रायकमेव यथा जले पार्थिवत्वं नास्ति पृथिव्यां न जलत्वमिति यदि हि जलावयविनि पृथिवीत्वं स्यात् उपलभ्येत नचोपलभ्यते तस्मान्नास्तीति-तर्कपुरस्कारोऽत्रापि द्रष्टव्यः । एवञ्च यद्वस्तु यत्र न कदाऽपि भविष्यति नच कदाचिद्भूतं तस्य वस्तुनस्तत्रात्यन्ताभावो मन्तव्यः। भूतभविष्यतोश्च तत्रप्रध्वंसप्रागभावालम्बन एव तत्राधिकरणे नास्तीतिप्रत्ययः । अएतवायमात्यन्तिकस्त्रैकालिक इत्यभिधीयते ॥

is defined as the state of an object non-existent determined by connection with identity. Anterior non-existence is defined as a non-existence which ceases to be non-existent. Emergent non-existence is generable non-existence. Absolute non-existence is defined as eternal general non-existence. When a water-pot or the like has been removed from, and brought back to a place though the absolute non-existence there be eternal, yet inasmuch as it constitutes no connection with the time during which the water-pot is there, the absolute non-existence of the water-pot is not recognised during the time of the water-pot's remaining in that place. Some have maintained that there is in this case a fourth kind of non-existence characterised by production and destruction.

The doctrine of the ancients is that absolute non-existence does not exist in the substratum [or site] of the emergent and anterior non-existences; also that the recognition that the red [or baked] water-pot does not exist in the dark [or unbaked] water-pot, and that the dark water-pot does not exist in the red water-pot, is conversant about anterior and emergent non-existence, not about the absolute non-existence thereof. The moderns, on the other hand, in absence of proof to the contrary, have maintained that there resides therein absolute non-existence even during the time of emergent non-existence &c.

It may be asked: Why should not the modes of non-existence be identical with the substratum [or site of the water-pot &c.,] this being a simple hypothesis? We reply that it is not so, the hypothesis of a distinct thing being simpler than the hypothesis of innumerable identities with substrata. Thus also [by our hypothesis] the relation of the substratum and that which it underlies [or of the area containing the water-pot and its non-existences, and of the water-pot &c. contained] will be accounted for; and thus also the perception of the non-existence of sound, smell, taste &c. of such and such objects, will be possible. Otherwise the non-existences of such sounds smells, tastes &c. would be imperceptible, their several substrata being incognisable to the several organs [by which such sounds, smells, tastes &c. are apprehended; the site, for instance, of the sound being not audible but visible]. By the same argument it is shown that absolute non-existence is not identical with any species of cognition, or of time, inasmuch as it would not in that case be perceptible. "The community of property in all the seven categories is said to be knowableness." The author here proceeds to describe community and difference of properties in the categories. Community of properties is the state of those things which have a common property; the meaning in fine is the common attribute. Knowableness is the being an object of cognition, and this is in all [the categories], since only affirmation is possible in regard to their being the objects of divine and other [that is, supersensible] perception. Similarly we are to understand the capability of being named, the being knowable with certainty &c. [as common properties of all the categories]

A. E. G



PRINTED AND PUBLISHED BY THE PROPRIETORS, E. J. LAZARUS AND CO., AT THE MEDICAL HALL PRESS, BENARES.

# काशीविद्यासुधानिधिः

श्रीगणेशाय नमः

श्रीमद्विजयिनीदेवीपाठशालोदयोदितः । प्राच्यप्रतीच्यवाक्पूर्वापरपक्षद्वयान्वितः ॥ १ ॥
अङ्करश्मिः स्फुटयतु काशीविद्यासुधानिधिः । प्राचीनार्यजनप्रज्ञाविलासकुमुदोत्करान् ॥ २ ॥

A Monthly Journal, of the Benares College, devoted to Sanskrit Literature.

No. 65. Benares, October 2nd, 1871. Vol. VI.


## ॥ भाट्टचिन्तामणेस्तर्कपादः ॥

उपसर्गरूपा निपातरूपाश्चोपशब्दाः ॥

प्र, परा, अप, सम्, अनु, अव, निस्, निर्, दुस्, दुर्, वि, आङ्, नि, अधि, अपि, अति, सु, उद्, अभि, प्रति, परि, उप,

इत्युपसर्गा द्वाविंशतिः । एतद्भिन्ना नञादयो निपाताः । प्रादीनां च धातुसमभिव्याहार एवोपसर्गत्वं निपातत्वं च । तत्रापि कश्चिद्धात्वर्थमतिक्रम्य वर्त्तते । कश्चित्तमेव विशिनष्टि । यथा प्रस्थानं पराजयः प्रवेशो विजय इति । अत्र गमनजयाभावावुपसर्गार्थौ, प्रविशतीत्यादौ तन्निष्ठः प्रकर्षः विजयतइत्यादौ जयत्यर्थे विशेषः । चादिनिपातानां केषां चित्केवलप्रयोज्यत्वेपि सहप्रयुज्यमानपदार्थान्वयित्वं तदर्थानाम् । यथा

तटस्थः स्वानर्थान् घटयति च मौनं च भजते
विकारः कोप्यन्तर्जडयति च तापं च कुरुते

इत्यादौ लोके, मैत्रावरुणः प्रेष्यति चान्वाहेत्यादौ वेदे समुच्चयः । चार्थो भावनान्वयी, घटं च पटं चानयेत्यादौ लोके यदग्नये चेत्यादिवेदे चोपपदार्थान्वयित्वं, तेनाग्निनिरूपितसमुच्चयस्य प्रजापतौ विशेषणत्वेन समुच्चयस्य भावनान्वयाभावेन न विधिः, किं तु समुच्चयविशिष्टप्रजापतिविधिः । न चैवं गौश्चाश्व इत्यत्र दक्षिणोद्देशेन समुच्चयविधिर्न स्यात् । इष्टापत्तेः । विशिष्टदक्षिणाविध्यङ्गीकारात् । तस्याश्च ऋत्विग्भ्यो ददातीति विनियोगश्चमसाध्वर्युव्यावृत्त्यर्थः । एतच्च दशमे स्फुटम् ॥

तत्रोपसर्गा द्योतका न वाचकाः । प्रजयतीत्यादौ प्रकृष्टजयादौ जिधात्वादेर्लक्षणयैवोपपत्तेः, तत्र शक्तिकल्पने गौरवात् । प्रतितिष्ठत इत्यत्र गमने प्रशब्दार्थे विभक्त्यर्थानन्वयप्रसङ्गात् । प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वात् । न चैवं नञोप्यभावे शक्तिर्न स्यादिति वाच्यम् । भूतलं न घट इत्यत्र घटपदलक्षितभेदस्य नामार्थयोर्भेदान्वयाव्युत्पत्त्या भूतले ऽनन्वयापत्तेः । भेदस्य नञर्थत्वे तु निपातार्थातिरिक्ते तन्नियमाच्च भेदान्वयानुपपत्तिः । न च घटपदस्य घटाभिन्ने लक्षणया भूतलेनान्वयोस्त्विति वाच्यम् । भेदप्रकारकबोधस्यानुभविकत्वादिति के चित् ॥

अन्ये तु धातौ शक्तिलक्षणयोरुपसर्गसमभिव्याहारतदभावहेतुकत्वस्य उपसर्गाणां द्योतकत्वशक्तेश्च कल्पनायां गौरवाद् वाचकतैव युक्ता । एवं चैवकारादावन्ययोगव्यवच्छेदायोगव्यवच्छेदयोरिवकारादीनां सादृश्यादीनां शक्तिप्रदर्शनमुपपन्नम् । अत एवात्र ह्यवावपन्त्यत एवोद्वपन्तीति वैदिकप्रयोगस्य, तत्रैवायाति इत एवाभिवर्त्तत इति लौकिकप्रयोगस्य, चोपपत्तिः । अतो वाचकत्वमित्याहुः ॥

त्वतलादिभावप्रत्ययानां घटत्वं पटत्वमित्यादौ घटत्वत्वेन घटत्वादिकमर्थः । घटत्वत्वं च घटेतरासमवेतत्वे सति घटनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वे सति समवेतत्वम् । अत्रेतरसमवेताभावनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वाभावसमवेतत्वे षट् शक्तयः । संसर्गः समभिव्याहारलभ्यः । सत्त्वमित्यादावेकदेशे लक्षणा । तत्र सदितरासमवेतत्वस्याप्रसिद्धेः । एवं प्रमेयत्वमित्यत्रापि । एवमन्यत्राप्यूह्यम् ॥

केचित्तु भावप्रत्ययस्य धर्मत्वेन धर्मे शक्तिः। धर्मत्वमाधेयत्वं शक्यतावच्छेदकं,शक्ततावच्छेदकं तु त्वतल्त्वादिकं न भावप्रत्ययत्वम्। घटत्वमित्यादौ घटधर्म इति बोधः। पटे घटत्वं नास्तीत्यत्र तु नञर्थस्य घटमात्रवृत्तित्वविशिष्टभावप्रत्ययार्थे धर्मे ऽन्वयः। भावप्रत्ययसमभिव्याहृतनञः प्रकृत्यर्थमात्रवृत्तित्वविशिष्टप्रतियोगिताकाभावबोधकत्वव्युत्पत्तेः। एवं समासाद्युत्तरभावप्रत्ययेपि नीलोत्पलत्वमित्यत्र नीलोत्पलधर्म इति बोधः। समासोत्तरभावप्रत्ययस्य प्रकृत्यर्थवृत्तित्वविशिष्टधर्मबोधकत्वव्युत्पत्त्या न रक्तोत्पले नीलोत्पलत्वमिति बोध इत्याहुः॥

अन्ये तु कृत्तद्धितसमासोत्तरभावप्रत्ययस्य पदार्थतावच्छेदकद्वयसामानाधिकरण्ये शक्तिः, लोके पाचकत्वमौपगवत्वं नीलोत्पलत्वमित्यादौ वेदे च वैश्वदेवीत्वं निषादस्थपतित्वमित्यादौ पाककृतिपुरुषत्वयोरुपगुसंबन्धत्वापत्यत्वयोर्नीलत्वोत्पलत्वयोर्विश्वदेवदेवताकत्वामिक्षात्वयोर्निषादत्वस्थपतित्वयोः सामानाधिकरण्यस्य विशेषणतया भानादिति॥

अन्ये तु सामानाधिकरण्यस्योत्तरपदार्थतावच्छेदकविशेषणतया भानम्। सामानाधिकरण्यमात्रे शक्तिः। प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमात्। प्रत्ययार्थप्राधान्यनियमस्य भावप्रत्ययार्थातिरिक्तसमासाद्यतिरिक्तपरत्वात्तेन नीलत्वसमानाधिकरणमुत्पलत्वमिति बोध इत्याहुः॥

परे तु नीलादिपदस्य तत्समवायिनि लक्षणा। अभेदः संसर्गः। नीलत्वसमवाय्यभिन्नसमवेतोत्पलत्वमिति बोध इत्याहुः॥

वैश्वदेवीत्यादितद्धितस्य देवतात्वविशिष्टे सर्वनामार्थे शक्तिः, सर्वनामार्थश्च बुद्धिस्थप्रकारविशेषावच्छिन्नं पयस्त्वादि, एवं च प्रातिपदिकार्थविश्वदेवानां देवतात्वे देवतात्वस्य च निरूपकत्वेन सर्वनामार्थद्रव्यविशेषणत्वेनान्वयः। ससंबन्धिकत्वादेकदेशान्वयेपि न दोषः। आमिक्षापदे तु प्रकारविशेषोपस्थापने तद्धितस्य तात्पर्यग्राहकत्वमिति प्राञ्चः॥

केचित्तु तद्धितस्य सर्वनामार्थे शक्तिर्देवतात्वे तु निरूढलक्षणा, कृत्प्रत्ययानामाश्रयवाचिनां कृताविव विश्वदेवप्रातिपदिकार्थस्य लक्षितदेवतात्वे ऽन्वयो व्युत्पत्तिवैचित्र्यादित्याहुः॥

अन्ये तु तद्धितार्थो द्रव्यविशेष एव, देवतात्वं तु प्रातिपदिकार्थतद्धितार्थयोः संसर्ग इत्याहुः॥

परे तु देवतात्वमेव तद्धितार्थः, सर्वनामार्थस्य व्यक्तिन्यायेन बोध इत्याहुः॥

अपरे तु तद्धितेनानिर्धारितविशेषद्रव्यसामान्यप्रतीतेर्न द्रव्यविशेषवाचित्वं, किं त्वामिक्षापदादेव विशेषनिर्णय इत्याहुः॥

देवतात्वबोधकानि च देवताशब्दस्तद्धितश्चतुर्थी द्वितीया मन्त्रवर्णश्चेति, देवतास्तर्पयति प्रजापतिर्ब्रह्मा देवता इत्यादौ रात्रिदेवताकमिके नक्षत्रदेवताकमित्यादौ च द्रव्यत्यागोद्देश्यत्वरूपदेवतात्वस्य देवतापदवाच्यस्यान्वयः। धात्वर्थत्यागांशेनुवादः। एवमाग्नेय इत्यादितद्धितस्य देवतात्वविशिष्टद्रव्यविशेषवाचित्वम्। न च द्रव्यविशेषवाचित्वमसिद्धमिति वाच्यम्। बुद्धिस्थप्रकारावच्छिन्नबोधकसर्वनामार्थे सास्य देवतेति तद्धितविधेः। एवं च तद्धितस्य देवतात्वविशिष्टे बुद्धिस्थप्रकारे ऽष्टाकपालत्वादौ तद्व्यक्तित्वादौ वा शक्तिस्तदवच्छिन्नस्य तु व्यक्तिन्यायेन लाभः। बुद्धिस्थत्वेन भानाभावात्तु न बुद्धिस्थत्वे शक्तिः। तेषां प्रकाराणां नानात्वे ऽपि बुद्धिस्थत्वस्योपलक्षणत्वेन शक्तिग्रहसंभवः,शक्तिग्रहोपलक्षणस्य न शक्यतावच्छेदकत्वमिति दिक्॥

तदादिपदानां बुद्धिस्थत्वेन बुद्धिस्थे शक्तिः। न च बुद्धिस्थमानयेति बोधापत्तिः, पदार्थस्मरणशाब्दबोधयोः समानप्रकारकत्वादिति वाच्यम्। पदान्तरे तादृशनियमे ऽपि तदादिपदेषु घटत्वादिरूपेणैव पदार्थोपस्थितेः शाब्दबोधस्य च कल्पनं फलानुरोधादिति केचित्॥

अन्ये तु तदादेर्घटत्वादिनैव शक्तिरिति नानार्थतैवेत्याहुः॥

त्वंपदस्य तत्कालीनसंबोध्यत्वविशिष्टचैत्रादावस्मत्पदस्य तत्कालीनस्वतन्त्रोच्चारयितृत्वविशिष्टचैत्रादौ शक्तिः। स्वातन्त्र्यं चान्यबोधतात्पर्येणानुच्चारयितृत्वं, तेनान्यतात्पर्येणोच्चारिते वाच्यस्त्वया मद्वचनात्स राजेत्यादौ लक्षणया सीताप्रतीतिर्न कविप्रतीतिरुच्चारयितृप्रतीतिर्वा। अत्रापि संबोध्यत्वादिकं न भासते भासते चेति। वयं याम इत्यत्र स चाहं च त्वं च वयमित्येकशेषादन्यतात्पर्यकेपि सर्वेष्वारोपितस्वातन्त्र्यप्रतीतिः।

एवमिदमवच्छिन्ने ऽदःपदस्य शक्तिः॥

यत्किंचिच्छब्दस्य पर्याप्तसंबन्धेन बुद्धिविषयत्वविशिष्टघटत्वाद्यवच्छिन्ने शक्तिः। यत्किंचित्प्राचीनमग्नीषोमीयाद् यत्किंचित्सोमलिप्तमित्यादौ तथैव बोधात्। अत एव शक्यतावच्छेदकतावच्छेदकस्य विषयत्वस्यैक्यान्न वाक्यभेदः, यत्किंचिदानयेत्यादौ तु पर्याप्तिसंबन्धेनोपेतबुद्धिविषयत्वविशिष्टे लक्षणा॥

केवलकिंचित्पदस्याज्ञातप्रकारावच्छिन्ने शक्तिः।

एवं सर्वपदस्य पर्याप्तिसंबन्धेन बुद्ध्यवच्छिन्ने शक्तिः। सर्वेषु घटेषु द्रव्यत्वमित्यत्र घटपर्याप्तिभानं, सर्वेषु घटेषु रूपमित्यत्र व्यापकत्वे लक्षणा। कस्यापि रूपस्य सर्वघटवृत्तित्वाभावात्। सर्वेषु सत्त्वं प्रमेयत्वमित्यादौ भेदप्रतियोगिता-

नवच्छेदकत्वे लक्षणा । एवं सर्वेभ्यो दर्शपूर्णमासौ सर्वं ब्रह्मणे परिहरतीत्यादावपीति दिक् ॥

क्त्वाप्रत्ययस्य समानकर्तृकत्वे पूर्वकालत्वे च शक्तिरिति वैयाकरणाः ॥

नैयायिकास्तु भुक्त्वा व्रजतीत्यादौ भोजनोत्तरकालीनं व्रजनमिति बोधादुत्तरकालत्वे समानकर्तृकत्वे च शक्तिः । समानकर्तृकत्वं समभिव्याहृतधात्वर्थजनकव्यापारयोरेकनिष्ठत्वं, तेन रथो गत्वा तिष्ठतीत्यादिप्रयोगः । उत्तरकालत्वं च तात्पर्यविषयीभूताव्यवधानविशिष्टं बोध्यम् । तेनाद्य गत्वा श्वस्तिष्ठतीत्यादिप्रयोगः । मुखं व्यादाय स्वपितीत्यादौ समानकर्तृकत्वमात्रे सामानाधिकरण्ये वा लक्षणा । मुखं व्यादत्त इति वैपरीत्येन बोध इति कश्चित् । दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेत्यादौ त्वव्यवहितत्वभानमिति दिक् ॥ आयुधपदस्य युद्धसाधनत्वे शक्तिः । साधनत्वमात्रे लक्षणा । स्तोमपदस्य स्तोत्रसाधनऋक्समुदाये शक्तिः । त्रिवृदादिपदानामभ्याससाध्यनवत्वविशिष्टऋक्समुदाये शक्तिः । त्रिवृद्बहिष्पवमानमित्यत्रानभ्यस्ते लक्षणा । एवं पञ्चदशादिपदानां संस्थापदस्य तद्विषयकव्यापारोपरमे शक्तिः । आरम्भपदस्याद्यपदार्थे शक्तिरिति केचित् । आद्यप्रवृत्तौ शक्तिरित्यन्ये । आद्यत्वं तत्समानविषयकप्रवृत्तिध्वंसव्यधिकरणत्वम् । एवमन्यदूह्यम् ॥

इति श्रीगागाभट्टकृतभाट्टचिन्तामणौ शब्दखण्डः ॥

"औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धस्तस्य ज्ञानमुपदेशो व्यतिरेकश्चार्थे ऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात्" ।

एवं प्रत्यक्षादिलक्षणकथनेन तेषां धर्माधर्मप्रमायामकारणत्वमित्युक्तम् । इदानीं चोदनासूत्रप्रतिज्ञातस्य विधिप्रामाण्यस्य परीक्षा क्रियते । कारणदोषबाधकज्ञानरहितमगृहीतग्राहि ज्ञानं प्रमेति पूर्वमुक्तम् । विधिजन्यज्ञाने तथात्वमस्ति न वेति चिन्ता ।

तत्र पूर्वः पक्षः । नैतादृशप्रमाजनकत्व विधीनां संभवति, स्वर्गाद्यामुष्मिकफलकर्मबोधकानामपूर्वकल्पकार्थापत्तिरूपप्रमाणसापेक्षतया निरपेक्षतज्जनकत्वरूपप्रामाण्यासंभवात् । ऐहिकफलचित्रादिकर्मबोधकानामपि प्रत्यक्षादिप्रमाणान्तरेण बाधात् । नहि तत्रापि द्वारभूतादृष्टकल्पनं, मानाभावात् । कारीर्यादौ तात्कालिकफलदर्शनाद् हिरण्यधारणस्य भ्रातृव्यदुर्वर्णत्वजनने दृष्टद्वारत्वसंभवे तत्कल्पनायोगाच्च । अतो न बाधकराहित्यम् । स एष यज्ञायुधी यजमानो ऽञ्जसा स्वर्गं लोकं यातीति यज्ञायुधपदवाच्यस्यादिसंयोगविशिष्टस्य यजमानशरीरस्य दाहेन भस्मीभूतस्य स्वर्गलोकगमनवादस्याशक्यपरिहारः प्रमाणान्तरविरोधः । किं चात्र कारणदोषो ऽप्यस्ति । तथाहि । विधिस्थसोमादिपदानां स्वार्थेन संयोगतादात्म्यादिसंबन्धासंभवात् प्रत्यायकत्वं संबन्धः । तच्चायं शब्दो ऽस्य वाचक इति पुरुषान्तरोपदेशाधीनमेवार्थज्ञानम् । एवं च विधिवाक्यार्थज्ञानस्य पुरुषोपदेशाधीनत्वेन पुरुषाणां च भ्रान्त्यादिसंभवेन कारणदोषवत्त्वम् । न च पदपदार्थयोर्नित्यः स्वाभाविकः संबन्धः संभवति । प्रथमश्रवणे ऽप्यर्थप्रत्ययप्रसङ्गात् । आधुनिकैः पुरुषैरिदं पदमत्र शक्तमिति व्यवहारकरणाच्च । न चाधुनिकैः पुरुषैर्नित्यस्य संबन्धस्योपदर्शने ऽपि न तत्कल्पनमिति वाच्यम् । आधुनिकैरकल्पनेपि सर्गाद्यकालिकपुरुषे न तत्कल्पनासंभवः । न च सर्गादौ मानाभावः । "स ऐक्षत बहु स्यां प्रजायेयमिति" "नासदासीन्नो सदासी" दिति श्रुतेरेव मानत्वात् । तथा च सर्गादौ भगवता स्थावरं जङ्गमं जगद्धर्माधर्मौ च सृष्ट्वा व्यवहाराय तत्तच्छब्दानां तेनतेनार्थेन संबन्धं कल्पयित्वा धर्माधर्मप्रतिपादकपदे वेदान्कल्पयित्वा हिरण्यगर्भादिभ्यः प्रतिपादितास्तैरन्येभ्य इत्येवमुत्तरोत्तरं शब्दार्थप्रतीतिरिति ॥

सिद्धान्तस्तु प्रथमे श्रवणे ऽर्थप्रत्ययाभावस्य नित्यसंबन्धानवगममूलकत्वेनोपपत्तेरीदृशार्थकल्पने मानाभावात् । सर्गत एकरूपस्यानुभवसिद्धत्वेन सर्गादौ नाशाभावान्मन्त्रार्थवादेतिहासपुराणानामपि पौरुषेयसंबन्धापेक्षितया पौरुषेयतया च शाक्यग्रन्थवदतीन्द्रियार्थे प्रामाण्यासंभवेनाप्रमाणप्रतिपादितसर्गादेर्दुरापेतत्वात् । अतो न सर्गादिकाले पदपदार्थसंबन्धकरणं संभवति । किं च सर्वपदानामर्थानां च संबन्धसिद्धौ वाक्येन तत्संबन्धकरणं स्यात् । अज्ञातार्थसंबन्धकपदघटितवाक्येन तदसंभवात् । न चैवं श्रोतृणामप्रसिद्धसंबन्धत्वात्संबन्धविशेषकथनमप्यनुपपन्नमिति वाच्यम् । सतः संबन्धस्योपायाभावादज्ञातस्य वाक्येन ज्ञापनसंभवात् । वृद्धव्यवहारेणैव संबन्धज्ञानसंभवे तज्ज्ञापकवाक्यकथनस्यानावश्यकत्वाच्च । तस्माच्च पौरुषेयः संबन्ध इति संबन्धस्य नित्यतया पुरुषापेक्षा नास्तीति सिद्धं चोदनाप्रामाण्यम् । न च तथापि चित्रादीनामनन्तरफलादर्शनेन विसंवादादप्रामाण्यमिति वाच्यम् । शब्दोक्तसाधनत्वमात्रस्यापूर्वद्वारेण कालान्तरेपि तैलपानवत्संभवेनाविसंवादात् । अपूर्वद्वारकत्वस्याङ्गप्रधानमेलनान्यथानुपपत्त्या वाक्यार्थबोधे संसर्गलभ्यत्वात् । पशून्प्राप्तिमात्रस्याफलतया तदुपयोगस्य फलत्वेन तत्पर्यन्तस्यापि द्वारकल्पनावश्यंभावेनापूर्वबोधाच्च । अतो न विसंवादः । न च तथापि स एष यज्ञायुधीत्यत्र दृष्टविरोधादप्रामाण्यमिति वाच्यम् । शरीरश

रीरिणामत्यन्तभेदाभावेनैव तत्पदव्यपदेश्यस्य शरीरस्य यज्ञायुधैः परंपरया यज्ञायुधवत आत्मनः स्वर्गगमनलिप्सितभोगोत्पादविरोधाभावात् । फलवाचकफलभोक्तृवाचकपदयोः सामानाधिकरण्यस्य "ग्निं चिनुत ऋध्नोत्येव" "द्विरात्रेण यजते स्वर्गमेव लोकमेवे"त्यादौ बहुशो दर्शनात् । एवमत्रापि यजमानः स्वर्गं यातीत्युपपन्नम् । एवं संकल्पादेवास्य पितरः समुत्तिष्ठन्तीति संकल्पनिरूपितकर्तृत्वबोधकषष्ठ्या ऽऽत्मनः संकल्पं प्रति कर्तृत्वम् । न च व्यापकस्य स्पन्दो न संभवतीति वाच्यम् । प्रयत्नद्वारा प्रयोजकत्वसंभवात् । सर्वधात्वर्थस्य क्रियात्वेन तत्र कर्तृत्वसंभवाच्चेति । तस्मात्कारणदोषबाधकज्ञानरहिताग्रहीतग्राहित्वेन वेदप्रामाण्यम् । बादरायणग्रहणं पूजार्थम् ॥

नित्यस्तु स्याद्दर्शनस्य परार्थत्वात् ॥

ननु कथं पदार्थसंबन्धस्य नित्यत्वम् । वर्णानामनित्यत्वेन पदानामप्यनित्यत्वात् । तथाहि । वर्णा अनित्या, यत्नानभिव्यङ्ग्यत्वे सति प्रयत्नोत्तरमुपलभ्यमानत्वाद्, घटादिवदित्यनुमानेनानित्यत्वम् । न च स एवायं गकार इति प्रत्यक्षरूपप्रत्यभिज्ञाबलेनाभिव्यङ्ग्यत्वकल्पनमिति वाच्यम् । उत्पन्नो गकारो विनष्टो गकार इति प्रतीत्या प्रत्यभिज्ञाया एव जातिविषयत्वस्य कल्पनात् । अत एव कदा चित्तज्जातीयोयमिति प्रत्यभिज्ञोपपद्यते । अन्यथैकव्यक्तिकत्वेन तज्जातिरभावात्तादृशप्रत्यभिज्ञानुपपत्तिः । स्वरूपेण जात्युपस्थितौ सोयमिति प्रत्यभिज्ञा, जातित्वेन जात्युपस्थितौ तज्जातीयो ऽयमितीति विशेषः । किं च जात्यतिरिक्तस्यैकस्य मूर्त्तस्य युगपन्नानादेशोपलम्भो नास्तीत्यनुभवः । एवं च वर्णाना युगपन्नानादेशोपलम्भाद्भेदसिद्धिः । तस्मात्प्रत्यभिज्ञाबाधेनानित्यत्वसिद्धिरिति चेन्न ॥ अनभिव्यङ्ग्यत्वस्यासिद्धतया हेतोरसिद्धेः । प्रयत्नाभिव्यङ्ग्यत्वस्यैवाङ्गीकारात् । न च श्रोत्रनिष्ठग्रहणयोग्यताजनकसंस्कारोत्पादकत्वेन तन्निष्ठग्रहणप्रतिबन्धकदोषनिराकरणेन चाभिव्यञ्जकत्वे श्रोत्रस्याकाशाहंकारदिगन्यतमरूपस्य नित्यव्यापकशब्दस्य वा संस्कृतत्वात्सर्वग्रहणापत्तिरिति वाच्यम् अवच्छेदककर्णशष्कुल्यामेव संस्कारोत्पत्त्यङ्गीकारात् । उत्पत्त्यादिप्रतीतेरभिव्यञ्जकध्वनिस्वरादिविषयत्वेन प्रत्यभिज्ञाया जातिविषयकत्वायोगाच्च । न चानेकोत्पादादिप्रत्ययानां विषयभेदकल्पनमपेक्ष्य कस्याः प्रत्यभिज्ञाया एव विषयभेदकल्पन मुचितमिति वाच्यम् । उत्पादविनाशप्रत्ययवद्भेदाभेदप्रत्ययस्यापि नानात्वात् । भेदस्यान्योन्याभावव्यावर्तकधर्मादिरूपतया नानात्वेन तदभावप्रत्ययस्यापि नानात्वात् । ध्वनीनां भेदस्योभयसिद्धत्वेन गकारादिव्यक्तिकल्पनाधिक्याच्च ॥

के चित्तूत्पादविनाशप्रत्यययोर्भ्रान्तित्वकल्पने व्यञ्जकध्वनिनिष्ठयोस्तयोः परंपरासंबन्धेन वर्णनिष्ठ भानमभ्युपेयम् । तथा च परंपराघटकवायोरपि विषयतापत्त्या गौरवम् । प्रत्यभिज्ञाया गत्वगकारभेदविषयिण्या जातिविषयत्वकल्पनेपि नातिरिक्तविषयताकल्पनमिति लाघवमाहुः ॥

तदपि गकारादिव्यक्तितत्प्रागभावध्वंसकल्पनागौरवेण निरस्तम् ॥

चिन्तामणिस्तु तारत्वमन्द्रत्वविरुद्धधर्माध्यासेन प्रत्यभिज्ञाया न प्रामाण्यं संभवतीति जातिविषयत्वं तस्याः । तथाहि । सजातीयसाक्षात्कारप्रतिबन्धकतावच्छेदकतया तत्प्रतिबध्यतावच्छेदकतया वा गत्वादिव्याप्यनानातारत्वमन्द्रत्वादिजातिसिद्धौ पूर्वगकारापेक्षयोत्तरगकारो मन्द्र इत्यनुभवः पूर्वापरगकारयोरैक्ये न संभवति । अतो ऽस्ति गकारयोर्भेदः । एवं गकारनिष्ठशुकपुरुषजन्यतावच्छेदकवैजात्यभेदेनापि तद्भेदः । अन्यथा तच्छ्रवणे शुकाद्यनुमितिर्न स्यात् । अतः प्रत्यभिज्ञाया एव जातिविषयकत्वकल्पनमित्याह ॥

तदपि

'मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम्"

इत्यक्षरशिक्षाया मन्द्रत्वादिधर्मस्य स्वरनिष्ठत्वोक्तेरकिंचित्करम् ॥

अन्ये तु वर्णा ऽनित्यः । स्वाधिकरणनिष्ठाधेयतानिरूपकत्वसंबन्धावच्छिन्नव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकाभावप्रतियोगिगुणत्वात् । संयोगसंबन्धावच्छिन्नप्रतियोगिताकगगनपरिमाणाभावप्रतियोगिनि व्यभिचारवारणायाधेयतानिरूपकत्वसंबन्धावच्छिन्नेति । उभयाभावप्रतियोगिनि तत्रैव व्यभिचारवारणाय व्यासज्येति ईश्वरज्ञानस्य नाव्याप्यवृत्तित्वम् । संयोगाभावस्य न गुणत्वमिति । संयोगदृष्टान्तेनानित्यत्वमाहुः ॥

तदपि गुणत्वाभावेन हेत्वसिद्ध्या प्रत्युक्तम् । वर्णात्मकशब्दस्याकाशवद्व्यापकत्वेन द्रव्यत्वाङ्गीकारात् । सामान्यवत्त्वे सति मनोभिन्नेन्द्रियजन्यलौकिकप्रत्यक्षविषयत्वादिति हेतुस्त्वाकाशकालदिशां षडिन्द्रियजन्यप्रत्यक्षविषयत्वेनानैकान्तिकः । दृश्यते हि विशेषगुणसंबन्धित्वेनात्मनइव बाह्यविषयसंबन्धित्वेन कालादिप्रत्यक्षम् । इदानीं घटो ज्ञातो घटाकाशे ध्वनिरुत्पन्न इत्याद्यनुभवात् । अतो नानित्यत्वम् ॥

यत्तु वर्णानां नित्यत्वे युगपन्नानादेशोपलम्भो न स्यादित्युक्तम् । तन्न । आदित्योपलम्भवत्तदुपपत्तेः । एकस्यैवादित्यस्य दूरस्थतया सर्वैः स्वसांमुख्येन ग्रहणम् । एवं व्यापकवर्णानामपि तत्तद्ध्वनिभिस्तत्तद्देशाभिव्यक्तानां स्वसामीप्यान्मुखादि-

क्रमेण च ग्रहणमुपपन्नम् । तस्मान्नित्यः शब्दः । अनुमानं च नित्यः शब्दः, ध्वनिभिन्नत्वे सति श्रावणत्वात्, शब्दत्ववत् । अनेनैवानुमानेन वर्णानां द्रव्यत्वसिद्धिः । न चैवं सैवेयं गुर्जरीति प्रत्यभिज्ञानाद् ध्वनीनामपि नित्यत्वं स्यादिति वाच्यम् । रथन्तरादिगीतीनां नित्यताङ्गीकारेऽनिष्टापत्तेः । वर्णाभिव्यञ्जकध्वनीनामिवानित्यत्वाङ्गीकारात् । गुर्जर्यादीनां तु वर्णाभावेपि प्रतीयमानानां रथंतरादिवच्च गीतिरूपता । अतस्तेषामपि न बाधकम् । दर्शनस्य, उत्पत्त्यादिदर्शनस्य, परार्थत्वाद्,ध्वनिविषयत्वादित्यर्थः ।

उत्पत्तौ वा वचनाः स्युरर्थस्यातन्निमित्तत्वात् ॥

तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात् ॥

नन्वस्तु पदपदार्थयोस्तत्संबन्धस्य च नित्यत्वम् । तथापि वाक्यस्य वाक्यार्थप्रतिपादकत्वासंभवान्न प्रामाण्यं संभवति । तथाहि । न तावद्घटादिपदानां प्रत्येकं घटादिकर्मकत्वरूपवाक्यार्थप्रतिपादकत्वं संभवति । अनन्तवाक्यार्थसाधारणपदानां वाक्यार्थविशेषसंबन्धासंभवात् । एतेन पदसंघातरूपवाक्यस्य प्रत्यायकत्वमपास्तम् । तर्हि वाक्यस्य वाक्यार्थप्रतिपादकत्वासंभवान्न प्रामाण्यं संभवतीति चेद्,

अत्र वैयाकरणाः । कृष्णेहि रथेनेमित्यादौ वाक्ये पदरूपावयवविभागे मानाभावादेकारघटितानुपूर्वीकस्यागमनवाचकस्यान्न सत्त्वे मानाभावाच्च न पदसमुदायस्य वाक्यत्वं, किं त्ववयविरूपं, तस्यैव विशिष्टार्थे शक्तिः, स एव वाक्यस्फोटः । एवं च एकं वाक्यं सूक्ष्मं वाक्यं महद्वाक्यमित्याद्यबाधितसंख्यापरिमाणप्रतीतिरुपपद्यते । अन्यथा पदसमुदायस्य वाक्यत्वे समुदायस्य समुदाय्यपेक्षया भेदाभावात्तत्प्रतीत्यनुपपत्तिः । अतो वाक्ये शक्तिः । एवं घटेनेत्यादिपदे प्रकृतिप्रत्ययविभागे तदंशे च शक्तिकल्पने मानाभावादवयविरूपपदस्यैव शक्तिरूपः स्फोटः । एवं भवति पचतीत्यादौ भूधातुलडाद्युपस्थितौ मानाभावादानुपूर्वीविशिष्टवर्णानां शक्तिरिति वर्णस्फोट इत्याहुः ॥

तन्मन्दम् । विस्मृतपूर्ववर्णस्यान्तिमवर्णस्मृतिमतः पदार्थप्रत्ययाभाववत्पदार्थस्मृतिमतो विस्मृतपूर्वपदस्य वाक्यार्थप्रत्ययाभावापत्तेस्तत्तत्पदार्थस्मृतिवशेन पदानुमानावलम्बे मानाभावाच्च । किं चैवं पदार्थवद्वाक्यार्थोपि निर्भागः स्यात्, तदा

प्रसङ्गो बाधतन्त्रोहप्रदेशाधिक्रियागमाः ।
प्रयुक्तशेषभेदाश्च न कल्पेरन्निति स्थितिः ॥

इति । वाक्यस्य निरवयवत्वं तु पठ्यमानश्लोकार्थानवबोधे सति तदवयवपदतदर्थप्रदर्शनेन जायमानेन श्लोकार्थानुभवेन विरुद्धत्वात् प्रत्युक्तम् । पूर्वमज्ञाताया वाक्यशक्तेर्वाक्यार्थानुभवजनकत्वायोगात्पूर्वं ज्ञानकल्पने स्मारकत्वापत्तिः । वाक्यशक्तिज्ञानं तद्धेतुकवाक्यार्थानुभवश्चैकदा विरुद्धौ । एवं पदानामपि निरवयवत्वं प्रत्युक्तम् । धातुप्रत्ययविभागानभिज्ञस्य बोधापत्तेः । एवं वर्णस्फोटोपि स्फोटवर्णेषु शक्तिकल्पनगौरवमपेक्ष्य धातुप्रत्ययोपस्थापकत्वकल्पनालाघवेन निरसनीयः । धातुप्रत्ययानभिज्ञस्य यङन्तपदैः पदार्थानुपस्थितेश्च । एकत्वमहत्त्वप्रतीतिस्तु एको महान्धान्यराशिरितिवदौपाधिकी । अतो न वाक्यस्फोटरूपा वाक्यशक्तिरिति ॥

के चित्तु पदानामितरपदार्थान्विते शक्तिः । इतरपदार्थश्च तत्समभिव्याहारेण विशेषितोऽननुगत एव । एवं चाकाङ्क्षितयोग्यसंनिहितार्थाभिधायकानां पदानां वाक्यार्थप्रतिपादकत्वमित्याहुः ॥

गुरवस्तु कार्यान्वयस्य वाक्यार्थतया पदानामेव कार्यान्वितेऽनुभाविका शक्तिः । स्मारिका च जातिगुणादौ । अनुभावकशक्तिग्रहे च स्मारकशक्तिज्ञानस्य हेतुता, तेनोपपत्तेर्न वाक्यार्थे शक्तिः । तथाहि । प्रयोज्यवृद्धप्रयोजकवृद्धव्यवहारेण शक्तिं गृह्णन् बालः प्रयोज्यवृद्धप्रवृत्तेश्च मातृस्तन्यप्रवृत्तिदृष्टान्तेन कार्यताज्ञानजन्यत्वमनुमाय तज्जनकापेक्षायां प्रयोजकवृद्धवाक्यानन्तर्यात्तस्यैव हेतुतां ज्ञात्वा तत्रत्यपदानां कार्यान्विते शक्तिं जानाति, तत आवापोद्वापाभ्यां तत्तत्पदार्थे शक्तिं जानन्नपि पूर्वावधृतां कार्यान्वितशक्तिं न बाधते । एवं च पदानां कार्यान्वितवाचकत्वादन्वयेपि शक्तिरित्याहुः ॥

एतन्मतद्वयमपि इतरान्विते कार्यान्विते वा तस्यापि शक्तिग्रहस्य गौरवप्रतिसंधानदशायां चन्द्रतारकापरिमाणज्ञानवद् बाधसंभवात् कार्यवाचकपदसमभिव्याहाराभावे शाब्दबोधानुदयप्रसङ्गाच्च न युक्तम् ॥

नैयायिकास्तु घटत्वप्रकारकघटविशेष्यकप्रत्यक्षादौ समवायादेरिव घटकर्मप्रकारकानयनविशेष्यकशाब्दबोधेपि निष्ठत्वादेः संसर्गतया भानं संभवति । प्रकारविशेष्ययोरेव शाब्दत्वात्संसर्गस्योभयसमभिव्याहारगम्यत्वात्स संसर्गमर्यादालभ्य इत्याहुः ॥

सिद्धान्तस्तु घटमानयेत्यादौ घटपदोपस्थितघटसामान्यस्यानयनान्वयबोधासंभवाद् घटानयनविशेष एव वाक्यार्थः, स च लाक्षणिकः, अतो लाक्षणिक एव वाक्यार्थः । तत्र च नामसु कारकविशेष्यता सर्वत्र च भावनाविशेष्यतेति नियमः स्मृतिगम्यः । एतेनाख्यातसमभिव्याहारे प्रथमान्तार्थविशेष्यकबोधनियमं वदन्तस्तादृशनियमे मानाभावेन परास्ताः । नहि प्रथमान्तपदार्थस्य प्राधान्यबोधकं स्मृत्यादि मानमस्ति । वाक्यार्थसंसर्गस्योभयविधत्वेन विनिगमनायोगात् । तथा च

लाक्षणिकवाक्यार्थे पदसमुदायरूपवाक्यस्य पदजन्यपदार्थोपस्थितिद्वारा जनकत्वमिति वाक्यस्य वाक्यार्थबोधे प्रामाण्यमिति युक्तं विधीनां धर्मे प्रामाण्यम् ॥

वेदांश्चैके संनिकर्षं पुरुषाख्याः ॥

उक्तं तु शब्दपूर्वत्वम् ॥

नन्वस्तु पदानां पदपदार्थसंबन्धस्य च नित्यत्वं, वाक्यार्थप्रमितेश्च वाक्यजन्यतया विधीनां प्रामाण्यं, तथाप्यानुपूर्वीरूपवेदानां नित्यत्वासंभवात्काठकादिसमाख्यया तत्कर्तृकत्वनिश्चयाच्च पौरुषेयत्वं संभवति । पुरुषे च दोषसंबन्धसंभावनया न प्रामाण्यं संभवति । तथाहि । वेदः प्रागभावप्रतियोगितावच्छेदकधर्मवान् वाक्यत्वाद्, भारतवदित्यनुमानेन पौरुषेयत्वम् । न च सामान्यधर्मस्य प्रागभावप्रतियोगितानवच्छेदकत्वेन वेदत्वस्यातथात्वादसिद्धिरिति वाच्यम् । वेदत्वस्यातादृशत्वेपि इदानींतनवेदत्वादीनां तदवच्छेदकतया नासिद्धिः । अन्यथा घटादीनामपौरुषेयत्वप्रसङ्गः । वस्तुतो वेदत्वं प्रागभावप्रतियोगितावच्छेदकं कार्यवृत्तिधर्मत्वात् । तद्घटत्ववदित्यनुमानेन वेदत्वस्यापि तथात्वात् । अतो वेदानां पौरुषेयत्वम् । एवं च काठककालापकादिसमाख्या बवरः प्रावाहणिरकामयतेत्याद्यनित्यसंयोगोप्युपपद्यते । तदुक्तं, संनिकृष्टकाला वेदा इदानींतना इति । तत्र चास्मदादीनां कर्तृत्वासंभवाद्व्यासादिवदीश्वर एव कर्त्ता । एवं च "त्रयो वेदा अजायन्तेत्यग्नेर्ऋग्वेदो वायोर्यजुर्वेद" इत्यादिदर्शनमुपपद्यते । अतो न स्वतः प्रामाण्यमिति चेत्, न । उक्तानुमानस्य वेदत्वं न प्रागभावप्रतियोगितावच्छेदकं सामान्यधर्मत्वादित्यनुमानेन सत्प्रतिपक्षितत्वात् । प्रतियोगितावच्छेदकभेदाभावेन सकलघटप्रागभावैक्ये प्रतियोग्युत्पत्तिनाश्यत्वासंभवेन च नित्यत्वापत्तेः । इष्टापत्तौ तूत्पन्नस्य पुनरुत्पत्तिप्रसङ्गः । प्रागभावनाशस्वीकारे घटानुत्पत्तिप्रसङ्गः । अवयवशस्तन्नाशस्वीकारो निरवयवत्वादेवायुक्तः । प्रतियोगिभेदेनाभावनानात्वकल्पने संसर्गाभावान्योन्याभावयोरैक्यप्रसङ्गः । अतो न सामान्यधर्मस्य प्रागभावप्रतियोगितावच्छेदकत्वम् । प्रथमानुमानमपि वेदाः प्रागभावप्रतियोगितावच्छेदकधर्माभाववन्तो, ऽस्मर्यमाणकर्तृकत्वाद्, आत्मवदित्यन्वयिना ऽस्मर्यमाणकर्तृकवाक्यत्वादिति व्यतिरेकिणा च सत्प्रतिपक्षितम् । वेदशून्यकालाभावेन वेदप्रागभावासिद्धेश्च । तथाहि । पूर्वकालो न वेदशून्यः कालत्वाद्, वर्त्तमानकालवत् । पूर्वकालीनं वेदाध्ययनं गुर्वध्ययनपूर्वकं, वेदाध्ययनत्वाद्, इदानींतनवेदाध्ययनवत् । वेदा न पौरुषेया, अस्मर्यमाणकर्तृकत्वादित्यनुमानेनापौरुषेयत्वसिद्धेश्च । नन्वस्मर्यमाणकर्तृककूपादौ व्यभिचारः । तत्रापि सामान्यतः कर्तृस्मरणात् । अतः पौरुषेयत्वासंभवादपौरुषेयत्वम् । एवं "वाचा विरूपनित्यये"ति श्रुतिः ।

"स्वयंभूरेव भगवान् वेदो गीतस्त्वया पुरा ।
शिवाद्या ऋषिपर्यन्ताः स्मर्त्तारो ऽस्य न कारकाः" ॥

इति स्मृतिश्चोपपद्यते । काठकादिसमाख्या तु श्रुतिस्मृतिविरोधात्प्रवचननिमित्तत्वेनोपपादनीया । अग्नेर्ऋग्वेद इत्यादिश्रुतिरपि अग्निना ज्ञापित इति व्याख्येया । अनित्यसंयोगो ऽपि प्रवाहनित्यतामादायोपपादनीयः ॥ प्रवाहनित्यत्वं च सजातीयप्रागभावसमव्याप्तसजातीयध्वंसकत्वरूपम् । यद्वा बहुक्षीरादिवाक्यवदसत्यकथादिना विधेयस्तुतिपरत्वेनोपपादनीया । अतो ऽपौरुषेया वेदा इति सिद्धं वेदप्रामाण्यम् ॥

विश्वामित्रकुलध्वजः समभवद्यो भट्टनारायण-
स्तद्वंशस्य करीरतां दधदयं विश्वेश्वराख्यः कृती ।
गागाभट्ट इति प्रथां दिनकरात्प्राप्तः पितुर्लालनात्
तद्ग्रन्थे प्रथमादिमोङ्घ्रिरभवच्छ्रीभाट्टचिन्तामणौ ॥ १ ॥
अहो बहु परीक्षितुं निकषणीयमेतन्निजे
न मत्सरकदुष्णिते कषशिलानिभे चेतसि ।
परं तु हृदयालुभिः खलु दयालुभिः स्थाप्यतां
महाद्भुतरसाम्बुधौ निजकृपानिधौ मद्वचः ॥ २ ॥

इति भट्टकुलावतंसमीमांसकमहामहोपाध्यायश्रीगागाभट्टकृतभाट्टचिन्तामणौ प्रथमाध्यायस्य प्रथमः पादः ॥

॥ पूर्णोयं भाट्टचिन्तामणेस्तर्कचरणः ॥

सो ऽयं भाट्टमतोपपादनप्रवणो भाट्टचिन्तामणेस्तर्कपादः काशीविद्यासुधानिधेर्नवभिरङ्कैः प्रकाशितो विद्वच्चकोरेषु चन्द्रिरीभूय मदीयान् संशोधनपरिश्रमान् सफलयत्विति विनयेन परमेश्वरं प्रार्थयते ॥

काशीस्थराजकीयपाठशालायां व्याकरणाध्यापको बालशास्त्री ॥

---

## ॥ अथ गोपाललीलाख्यकाव्यस्य ॥

॥ उपक्रमवर्णनम् ॥

वदन्ति किल गोकुले वसति केऽपि वृन्दावने
लसन्तमगदन् परेऽथ मथुरागतं केचन ।
अहं तु सकलस्थले सुलभतां गतं ध्यायता-
मचिन्त्यविभवं प्रभुं हृदि वसन्तमाराधये ॥ १ ॥

अथेदं गोपाललीलाख्यं काव्यं खवेदशरशशिमितविक्रमसमासमीपलब्धजनुषा तैलङ्गदेशगतकाङ्करग्रामनिवासिना लक्ष्मणभट्टात्मजेनेलम्मगारुनामकजननीजठररत्नाकरजेन भारद्वाजगोत्रेण कृष्णयजुःसंबन्धितैत्तिरीयशाखेन सोमयाजिना रामचन्द्रेति सुगृहीतनामधेयेन कविरत्नेन भट्टेन कृष्णकुतूहलाद्य-

नेकसत्काव्यनिर्मात्रा विद्वद्वरेण विरचितं समयचूडामणिपरिशोधितानेकतत्कृतकाव्यसुधाकरत्वेऽपि दैववशादेकं काव्यामृतं महाशयवरहरिश्चन्द्रश्रेष्ठिनः सरस्वतीसद्भृतस्तत्कृपया समासाद्य तत एवच सर्ववृत्तान्यवगत्य विदुषामवलोकनक्षमं चेदं सुविभाव्य काशीविद्यासुधानिधिनामनि पण्डितपत्रे मुद्रणाय प्रार्थितेन विद्वज्जनहृदयकमलप्रसक्तिभास्वता सुविदुषा महाशयेन श्रीमद्ग्राफसाहेबवर्येण प्रभुवरेण दत्तानुमतिकः सकलसहृदयबुधवरचेतःकुतूहलाय तत्तद्देशेषु प्रचिकाशयिषया सम्प्रति प्रतिपादितवरसुनामनि पत्रेऽस्मिन् मुद्रयितुं प्रवृत्तोऽस्मीति ।

अयं किल रामचन्द्रकविः स्वजन्मभुवि तैलङ्गदेश एव व्याकृतिकाव्यसाहित्यादिविद्या अर्जयित्वा पुरुषोत्तमक्षेत्रमागत्य ज्येष्ठभ्रातुर्वल्लभाचार्याच्छराग्निबाणशर्मितविक्रमहायनजातजन्मनो रामानुजाचार्यविष्णुस्वामिमध्वाचार्यनिम्बार्काचार्यप्रवर्तितानां क्रमेण श्रीरुद्रमाध्वसनकोपपदानां यथाक्रमं विशिष्टाद्वैतशुद्धाद्वैतशुद्धद्वैतद्वैताद्वैतमतसंबन्धिनां सुप्रसिद्धानां चतुर्णां वैष्णवसंप्रदायानां मध्ये विष्णुस्वामिशिष्यपरम्परागतसप्तशततमशिष्यानन्तरजबिल्वमङ्गललब्धविष्णुस्वामिमतप्रवर्तकाद्भागवतादिव्याख्याकर्तुः प्रस्थानत्रयभाष्यनिर्मातुर्दक्षिणस्यां दिशि कृष्णानामनदीतीरे विद्यानामधेयनगरे कृष्णदेवाभिधराजराजानुमत्या वैष्णवैराचार्य इति कृतां पदवीमभिषेकपुरःसरं प्राप्तवतः सकाशात् सर्वाणि शास्त्राणि मतानि च समधीत्य ज्येष्ठभ्रात्रा तेन वल्लभाचार्येणोपयमनार्थं बोबोध्यमानोऽपि विरक्तप्रकृतिकतया तदसंपाद्यैवायोध्यायामागम्य संन्यासीभूय कालक्रमेण परमधाम जगामेति ।

अस्य वल्लभाचार्यस्य संप्रदाये जागरूका वल्लभीयगोस्वामिनाम्ना प्रसिद्धा अद्यापि वैष्णवा बहव उपलभ्यन्ते ।

एतन्मते शुद्धाद्वैते जीवपरमेश्वरयोः सेवकसेव्ययोरंशांशिभावो जलबिन्दुजलाशययोरिव, सर्वं चेदं दृश्यजातं परमेश्वरादाविर्भवति, तमेव लूतातन्तुरिवाप्येति च, मायिकगुणरहितः परमेश्वरः श्रीकृष्णो भगवानुपास्यदेवः, एतदुपासनयैव सर्वलोकोपरितनगोलोकप्राप्त्यावानन्दाविर्भावान्मोक्षो नान्यदेवोपासनया, अन्यदेवोपासनापरश्रुतयस्तु श्रीकृष्णविषयकपरानुरागप्राप्तिद्वारा परम्परया मोक्षसाधिकाः, माध्वमते शुद्धद्वैते जीवः कदापि नेश्वरभावमापद्यतेऽस्मिन् मते तु जीवः श्रीकृष्णाख्य एव परमेश्वरे जलबिन्दुर्जलाशय इवाभेदभावमापद्यत इत्यलमतिप्रसङ्गेनेति शिवम् ॥

॥ सांख्यशास्त्रप्रधानाध्यापको बेचनरामशर्मा ॥

१ ब्रह्मेति पाठान्तरम् ।

## ॥ अथ गोपाललीलाकाव्यस्य ॥

॥ प्रथमसर्गारम्भः ॥

शुभममितमचिन्त्यचिद्विचित्रं
श्रुतिशतमूर्धनि केशपाशकल्पम् ।
दिशतु किमपि धाम कामकोटि-
प्रतिभटदीधिति वासुदेवसंज्ञम् ॥ १ ॥

वहति शिरसि नागसंभवं यः
स्फुटमनुरागमिवात्मभक्तियुक्ते ।
कटतटविगलन्मदाम्बुदम्भ-
स्रितकरुणारसमाश्रये गणेशम् ॥ २ ॥

कविजनरसनाग्रतुङ्गरङ्ग-
स्थलकृतलास्यकलाविलासकाम्या ।
कृतिषु सपदि वाञ्छितं यथेच्छं
मयि ददती करुणां करोतु वाणी ॥ ३ ॥

इह विदधति भव्यकाव्यबन्धान्
भुवि यशसे कवयस्तदाप्नुवन्ति ।
इति भवति ममापि काव्यबन्धे
व्रजन इवाधिगिरि स्पृहातिपङ्गोः ॥ ४ ॥

मयि विदधति काव्यबन्धमन्याः
स्तवमथवा पिशुनाः सृजन्तु निन्दाम् ।
अहमिह न बिभेमि कीर्तनीयं
कथमपि कृष्णकुतूहलं मया यत् ॥ ५ ॥

चितिरहितविषभीषणैर्विषण्णा
खलवचनैर्यदरुंतुदैः सदैव ।
तत उचितमसदुरुक्तिदोषा-
द्भयमपहाय सतां कृतेर्विधानम् ॥ ६ ॥

इह विधिवदलंकृतं कुलं ते-
र्जनुरपि येश्चरितं हरेरवर्णि ।
फलमुचितमिदं वदन्ति लोक-
व्यवहृतिमात्रमदः फलं न वाचाम् ॥ ७ ॥

प्रबलतरकलिप्रलेपशुद्धि-
र्भवति हृदः किल नेतरैरुपायैः ।
तदिह किमपि काव्यमारभे य-
त्कृतिसमयेऽपि हरिस्मृतिर्मम स्यात् ॥ ८ ॥

यदि कृतिरतिशोभनान्यदीया
विजहतु तत् कृतिमात्मनः किमन्ये ।
प्रभुगृहकलमान् विलोक्य हन्त
त्यजतु कथं निजकोद्रवान् दरिद्रः ॥ ९ ॥

मणिगृहकिरणैरनेकवर्णै-
स्त्रिदशपथं सततं विचित्रयन्ती ।
जयति हरिहिता पुरीगरिष्ठा
भुवि मथुरा विधुवंशराजधानी ॥ १० ॥

रविदुहितृजले हरेर्विहारं
तदवसरे चरितं च संस्मरन्तः ।
सपदि जहति यत्र मोदपूर्णा
भवभयमश्रुजलप्लुता महान्तः ॥ ११ ॥

निगमनिवहगम्यमात्मतत्त्वं
स्फुरति कदाचन कष्टतोऽन्यतीर्थे ।
भवति यदधिवासमात्रभाजः
करकलितेव जनस्य मोक्षलक्ष्मीः ॥ १२ ॥

प्रकृतिपरमलेपमद्वितीयं
पुरुषमुदाहरति श्रुतेः शिरस्त्वाम् ।
इति नुवति जने जनार्दनः स्वं
प्रकटयति स्वयमेव यत्र रूपम् ॥ १३ ॥

सुकृतिन इव शारिकाशुकाद्या
हरिचरितानि गृहे गृहे गृणन्तः ।
पुरत इव विधाय कृष्णचेष्टां
भवनगतान् रमयन्ति यत्र बन्धून् ॥ १४ ॥

लयसमयघनध्वनिं रथानां
प्रतिपथमुत्थितवान् महानिनादः ।
स्मरयति किल विस्मृतं चिराय
त्रिदिवगतानपि यत्र देववर्यान् ॥ १५ ॥

विहसति शतकोटिमात्रपात्रं
हरिमपि या निवसद्धनाभिवृद्ध्या ।
प्रियमिह दधती श्रिया निवासं
भुवि नगरी न गरीयसी यदन्या ॥ १६ ॥

वरमरकतपङ्क्तिकान्तिपूरैः
प्रभवति यत्र सदैव तोरणश्रीः ।
स्फुरति पृथुमहेन्द्रनीलमाला
तपनसुतेव यदीयवप्रकाञ्ची ॥ १७ ॥

निरवधि निगमान्तचिन्तयापि
क्वचन कदाचन यत् कथंचिदापि ।
तदनुदिनमखण्डमात्मतत्त्वं
सकलजनैर्नयनैरलुण्ठि यत्र ॥ १८ ॥

कवय इव समग्रमर्थतोऽर्थं
व्यवहृतये तुलयानुयोजयन्तः ।
दिवमिव शतशोऽधिशेरते यां
वणिज उपात्तबृहत्पदप्रयोगाः ॥ १९ ॥

आदिकुलकम् ।

नृपतिरिह बभूव शूरसेनः
स किल वसन्निह नीवृतः समग्रान् ।
अभुनगनुमतो विभुर्यदूनां
त्रिदिवमिव प्रभुरध्वरांशभाजाम् ॥ २० ॥

इह कुहचिदनेहसि प्रयच्छन्
वसु विपुलं वसुदेव ऊढभार्यः ।
निरगमदनुयाति कंसमुख्ये
प्रणयवशात् सह सूर्यया रथेन ॥ २१ ॥

अथ रथ उपविश्य सारथित्वं
प्रभुरपि तत्र तयोश्चकार कंसः ।
पथि कियति परागतेऽन्तराले
वियति विशिष्य विदेहवागवादीत् ॥ २२ ॥

प्रणयिमिषमिदं विषं प्रतीत्य
त्यज मिथुनं भज मात्र सारथित्वम् ।
ध्रुव इव भविताष्टमोऽस्य गर्भो
नृप तव मृत्युरिहाचरोपचारम् ॥ २३ ॥

विषमिदमुपदीकृतं विधात्रा
बत कथमित्यशरीरवाक्प्रतीतः ।
असिधर उपचक्रमे स्वसारं
सपदि निहन्तुमनन्तरं व्रसन्तीम् ॥ २४ ॥

निजमतिबलपौरुषादि यावत्
कथमपि रक्षणमेव युक्तमस्याः ।
इतिकृतधि जगाद शौरिरेनं
निजसुतमृत्युविपर्ययादिशङ्की ॥ २५ ॥

इह निधनमवश्यमस्ति जन्तोः
स्वयमुपयाति न किं त्विदं निमित्तात् ।
स्वसुरहह वधो निहन्ति लोको
बत सुतजन्मविशङ्कितचेतसस्ते ॥ २६ ॥

जहि यदि तनया भवेयुरस्या
जहिहि नयस्व किमेनयापराद्धम् ।
इति मृदुवचनैर्वचं निरस्य
स्वयमविशन्नृपसद्म तेन सार्धम् ॥ २७ ॥

अथ कथमपि याति कालचक्रे
व्यजनयदष्ट सुतान् सकन्यकान् सा ।
प्रथमसुतममीषु कीर्तिमन्तं
सपदि समर्प्य विषीदति स्म शौरिः ॥ २८ ॥

मम तव तनयैर्न सप्तभिः स्या-
न्निधनमिदं चरमेण तन्नयैनम् ।
यदुतिलक युवां स सत्यशीलौ
विहरतमभ्रममित्युवाच कंसः ॥ २९ ॥

अयमिव कुशली ममापरे स्युः
सदितरवाचि कदापि विश्वसेत् कः ।
हरिरिह शरणं प्रतिक्रियायै
प्रभवति यः सहसेत्यमंस्त शौरिः ॥ ३० ॥

व्रजनिवसतयस्तदीययोषा
अपि वसुदेवमुखाश्च वृष्णयो ये ।
इह सकपटदेवतावतारा
इति गदितुं मुनिरभ्यगात् स कंसम् ॥ ३१ ॥

मुनिभिरनुगतं परात्मतत्त्वं
प्रतिपदपारकृपारसोर्मिसिक्तैः ।
स्वरपरिचितमूर्च्छनां नभस्व-
द्गणितगुणां महतीं विभावयन्तम् ॥ ३२ ॥

अतिविमलतया स्फुरन्तमन्त-
र्बहिरिव मौक्तिकवद्गुणानुबन्धान् ।
उडुमिलितविधूपमां नयन्तं
ग्रथितघटितस्फटिकाक्षमालमास्यम् ॥ ३३ ॥

निदधतमलिनीलमन्तरङ्गे
निगमशिरोमिलदिन्द्रनीलभासम् ।
रविमिव ककुभो विभासयन्तं
त्रिदशमुनिं गगने ददर्श कंसः ॥ ३४ ॥
कुलकम् ।

अहिवरविनमत्सहस्रमूर्ध-
स्वबलधृतातिगरिष्ठभूमिभारम् ।
नरपतिरुदतिष्ठदासनात् स्वा-
दुपगतमीक्ष्य मुनिं चचाल च द्राक् ॥ ३५ ॥

अथ सपदि सपर्ययार्चयित्वा
त्रिदशमुनिं रुचिरासनोपविष्टम् ।
कृतविनयगिरा निरासनः सन्
प्रणतशिरा नितरां जगाद कंसः ॥ ३६ ॥

अघमिव हृदये तमोऽपि हत्वा
मुदमिव मङ्गलमङ्गिनां तनोति ।
विषयविषविषक्तमानसानां
प्रभवति किं न मुने त्वदीक्षणेन ॥ ३७ ॥

त्वमसि किल निधानमागमाना-
मनुभयसंविदपास्तभेदबुद्धिः ।
तदहमुपगतं मुने भवन्तं
क्षणमपि नोज्झितुमुत्सहे दयालुम् ॥ ३८ ॥

रविरिव महसे प्रदीपमल्पं
न परमुपैति हिताय पूर्णकामः ।
भवनमनुजिघृक्षया ममागा
न परमिहास्ति तवागमे निमित्तम् ॥ ३९ ॥
कुलकम् ।

सविनयमिति कंसमुक्तवन्तं
प्रणयरसेन महर्षिरप्यवोचत् ।
अपसरतु सभा तवास्ति किंचि-
द्यदुचितमत्र निवेदनीयमाप्तैः ॥ ४० ॥

विधिवदहमिहार्चितस्त्वया तत्
परमहितं भवते ब्रवीमि तुष्टः ।
नृप निजजनकेऽपि बन्धुबुद्ध्या
क्वचन न विश्वसिहि स्वभावशत्रौ ॥ ४१ ॥

मम वचनमिदं प्रतीहि तात-
स्तव भवति दुर्मिलो न तूग्रसेनः ।

कथमहह नरात् त्वमल्पसत्त्वा-
ज्जनितमहेन्द्रमहाभयोऽजनिष्ठाः ॥ ४२ ॥

यदव इह नृपाः सवृष्णयो ये
तव सुहृदश्च त एव देवतांशाः ।
त्वमपि पुनरभूः स कालनेमि-
र्हरिरपि हन्तुमुदेति देवकीतः ॥ ४३ ॥

प्रथममयमसन्निहोपदेष्टा
मुनिरपि कोऽष्टम एष्विति प्रतीतः ।
विनिहतसुतषट्क औग्रसेनि-
र्निगडयति स्म स दम्पती तदुक्त्या ॥ ४४ ॥

स्वनिधनभयतः स उग्रसेनं
सपदि बबन्ध च बन्धुतां व्यरौत्सीत् ।
गतवति विषयान्तरं स्ववंश्ये
धरणिमभुक्त स मागधैकबन्धुः ॥ ४५ ॥

क्व शुभमतिरुदेतु हेतुवादाः
क्व नु यदि तद्भवितव्यमेवमेव ।
गत इति किल सप्तमं च गर्भं
बलजननीमनयन्मुकुन्दमाया ॥ ४६ ॥

गतवति समये कियत्यथैवं
हृदि विनिविश्य हरिः कदापि शौरेः ।
अभजत किल देवकीशरीरे
नुतवति धातरि गर्भगोललीलाम् ॥ ४७ ॥

द्युतिरजनि जगन्निवासमातु-
र्वपुषि विशिष्य दिने दिने तदानीम् ।
विदितनिजलयो विलोक्य तां स
व्यधित जनानवनाय सावधानान् ॥ ४८ ॥

मुनिवसुवसुदेवदेवकीभ्या-
मुडुनि विधेरसिताष्टमीनिशीथे ।
ध्वनति जलधरे बुधे नभस्ये
निगमरहस्यमगम्यमाविरासीत् ॥ ४९ ॥

क्वचिदजनि तदैव नन्दपत्न्या-
मपि तनया जगदीशयोगमाया ।
श्रितगिरिरधुनापि कर्णतीर्थे
निवसति या किल विन्ध्यवासिनीति ॥ ५० ॥

दिवसकरसहस्रभूरिभासं
हृदि शुभकौस्तुभशोभमर्भकं तम् ।
मुकुटघटितवज्रसेन्द्रचापं
जलदरुचिं कनकोरुकुण्डलाढ्यम् ॥ ५१ ॥

मृदुलभुजचतुष्टयाम्बुजायं
स्फुरदसिशङ्खगदोरुचक्रचापम् ।
कनकनिभपटं पयोजनेत्रं
मणिमयकङ्कणकिङ्किणीकलापम् ॥ ५२ ॥

स्मितमितवदनं रमानिवासं
प्रमदवशो वसुदेव ईक्षते स्म ।
अयुतमथ ददौ गवां द्विजेभ्यो-
ऽस्तुत च हृदा स गदाधरं तदानीम् ॥ ५३ ॥

त्रिभिर्विशेषकम् ।

प्रमदशतपरंपरात्मरूपः
प्रकृतिपरस्त्वममेयभूमसीमा ।
मम यदशुचिनोऽद्य चक्षुषोऽभू-
रतिथिरयं खलु पूर्वपुण्यपाकः ॥ ५४ ॥

त्रिगुणमयमिदं जगद्विचित्रं
जनिसमये निजमाययेश सृष्ट्वा ।
स्फुरणरयवशादनुप्रविष्ट-
स्तदनु विभासि विनाप्यनुप्रवेशम् ॥ ५५ ॥

य इह भवहिताय मत्स्यकूर्मा-
द्यवतरणानि करोति स त्वमेव ।
क्षितिभरमपहन्तुमेतदीयं
त्वमुदरमीश्वर मायया समागाः ॥ ५६ ॥

समजनि तव जन्मना सुखं नौ
व्यवसितिरस्य खलस्य शोकहेतुः ।
तव जननमसौ निशम्य धन्व-
न्नसिमुपयास्यति तद्विभोऽवधेहि ॥ ५७ ॥

स्तवमथ जननी सुतस्य तेने
भगवत उत्तमपूरुषस्य चित्ते ।
अभयद परिपाहि कंसभीतौ
त्वदवरजनयजातशोकतप्तौ ॥ ५८ ॥

त्रुटिलवघटिकादिसंवदन् नो
प्रभवति ते किल काल एष चेष्टा

तदगुणमधिकारिणं भवन्तं
ध्रुवमपि वेदशिरोविदो वदन्ति ॥ ५९ ॥
क्वचिदपि किल कालसर्पभीत्या
भजति न जातु शुभं पलायमानः ।
स्वपिति तव यदृच्छयाप्य योऽङ्घ्री
सपदि स एव परास्तमृत्युशङ्कः ॥ ६० ॥
भृतिरियमपि संसृतेर्दुरन्ता
यदिह भजन्ति न जन्तवस्त्वदङ्घ्रिम् ।
यदि भवति भवन्ति भक्तियुक्ता-
श्चरदचरात्मनि किं तदास्ति चिन्त्यम् ॥ ६१ ॥
मम सुकृतमिदं विडम्बनं ते
यदि भगवञ्जठरेऽसि मेऽवतीर्णः ।
अतिनरमुपसंहर स्वरूपं
न भवमसन् भवतः स वेत्तु मतः ॥ ६२ ॥
विफलितभवनप्रदीपधामा-
वददिति कंसरिपुः पुरः स्वमातुः ।
प्रथमजनुषि पृश्निरन्यजन्म-
न्यदितिरभूरधुनासि देवकी त्वम् ॥ ६३ ॥
स्मरतु च भवती जनिं तृतीया-
मिति पुरतस्तव दर्शितं स्वरूपम् ।
सुत इति सततं मम स्मरन्तौ
गतिरतिधन्यतमाशु लप्स्यते वाम् ॥ ६४ ॥
गमय पितरितश्च मां यशोदां
द्रुतमधुनैव सुतामिहानयास्याः ।
इति तमुपदिशन् यथान्यबालोऽ-
जनि त्रिभुरेष पुनस्ततः प्रतस्थे ॥ ५५ ॥
झटिति विघटिते स्वयं कपाटे
कटति घने चलिते जगत्त्रयेशे ।
ध्वनितमृदुमृदङ्गमङ्गलानि
स्तनितमिषेण पयोमुचः प्रचक्रुः ॥ ६६ ॥
निजफणमणिदीपदर्शिताध्वा
फणिपतिरन्वचलन्निवारिताम्बुः ।
व्यरुचदिनसुता स्रुतिं ददाना
मरकतवेदिकयोर्द्वयीव भिन्ना ॥ ६७ ॥

सुतमगमयदेष नन्दपत्नीं
स्वपति जने लघु तत्सुतामनैषीत् ।
न्यधित निजकलत्रसंनिधाने-
ऽरुददथ सा सहसा जनोऽप्यबुद्ध ॥ ६८ ॥
रुदितविदितमृत्युजन्मभीतः
सपदि पराकृतदेवकीकराब्जः ।
दृषदुपरि शिशुं विकृष्य कंसो-
ऽक्षिपदथ सेति दिवि स्थिता बभाषे ॥ ६९ ॥
नृशंस मम शंस का कृतिरकारि कंस त्वया
स्वसुः कृपणचेतसो बत मुधा सुतां मा वधीः ।
निहन्तुरपि हन्त ते क्वचन जन्म जातं यतः
क्षमो नियतिलङ्घने न खलु कोऽपि कोपाज्ज्वरः ॥७०॥

इति श्रीमल्लक्ष्मणभट्टात्मजश्रीरामचन्द्रभट्टविरचिते गोपाललीलाख्ये महाकाव्ये प्रथमः सर्गः ॥ १ ॥ :: ::

## ॥ अथ गोपाललीलाकाव्यस्य ॥

॥ द्वितीयसर्गारम्भः ॥

अथ शुश्रुवानिति स कन्यकागिरं
चिरविह्वलः स्वकृतदोषशान्तये ।
परिसान्त्वयन् निगडतो विमोच्य तौ
विनयानतो विकल इत्यवोचत ॥ १ ।
भगिनि स्वमृत्युभयतो यदल्पधी-
स्तव बालकान् निहतवानहं बहून् ।
तदवेहि दैवकृतमन्यथा कथं
मम निर्दयत्वमतिमान्यबन्धुषु ॥ २ ॥
बत का गतिर्मम भवेत् सखिद्रुहः
स्पृहणीयबन्धुशिशुघातपातकात् ।
अथवा युवां हृदि न शोचतं क्वचि-
न्निजकर्मभुग्यत उपैत्यपैति च ॥ ३ ॥
प्रमदो विषाद इति कर्म पाकजं
द्वयमर्थितं न समुपैति याति वा ।
निधने निमित्तमिह मां प्रकल्प्य मा
कुरुतं शुचं नियतिरीदृशी यतः ॥ ४ ॥
जगति क्वचिन्मिलति भूतसंहतिः
सह नैव तिष्ठति सदैव यन्त्रितः ।

तनुरात्मनो न खलु शाश्वती विभो-
स्तदिहाम्ब कस्य कथमस्तु कोऽन्तकृत् ॥ ५ ॥
मम कर्म धर्मविधुरं तथापि वां
मधुरं वचो हृदतिबन्धुवत्सलम् ।
कुरुतं कृपां मयि खले जना निजं
पिटकं[1] दुरन्तमपि लालयन्ति यत् ॥ ६ ॥
कुलकम् ।
इति कंसमश्रुमुखमानतं पदोः
प्रणयादुदस्य वसुदेव ऊचिवान् ।
सदसन्निसर्गकरुणार्द्रचेतसां
महतां हिताहितविचारणा कुतः ॥ ७ ॥
गृहमन्धकूपमुपगम्य सीदतां
क्वचनापि नास्ति सुखलेशकारणम् ।
इह किं नु योजयसि भोज भूपते
निजदोषमज्ञवदहंकृतेः कृतिम् ॥ ८ ॥
इति तद्वचःश्रवणलब्धसौहृदो
विशति स्म वेश्म नृपतिस्तदीडितः ।
उषसि न्यवेदयदशेषचेष्टितं
निजमन्त्रिषु स्वयमिदं च तेऽवदन् ॥ ९ ॥
भुवि निर्दशः शिशुरनिर्दशोऽपि वा
व्रजपल्लिकाकरपुरादिसंभवः ।
तरसा विमृश्य हननीय उद्यमै-
र्मरुतां कृतं त्वदनुसारवेदिनाम् ॥ १० ॥
उचितं न कर्हिं चिदुपेक्षणं रिपो-
र्विषपावकामयवदन्तकारिणः ।
नृप तन्नियुङ्क्ष्व सुरमूलमच्युतं
निहनाम यस्य किल धर्मनिर्मितिः ॥ ११ ॥
स तनोति गोद्विजहितं ततोऽभवन्
निगमाः सयज्ञतपसस्तदा श्रुतम् ।
निहनाम विप्रशमसत्यगोतपः-
करुणाक्रतुश्रुतिदमक्षमातनुम् ॥ १२ ॥
यदुनाथ तद्वध उपाय एष यद्
द्विजवर्यवेदयजनादिहिंसनम् ।
भवदाज्ञया निगमकर्मकारिणो
विनिहत्य राज्यमचलं ददाम ते ॥ १३ ॥
इति दुष्टमन्त्रिगदितं निशम्य स
द्विजवर्यहिंसनममन्यत प्रियम् ।
विनियुज्य साधुजनपीडने निजा-
नविशद्गृहाननु च बिभ्यदच्युतात् ॥ १४ ॥
तनयं सदैव समुदीतमात्मनः
समुदीक्ष्य नन्द उदभूत् समुत्सुकः ।
अथ जातकर्म विबुधानचीकरत्
प्रणयेन दत्ततिलहेमधेनुकः ॥ १५ ॥
शिशिरास्तदा सुरभयः समीरणा
ववुरन्तरिक्षमभवत् सुलक्षणम् ।
अभवन्मृदङ्गमृदुमङ्गलस्वना-
ननु दिव्यपि त्रिदशदुन्दुभिध्वनिः ॥ १६ ॥
सममस्तुवन् सपदि वन्दिचारणा-
स्तरुणा जगुर्मधुरमाशु गायनाः ।
ननृतुर्नटा इव पटान्तधूननै-
रतिनन्दिताः स्वहृदि नन्दबन्धवः ॥ १७ ॥
ध्वजमाल्यपल्लवपरार्ध्यतोरणैः
प्रतिहारभूनिहितकुम्भसम्भ्रमैः ।
व्रज उक्षितो मलयजैः सकुङ्कुमै-
र्बहिरन्तरायितपरिष्कृतिर्बभौ ॥ १८ ॥
अतिचित्रबर्हरचितस्रगञ्चितः
प्रचितप्रभाभरणशोभितांशुकः ।
रुचिराम्बराणि मणिमौक्तिकस्रजः
सदुपायनान्युपनिनाय तज्जनः ॥ १९ ॥
सहरिद्रतैलकृतगात्रभूषणा
जहृषुर्वृषाः सुरभयश्च वत्सकाः ।
अभिनन्द्य नन्दगृहिणीसुतोत्सवं
प्रतिकर्म गोपवनिता विनिर्ममुः ॥ २० ॥
स्तनमण्डलप्रतिपदस्खलत्पटा
नवघृष्टकुङ्कुमविमृष्टमूर्तयः ।
वसनाञ्जनाभरणभूषिता ययु-
स्त्वरिता नितम्बभरतोऽलसा अपि ॥ २१ ॥

१ पिटकस्त्रिषु विस्फोटे इति मेदिनी ।

अतिचित्रहर्षभरशेषसंनिभ-
स्मितपूर्वमेतदिह साधु साध्विति ।
मुहुरीरयन्त्य उरुहेमकुण्डल-
च्छविसूचिताचिररुचः प्रतस्थिरे ॥ २२ ॥

सकलस्तदा स किल देश उज्ज्वलः
परमात्मलाभमुदिताखिलप्रजः ।
प्रबभूव किंतु खलु चित्रमत्र य-
द्भुवनत्रयप्रभुरभूत् पतिः श्रियः ॥ २३ ॥

सहरिद्रतैलसलिलैर्व्रजस्त्रियः
सिषिचुः परस्परमुदीतकौतुकाः ।
असिचन्मिथः सनवनीतसर्पिषो
दधिदुग्धतक्रकरणाश्च वल्लवाः ॥ २४ ॥

मुदितः स बन्धुजनतातिथिद्विज-
प्रभृतिभ्य इभ्यतमतोचितं वसु ।
विविधस्रगम्बरवरानुलेपनं
सितनागवल्लिदलपूर्वमार्पयत् ॥ २५ ॥

वसुदेवपत्न्यपि परार्घ्यभूषणा
वसनानुलेपनविशेषभूषिता ।
विचचार नन्दतनयोत्सवे सह
स्वसुतेन कंसभयतश्चिरोषिता ॥ २६ ॥

इति लब्धदत्तधनतत्तदीप्सितो
वितरीतुमब्दकरमात्मभूभृते ।
व्रजरक्षणाय स निरूप्य वल्लवान्
प्रियबन्धुराशु मथुरामथो ययौ ॥ २७ ॥

पुरि नन्दमागतमवेत्य लोकतः
क्षितिपाय दत्तकरमभ्युपेयिवान् ।
वसुदेव एत्य परिरभ्य पूजितः
सुहृदेत्यवोचत समासनस्थितः ॥ २८ ॥

परमायुरत्र कियदेव जन्मिना-
मिह पुत्रजन्म गृहिणां सुदुर्लभम् ।
सुकृतैस्तव प्रवयसः प्रजाभव-
च्चिरमप्रजस्य तदभूम भूमगाः ॥ २९ ॥

निजकर्मबन्धमनुरुन्धता क्वचित्
सह वास एव सुहृदां सुदुर्लभः ।
महते हिताय नियतेर्निदेशत-
स्तव दर्शनं व्रजपतेऽजनिष्ट मे ॥ ३० ॥

तनयो ममास्ति जननीयुतः सुखं
पितरं भवन्तमवनात् सदा विदन् ।
न खलु त्रिवर्गफलमत्र कल्पते
स्वकुटुम्बबान्धवजने विषीदति ॥ ३१ ॥

सुतषट्कमाहत बतैष वा खलः
सह कन्यया निगडिताङ्घ्रिपद्मयोः ।
अचिकित्सितं हि दुरदृष्टमित्यति-
प्रणयेन स व्रजपतिर्जगाद तम् ॥ ३२ ॥

व्रज गोकुलं द्रुतमितस्तव व्रजे
यदभूदनिष्टशतशङ्कि मे मनः ।
इति शौरिवाचमभिनन्द्य वल्लवैः
सह तत्पतिर्यदुपुराद्विनिर्ययौ ॥ ३३ ॥

पथि स व्रजन् व्रजमभि स्वमीश्वरं
शरणं जगाम हृदयेन शङ्कितः ।
स्मृतिमात्रतोऽपि गजराजवन्निजा-
नवितुं क्षमे वसति किं भयं भवेत् ॥ ३४ ॥

व्रजनायकेऽथ पथि याति गोकुलं
कुटिला जगाम किल बालघातिनी ।
अभितः शिशूनिह विचिन्वती चिरं
विचचार मायिकमनोहराकृतिः ॥ ३५ ॥

स्मृतमात्र एव जगतः शिशुग्रहा-
द्युपसर्गवर्गमपहन्ति योऽचिरात् ।
तमसौ जिघांसुरथ पूतनानलं
भसितावगुण्ठितमिव व्यलोकत ॥ ३६ ॥

रणिताङ्घ्रिपद्मयुगहंसकद्वया
रमणं निरीक्षितुमिवागता रमा ।
श्रवणस्फुरत्कनककुण्डलद्युति-
प्रतिभासितस्मितमुखी तमन्वगात् ॥ ३७ ॥

निजमञ्जिमप्रथिमभञ्जितस्मृतिं
तनयग्रहोत्सुकतया स्फुरत्कराम् ।
निषिषेध नन्दगृहिणी न रोहिणी
ददतीं सुताय कुचयोः पयोविषम् ॥ ३८ ॥

परिमीलिताक्षमुपनीय बालकं
निजमङ्कमक्ष इव रज्जुधीरहिम् ।
तमपीप्यदन्तकमनन्तमात्मनः
स्तनकालकूटमथ पूतनाल्पधीः ॥ ३९ ॥

भगवाननल्पविषमोदकस्तनीं
विनिहत्य दातुमुपमातृगौरवम् ।
सुदृढं निपीडितकुचः सहासुभि-
स्तदुरोजसारमपिबत् कुतूहली ॥ ४० ॥

अहहार्भक त्यज बतेतिपीडिता-
खिलजीवमर्मणि निवारयन्त्यमुम् ।
मुहुरङ्घ्रिबाहु भुवि विक्षिपन्त्यसौ
निपपात निर्गतदृगात्तचीत्कृतिः ॥ ४१ ॥

विचचाल भूः सपदि साद्रिसागरा
निपतद्ग्रहं खमपि सप्रतिध्वनि ।
घनघोरघोषपविशङ्कितोऽपतत्
पिहितश्रवाश्चकितलोचनो जनः ॥ ४२ ॥

पतितार्धयोजनमहीध्रसंनिभं
निजरूपमभ्रमिव बिभ्रती नवम् ।
किल तत्र चित्रमुदबीभवन्नृणां
पृथु तावदध्वगपलाशिचूर्णनात् ॥ ४३ ॥

शिवशैलसानुसमदंष्ट्रमुन्नत-
स्तनगण्डशैलमतिचण्डनासिकम् ।
नयनान्धकूपमजलह्रदोदरं
प्रतिबद्धसेतुसदृशोरुबाहुकम् ॥ ४४ ॥

सपिशङ्गकेशमतिकन्दराननं
पृथुनाभिगर्तमुदितोष्ठवप्रकम् ।
इदमीयविग्रहमुदीक्ष्य भीषणं
प्रबिभाय तत् सकलमेव गोकुलम् ॥ ४५ ॥

युग्मम् ।

अथ कंसदारुणमनोरथक्षयो-
द्गतवक्रदारुसदृशस्तनादिकम् ।
जगृहुस्तदीयमधिशय्य विग्रहं
विहसन्तमर्भकमुपेत्य गोपिकाः ॥ ४६ ॥

सह वल्लवीभिरथ रक्षणं शिशोः
किल रोहिणीसहितया यशोदया ।
चिरमस्य नामभिरकारि बालधि-
भ्रमणैर्गवां सपदि मूत्रधूलिभिः ॥ ४७ ॥

नृहरिः पुरः परत आत्तकार्मुको
मधुभित् तु पार्श्वमपि कोणमब्जभृत् ।
त्वदुपर्युपेन्द्र इह तार्क्ष्यभृत् त्वधः
पुरुषो हली तव समन्ततोऽवतात् ॥ ४८ ॥

तव तात देहमवतात् परः पुमान्
भवतापहृत् सततमिन्द्रियाणि ते ।
शयनेऽशने गतिविहारयोः स्थितौ
भगवान् सदावतु भवन्तमर्भकम् ॥ ४९ ॥

कुलकम् ।

इति गोपिकाभिरभिमन्त्र्य नामभिः
कृतरक्षणं सपदि नन्दगेहिनी ।
परिपीतनिर्मलनिजस्तनामृतं
समवीविशत् सततचिन्मयं सुतम् ॥ ५० ॥

अथ नन्दगोप उपगोकुलं निजै-
श्चकितो ददर्श सह पूतनातनुम् ।
अवगम्य सम्यगतिविस्मयेन ते
किल चिच्छिदुः पुनरधाक्षुराशु ताम् ॥ ५१ ॥

वपुषस्तदा भगवता हतांहसो-
ऽगुरुसौरभं समजनिष्ट दाहतः ।
अतिविस्मयाय तदभूद्व्रजौकसां
किमिवाथवाद्भुतमिहाद्भुतावधौ ॥ ५२ ॥

कपटोपनीतकुचकालकूटया
हरितो बकावरजयापि सद्गतिः ।
हृदि भक्तितः किमपि यच्छते प्रियं
किमिवास्ति दातुमिह कैटभद्विषः ॥ ५३ ॥

अकलि स्मितं मधुरमच्युतस्य तैः
प्रथमागतैर्व्रजधवानुजीविभिः ।
असुभिः समं सपदि पूतनापयः
पिबतोऽवशिष्टमिव सृक्कसंगतम् ॥ ५४ ॥

व्रजनायकोऽपि जनतां विलोकयन्
प्रणतां गृहानमगदात्मजोत्सुकः ।
स शिरस्यजिघ्रदुरसा दधत् सुतं
दुरवापमापदपि संस्तुतेः फलम् ॥ ५५ ॥
प्रणयन् विदूरयवधान्तमागमं
ग्रहशान्तिमोङ्कृतिमिवाचरत् प्रभुः ।
मिलितास्तदा सदसि गोपगोपिका
ननृतुः समेत्य च मुदेदमूचिरे ॥ ५६ ॥
भवचक्रवाल इह बालदर्शनं
व्रजनाथ दुर्लभमिदं जनुःफलम् ।
सुकृतैरभूत् कुशलमर्भकस्य ते
स्वयमेव सा व्यनशदाशु डाकिनी ॥ ५७ ॥
आयातमन्तकगृहात् तनयं तवाद्य
जानीमहे व्रजमहोत्सवहेतुमेनम् ।
ये कुर्युरत्र किमपि प्रतिकूलमेव-
माश्वेव ते स्वयमयत्नहता भवेयुः ॥ ५८ ॥
त्रिभिः कुलकम् ।

इति श्रीमल्लक्ष्मणभट्टात्मजश्रीरामचन्द्रभट्टविरचिते गोपाललीलाख्ये महाकाव्ये पूतनावधो नाम द्वितीयः सर्गः ॥ २ ॥ :: :: ॥

॥ अथ विद्धशालभञ्जिकाख्यनाटिकायाः प्रस्तावना ॥

अथ प्राचीनोत्तमसरसालंकृतिकाव्यरसास्वादलोलुपानां सहृदयानां कविवराणां प्रदे पठनपाठनादिप्रचाराभावाल्लुप्तप्रायां रसिकजनमनोनन्दिनीं चारुविषयां नाटकेष्वद्वितीयां विद्धशालभञ्जिकाख्यां नाटिकां प्रकाशयितुमिच्छुरादौ तावत् नाटिकारचयितृस्वरूपगुणादिवर्णनं कुर्वे ।

एतन्नाटिकारचयिता सूर्यवंशीयो यायावरकुलजन्मा सत्यवतीतनूजो रघुकुलावतंसस्य निर्भरराजस्य महेन्द्रपालस्योपाध्यायोऽतिशूरः केरलक्षितिपालः शास्त्रविद्यानिपुणः संस्कृतप्राकृतादिसर्वभाषाभिज्ञः सर्वशास्त्रार्थवेत्ता श्रीराजशेखराभिधो बालकविः कविराजो राजा ऽऽसीत् । अयं च केवलया प्राकृतभाषया कर्पूरमञ्जर्याख्यं सट्टकाभिधं नाटकविशेषं प्राकृतबहुलातिप्रौढसंस्कृतभाषया विद्वन्मनोहरां विद्धशालभञ्जिकाभिधां नाटिकां बालरामायणाख्यं नाटकं चेति त्रयं संग्रन्थ्य श्रीशंकराचार्यपादपूज्येभ्यः समर्प्य तेभ्यो लब्धस्वाभिमतवरो बभूवेति शंकरविजये श्रीमाधवाचार्येण वर्णनादस्यकवेरतिप्राचीनत्वं गम्यते ।

तत्रोक्तनाटकत्रितयादेकं बालरामायणाख्यं नाटकं श्रीगोविन्ददेवशास्त्रिभिर्महता परिश्रमेण संशोध्य पूर्वमेव मुद्रितम् । नाटिका चेयं शृङ्गाररसप्रधाना स्थलविशेषेऽद्भुतरसगर्भिता चतुर्भिरङ्कैरुपनिबद्धास्ति ।

तथा चैतत्काव्यस्य सूक्तीनां श्रवणेन सत्काव्यपठनजनितफललाभो भवेदेतत्कवेरेतादृशगुणवत्त्वं च प्रथमाङ्कस्थसूत्रधारोक्त्या स्फुटमवसीयते तथाहि ।

किमपरमपरैः परोपकार-
व्यसननिधेर्गणितैर्गुणैरमुष्य ।
रघुकुलतिलको महेन्द्रपालः
सकलकलानिलयः स यस्य शिष्यः ॥

आकर्णयत्र गोष्ठीगरिष्ठस्य कृष्णशंकरशर्मणो वाचः ।

पातुं श्रोत्ररसायनं रचयितुं वाचः सतां संमता
व्युत्पत्तिं परमामवाप्तुमवधिं लब्धुं रसस्रोतसः ।
भोक्तुं स्वादुफलं च जीविततरोर्यद्यस्ति ते कौतुकं
तद्भ्रातः शृणु राजशेखरकवेः सूक्तीः सुधास्यन्दिनीः ॥

अथ चास्य काव्यस्य पुस्तकं श्रीगोविन्ददेवशास्त्रिशोधितकतिपयपत्रकं संपूर्णं द्वितीयं च खण्डितं श्रीमन्महाराज्ञीसंस्थापितकाशिकराजकीयपाठशालीयसरस्वतीभवनात् संप्राप्य सम्यक् संपूर्णं संशोध्येदानीं संस्कृतपाठशालाध्यक्षश्रीग्रिफिथसाहेबानामनुज्ञया काशीविद्यासुधानिधिपत्रे मुद्रणद्वारेमं ग्रन्थं प्रकाशयितुमुद्यतोस्मि । तदत्रप्रकाशितमेतदुत्तमं काव्यं रसिकजनानां मनःसु परमां मुदमातनोत्विति शम्

ज्योतिः शा० वामनाचार्यः

॥ श्रीगणेशाय नमः ॥

॥ अथ विद्धशालभञ्जिकाख्यनाटिकायाः ॥

॥ प्रथमोऽङ्कः ॥

कुलगुरुरबलानां केलिदीक्षाप्रदाने
परमसुहृदनङ्गो रोहिणीवल्लभस्य ।
अपि कुसुमपृषत्कैर्देवदेवस्य जेता
जयति सुरतलीला नाटिका सूत्रधारः ॥ १ ॥

अपि च ।

दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।
विरूपाक्षस्य जयिनीस्ताः स्तुवे वामलोचनाः ॥ २ ॥

समाधाय ।

गोनासाय नियोजितागदरजा सर्पाय बद्धौषधिः
कण्ठस्थाय विषाय वीर्यमहतः पाणौ मणीन् बिभ्रती ।
भर्तुर्भूतगणाय गोत्रजरतीनिर्दिष्टमन्त्राक्षरा
रक्षत्वद्रिसुता विवाहसमये प्रीता च भीता च वः ॥ ३ ॥

नान्द्यन्ते सूत्रधारः । नेपथ्याभिमुखमवलोक्य । न जाने का पुनरद्य श्रीयुवराजदेवस्य परिषदाज्ञा ।

नेपथ्ये गीयते ।

कुन्दलदाए विमुक्कमअरन्दरसाए वि चञ्चरीअओ ।
पणअप्परूढप्पम्मभरभञ्जनकाअरभावभीअओ ॥ ४ ॥
तरुणीं तरट्टिअं णिअपिअं विअ चारुपसूणदिट्ठिअं ।
रक्खइ णअइ धुणइ परिरम्भइ चुम्बइ चूदलट्ठिअं * ॥ ५ ॥

सूत्रधारः । आकर्ण्य । अये यायावरेण दौहिकिना कविराजशेखरेण विरचितायां विद्धशालभञ्जिकानामनाटिकाया वस्तूपक्षेपो गीयते । विभाव्य । तन्मन्ये तदभिनये श्रीयुवराजदेवस्य परिषदाज्ञा । तदहमपि मन्त्रिणो भागुरायणस्य प्रतीकृत्या शिष्यैर्विहितचारुनाम्नोऽन्तेवासिनो हरदासस्य भूमिका संपादयामि । आकाशे । सखे सोमदत्त । किमात्थ । तदकालजलदस्य प्रणप्तुस्तस्य गुणगणः किमिति न वर्ण्यते । तत्रैव शृणु ।

किमपरमपरैः परोपकार-
व्यसननिधेर्गणितैर्गुणैरमुष्य ।
रघुकुलतिलको महेन्द्रपालः
सकलकलानिलयः स यस्य शिष्यः ॥ ६ ॥

आकर्णय च गोष्ठीगरिष्ठस्य कृष्णशंकरशर्मणो वाचः ।

पातुं श्रोत्ररसायनं रचयितुं वाचः सतां संमता
व्युत्पत्तिं परमामवाप्तुमवधिं लब्धुं रसस्रोतसः ।
भोक्तुं स्वादुफलं च जीविततरोर्यद्यस्ति ते कौतुकं
तद्भ्रातः शृणु राजशेखरकवेः सूक्तीः सुधास्यन्दिनीः ॥ ७ ॥

इति निष्क्रान्तः ॥ प्रस्तावना ।

ततः प्रविशति हरदासः ।

हरदासः । सशिरःकम्पम् । अहह प्रज्ञाप्रकर्षः सर्वेषामुपरि वसति । तदुक्तम् ।

श्रियः प्रदुग्धे विपदो रुणद्धि
यशांसि सूतेऽविनयं प्रमार्ष्टि ।
संस्कारशौचेन परं पुनीते
शुद्धा हि बुद्धिः किल कामधेनुः ॥ ८ ॥

तदिदं चास्मद्गुरोश्चरितेषु परमुपलभ्यते । तथाहि ।

लाटेन्द्रश्चन्द्रवर्मा नरपतितिलकः कल्पिता तेन पुत्री
निष्पन्नैकपुत्रः कथितमपि तथा मन्त्रिणस्तस्य चारैः ।
कामं पुत्रावकल्पच्छलत इह महाराजसंदर्शनार्थं
तेनाद्यानायितासौ निरुपधि दधता साधु षाड्गुण्यचक्षुः ॥ ९ ॥

आकाशे । आर्य चारायण किमात्थ । अन्तेउरिका सहस्सपरिवारस्स महाराअस्स किं तीए विणा विसूरदित्ति * मामैवम् । अत्र किंचन बीजमस्ति तत्कार्यसिद्धावाविर्भविष्यति ।

नेपथ्ये । पच्चूससुहपडिबुद्धस्स सुप्पभादं देवस्स । संपदं खु ।

माणो जाण ण खण्डिदो ससिअरुक्केरेण वित्थारिणा
हुंकारा ण अ पंचमस्य वि चिरं जासु ठ्ठिदा कुंठिदाः ।
पच्चूसाणिअ लोलणेन ललणा मोत्तूणमाणग्गहं
चूडाचुंबिदवल्लहग्गचलणा वट्टंति ता संपदं † ॥ १० ॥

पुनस्तत्रैव भोभो बन्दिविंदारआ मंतिविणिम्मिदमहाराअवासघरपेरंतनिवासी महल्लअलोओ तुम्हे भणादि कोवि अ कालो विबुद्धस्स विज्जाहरमल्लदेवस्स । ता कीत्ति पभादभोआवलिं ण गायध त्ति, । ‡ तत्रैव जयजयोज्जयिनीभुजङ्ग सुप्रभातं भवतः । संप्रति हि ।

द्विचैर्व्योम्नि पुराणमौक्तिकमणिच्छायैः स्थितं तारकै-
र्ज्योत्स्नापानमरालसेवनपुषा मत्ताश्चकोराङ्गनाः ।

---

* कुन्दलतायां विमुक्तमकरन्दरसाया अपि चञ्चरीकः ।
प्रणयप्ररूढप्रेमभरभञ्जनकातरभावभीतः ॥ ४ ॥
तरुणीं प्रगल्भां निजप्रियामिव चारु प्रसूनदृष्टिम् ।
रक्षति नयति परिरम्भति चुम्बति चूतयष्टिम् ॥ ५ ॥

* अन्तः पुरिकासहस्रपरिवारस्य महाराजस्य किं तया विना खिद्यत इति ।

† प्रत्यूषसुखप्रतिबुद्धस्य सुप्रभातं देवस्य । सांप्रतं खलु ।
मानो यासां न खण्डितः शशिकरोत्करेण विस्तारिणा
हुंकारा न च पञ्चमस्यापि चिरं यासु स्थिताः कुण्ठिताः ।
प्रत्यूषानिललोलनेन ललना मुक्त्वा मानग्रहं
चूडाचुम्बितवल्लभाग्रचरणा वर्तन्ते ताः सांप्रतम् ॥

‡ भोभो बन्दिवृन्दारकाः मन्त्रिविनिर्मितमहाराजवासगृहपर्यन्तनिवासी अन्तःपुरलोको युष्मान् भणति कोपि च कालो विबुद्धस्य विद्याधरमल्लदेवस्य । तत्किमिति प्रभातभोगावलीं न गायतेति ॥

यातोऽस्ताचलचूलमुद्रसमधुच्छत्रच्छविश्चन्द्रमाः
प्राचीबालबिडाललोचनरुचां जाता च पाचं ककुप् ॥ ११॥

अपि च ।

भिन्दानः सुन्दरीणां पतिषु रुषमयं हर्म्यपारावतेभ्यो
वाचालत्वं ददानः कवयितृषु गुणं प्रातिभं संदधानः ।
प्रातस्त्यस्तूर्यनादः स्थगयति गगनं मांसलः पांसुतल्पा-
दस्वल्पादुत्थितानां नरवरकरिणां शृङ्खलाशिञ्जितेन ॥ १२॥

हरदासः । महत्येव प्रभाते प्रबुद्धो देव इति मन्त्रिमन्त्रप्रभाव एवैषः । यतः

कारुभिः कारितं तेन कृत्रिमं स्वप्नहेतवे ।
सुषिरस्तम्भसंचारं नृपतेर्वासमन्दिरम् ॥ १३ ॥

तदहमपि सुषिरस्तम्भसंचारं वासगृहं निर्मितवतां तथाविधां च रत्नवतीं चतुष्किकां करिष्यतां शिल्पवतां मन्त्रिसमादिष्टं दापयितुं महाभाण्डागारं प्रति यास्यामीति निष्क्रान्तः॥

विष्कम्भकः ।

ततः प्रविशति राजा सोत्कण्ठो द्वारावस्थितो विदूषकश्च ।

राजा । साङ्गभङ्गमुत्थाय पठति ।

तद्वक्त्रं यदि मुद्रिता शशिकथा हा हेम सा चेद्युति-
स्तच्चक्षुर्यदि हारितं कुवलयैस्तच्चेत्स्मितं का सुधा ।
धिक्कन्दर्पधनुर्भ्रुवौ च यदि ते किं वा बहु ब्रूमहे
यत्सत्यं पुनरुक्तवस्तुविरसः सर्गक्रमो वेधसः ॥ १४ ॥

विदूषकः । उपसृत्य । सोत्थि वड्ढदु भवं * ।

राजा । तदेव पठति ।

विदूषकः । होही भोः । अपुव्वोविअ पाभादिओ पठणविही पिअवअस्सस्स † ।

राजा । तथैव ।

विदूषकः । अहो से हिअअविक्खेवो ता किं णु खु एदं । विचिन्त्य । भोदु अणुबन्धिस्सं । णहु अपीडिओ सहआरवेंटगंठी वि रससव्वस्सं मुंचदि । पुरतः स्थित्वा । परिणामुप्पीडिदं विअ दाडिमफलं फुट्टणभूइट्ठं वट्टदि मे हिअअं कोदूहलेण ता जधावुत्तमाचरखंतो कज्जरहस्सेण संभावेदु मं पिअवअस्सो ‡ ।

राजा । तदभिमुखमवलोक्य । अये चारायण सखे कथं न कथयामि सुहृत्संचारितरहस्यं हि चेतः संविभक्तचिन्ताभारमिव लघूभवति ।

विदूषकः । अवहिदोह्मि * ।

जाने स्वप्नविधौ ममाद्य चुलुकोत्सेक्यं पुरस्तादभू-
त्प्रत्यूषे परिवेषमण्डलमिव ज्योत्स्नासपत्नं महः ।
तस्यान्तर्नखनिस्तुषीकृतशरच्चन्द्रप्रभैरङ्गकै-
र्दृष्टाकाप्यबला बलात्कृतवती सा मान्मथं मन्मथम् ॥ १५ ॥

विदूषकः । सुट्ठु क्खु तुमं महिलालंपडो जदो जा सा तए नम्मदाजलुत्तिण्णा दिट्ठा कुवलअमाला णाम जाव तग्गदं किं पि अणुसंधेमि ताव एसो अवरो गंडस्स उवरि पिंडओ संवुत्तो हुं तदोतदो † ।

राजा । ततश्च ।

आलिखितामिव चेतः फलकतलेस्मिन्विकल्पवर्तिकया ।
बालां स्मरचित्रगतां विलोक्य जातोऽस्मि तद्वन्दी ॥ १६ ॥

पुनस्तद्वक्त्रमित्यादि पठति ।

विदूषकः । तदोतदो ‡ ।

राजा । शृणु श्रवणामृतं गण्डूषय मधु पिब नयनामृतम् ।
हारोयं केरलस्त्रीविहसितशुचिभिः पङ्क्तिभिर्मौक्तिकानां
सद्यः षाण्मासिकानां मम मदिरदृशा दत्तचन्द्रोदयश्रीः ।
सोत्कण्ठं कण्ठदेशाज्झटिति कुचतटादौ नमो मन्मथायेत्यस्तो यन्मध्यरत्नं सुरपतिककुभः कौङ्कुमीभिः प्रभाभिः॥ १७॥

विदूषकः । यज्ञोपवीतं परिमृश्य । सुक्खकुमरज्जुहारस्स मे महाबह्मणस्स भणिदेण सच्चओ सिविणओ भोदु § । स्वगतम् । अहो हदास दासीए पुत्त सिविणइंदजालिअ जाणासि महामदीणं पि विब्भमं कादुं ‖ । प्रकाशम् । तदोतदो ¶ ।

राजा । ततश्च

कथय किमिह बाले का त्वमित्युल्लपंस्तां
झटिति किल दुकूलस्याञ्चले धारयामि ।

* स्वस्ति वर्धतां भवान् ।

† अहोअहो अपूर्व इव प्राभातिकः पठनविधिः प्रियवयस्यस्य ।

‡ अहोऽस्य हृदयविक्षेपस्तत्किं नु खल्विदम् । भवतु अनुबन्धिष्ये । न खलु अपीडितः सहकारवृन्तग्रन्थिरपि रससर्वस्वं मुञ्चति । परिणामोत्पीडितमिव दाडिमफलं स्फुटनभूयिष्ठं वर्तते मे हृदयं कौतूहलेन तद्यथा वृत्तमाचक्षाणः कार्यरहस्येन संभावयतु मां प्रियवयस्यः ।

* अवहितोस्मि ।

† सुष्ठु खलु त्वं महिलालम्पटः यतो या सा त्वया नर्मदाजलोत्तीर्णा दृष्टा कुवलयमालानाम यावत्तद्गतं किमप्यनुसंदधामि तावदेषोऽपरः गण्डस्योपरि पिण्डकः संवृत्तः हुं ततस्ततः ।

‡ ततस्ततः ।

§ शुष्करज्जुहारस्य मे महाब्राह्मणस्य भणितेन सत्यः स्वप्नो भवतु ।

‖ अहो हताश दास्याःपुत्र स्वप्नेन्द्रजालिक जानासि महामतीनामपि विभ्रमं कर्तुम् ।

¶ ततस्ततः ।

अगमदथ निकेतात्काप्यसौ सारयन्ती
नवकुवलयमाला मांसलैर्दृष्टिपातैः ॥ १८ ॥

विदूषकः । अध एक्कपल्लंकगदाए देवीए किं पडिवणं * ।

राजा ।

अत्रान्तरे तरलहारलतानितम्बा
संवाहनस्खलनवेगतरङ्गिताङ्गी ।
देवी व्यपास्य शयनं धृतमानतन्तु-
रन्तः पुराद् गतवती सह सौविदल्लैः ॥ १९ ॥

विदूषकः । अहो ते णागरत्तणं किं तए पुरदो भवीअ णाणुणीदा केच्चिरं वा चंदे पसारिदकरे अवि सदूकंदोट्टा णीलुप्पलिणी चिट्ठदि † ।

राजा । सखेदस्मितम् । तदनुध्यानपरतन्त्रचेतसा धारयितुं न पारिता किं पुनरनुनेतुम् ।

विदूषकः । सच्चकं तए किदे णडे दिट्ठे मुंडिदे उवविट्ठो पई मुंडिदो त्ति ‡ ।

राजा । सखेदस्मितम् । भगवत्याशे सत्यमप्रतिहतासि । ननु विचारय चिरम् ।

क्व पातव्या ज्योत्स्नामृतभुवनगर्भाऽपि तृषितै-
र्मृणालीतन्तुभ्यः सिचयरचना कुत्र भवतु ।
क्व वाऽपारो मया बत बकुलदाम्नां परिमलः
कथं स्वप्नः साक्षात्कुवलयदृशं कल्पयतु ताम् ॥ २० ॥

स्मृतिमभिनीय हृदयदेशमवलोक्य च ।

स्वप्नः किमेष किमुसंविदियं च साक्षा-
ज्ज्ञानं किमेतदुभयात्मकमन्यदेव ।
यद्दृश्यते न खलु सा तरलायताक्षी
कण्ठप्रदेशमधिरोहति चैष हारः ॥ २१ ॥

विदूषकः । मण्णे णिसारंभपिणद्धेण णिअहारेण विप्पलद्धोसि § ।

राजा मदनाकूतमभिनीय ।

बाणान् संहर मुञ्च कार्मुकलतां लक्ष्यं तव त्र्यम्बकः
के नामात्र वयं शिरीषकलिकाकल्पं यदीयं मनः ।
तत्कारुण्यपरिग्रहात्कुरु दयामस्मिन्विधेये जने
स्वामिन्मन्मथ तादृशं पुनरपि स्वप्नाद्भुतं दर्शय ॥ २२ ॥

विदूषकः । एसो सो तुमं सिविणअलद्धेहिं मोदएहिं गामं उवणिमंतेमि ता एहि गहूअ देवीं पसादेह्म । वरं तक्कालोपगदा तित्तिरी णउण दिअहंतरिदा मोरी * ।

राजा । यदभिरुचितं भवते ।

विदूषकः । पणअपणअंतसामंतसहस्ससंकुलमथ्थाणीमंडवमग्गमुज्झीअ इमिणा खिडक्किआदुवारेण मअरंदुज्जाणमाविसीअ गच्छह्म † । तथा कुरुतः ।

नेपथ्ये । सुखाय वसन्तावतारो भवतु देवस्य । संप्रति हि ।

गर्भग्रन्थिषु वीरुधां सुमनसो मध्येऽङ्कुरं पल्लवा
वाञ्छामात्रपरिग्रहः पिकवधूकण्ठोदरे पञ्चमः ।
किं च त्रीणि जगन्ति जिष्णुदिवसैर्द्वित्रैर्मनोजन्मनो
देवस्यापि चिरोज्झितं यदि भवेदभ्यासवश्यं धनुः ॥ २३ ॥

सपदि सखीभिर्निभृतं विरहवतीस्त्रातुमत्र भुज्यन्ते ।
सहकारमञ्जरीणां शिखोद्गमग्रन्थयः प्रथमे ॥ २४ ॥

राजा । अये सुरभिसमयारम्भः सैवेयं मन्मथसैन्यसामग्री ।

विदूषकः । बंदिवअणसुव्वंतसिसुभावो उअवणदीसंतथ्थोअविथ्थारो सुरभिसमयारंभो त्ति किं णेदमणवरदसारणीसेअसुकुमारासु केलिवणवसुंधरासु अधिअविथ्थारी सुरभिसमयारंभो ‡ ।

राजा । ततश्च ।

साम्यं संप्रति सेवते विचकिलं षाण्मासिकैर्मौक्तिकै-
र्वाल्हीकीदशनव्रणारुणतरैः पत्रैरशोकश्चितः ।
भृङ्गालङ्कितकोटि किंशुकमिदं किंचिद्विवृन्तायते
माञ्जिष्ठस्तबकैश्च पाटलितरोरन्यैव काचिल्लिपिः ॥ २५ ॥

विचिन्त्य ।

सा कापि स्वप्नविधौ दृष्टा च मधुश्च यदयमायातः ।
तदिदं मम लीढमधोरनुपानं तप्तदुग्धेन ॥ २६ ॥

परिक्रामितकेन ।

विदूषकः । कलमकूरकुभंडपांडरेसुं सित्तसिंदुवारफुल्लेसुं तक्कालकिदमंजिट्ठेसुं असोअपल्लवेसुं णिज्जिदमंजिट्ठाधूसरिदमणहरेसुं माहवीकुसुमेसुं दधिमरिच्छेसुं णोमालिआमुउलेसुं

* अथ एकपर्यङ्कगतया देव्या किं प्रतिपन्नम् ।

† अहो ते नागरत्वं किं तया पुरतो भूत्वा नानुनीत्वा कियच्चिरं वा चन्द्रे प्रसारितकरे अविकसितकमला नीलोत्पलिनी तिष्ठति ।

‡ सत्यं त्वया कृतं नटे दृष्टे मुण्डिते उपविष्टः पतिर्मुण्डित इति ।

§ मन्ये निशारम्भपिनद्धेन निजहारेण विप्रलब्धोसि ।

* एष स त्वं स्वप्नलब्धैर्मोदकैर्ग्राममुपनिमन्त्रयसि । तदेहि गत्वा देवीं प्रसादयावः । वरं तत्कालोपगता तित्तिरी न पुनर्दिवसान्तरिता मयूरी ।

† प्रणयप्रणमत्सामन्तसहस्रसंकुलमास्थानीमण्डपमार्गमुज्झित्य अनेनापवरकद्वारेण मकरन्दोद्यानमाविश्य गच्छावः ।

‡ बन्दिवचनश्रूयमाणशिशुभाव उपवनदृश्यमानस्तोकविस्तारः सुरभिसमयारम्भ इति किं नेदमनवरतसारणीसेकसुकुमारासु केलिवनवसुंधरासु अधिकविस्तारी सुरभिसमयारम्भः ।

दूरावट्टिददुद्धमुद्धेसुं विचइलफुल्लेसुं णीसेसकुसुमसपदं वज्जीअ भममाणा संसज्जदि मे दिट्ठी * ।

राजा । अत्र हि किलोचितोपमाननिवेदिनी ते जिह्वा ।

विदूषकः । अग्रतो निर्दिश्य । रंगंगणं लदाणच्चकीणं बाहाअली मलआणिलतुरंगस्स पारद्धिरणं वम्महवाहस्स सकेदसदणं णीसेसकुसुमाणं पीऊसवरिसी हिअअस्स पमदुज्जाणं ताइमं णिव्वणअंतो इदो एदु पिअवअस्सो † ।

राजा । पवनस्पर्शमभिनीय ।

ये दोलाकेलिकाराः किमपि मृगदृशां मानतन्तुच्छिदो ये
सद्यः शृङ्गारदीक्षा व्यतिकरगुरवो ये च लोकत्रयेऽपि ।
ते कण्ठे लोठयन्तः परभृतवयसां पञ्चमं रागराजं
वान्तिस्वैरंसमीराःस्मरविजयमहासाक्षिणोदाक्षिणात्याः।२७।

अपि च ।

सुरतभरखिन्नपन्नगविलासिनीपानकेलिजर्जरितः ।
पुनरपि विरहिश्वासैर्मलयमरुन्मांसलो क्रियते ॥ २८ ॥

विदूषकः । एवं णेदं ।

लंकातोरणमालिआतरलणो माणोसहं सिंघली-
संघाणं दविडीण मम्महमहालासैकणट्टावओ ।
कण्णाडीचिउराण तंडवअरो लाटीण लीलागुरू
उन्मत्तो मरहट्ठि लुंठदमणो चेताणिलो णच्चदि ‡ ॥ २९ ॥

उभौ ।

इहहि नववसन्ते मञ्जरीरेणुपुञ्ज-
च्छुरणधवलदेहा बद्धहेलं सरन्ति ।
तरलमलिसमूहा हारिहुंकारिकण्ठा
बहलपरिमलाली सिन्दुरं सिन्दुवारम् ॥ ३० ॥

राजा । किंचिद्विहस्य । संस्कृतेऽपि प्रगल्भसे ।

विदूषकः । तुमं पि अह्मारिसजणजोग्गे पाउदमग्गे पउत्तोसि । ता एहि महामंतिकारिदं फलिहसिलामंदिरं केलिकेलासं पेक्खिदुं गच्छह्म § । इति परिक्रामतः ।

* कलमाङ्कुरकूष्माण्डपाण्डुरेषु सितसिन्दुवारपुष्पेषु तत्कालकृतमाञ्जिष्ठेषु अशोकपल्लवेषु निर्जितमञ्जिष्ठाधूसरितमनोहरेषु माधवीकुसुमेषु दधिसदृक्षेषु नवमालिकामुकुलेषु दूरावधितदुग्धमुग्धेषु विचकिलपुष्पेषु निःशेषकुसुमसंपदं वर्जयित्वा भ्रममाणा संसज्जते मे दृष्टिः ।

† रङ्गाङ्गणं लता नर्तकीनां बाह्याली मलयानिलतुरङ्गस्य पापर्द्धिरण्यं मन्मथव्याधस्य संकेतसदनं निशेषकुसुमानां पीयूषवर्षी हृदयस्य प्रमदोद्यानं तदेतन्निर्वर्णयन् इत एतु प्रियवयस्यः ।

‡ एवमेतत् । लङ्कातोरणमालिकातरलनो मानौषधं सिंहलीसंघानां द्राविडीनां मन्मथमहालास्यैकनर्तापकः । कर्णाटीचिकुराणां ताण्डवकरो लाटीनां लीलागुरुरुन्मत्तो महाराष्ट्रीलुण्ठितमनाः चैत्रानिलो नृत्यति ।

§ त्वमपि अस्मादृशजनयोग्ये प्राकृतमार्गे प्रवृत्तोऽसि । तदेहि महामन्त्रिकारितं स्फटिकशिलामन्दिरं केलिकैलासं प्रेक्षितुं गच्छावः ।

विदूषकः । कहिं उण कोंचीकेंकारसुन्दरो सद्दो सुणीअदि * ।

राजा । समाकर्णयंस्तदनुसारेणोर्ध्वमवलोक्य ।

उपप्राकाराग्रं प्रहिणु नयने तर्कय मना-
गनाकाशे कोऽयं गलितहरिणः शीतकिरणः ।
सुधाबद्धग्रासैरुपवनचकोरैरनुसृतां
किरन् ज्योत्स्नामच्छां लवलिफलपाकप्रणयिनीम् ॥३१॥

विदूषकः । भो वअस्स कहिं सो † ।

राजा । अयमयं सविस्मयमवलोक्य । कथं न दृश्यते किं पुनरिदम् । वितर्क्य ।

यन्मञ्जुसिञ्जितमितो रसनामणीनां
यच्छ्वाससौरभबलाद्दलयो वदन्ति ।
यद्गीतयः स्खलदलंकृतयश्च लीला-
दोलाविलासतरलस्तदयं मुखेन्दुः ॥ ३२ ॥

विदूषकः । सच्चकं तुए जाणिदं जदो हिंदोलदंडिआसिहराइं इदो दीसंति ‡ ।

राजा । पुनर्दृष्ट्वा । सखे अयमसावाश्चर्यचन्द्रमाः ।

विदूषकः । कथं लुक्कदंसणिआहिं विअ अह्मेहिं समं खेलदि चंदो § ।

राजा । सखे दिष्ट्या वर्धसे स्वप्नदृष्टजनमुखपद्मसवादिनी लावण्यलक्ष्मीः ।

विदूषकः । कीदिसी सा ‖ ।

राजा । यादृशीपरिपाकपाण्डुराणां शरकाण्डानाम् ।

विदूषकः । करिकलभदंतच्छेदेसु वि सा अत्थि ज्जेव । विचिन्त्य । विरमिदहिन्दोलसद्देण जाणिज्जदि उत्तिण्णा सा । ता एहि अगतो गच्छह्म ¶ इति परिक्रामतः ।

विदूषकः । इदं तं केलिकेलासं । ता पविसीअदु ** ।

तथा कुरुतः ।

राजा । उद्दण्डडिण्डीरपिण्डपरिपाण्डुरेण महसा महाकैलासमेवेदम् ।

विदूषकः । इदो दाव ललिअफलिहगब्भभवणभित्तिचित्तसंठेसु कम्मेसु णिवेसीअदु दिट्ठी । एस दाव देवो देवीण

* कुत्र पुनः क्रौञ्चीकेङ्कारसुन्दरः शब्दः श्रूयते ।

† भो वयस्य कुत्र सः ।

‡ सत्यं त्वया ज्ञातं यतो हिन्दोलादण्डिकाशिखराणि इतो दृश्यन्ते ।

§ कथं लुप्तदर्शनिकाभिरिवास्माभिः समं खेलति चन्द्रः ।

‖ कीदृशी सा ।

¶ करिकलभदन्तच्छेदेष्वपि सास्त्येव । विरमितहिन्दोलाशब्देन ज्ञायते उत्तीर्णा सा तदेहि अग्रतो गच्छावः ।

** इदं तत्केलिकैलासं तत्प्रविश्यताम् ।

समं पासआहिणिवेसी आलिहिदो । एसा वि तंबोलकरंडवाहिणी णाअवल्ली । एसा चामरग्गाहिणी पभंजणिआ । एसो रअणकरंडओ णाम वामणओ । एसो उण मंदुरामक्कडो टप्परकण्णो णाम * ।

राजा । सखे त्वमेषोऽभिलिखितः ।

विदूषकः । सक्रोधम् । णाहं लिहिदुं जाणिदो बह्मणी जाणादि जादिसो हं सा मं भणादि तुमं पच्चक्खो देवो त्ति † ।

राजा । किमुपवने शुको वदति ।

विदूषकः । किं विअ ‡ ।

राजा । अस्ति भवान् देवः किं पुनर्भृङ्गिरिटिः ।

विदूषकः । को दुज्जणवअणाणं कण्णं देदि § । अङ्गुल्या निर्दिशन् । एसा उण सोहासमुदएण उवहसंती विअ कावि अपुव्वा आलिहिदा ‖ ।

राजा । इयमपूर्वैवास्माकं न पुनरनङ्गस्य । सम्यग्विलोक्य । सैवेयमस्मन्मनःसागरशशिलेखा । अहो रूपसंपदे तस्याः ।

चक्षुर्मेचकमम्बुजं विजयते वक्त्रस्य मित्रं शशी
भ्रूसूत्रस्य सनाभिमन्मथधनुर्लावण्यपण्यं वपुः ।
लेखा कापि रदच्छदे च सुतनोर्गात्रे च तत्कामिनी-
मेनां वर्णयिता स्मरो यदि भवेद्वैदग्ध्यमभ्यस्यति ॥ ३३॥

विदूषकः । स्वगतम् । का उण एसा देवी परिवारे । विचिन्त्य । भोदु कोदूहलेण देवी ओल्लागदं णिअमादुलजादकं मिअंकवम्माणं वारंवारेण विरइदमहिलावेसं धारेदि । तं च दट्ठुण अणाअपरमत्थेहिं चित्तअरेहिं सच्चअ चित्ते आलिहिद त्ति तक्केमि ता ण विप्फोलइस्सं विम्हअदु दाव पिअवअस्सो । प्रकाशम् । भो वट्टावइस्सं कुमारिआ क्खु एसा एदाए णेवच्छो लक्खीअदि ¶ ।

राजा । यथाह प्रियवयस्यः ।

* इतस्तावल्ललितस्फटिकगर्भभिवनभित्तिचित्रसंस्थेषु कर्मसु निवेश्यतां दृष्टिः । एष तावद्देवो देव्या समं पाशकाभिनिवेशी आलिखितः, एषा ऽपि ताम्बूलकरण्डवाहिनी नागवल्ली । एषा चामरग्राहिणी प्रभञ्जनिका । एष रत्नकरण्डको नाम वामनकः । एष पुनर्मन्दुरामर्कटः टप्परकर्णो नाम ।

† नाहं लिखितुं ज्ञातो ब्राह्मणी जानाति यादृशोऽहं सा मां भणति त्वं प्रत्यक्षो देव इति ।

‡ किमिव ।

§ को दुर्जनवचनानां कर्णं ददाति ।

‖ एषा पुनः शोभासमुदयेनोपहसन्तीव काप्यपूर्वा आलिखिता ।

¶ का पुनरेषा देवी परिवारे । भवतु कौतूहलेन देवी ओल्लागदं निजमातुलजातकं मृगाङ्कवर्माणं वारंवारं विरचितमहिलावेषं धारयति । तां च दृष्ट्वा अज्ञानपरमार्थैश्चित्रकरैः सैव चित्रे आलिखितेति तर्कयामि तच्च विस्फोटयिष्ये विस्मयतु तावत्प्रियवयस्यः । भो वर्धापयिष्ये कुमारिका खलु एषा एतस्या नेपथ्यं लक्ष्यते ।

कन्येति सूचयति वेषविशेष एव
यन्नीलचोलकवती लिखिताऽत्र चित्रे ।
पाणिग्रहात्प्रभृति तु प्रमदाजनस्य
नीवीविशेषसुभगः परिधानमार्गः ॥ ३४ ॥

विमृश्य

अहो वपुःश्रीर्लिखितुर्जनस्य
स्वाकारसंवादि यदत्र चित्रम् ।
इदं च पौरन्ध्रमवैमि कर्म
रेख निवेशोऽत्र यदेकधारः ॥ ३५ ॥

सम्यग्विलोक्य । तदियं मकरध्वजवैजयन्ती काऽपि स्वयमेव स्वंलिखितवतीति निर्णीयते ।

विदूषकः । एव्वं णेदं जदो गरिट्ठजणगोट्ठीसु वि इत्थं किर सुणीअदि । जादिसो चित्तअरो तादिसी चित्तअम्मरूअरेहा जादिसो कई तादिसा कधबंधच्छाअ त्ति *

राजा । युज्यते आकृतिमनुगृह्णन्ति गुणाः । अपि च । सखे चारायण ।

क्रमपरिणतरेखामांसलैरङ्गभङ्गै-
र्लघुरपि लिखितेयं दृश्यते पूर्णमूर्तिः ।
अयमपि सुकुमारः सात्त्विकानां निवेश-
श्चतुरमसृणमुग्धं भावमाविष्करोति ॥ ३६ ॥

विदूषकः । इदो वि देवी मअणवती असेसपरिवारा आलिहिदा † ।

राजा । इदमेव रूपरत्नं संभावयामस्तावत् ।

विदूषकः । इहावि सा अत्थि ज्जेव्व ‡ ।

राजा । आत्मगतम् । एकं चक्षुरनेकत्र सा । विदूषकं प्रति क्वासौ ।

विदूषकः । इअमिअं § ।

राजा । विलोक्य सोत्कण्ठम् ।

येनोत्पलानि च शशी च मृणालिकाश्च
रम्भालताश्च कमलानि च निर्मितानि ।
नूनं स एव मृगशावदृशोऽपि वेधाः
सृष्टिक्रमो यदयमेकतया चकास्ति ॥ ३७ ॥

* एवमेतत् । ततो गरिष्ठजनगोष्ठीष्वपीत्थं किल श्रूयते । यादृशश्चित्रकरस्तादृशी चित्रकर्मरूपरेखा यादृशः कविस्तादृशी काव्यबन्धच्छायेति ।

† इतोऽपिदेवी मदनवती अशेषपरिवारा आलिखिता ।

‡ इहापि साऽस्त्येव ।

§ इयमियम् ।

विदूषकः । स्तम्भे शालभञ्जिकां विलोक्य । इअं पि स ज्जेव * ।

राजा । इयमपि साऽस्मद्विलोचनचकोरचन्द्रिका । विलोक्य सोत्कण्ठम् ।

सा दुग्धमुग्धमधुरच्छविरङ्गयष्टि-
स्ते लोचने तरुणकेतकपत्रदीर्घे ।
कम्बोर्विडम्बनकरश्च स एव कण्ठः
सैवेयमिन्दुवदना मदनायुधं वा ॥ ३८ ॥

सवितर्कम् ।

न स्वप्नानुभवस्य कश्चिदपरः स ब्रह्मचारी मम
स्यात्संकल्पकृतश्चकास्तु मनसः कस्यैष लेखाक्रमः ।
तन्मन्ये क्व चिदस्त्यसौ कुवलयच्छायामुषा चक्षुषा
यत्सादृश्यपरिग्रहादिह दृशौ दीर्घे समावेशिते ॥ ३९ ॥

विलोक्य । भवतु पुनर्योग्यस्थानविन्यासमासादयतु स्व,प्रहारः संचरतु शालभञ्जिकारूपाया अप्येतस्याः कण्ठमूलमलंकरोतु बालविचकिलवल्ली कोरकनिकुरम्ब इति । तथा करोति ।

विदूषकः । इदो वि चित्तगदा स ज्जेव । सोल्लासम् । मिअंकप्पतिबिंबमालाहिं विप्पलद्ध ह्मि । अअं उण पच्चक्खो पुण्णिमाचंदो † ।

राजा । क्व पुनरसावस्मन्नयनामृतवृष्टिः ।

विदूषकः । इअमिअं जा हरिणंकखंडपंडरेहिं तिरिच्छेहिं दिट्ठिच्छडाकडक्खेहिं विप्फुरदि दिम्मुहाइं पाणिसंचारेण विच्छुरेदि कंकेलिपल्लवाइं चरणचालणेण विरएदि पंकअसंकासमाउलाइं भमरउलाइं ‡ ।

राजा भवत्प्रशंसिता सत्यस्वप्नतैव जाता । विलोक्य सैवेयं संजीवनौषधिर्मकरध्वजस्य विशल्यकरणौषधिर्मे हृदयस्य । विभाव्य ।

माचानर्तनपण्डितभ्रु वदनं किं चित्प्रगल्भे दृशौ
स्तोकोद्भेदनिवेशितस्तनमुरो मध्यं दरिद्राति च ।
अस्या यज्जघनं घनं च कलया प्रत्यङ्गमेणीदृशः
सत्यंकारमिव स्मरैकसुहृदा तद्यौवनेनार्पितम् ॥ ४० ॥

* इयमपि सैव ।

† इतोऽपि चित्रगता सैव । मृगाङ्कप्रतिबिम्बमालाभिर्विप्रलब्धोऽस्मि । अयं पुनःप्रत्यक्षः पूर्णिमाचंद्रः ।

‡ इयमियम् । या हरिणाङ्कखण्डपाण्डुरैस्तिरश्चीनैर्दृष्टिच्छटाकटाक्षैर्विस्फोरयति दिङ्मुखानि पाणिसंचारेण विच्छुरयति कङ्केलिपल्लवानि चरणचालनेन विरचति पङ्कजशङ्कासमाकुलानि भ्रमरकुलानि ।

विदूषकः । उल्लसिदभूलदेण उदगुलिकरकमलेण इमिणा संठाणेण एसा किं उण कुणंती चिट्ठदि * ।

राजा ।

यद् भ्रूलते तरलिते यदुदङ्गुलीकः
पाणिः पुरो यदपि चक्षुरलब्धलक्ष्यम् ।
उन्मुद्रिताधरदलं च यदास्यमस्या-
स्तत्काव्यकर्मणि निषक्तमवैमि चेतः ॥ ४१ ॥

विदूषकः । एवं णेदं जदो पुरदो इमीए अद्धलिखिदा अक्खरावली चिट्ठदि † ।

राजा । वाचयति ।

विधत्ते सोल्लेखं कतरदिह चाङ्गं तरुणिमा ।

विमृश्य । अहो शिखरिणीपादः । अहो सूक्तियुक्ता वाचः । अहो हृद्या वैदर्भी रीतिः । अहो माधुर्यमपर्याप्तम् । अहो निष्प्रमादः प्रसादः ।

विदूषकः । ता उचिदकालमभिसरीअदु सुंदरी पिज्जदु णअणंजलिसंपुडेहिं पुण्णिमाअदो पूरिज्जंतु कण्णकुहराइं सुहासिदसाअरेहिं णच्चिवीअदु रहसुत्थभिदहत्थो मअणणट्टावओ ‡ ।

राजा । पदान्तरे स्थित्वा चतुर्दिशमवलोक्य । अहो द्वयिताद्वैतं वर्तते । तथाहि ।

सुतनुरियमितस्ततश्च चित्रै-
र्गुणगुरुरत्र च शालभञ्जिकेयम् ।
स्थितमिह सुतनोर्वपुश्चतुर्धा
स्मरशरतापरुजं विभज्य सोढुम् ॥ ४२ ॥

तदेहि समुपसृत्य सुभाषितेन श्रवणे कृतार्थयावः । न खलु व्यापारमन्तरेण कलितापि शुक्तिर्मुञ्चति मौक्तिकानीत्युभौ परिक्रामतः ।

विदूषकः । पुरतः सरन् भीत्या स्फोटनं नाटयित्वा । भो ओसर ओसर भूदंतरं क्खु एदं ता इमिणा पडिकुविदेदेवीभूलदाभंगकुडिलेण दंडकट्ठेण गाढं पाडिस्स ता पेक्ख मे पुरिसआरम् § ।

राजा । तर्हि मालतीकुसुमैर्दुकूलं कल्पयिष्यसि ।

* उल्लसितभ्रूलतेन उदङ्गुलिकरकमलेनानेन संस्थानेनैषा किं पुनः कुर्वती तिष्ठति ।

† एवमेवैतत् । यतः पुरतोऽस्या अर्धलिखिता अक्षरावली तिष्ठति ।

‡ तदुचितकालमभिसार्यतां सुन्दरी पीयतां नयनाञ्जलिसंपुटैः पूर्णिमाचन्द्रः पूर्यतां कर्णकुहराणि सुभाषितसागरैर्नृत्याप्यतां रभसोत्तम्भितहस्तो मदननर्तकः ।

§ भो अपसरापसर भूतान्तरं खल्वेतत् तदनेन परिकुपितदेवीभ्रूलताभङ्गकुटिलेन दण्डकाष्ठेन गाढं पातयिष्ये तत्प्रेक्ष मे पुरुषकारम् ।

विदूषकः । ता किं णु क्खु एदं * ।

राजा । सखे तर्कयामि स्फटिकभित्तेः परतः स्थितया स्वच्छभावादितः सुव्यक्तयाऽनया भवितव्यं तदेहि केलिकैलासपश्चिमेनैनां संभावयामः । तथा कुरुतः ।

विदूषकः । तुरिदतरमवक्कंता सा जदो समंजसा इअं देवी भवणाहिमुही पअपरिवाडी दीसइ † ।

राजा । हृदय स्वस्ति भवते । एनामनुवर्तता स्मर्तव्या वयम् । नेपथ्ये । जयजय त्रिलिङ्गाधिपते सुखाय माध्यन्दिनी संध्या भवतु भवतः । संप्रति हि ।

धत्ते पद्मलतादलेप्सुरुपरि स्वं कर्णतालं द्विपः
शष्पस्तम्बरसान्नियच्छति शिखी मध्येशिखण्डं शिरः ।
मिथ्या लेढि मृणालकोटिरभसा दंष्ट्राङ्कुरं सूकरो
मध्यान्हे महिषश्च वाञ्छति निजच्छायामहाकर्दमम् ॥४३॥

अपि च ।

विशन्तीनां स्नातुं जघनपरिवेषैर्मृगदृशां
यदम्भः संप्राप्तं प्रमदवनवाप्यास्तट भुवम् ।
गभीरे तन्नाभीकुहरपरिणाहाध्वनि रस-
त्कुहुंकारस्फारं रचयति निनादं नमति च ॥ ४४ ॥

विदूषकः । भो देवीए भवणं गदुअ मज्झण्णसंझा णिअत्तिअदु तिस्सा पउत्तिलंभे पअट्टीअदु ‡ । इति निष्क्रान्तौ ॥

॥ इति श्रीबालकविकविराजराजशेखरविरचितायां
विद्धशालभञ्जिकाख्यनाटिकायां प्रथमोऽङ्कः ॥

---

## अथ भारते वर्षे संस्कृतसरस्वत्या मृतत्वेनोपेक्षणीयत्वं प्रतिपादयतां मतखण्डनम् ।

ये केचन मृतभाषापदेन सामान्यत उपस्थापितमर्थमवलम्ब भारते वर्षे संस्कृतवाणी मृतभाषेत्येवं परिगणयन्ति तेषामयं महान् प्रमादः । दश मनुष्यान् प्रति मृतभाषापदस्य कोऽर्थ इति प्रश्ने नव मनुष्या, लोकैर्मातृभाषा * रूपेण सम्प्रत्यव्याह्रियमाणा भाषा मृतभाषे,त्येवं सहसैवोत्तरयिष्यन्ति । अनेन च लक्षणेन दशसु मनुष्येषु षड्वर्षैर्मनुष्यैस्तादृशी भाषावगम्यते यस्याः परिशीलनं, यदि कथमप्यपेक्षितं स्यात्, प्राधान्येन बुद्धिमज्जनकौतुकार्थमेव । परन्तु स्वल्प एव विचारो यस्य कस्यचिद्धृदये, पूर्वोक्तलक्षणानुसारेण मृतत्वेन व्यवहर्तुमुचितानां भाषाणां निखिलः सङ्घो न कथमप्यत्र प्रतिपादिताया विवृते † र्गोचर, इति विश्वासं जनयितुमलं स्यात्, तथाहि । इङ्लण्डदेशनिवासिभिर्लोकैरङ्ग्लोसेक्सनाख्या लाटिनाभिधाना चेति भाषाद्वयमप्येषु दिवसेषु नालप्यते । परन्तु तयोर्द्वयोरपि मृतभाषापदेन व्यवहारस्तयोस्तुल्यसम्मानार्हत्वद्योतक इति न कथमप्युचितम् । यदि तयोर्भाषयोः सम्प्रतीङ्लण्डदेशे व्याह्रियमाणायां भाषायामुपयोगोऽपेक्ष्येत तर्हि यतस्तद्देशनिवासिनो जनाश्चिरकालात् शब्दात्मकमर्थात्मकं वा किमप्यभिनवं वस्तु नाधिगच्छन्ति सेयमेङ्ग्लोसेक्सनाख्या भाषा अङ्गलभाषाया मृतजननीत्वेन व्यवहृता स्यात् । परन्तु यस्याः प्रसादात् तद्देशवासिनां भाषा प्रतिवर्षं वृद्धिमुपयाति यन्निबद्धया च विद्यया प्रत्येकवंशपरम्पराया बुद्धिः संस्क्रियते सेयं लाटीनभाषा जीवन्ती धात्रीवाचरतीत्यत्र न संशयः यद्यपि परिभाषानुसारेण तस्या मृतत्वेन स्वीकारो रोचतां नाम । परन्तु यद्यनयोर्भाषयोर्मृतभाषेति सामान्यसञ्ज्ञया तिरोहितो भेदो महानस्ति तर्हि तेनैवानायासशिथिलेनावस्तुघटकधर्म्ममूलकेन सामान्यसञ्ज्ञारूपेण प्रच्छदपटेनात्यन्तमस्फुटैरनेकपुटैः संस्कृतभाषायामप्यावृत्तायां यो भ्रमाविष्टां बुद्धिं नारोहति सोऽयं भेदो महत्तम इति स्पष्टमेव । अतः संस्कृता वाणी, सर्वेषु गुरुविषयेषु, तादृशादेतत्पत्रपाठकाबाधिकं मृता, यो ह्यात्मनो जीवितकालानन्तरमपि जीवने सन्देहाभावं दर्शयितुं शक्नुयाच्चेत् स्वसङ्केतानुसारेण निजमरणानन्तरभाविनीं वृत्तिं परिकल्पयितुं क्षमो भवेदिति शम् ॥ [Translated from an article on the Prospects of India, religious and intellectual, Benares Magazine, March 1849.]

पण्डितशीतलप्रसादत्रिपाठी

---

* तत्किं नु खल्वेतत् ।

† त्वरिततरमपक्रान्ता सा यतः समञ्जसा इयं देवी भवनाभिमुखी पदपरिपाटीदृश्यते ।

‡ भोदेव्याः भवनं गत्वा मध्यान्हसंध्या निर्वर्त्यतां तस्याः प्रवृत्तिलम्भे प्रवर्त्यताम् ।

* जन्मा श्राने मात्रादिवृद्धजनव्यवहारादिना गृहीतसंकेतैः पदैर्घटिता भाषा मातृभाषा ।

† विवृतेरिति 'यस्याः परिशीलनं, यदि कथमप्यपेक्षितं स्यात्, प्राधान्येन बुद्धिमज्जनकौतुकार्थमेवेत्येवं रूपाया इत्यर्थः ॥

# THE APHORISMS

OF THE

# YOGA PHILOSOPHY

OF

## PATAÑJALI.

(*Continued from page 97.*)

[1] He now proceeds to state that the self-knowing understanding by its power of perceiving all objects is sufficient to accomplish all purposes:

**द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम् ॥ २२ ॥**

Aph. 22. The thinking principle (i. e. intellect) tinged by the knower and the knowable is the totality of objects.

[2] The "knower" is the soul, tinged by it, means when the understanding has assumed its (the soul's) proper nature in contiguity with it. "Tinged by the knowable"—or the object, means, when it (the mind) has assumed the modification in the shape of an object. Then that (the mind) itself becomes competent to perceive all objects. As only pure crystals, mirrors and the like are capable of receiving a reflection, so also the "quality of purity" not overpowered by "Passion" and "Darkness," being pure is capable to receive the reflection of the intelligence [soul], not so Passion and Darkness, for they are impure. Then the pure quality of purity, wherein the shapes of Passion and Darkness are subsided, being primary or not associated, exists always modifying in one form like a fixed apex of the lamp-flame, by its efficacy of receiving the reflection of intelligence (soul) until the attainment of liberation. As motion in iron is produced in the vicinity of a load-stone, in the same manner the manifestible intelligence of the quality of purity (understanding) is manifested in the proximity of the soul in the shape of intelligence.

Hence in this system of philosophy there are two powers of intelligence, [1] the ever rising, and [2] the manifestible. The ever-rising power of intelligence is the soul. And the manifestible power of intelligence is the "quality of Purity" (understanding) i. e. the intelligence manifestible in the contiguity of the soul—or ever-rising power. Therefore the understanding alone, tinged by the knower and knowable—appearing as object and subject—i. e. assuming the shape or nature of both intelligent and unintelligent, is called the totality of objects.

But it may be asked. The adumbration of a clear object of finite extension has been seen in a pure thing, like the shadow of the face in a looking glass: how does the adumbration of perfectly pure and infinite soul take place in the impure quality of Purity—understanding?

---

[1] इत्थं स्वसंविदितं चित्तं सर्वार्थग्रहणसामर्थ्येन सकलव्यवहारनिर्वाहक्षमम्भवतीत्याह ॥

[2] द्रष्टापुरुषस्तेनोपरक्तं तत्सन्निधाने तद्रूपतामिव प्राप्तम् । विषयोपरक्तङ्गृहीतविषयाकारपरिणामं यदा भवति तदा तदेव सर्वार्थग्रहणसमर्थं जायते । यथा निर्मलं स्फटिकदर्पणाद्येव प्रतिबिम्बग्रहणसमर्थमेवं रजस्तमोभ्यामनभिभूतं सत्त्वं शुद्धत्वाच्चिच्छायाग्रहणसमर्थम्भवतीति न पुनरशुद्धत्वाद्रजस्तमसी । तदा न्यग्भूतरजस्तमोरूपमङ्गितया सत्त्वं निश्चलप्रदीपशिखाकारं सदैवैकरूपतया परिणममानं चिच्छायाग्रहणसामर्थ्यादामोक्षप्राप्तेरवतिष्ठते यथा ऽयस्कान्तसन्निधाने लोहस्य चलत्वमाविर्भवत्येवञ्चिद्रूपपुरुषसन्निधाने सत्त्वस्याप्यभिव्यङ्ग्यमभिव्यज्यते चैतन्यम् । अतएवास्मिन्दर्शने द्वे शक्ती नित्योदिताऽभिव्यङ्ग्या च नित्योदिता चिच्छक्तिः पुरुषस्तत्सन्निधाने अभिव्यक्त्याऽभिव्यङ्ग्यचैतन्यं सत्त्वमभिव्यङ्ग्या चिच्छक्तिः । तदेतच्चित्तमेव द्रष्टृदृश्योपरक्तं विषयविषयिनिर्भासं चेतनाचेतनस्वरूपापन्नं सर्वार्थमित्युच्यते ॥

[3] ननु प्रतिबिम्बनं निर्मलस्य नियतपरिमाणस्य निर्मले दृष्टं यथा मुखस्य दर्पणेषु अत्यन्तनिर्मलस्य व्यापकस्य च पुरुषस्यानिर्मलसत्त्वे कथम्प्रतिबिम्बनमुत्पद्यते । उच्यते प्रतिबिम्बनस्य स्वरूपमनवगच्छता भवतेदमभ्यधायि । यैव सत्त्वगताया अभिव्यङ्ग्यायाश्चिच्छक्तेः पुरुषस्य सान्निध्येऽभिव्यक्तिः सैव प्रतिबिम्बनमुच्यते यादृशी च पुरुषगता चिच्छक्तिस्तच्छाया तत्राप्याविर्भवतीति, यदप्युक्तमत्यन्तनिर्मलः पुरुषः कथमनिर्मले सत्त्वे प्रतिसङ्क्रामतीति तदप्यनैकान्तिकम् । नैर्मल्यादपकृष्टेपि जलादावादित्यादयः प्रतिसङ्क्रान्ताः समुपलभ्यन्ते ॥

यदप्युक्तमपरिच्छिन्नस्य नास्ति प्रतिसङ्क्रान्तिरिति तदप्यनुपपन्नम् ॥

व्यापकस्याप्याकाशस्य दर्पणादौ प्रतिसङ्क्रान्तिदर्शनात् । एवञ्च न कदाचिदनुपपत्तिः प्रतिबिम्बदर्शनस्य । ननु सात्त्विकपरिणामरूपे बुद्धिसत्त्वे पुरुषसन्निधानाभिव्यङ्ग्या चिच्छक्तिर्बाह्याकारसङ्क्रान्ता पुरुषस्य सुखदुःखरूपो भोगइत्युक्तम् । तदनुपपन्नम् । तदेव चित्तसत्त्वं प्रकृतावपरिणतायाङ्कथं सम्भवति किमर्थञ्च तस्याः परिणामः । अथोच्यताम्, पुरुषस्यार्थोऽपि भोगसम्पादनंतया कर्तव्यमतः पुरुषार्थकर्तव्यतया तस्या युक्त एव परिणामः । तन्नोपपन्नम् । पुरुषार्थकर्तव्यताया एवानुपपत्तेः । पुरुषार्थो मया कर्तव्य इत्येवं विधोऽध्यवसायः पुरुषार्थकर्तव्यतयोच्यते जडायाश्च प्रकृतेः कथम्प्रकृतमेवैवंविधोऽध्यवसायः अस्ति चेदध्यवसायः कथं जडत्वम् । अत्रोच्यते । अनुलोमप्रतिलोमलक्षणपरिणामद्वये सहजं शक्तिद्वयमस्ति तदेवपुरुषार्थकर्तृव्यतयोच्यते सा चाचेतनाया अपि प्रकृतेः सहजैव तत्र महदादिमहाभूतपर्य्यन्तोऽस्या बहिर्मुखतयाऽनुलोमः परिणामः पुनः स्वकारणानुप्रवेशद्वारेणास्मितान्तः प्रतिलोमः परिणामः इत्थं च पुरुषभोगसमाप्तौ सहजशक्तिद्वयक्षयात् कृतार्था प्रकृतिर्न पुनःपरिणाममारभते । एवंविधायाञ्च पुरुषार्थकर्तव्यतायां जडायाः प्रकृतेर्नकदाचिदनुपपत्तिः । ननु यदीदृशीशक्तिः सहजैव प्रधानस्यास्ति तत्किमर्थं तदर्थिभिर्मोक्षाय यत्नः क्रियते मोक्षस्य चानर्थनीयत्वे तदुपदेशकस्य शास्त्रस्याप्यानर्थक्यम् । उच्यते । योऽयम्प्रकृतिपुरुषयोरनादिर्भोग्यभोक्तृभावलक्षणः सम्बन्धस्तस्मिन्सति व्यक्तचेतनायाः प्रकृतेः कर्तृत्वाभिमानाद् दुःखानुभवे सति कथमियमात्यन्तिकी दुःखनिवृत्तिर्मम स्यादिति भवत्येवाध्यवसायोऽतोदुःखनिवृत्त्युपायोपदेशकशास्त्रोपदेशापेक्षाऽस्त्येव प्रधानस्य । तथाभूतमेव कर्मात्मरूपं बुद्धिसत्त्वं शास्त्रोपदेशस्य विषयः । दर्शनान्तरेष्वप्येवं विधएवाविद्या स्वभावः शास्त्रेऽधिक्रियते स च मोक्षाय प्रयतमान एवंविध एव शास्त्रोपदेशं सहकारिणमपेक्ष्य मोक्षाख्यम्फलमासादयति सर्वाण्येव च कार्य्याणि प्राप्तायां समग्रायां सामग्र्यामात्मानं लभन्ते ॥

अस्य च प्रतिलोमपरिणामद्वारेणोत्पाद्यस्य मोक्षाख्यस्य कार्य्यस्येदृश्येव सामग्री प्रमाणेन निश्चिता प्रकारान्तरेणानुपपत्तेरतस्तांविना कथम्भवितुमर्हति अतः स्थितमेतत्सङ्क्रान्तविषयोपरागमभिव्यक्तचिच्छायं बुद्धिसत्त्वं विषयनिश्चयद्वारेण समग्रां लोकयात्रां निर्वाहयतीति । एवंविधमेवचित्तं परे भ्रान्ताः स्वसंवेदनं चित्तं चित्तमात्रञ्जगदित्येवं ब्रुवाणाः प्रतिबोधिता भवन्ति ॥

To this it may be replied thus: You say this not knowing the nature of adumbration. The manifestation that takes place in the vicinity of the soul, of the manifestible power of intelligence residing in the "quality of Purity" is called adumbration; and of whatever kind the power of intelligence residing in the soul is, reflection of the same takes place upon it. As for what has been said: How is the perfectly pure soul reflected upon the impure "quality of Purity?" this also is inconsistent. For the sun &c is seen to be reflected in water &c which is deficient in purity. And as for what has been said that reflection of an infinite does not take place, this too is inconsistent. For a reflection even of ether which is infinite is seen in a mirror, &c.

Thus there is no contradiction in the observation of such reflection. But then it may be objected that it has been stated that the power of intelligence which is manifestible in contiguity with the soul in the understanding—i e. the modification of the "quality of Purity," reflected in the form of an external object is called the soul's experience in the shape of pleasure or pain. This also is unreasonable. For how is that understanding possible when nature is not modified, and to what purpose would such modification take place? To this we may reply: "Nature" has to provide fruition for the soul, therefore inasmuch as she must afford the aim of the soul, her modification is necessary. This is not right. For it is not possible that she should compass the end of the soul. For Nature's determination to effect the end of the soul is called the provision of the aim of the soul. How is such a resolution compatible with an unintelligent "nature," and if there is a resolution in nature, how then is she unintelligent? To this it is replied: There are two innate powers in the two modifications characterised by successiveness and regressiveness, the same are called the fulfilment of the end of the soul; and these modifications are easy for unintelligent nature also. Its [the nature's] successive modification is from understanding &c up to the gross elements, she being then directed outwards, again by means of subsiding into the respective courses, the modification which is called regressive modification recedes into egotism. Hence the experience of the soul being completed, and in consequence of the cessation of the two innate powers, nature having realised her end undergoes no farther modification.

The necessity of providing the end of the soul being as afore-stated there is no contradiction involved in the unintelligence of nature. But it may be asked that if such a power does naturally exist in nature, why do those seekers of it make efforts to attain emancipation, and if the liberation is not aimed at, then the system also which lays down precepts for it must be declared useless. This is replied to thus: The eternal relation of the soul and nature characterised as the relation of experiencer and experienced, being admitted, the fact of the intelligence of nature follows, and then there being an experience of pain in consequence of her supposing herself an agent, the resolution. How shall absolute cessation of pain take place in me? takes place; hence the system that lays down percepts for the means of removing pain is required by nature. Such an understanding [the modified state of the quality of purity] in the shape of active soul is the object of the instruction by this system. In other philosophical systems also such a habit of nature has been made the subject [that is, has been described] And this endeavouring to attain emancipation, having found such an auxiliary as the precepts of the system, realises the effect or result called emancipation. All effects take their form [i. e. are produced] on receiving their whole apparatus: The apparatus of this effect called emancipation, which is producible merely by regressive modification, has been proved to be the same [as stated] for it can not be produced in another way. Therefore how can it take place without that? Consequently it is established that the "quality of purity" in the understanding tinged by the object and in which the shadowing of the intelligence [soul] has taken place, carries on all processes of the universe. Certain erroneous thinkers who suppose their own mind self-conscious, and maintain that the whole universe is pure mind, are hereby informed that the nature of the mind is such as we have described it.

[1] But it may be questioned. If all purposes are accomplished by the mind thus described, why then should an experiencer be acknowledged? with reference to this doubt he declares as follows: G. D.

*(To be continued.)*

[1] ननु यद्येवंविधादेव चित्तात्सकलव्यवहारनिष्पत्तिः कथम्प्रमाणशून्यो द्रष्टाऽभ्युपगत इत्याशङ्कायां द्रष्टुः प्रमाणमाह ॥



PRINTED AND PUBLISHED BY THE PROPRIETORS, E. J. LAZARUS AND CO., AT THE MEDICAL HALL PRESS, BENARES.

# काशीविद्यासुधानिधिः

श्रीगणेशाय नमः

श्रीमद्विजयिनीदेवीपाठशालोदयोदितः । प्राच्यप्रतीच्यवाक्पूर्वापरपक्षद्वयान्वितः ॥ १ ॥
अङ्कुरश्मिः स्फुटयतु काशीविद्यासुधानिधिः । प्राचीनार्यजनप्रज्ञाविलासकुमुदोत्करान् ॥ २ ॥

A Monthly Journal of the Benares College, devoted to Sanskrit Literature.

No. 66. Benares, November 1st, 1871. Vol. VI.


॥ श्रीः ॥

## ॥ भूमिका ॥

॥ चिन्तामणेः शब्दखण्डस्य रुचिदत्तीयटीकासहितस्य ॥

सम्प्रति तार्किका अनुमानखण्डे दीधितिं भवानन्दीं माथुरीं जागदीशीं गादाधरीं च विशेषतो ऽभ्यस्यन्ति, ता एताः साक्षात् परम्परया वा चिन्तामणेरेव व्याख्या इत्युपजीव्यत्वात्तदभ्यासस्य चिन्तामणेरनुमानखण्डं सम्यक् पठनपाठनादिप्रचारगोचरीभावमापन्नं वर्तते । शब्दखण्डे तु व्युत्पत्तिवादशक्तिवादशब्दशक्तिप्रकाशिकापदवाक्यरत्नाकरादयः स्वतन्त्रा एव ग्रन्थाः सरलत्वाट्टीकानपेक्षत्वाच्च प्रचरिताश्चिन्तामणेस्तु शब्दखण्डो ऽतिसंक्षिप्तसंस्कृतग्रथितत्वाद्गहनार्थत्वाच्चावश्यं व्याख्यामपेक्षत इति क्रमेण मन्दप्रचारो भूत्वा सम्प्रति तथा ऽस्तं गतो यच्छुद्धानि पुस्तकान्यपि तस्य नोपलभ्यन्ते पठनादिना तु दूरे स्थीयताम् । परमयं तर्कतन्त्रस्यैव नान्वर्थचिन्तामणिः किं तु सर्वेषां दर्शनानां शिरोमणिभावमर्हति, यतो ऽस्यैकस्य कृत्स्नस्य तत्त्वतो ऽवगमे सर्वेषु शास्त्रेषु साधीयान् प्रवेशो भवतीति मम परमो विश्वासः । अतो ऽयमस्मिन् पत्रे प्रभुवर्यस्य श्रीमतो ग्रिफिथमहाशयस्य तथा श्रीमतो गाफमहाशयस्य चानुज्ञया प्रकाश्यते । तेन च सहैव प्रतिपत्तिसौकर्याय रुचिदत्तविरचिता तद्व्याख्या ऽपि मुद्र्यते । अयं च रुचिदत्तो ऽतिप्राचीनः प्रौढतमव्युत्पन्नश्चेत्युपलब्धतत्पुस्तकजीर्णतया गम्भीरार्थकतल्लेखेन चानुमीयते । संक्षिप्तरचनया च मैथिलत्वमस्य संभाव्यते । चिन्तामणेस्तु रचयिता न्यायतन्त्रस्याद्याचार्यः श्रीमान् गङ्गेशोपाध्यायो मैथिलः । तमिमं सव्याख्यं चिन्तामणेः शब्दखण्डं श्रीयुताष्टपुत्रोपाख्यपण्डितबालकृष्णशास्त्रिपण्डितवामनाचार्यपण्डितवंशीधरशर्मभिर्दत्तैः पुस्तकैः संशोध्य काशीविद्यासुधानिधिचकोरलोचनगोचरं कर्तुं समुत्सहते ।

व्याकरण॰ बालशास्त्री

---

॥ श्रीः ॥

## ॥ चिन्तामणेः शब्दखण्डम् ॥

(१) अथ शब्दो निरूप्यते ॥

---

## ॥ चिन्तामणेः शब्दखण्डस्य रुचिदत्तकृता व्याख्या ॥

॥ श्रीगणेशाय नमः ॥

(१) व्यालोलकर्णमणिकुण्डलकान्तिपूर-
किर्मीरितद्विगुणगण्डमरीचिभाजः ।
तत् पातु पञ्चशरसङ्गरसाहसिक्य-
निश्वासनुन्नकुचमण्डलमम्बिकायाः ॥ १ ॥
आलोक्य निखिलं शास्त्रं विविच्य च पुनःपुनः ।
शब्दखण्डप्रकाशो ऽयं रुचिदत्तेन तन्यते ॥ २ ॥

उपमानस्य शक्तिग्राहकत्वेन शब्दोपजीव्यत्वात्तन्निरूपणानन्तरं शब्दो निरूप्यतइत्याह । अथेति । यद्यप्यतिदेशवाक्यरूपस्य शब्दस्याप्युपमानोपजीव्यत्वं, तथापि न सर्वस्य तथात्वम् । उपमानस्य संकेतमात्रविषयतया सर्वस्यैव शब्दोपजीव्यत्वमतस्तदेवपुरस्कृतमिति ध्येयम् ॥ यत्तु कीदृगवय इति

(२) प्रयोगहेतुभूतार्थतत्त्वज्ञानजन्यः शब्दः प्रमाणम् ।

प्रश्नानन्तरं चित्रलेखादिना यत्र तादृशपिण्डप्रदर्शनं तत्र तं विनाप्युपमानप्रवृत्तेः तत्र शब्दो नोपजीव्य एवेति किं विनिगमकान्तरेणेति । तत्तुच्छम् । एवमप्युपमानस्य शब्दोपजीव्यत्वं न स्यात्, प्रकारान्तरेणापि शक्तिग्रहे उपमानं विनापि शब्दप्रवृत्तेस्तत्रापीदृग्गवय इत्याभिप्रायिकशब्दापेक्षानियमाच्च ॥ अन्ये तु सूचीकटाहन्यायेन प्रथममुपमाननिरूपणमित्यवसरलक्षणैवात्र संगतिरित्याहुः ॥ (२) प्रयोगेति । अत्रार्थतत्त्वज्ञानं वाक्यार्थतत्त्वज्ञानं, तथा चान्यवाक्यार्थतत्त्वज्ञानरूपपरमेश्वरज्ञानजन्यतया ऽयोग्ये शब्दे ऽतिव्याप्तिवारणाय प्रयोगहेतुभूतेति विशेषणम् । तदर्थोपि प्रयोगहेतुतावच्छेदकावच्छिन्नम् । तथा च स्वसमानविषयकवाक्यार्थज्ञानत्वेन तद्धेतुत्वाद्वाक्यार्थज्ञानत्वं यत्र जनकतावच्छेदककोटिप्रविष्टं तादृशतत्त्वज्ञानजन्यत्वं पर्यवस्यति । एवं च नोक्तातिप्रसङ्गः । ईश्वरज्ञानस्य तेन रूपेण तत्राजनकत्वात् । यद्वा स्वार्थज्ञानत्वेन प्रयोगहेतुत्वात् स्वार्थतत्त्वज्ञानजन्यत्वमेव विवक्षितमिति नोक्तदोषः ॥ नन्वेवं लक्षणमितरभेदसाधकं न स्यात् । स्वपदस्य समभिव्याहृतपदार्थपरतया विपक्षे ऽयोग्यशब्दादौ स्वार्थतत्त्वज्ञानाप्रसिद्ध्या प्रतियोग्यप्रसिद्धौ तदत्यन्ताभावस्यासंभवात् । अतएव वक्ष्यति । निराकाङ्क्षे च श्रोतरि तदुच्चारणजन्यसंसर्गावगमप्रागभावस्य सिद्ध्यसिद्धिपराहतत्वादिति । तत्र तत्पदमत्र स्वपदमिति न कश्चिद्विशेष इति चेत्,न । नह्युक्तलक्षणं यत्रास्ति तत्राप्यप्रमितं येनात्यन्ताभावप्रतियोगि न स्यात् । न वा प्रमेयत्वादिवत्केवलान्वयि, येन विपक्षे तदत्यन्ताभावोपि न स्यात् । तत्र तादृशतत्त्वज्ञानाप्रसिद्ध्या प्रतियोग्यप्रसिद्ध्या हि प्रकृतलक्षणं तत्र लब्धात्मकं परं न भवति । न त्वन्यत्र लब्धात्मकस्य तस्य तत्राभावो ऽपि तया निवार्यते । तथा च स्वार्थतत्त्वज्ञानजन्याः प्रमाणशब्दा एव प्रसिद्धास्तदन्यत्वमयोग्यशब्दे सुग्रहमिति न विपक्षदुर्भिक्षम् । अत एव स्वोपादानगोचरजन्यकृतिजन्यान्यत्वं क्षित्यादौ सुग्रहमित्युक्तम् । एवं सिद्ध्यसिद्धिपराहतिः परिहर्तुं शक्यतएवेत्यपरितोषादये किं चेत्यादिना दूषणान्तरमुक्तमिति ध्येयम् । स्वार्थत्वं च स्वप्रतिपाद्यवाक्यार्थत्वं, तेन स्वरूपायोग्ये घटः कर्मत्वमानयनं कृतिरित्यादिनिराकाङ्क्षे नातिव्याप्तिः । स्वरूपयोग्यस्य च तस्य संग्राह्यत्वमेव । प्रमाणशब्दत्वेन प्रमाजननस्वरूपयोग्यस्यैव लक्ष्यत्वात् । एवमनासन्नादेरपि स्वरूपयोग्यत्वात्संग्राह्यत्वमेवेति ध्येयम् ॥ केचित्तु काकाक्षिगोलकन्यायेन लक्षणेपि शब्दपदं ज्ञानजननस्वरूपयोग्यशब्दपरं, तेन स्वरूपायोग्यनिरासः । तावन्मात्रं चायोग्येपीति पूर्वप्रतीकम् । न च तथापि तत्त्वपद-

(३) ननु शब्दो न प्रमाणम् । तथाहि । (४) करणविशेषः प्रमाणम् । (५) करणं च तद्यस्मिन् सति

मफलं, स्वार्थाभावादेव तत्राप्रसङ्गादिति वाच्यम् । स्वज्ञाप्यस्यैव स्वार्थत्वात् तस्य च तत्रापि सत्त्वादित्याहुः ॥ एतच्च लक्षणं संप्रदायमतेन । मणिकृन्मते वाक्यार्थज्ञानस्य प्रयोगहेतुत्वाभावात् । न च मौनिश्लोकादावव्याप्तिः । तस्यापीश्वरज्ञानपूर्वकत्वात् । न च तस्यानुच्चरितत्वेन कथं तज्जन्यत्वमिति वाच्यम् । कदा चिदवश्यं तद्घटकपदानामुत्पादस्य स्वीकरणीयत्वेन तत्संभवात् । अन्यथा तस्यालीकत्वापातेन मौनिलिखितलिप्यादिना तदनुमानस्याप्यसंभवः । नह्यस्मन्मतेपि नित्यानुमेयशब्दसंभवः । तादृशार्थतत्त्वज्ञानवत्प्रतिसंधेयशब्दत्वं निरुक्तरूपशब्दजातीयत्वं वा विवक्षितमिति नोक्तदोष इत्याहुः ॥ न चार्थतत्त्वज्ञानजन्यतावच्छेदकं योग्यतादिविशिष्टशब्दत्वं तच्च यद्यवगतं तदा तदेव लक्षणम् । अन्यथा हेतुत्वावच्छेदकाग्रहाल्लक्षणाग्रहणं दोष इति वाच्यम् । प्रयोगत्वावच्छेदेन वाक्यार्थज्ञानजन्यत्वग्रहे तत्र च ज्ञाने तत्त्वज्ञानत्वग्रहणैव विशिष्टवैशिष्ट्यस्य निर्वाहादित्याहुः । न च वाक्यार्थज्ञानं विना शुकादिना जनितसंवादिवाक्ये ऽव्याप्तिः, तस्यापि परमेश्वरवाक्यार्थज्ञानजन्यत्वात् ॥ वयं तु स्वार्थतत्त्वज्ञानजन्यतावच्छेदकावच्छिन्नशब्दत्व लक्षणं, तज्जन्यतावच्छेदकं च योग्यशब्दत्वं, तच्च मौनिश्लोकादावस्त्येवेति नाव्याप्तिः । शब्दपदं च ज्ञानस्वरूपयोग्यशब्दपरम् । अतो योग्यताविशिष्टे घटः कर्मत्वमित्यादिशब्दे नातिव्याप्तिरिति ब्रूमः ॥ केचित्तु प्रयोगो हेतुभूतो ज्ञापको यस्यार्थस्य तत्तत्त्वज्ञानजन्यत्वं तदित्याहुः ॥ नव्यास्तु प्रमाणशब्दव्यवहारार्थमिदं लक्षणं, योग्येप्याकाङ्क्षारहिते प्रमाजनके शब्दे तान्त्रिकाणां तदव्यवहारात् तस्यासंग्राह्यत्वमेव । एवं चाकाङ्क्षासत्त्याद्युपेतपदकदम्बकात्मकवाक्यरचनाप्रयोगस्तद्धेतुभूतं तज्जननानुकूलसकलसहकारिविशिष्टं यत्स्वार्थतत्त्वज्ञानं तज्जन्यशब्दत्वं लक्षणम् । अत एवाकाङ्क्षायोग्यतासत्तिमान् शब्दः प्रमाणमित्याहुः ॥ प्रमाणतत्त्वबोधे वर्धमानचरणाः प्रमाजनकशब्दमात्रसंग्राहकं च प्रमाकरणशब्दत्वं शाब्दप्रमित्यसाधारणकारणत्वं वा लक्षणं द्रष्टव्यमित्याहुः ॥ सौगतमतं दूषयितुमुत्थापयति । (३) नन्विति । न चानुमाने शब्दप्रामाण्यं व्यवस्थापितं पुनस्तद्व्यवस्थापनमयुक्तमिति वाच्यम् । तत्र शब्दप्रामाण्यव्यवस्थापने तात्पर्याभावादित्येके । तत्र चार्वाकमतनिराकरणमत्र सौगतमतनिराकरणमित्यपरे । (४) करणविशेषः । प्रमारूपक्रियाकरणम् । (५) करणं चेति । "साधकतमं करणमि"तिसूत्रे क्रियासंबन्धनियमस्यैव कारणान्तरापेक्षयातिशयस्य

क्रिया भवत्येव । न च शब्दे सति प्रमा भवत्येवेति नायं शब्दः प्रमाणम् । (६) न च शब्दो न प्रमाणमिति वाक्यस्य प्रामाण्याप्रामाण्ययोर्व्याघातः । (७) अस्याप्रामाण्येप्येतदुपस्थाप्यानुमानाविसंवादादिति चेन्न ॥ (८) आकाङ्क्षादिमतः पदार्थस्मरणादिव्यापारवतः प्रमाणत्वात् तथाभूतात् प्रमोत्पत्तेरावश्यकत्वात् । (९) अतथाभूतत्वे च फलाजनकत्वस्य कारणान्तरसाम्यात् । (१०) तथापि शब्दो न प्रमाणान्तरम् । (११) पदार्थसंसर्गस्यानुमानत एव सिद्धेः । (१२) तथाहि । दण्डेन गामभ्याजेति पदानि (१३) वैदिकपदानि वा (१४) तात्पर्यविषयस्मारितपदार्थसंसर्गज्ञानपूर्वकाणि, आकाङ्क्षादिमत्पदकदम्बत्वात्,

---

तमबर्थत्वादिति भावः । (६) न च शब्द इति । एतदप्रामाण्ये एतद्विषयीभूतशब्दाप्रामाण्यबाधेन शब्दप्रामाण्याभ्युपगमादेतत्प्रामाण्ये तु साक्षादेवेत्युभयथापि व्याघात इत्यर्थः । (७) अस्येति । शब्दस्य प्रमायामजनकत्वेपि शब्दो न प्रमाणतया व्यवहर्तव्यः । प्रमायोगव्यवच्छिन्नत्वाभावादित्युत्थापितानुमानस्येत्यर्थः । स्वस्वविषयपदार्थोत्थापने सति पश्चान्मानसमनुमानं परामर्शात्मकं जायतइति भावः । न चानुमानमपि परो न मन्यत इति वाच्यम् । सौगतस्य तदङ्गीकारादिति भावः । अत्र चैतदुत्थाप्यस्य मानत्वादित्येतावति वक्तव्ये तस्याप्यविसंवादप्रदर्शनं प्रमित्यजनकीभूतेनैव तद्वाक्येनोत्थाप्यमनुमानमप्रमाणमूलकत्वेन कथं प्रमाणं स्यादिति शङ्कानिराकरणार्थम् । नहि प्रमाणमूलत्व प्रमाणत्वे तन्त्रम्, अपि तु विषयाविसंवाद इत्याशयः । (८) आकाङ्क्षेति । तथा च शब्दो न प्रमाणमित्यत्र यदि शब्दमात्रं पक्षस्तदांशतः सिद्धसाधनम् । यदि पदार्थस्मरणादिव्यापारविशिष्ट एव शब्दः पक्षस्तदा उक्तहेतोरसिद्धत्वमिति भावः । यदि च व्यापाररहितस्य प्रमानुत्पादकत्वे व्यापारविशिष्टस्यापि न प्रमाणत्वं, तदा निर्व्यापारादिन्द्रियादेः प्रमा नेति तस्यापि करणत्वं न स्यादित्यभिप्रेत्याह । (९) अतथेति । न चैवं सामग्रीविशिष्टस्य कारणान्तरस्यापि करणत्वापत्तिरिति कर्त्रादिविचित्रव्यवहारो न स्यादिति वाच्यम् । नानानिमित्तसमावेशाद्विचित्रव्यवहारोपपत्तेरुपधेयसंकरेप्युपाधेरसंकरादिति भावः । उक्तयुक्त्या प्रमाणमपि शब्दमनुमाने ऽन्तर्भावयन् वैशेषिकः प्रत्यवतिष्ठते । (१०) तथापीति । शब्दो न स्वातन्त्र्येण प्रमाजनक इत्यर्थः । युक्तिमाह (११) । पदार्थेति । यतो ऽनुमानात्पदार्थसंसर्गसिद्धिर्भवति तद्दर्शयति । (१२) तथाहीति । तथा च क्लृप्तप्रमाणात्तदर्थसिद्धौ नातिरिक्तं प्रमाणं कल्प्यते गौरवादिति भावः । (१३) वैदिकेति । लौकिकवद्वैदिकेष्वनुमानादेव संसर्गसिद्धिरिति स्वर्गापूर्वादिबोधकतयापि न शब्दप्रामाण्यमिति भावः । अत्र वैदिकपदत्वेन न पक्षता, किं तु स्वर्गकामो यजेतेत्यादिक्रमेण । अन्यथा प्रवर्तिकायाः पदार्थविशेषसंसर्गसिद्धेरसंभवादिति ध्येयम् । (१४) तात्पर्येति । अत्र करणकर्मादीनां वैपरीत्येनान्वयप्रसङ्गवारणाय तात्पर्यविषयेति । धूमोस्तीति वाक्ये तात्पर्यविषयीभूतवह्निसंसर्गसिद्ध्यार्थान्तरवारणाय स्मारितपदार्थेति । वृत्त्या प्रकृतपदस्मारितेत्यर्थः । न चैवं वह्निमात्रतात्पर्यके धूमोस्तीति वाक्ये व्यभिचारः । धूमसंसर्गस्य तात्पर्याविषयत्वादिति वाच्यम् । ईश्वरतात्पर्यमादायादोषात् । न च कर्मादीनां बाधादेव वैपरीत्येन नान्वय इति किं तात्पर्यपदेनेति वाच्यम् । अबाधितस्याप्यनभिमतसंसर्गस्य सिद्धिसंभवात् । यथा प्रमेयत्वे प्रमेयत्वमित्यादावभेदसंसर्गस्याबाधितत्वे ऽप्याधाराधेयभावरूपसंसर्गसिद्धिः । तात्पर्यविषयीभूतो यः संसर्गस्तज्ज्ञानपूर्वकाणीत्यर्थः । तेनार्थात्प्रमायां पर्यवसानम् । के चित्तु ज्ञानपदं प्रमापरमित्याहुः ॥ ननु विशिष्य तात्पर्यग्रहे तात्पर्यावच्छेदकतयैव संसर्गसिद्ध्यापत्तिः । घटपदार्थकर्मत्वे तात्पर्यमित्यादिक्रमेण सामान्यतस्तद्ग्रहे च सैन्धवपदार्थकर्मत्वे तात्पर्यमिति तात्पर्यग्रहे लवणपरे तस्मिन्नश्वादिसंसर्गसिद्ध्यार्थान्तरमिति चेन्न । लवणपदार्थकर्मत्वे आनयनपदार्थक्रियात्वे तात्पर्यमित्येतद्ग्रहे उक्तदोषाभावात् । के चित्तु स्मारितत्वं तदुच्चारणतात्पर्यविषयत्व पदार्थविशेषणमिति नाश्वादिसंसर्गस्य तत्र सिद्धिप्रसङ्गः । एवं च केवलमेव पदार्थपदं वृत्त्या प्रकृतपदप्रतिपाद्यपरमिति पूर्वोक्ते धूमो ऽस्तीति वाक्ये न कोपि दोष इत्याहुः । अहो विमलजलमित्यादि यत्र नदीकच्छसंसर्गपरतया वक्त्रा नोच्चारितं तत्र व्यभिचारवारणायाकाङ्क्षेति, तेन शब्देन तद्विषयप्रतीतेरनुत्पादेन भगवत्तात्पर्यस्याप्यभावात् । तदिच्छायाः सन्मात्रविषयत्वात् । आकाङ्क्षा च तात्पर्यघटिता प्रोक्ता, तेन नोक्तदोषः । एवं च यद्यपि सत्तात्पर्यकत्वे सतीत्येव कृते न व्यभिचारस्तथापि तात्पर्यभागस्यान्वयविशेषणत्वेनाकाङ्क्षाप्रविष्टत्वाद् यथोक्तविशेषणविशेष्यभावे न व्यर्थत्वम् । ननु तथापि सत्तात्पर्यकत्वघटितहेतोरपि प्रकृतसाध्यव्याप्यत्वात्तस्य च घटः कर्मत्वमानयनमित्यादिवाक्ये ऽपि सत्त्वात्ततोपि संसर्गप्रत्ययः स्यादिति चेत् । अत्र वदन्ति । भवत्येव ततो ऽपि लिङ्गविधया संसर्गानुमितिः । अन्यथा तवापि मते यदा सत्तात्पर्ययोग्यतावत्त्वेन घटः कर्मत्वमित्यादिपदं प्रतिसंधीयते निराकाङ्क्षत्वेन च

(१५) घटमानयेतिवत् ।

(१६) योग्यतासत्तिमत्त्वे सति संसृष्टार्थपरत्वात् । (१७) तत्परसंनिधिमत्त्वाद्वेति न हेतुः । संसृष्टो हि यो ऽर्थः तत्परत्वं तत्परसंनिधिमत्त्वं वा (१८) ऽसिद्धं, संसर्गस्य प्रागप्रतीतेः, (१९) संसृष्टत्वप्रकारकप्रतीतिपरत्वं तत्प्रकारकप्रतीतिपरसंनिधिमत्त्वं वा (२०) ऽनाप्तोक्ते (२१) निराकाङ्क्षे च व्यभिचारि, संसर्गस्य (२२) बहुप्रकारकत्वेपि नानभिमतसंसर्गसिद्धिः । तस्य तात्पर्याविषयत्वात् । (२३) अन्यथा शब्दादप्यभिमतान्वयबोधो न स्यात् । (२४) अत एव विशेषणविशेष्यभाववदर्थकानि तद्बोधपूर्वकाणि वेति न साध्यम् ॥ यत्तु स्मारितार्थसंसर्गवन्तीति साध्यम् । मत्वर्थश्च (२५) लिङ्गतया ज्ञापकत्वं, न चान्योन्याश्रयः ।

---

ज्ञायते तदा ततो ऽनुमितिर्न स्यात् । नह्यनुमितिप्रतिबन्धकं निराकाङ्क्षत्वज्ञानमपि तद्विषयत्वस्य हेत्वाभासत्वाभावादिति । आसत्तिपदं च येन योग्यसाकाङ्क्षशब्देन पदार्थस्मरणं न जनितं तत्र व्यभिचारवारणाय । तत्र चाव्यवधानभागः संपातायात इति ध्येयम् । न चाव्यवधानांशभागमादायासत्तिसंदेहे तद्व्यतिरेकनिश्चये वान्वयबोधः स्यादिति वाच्यम् । पूर्ववदिष्टत्वात् । अन्यथा तवाप्यप्रतीकारात् । के चित्तु अव्यवहितस्मारितत्वं साध्ये विवक्षितमित्यव्यवधानांशेपि सार्थक एवेत्याहुः । यदर्थांशे योग्यता तदर्थांशएवासत्तिर्बोध्या, तेन नीलघटत्वावच्छेदेन यत्र घटपदशक्तिभ्रमो जातस्तत्र पीतघटसत्तया योग्ये तत्तात्पर्यके जनितनीलघटस्मरणके ऽत्र घटो ऽस्तीत्यादौ न व्यभिचारः । कदम्बग्रहणमाकाङ्क्षादीनां परस्परप्रतियोगित्वं प्रतिपादयितुम् । यत्तु दृष्टान्तासिद्धिवारणाय तदुपादानं वाक्ये पदत्वाभावादिति । तन्न । व्यभिचारावारकत्वेन व्यर्थत्वात्प्रत्येकपदेपि व्याप्तिग्रहसंभवाच्च । वैशेषिकमते शक्तिग्रहस्य स्मारितेत्यत्रोपयोग इति ध्येयम् । एवं च यथाश्रुतेनैवोपपत्तौ साध्ये पदार्थविशेषणत्वेनाकाङ्क्षादिमत्त्वं प्रक्षिप्य हेतावाकाङ्क्षादिपदवैयर्थ्योद्धार इति केषां चिदुक्तमनादेयमिति ध्येयम् । यत्तु पदार्थपदस्य प्रकृतपदार्थपरत्वं न विवक्षितमेवं च घटमानयेति वाक्ये पटानयनसंसर्गधीपूर्वकत्वेनार्थान्तरं स्यात् तथा च स्वजन्यज्ञानसमानविषयत्वं संसर्गधीविशेषणं पूरणीयमेवं च निराकाङ्क्षादिषु स्वस्याबोधकत्वेन न तस्य स्वजन्यज्ञानसमानविषयत्वमस्तीति तत्र व्यभिचारवारणायाकाङ्क्षादिविशेषणम् । न चैवमपि साकाङ्क्षादावाकाङ्क्षाद्यज्ञानेनान्वयाबोधके व्यभिचार इति वाच्यम् । स्वार्थं हीदमनुमानं, तथा च हेतुग्रहे साध्यसत्त्वात् । अन्यथा व्यभिचाराग्रहेणोभयथानुमित्युत्पत्तिप्रतिबन्धाभावात् । न च व्यभिचारिलिङ्गजन्यत्वेनाभासतापत्तिः । साध्यवति साध्यानुमितेर्विषयाबाधेनाभासत्वासंभवादिति युक्तः पन्था इति । तच्चिन्त्यम् । नहि न्यायमतइवाकाङ्क्षादिमत्त्वमात्रप्रतिसंधानादेव वैशेषिकनयेपि शब्दोन्वयबोधकः, किं तु व्याप्यत्वादिना प्रतिसंहितः । तथा चाकाङ्क्षादिमत्तया ज्ञायमानेनापि येन शब्देन व्याप्त्यादिप्रतिसंधानरूपसहकारिविरहादन्वयबोधो न जनितस्तत्र व्यभिचारग्रहोपि संभवत्येव । किं चैवं तात्पर्यविषये इत्यपि विशेषणं व्यर्थमेव,अनभिमतसंसर्गज्ञानस्य भिन्नविषयकत्वनियमेन तदादायार्थान्तरासंभवात्तात्पर्यविषयपदेनैवोक्तार्थान्तरवारणसंभवे उक्तविशेषणपूरणायोगाच्चेति । (१५) घटमानयेति । दृष्टान्तान्तरेण तत्रापि साध्यसिद्धिरिति भावः ।

लीलावतीकारोक्तं हेतुद्वयं दूषयति । (१६) योग्यतेति । (१७) तत्परेति । संसृष्टार्थपरासत्तिमत्त्वादित्यर्थः । न चायोग्ये व्यभिचारः, तत्रसंसृष्टार्थाभावादितिभावः । के चित्तु योग्यतामात्रमत्राप्यनुषञ्जनीयमेवेत्याहुः । (१८) असिद्धमिति । अज्ञानरूपासिद्धिरित्यर्थः । (१९) संसृष्टत्वेति । यद्यप्यत्राप्यसिद्धिः संसर्गस्याप्रकारत्वात्तथापि लिङ्गविधया शब्दस्य बोधकत्वे संसर्गप्रकारकप्रतीत्यङ्गीकारः शाब्दबोधएव तस्य वाक्यार्थविधया भानादिति भावः । (२०) अनाप्तोक्तइति । एतच्च द्वितीयहेत्वभिप्रायेण । तत्र योग्यताविशेषणाभावात् । के चित्तु सजातीये ऽन्वयदर्शनं योग्यतेति मतेनोक्तमित्याहुः । (२१) निराकाङ्क्षे चेति । प्रकृतसंसर्गान्यसंसर्गप्रतीतीच्छयोच्चरिते घटः कर्मत्वमित्यादौ योग्यासन्न इत्यर्थः । तत्र प्रकृतपदार्थसंसर्गे तात्पर्याभावेनोक्तसाध्यासत्त्वात्तेन प्रतीत्यजननादीश्वरतात्पर्यस्याप्यभावादिति भावः । (२२) बहुप्रकारकत्वेपीति । बहुविधत्वेपीत्यर्थः । (२३) अन्यथेति । तात्पर्याविषयस्यापि संसर्गस्य सिद्धिप्रसक्तावित्यर्थः । (२४) अत एवेति । अनभिमतसंसर्गसिद्धिप्रसङ्गादेवेत्यर्थः । (२५) लिङ्गतयेति । अत्र ज्ञापकत्वमात्रं साध्यं यथा ज्ञापकत्वं तथा तत्साधनाय लिङ्गतयेत्युक्तम् । न चैवं सिद्धसाधनमिति वाच्यम् । नहि परं प्रत्यभिचप्रमाणत्वसाधनायेदम् । किं तु यथा ऽनुमानविधया शब्दादर्थधीः श्रोतुरुत्पद्यते सा रीतिः प्रयोगेणोपदर्श्यते तत्र नैयायिककर्तृकसिद्धसाधनोद्भावनप्रसङ्ग एव नास्ति । अन्यथा पूर्वानुमानेप्यगतेः । न चैवमन्योन्याश्रयप्रसङ्गानवकाश इति वाच्यम् । यत्र हि वाक्ये व्याप्तिग्रहस्तत्र तज्ज्ञापकत्वं ग्राह्यं तत्र स्वातन्त्र्येण तथानभ्युपगमात् । किं तु

(२६) पूर्वपूर्वानुमितिहेतुत्वेनानादित्वादिति। तन्न। (२७) ज्ञापकत्वमात्रेणार्थासिद्धेः। (२८) प्रमापकत्वे तेनैव व्यभिचारात्।

---

लिङ्गतयैव तत्र व्याप्तिग्रहस्यानमनवस्थाभिया नान्यद्वाच्यमिति तदेव वाच्यमित्यन्योन्याश्रयसंभवात्। (२६) पूर्वेति। तथा चानादित्वादनवस्था न दोषायेति भावः। (२७) ज्ञापकत्वेति। असत्यपि संसर्गे ज्ञापकत्वसंभवादित्यर्थः। यदि च स्मारितसंसर्गस्य ज्ञानजनकानीति साध्यं तदा प्रमापकत्वमेव पर्यवसन्नमिति भावः। यद्यप्यर्थसिद्धिरर्थज्ञानमेवेति ज्ञानविशेषणीभूतार्थानुमितिरर्थसिद्धिर्भवत्येव तथाप्यर्थज्ञानानुमित्या वास्तवोऽयमर्थ इत्यवधारणाभावएवार्थासिद्धिर्द्रष्टव्या। तस्यैव निष्कम्पप्रवृत्त्यौपयिकत्वात। प्रमात्वं च वस्तुनियतमिति तद्गर्भे साध्ये नोक्तदोष इति भावः। यद्यपि प्रकारान्तरेण तत्र प्रामाण्यनिश्चयसंभवेनोक्तदोषस्तथापि उक्तरीत्या एकदा तत्संभव इति लाघवमित्यर्थः। (२८) प्रमापकत्वइति। आकाङ्क्षादिमतोऽपि सहकारिविरहेण कदाचित्प्रमानुत्पादकत्वादित्यर्थः। यद्यपि ज्ञापकत्वेपि व्यभिचारोऽस्ति तथापि दूषणान्तरस्यैव संभवादयं नोद्भावित इति ध्येयम्। ननु स्वरूपयोग्यत्वे साध्ये न व्यभिचार इति चेत्। अत्र वदन्ति। तादृशसाध्ये प्रकृतसंसर्गासिद्धिरेव दोषः। तथाहि, तस्य साध्यत्वे यादृशेन हेतुना वाक्ये कस्यापि प्रमा न जन्यते। तत्र तादृशपदस्मारितपदार्थसंसर्गप्रमां प्रति तस्य स्वरूपयोग्यत्वमादाय न साध्यसत्त्वमुपेयम्। तस्या अत्यन्तासत्त्वात्। किं त्वन्यादृशवाक्यजन्यप्रमां प्रति तस्य तत्त्वमादाय तत्र तत्सत्त्वमुपेयम्। तथा च तस्य साध्यत्वे कथं पक्षीभूते वाक्ये पक्षधर्मताबलादपि प्रकृतसंसर्गस्य प्रमावच्छेदकतया सिद्धिः स्यात्। प्रमित्यजनकवाक्यइव तत्राप्यन्यादृशवाक्यजन्यप्रमामेवादाय तत्स्वरूपयोग्यतां विषयीकृत्य प्रकृतानुमितिपर्यवसानसंभवात्। तस्मात्प्रकृतसंसर्गसिद्ध्यर्थं प्रमारूपफलोपधानमेव साध्यम्। किं च प्रमास्वरूपयोग्यत्वे साध्ये हेतौ योग्यताविशेषणवैयर्थ्यम्। आकाङ्क्षाविशिष्टत्वेनैव शब्दस्य प्रमां प्रति स्वरूपयोग्यत्वात्। बाधविरहरूपयोग्यतायाश्च तस्य तज्जनने सहकारित्वात्। अत एव शाब्दप्रमायां तस्या गुणत्वमुक्तम्। यदि च योग्यतैव प्रमास्वरूपयोग्यतावच्छेदिका ऽऽकाङ्क्षैव सहकारिणी तदाकाङ्क्षापदवैयर्थ्यमेव। आसत्तिपदं च उभयथापि व्यर्थं स्यात्। नहि सापि प्रमा स्वरूपयोग्यतावच्छेदिका, योग्यतासत्त्वे तद्भमेपि शाब्दप्रमोत्पत्तेरिति।

के चित्तु लिङ्गस्याजनकतया जनकत्वसाधने व्यभिचार

(२९) ज्ञानावच्छेदकतया च संसर्गसिद्धिः। (३०) ज्ञानज्ञानस्य तद्विषयविषयकत्वात् (३१) संसर्गे च संबन्धिन एव विशेषकत्वात् पक्षधर्मताबलाद् व्यापकत्वेनागृहीतस्यापि संसर्गविशेषस्य सिद्धिः। अथैवं भ्रान्तिज्ञानमपि भ्रमः स्यात्। न चेष्टापत्तिः। (३२) ईश्वरस्यापि भ्रान्तत्वापत्तेः। (३३) इदं रजतमिति भ्रमादिव शुक्तौ रजतज्ञानवानयमिति ज्ञानाद्भ्रान्तिज्ञप्रवृत्त्यापत्तेश्च। (३४) यत्तु भ्रमविषयकत्वेन न भ्रमत्वं भ्रमविषयस्य (३५) सिद्ध्यसिद्धिभ्यां पराहतत्वादिति

---

इत्याहुः॥ ननु संसर्गस्याव्यापकत्वात्कथं तत्सिद्धिरित्यत आह। (२९) ज्ञानेति। वह्नित्वादिवद्व्यापकतावच्छेदकस्यापि भानमनुमितौ अविरुद्धमिति भावः। संसर्गभाने बीजान्तरमाह। (३०) ज्ञानज्ञानस्येति। ज्ञानज्ञानस्योपस्थिततद्विषयविषयकत्वस्वभावात्। अनुव्यवसायादौ तथा दर्शनात्। तत्र व्यवसायेन तस्योपस्थितिरत्र व्यापकतावच्छेदकतयेति। यथाश्रुते ज्ञानादिपदजन्यज्ञाने व्यभिचार इति ध्येयम्। एतच्च स्मृत्यर्थानुभवजनकवेदमूलेत्यादौ मीमांसकमतइव तटस्थज्ञानविषयीभूय संसर्गो नावच्छेदकः, किं तु प्रकृतानुमितिविषय एवेति दर्शयितुमुक्तम्। ननु तथापि न संसर्गविशेषधीः प्रवर्तिका च सेत्यत आह। (३१) संसर्गे चेति। तथा च स्मारितघटादिपदार्थविशेषितसंसर्गसिद्धौ न प्रवृत्त्यनुपपत्तिरिति भावः। (३२) ईश्वरस्येति। त्वदुक्तरीत्या तज्ज्ञानस्यापि भ्रमविषयीभूतासद्वैशिष्ट्यावगाहित्वादिति भावः। नन्वीश्वरज्ञानं पारमार्थिकमात्रविषयतया न तथा। संसारिज्ञानं तु भ्रमविषयकं भ्रमः स्यादित्यत्रेष्टापत्तिरेवेत्यपरितोषादाह। (३३) इदमिति। नह्यत्रापीष्टापत्तिरिति भावः। न च विशेषदर्शनादिना तत्र शुक्तौ नासद्वैशिष्ट्यभानमिति वाच्यम। तथाप्युक्तनियमभङ्गादिति भावः। भ्रमविषयविषयकत्वेन भ्रान्तिज्ञानस्यापि भ्रमत्वमित्यत्र पूर्वपक्षे कस्य चित्समाधानयुक्तिं प्रथमं दूषयितुं सिद्धान्त्येवोपन्यस्यति। (३४) यत्त्विति। (३५) सिद्धीति। सत्त्वासत्त्वाभ्यामित्यर्थः। तथा च यदि भ्रमविषयः सन् तदा तद्विषयत्वं सद्विषयत्वमेव पर्यवसन्नं तेन च भ्रमत्व न साध्यं, विरोधात्। सद्विषयस्य ज्ञानस्य प्रमात्वनियमात्। यदि च भ्रमविषयो ऽसन् तदा ऽसद्विषयत्वेन भ्रमत्वमित्यायातं तदपि न संभवति। असतः शशशृङ्गवद्भानासंभवेन तस्यासिद्धत्वादित्यर्थः। के चित्तु स यद्यसन् तदाभ्रमविषयविषयकत्वरूपलिङ्गज्ञानमपि भ्रम एवेति तेन कथं भ्रमत्वं साध्यमिति

(३६) तत्र वक्ष्यामः । (३७) मैवम् । असद्विषयत्वेन हि न भ्रमत्वम् । (३८) भ्रमविषयाणां सत्त्वात्, (३९) किं तु व्यधिकरणप्रकारकत्वेन, न च भ्रमस्य ज्ञाने व्यधिकरणं प्रकारः । रजतत्वप्रकारकत्वस्य भ्रमेऽपि सत्त्वात् । (४०) अन्यथा भ्रान्त्युच्छेदः । प्रमाणाभावात् । (४१) ननु प्रतारकवाक्ये व्यभिचारः । विशेषदर्शनेन तत्र संसर्गज्ञानाभावात् । न च संसर्गमप्रतीत्य वाक्यरचना न संभवतीत्याहार्यं तस्य संसर्गज्ञानं संभवतीति वाच्यम् । तावत्पदज्ञानादेव शुकस्येव वाक्यरचनोपपत्तेः । अन्यत्रापि तस्यैव तन्त्रत्वादिति चेन्न । (४२) एतद्वाक्यमेतस्य पदार्थसंसर्गं बोधयिष्यतीत्या (४३) शयेन वाक्यप्रयोगात्तस्यापि संसर्गज्ञाना (४४) द्योग्यताविरहाच्च । अत एव विसंवादिवाक्ये शुकवदुच्चरिते न व्यभिचारः ।

---

भ्रमत्वसिद्धेः यथार्थाया: सिसाधयिषितत्वादित्याहुः । (३६) तत्र वक्ष्याम इति । तत्र समाधानयुक्तौ व्याघातरूपायां सद्विषयत्वेऽपि व्यधिकरणप्रकारत्वेन भ्रमत्वमिति नोक्तविरोध इत्यनुपदमेव स्वकर्तव्यसमाधानावसरे वक्ष्याम इत्यर्थः । स्वयं समाधत्ते । (३७) मैवमिति । (३८) भ्रमेति । शुक्त्यादीनां सर्वेषां पारमार्थिकत्वादित्यर्थः । तथा चासद्विषयकत्वमप्रसिद्धमिति भावः । तर्हि सद्विषयकत्वेऽपि रजतभ्रमवद्भ्रान्तिज्ञानस्य भ्रमत्वमस्त्वित्याशङ्क्याह । (३९) किं त्विति । तथा चेष्टतावच्छेदकप्रकारकत्वाभावाच्च प्रवर्तकत्वमपि भ्रान्तिज्ञानस्येति भावः । व्यधिकरणं किं चिदिति शेषः । (४०) अन्यथेति । असद्विषयत्वेनैव भ्रमत्वे भ्रान्त्यसिद्धिः । भ्रान्तिग्राहकस्य च सर्वस्यैवासद्विषयत्वापत्त्या भ्रमत्वापातादित्येके । भ्रमानुव्यवसायादेरपि व्यधिकरणप्रकारकत्वमित्यन्ये । रजतभ्रमज्ञानस्यापि रजतत्वप्रकारकत्वे भ्रान्तित्वासिद्धेः । शुक्त्यादौ रजतत्ववैशिष्ट्यावगाहित्वेन तत्र तदभाववत्त्वानवगाहितया भ्रमज्ञानेन भ्रान्तित्वावगाहनायोगादित्यपरे । अन्वयप्रयोजकरूपवत्त्वं योग्यतेति मत्वादेशयति । (४१) नन्विति । (४२) एतद्वाक्यमिति । तथा च संसर्गज्ञानाजन्यत्वेऽपि प्रतारकवाक्ये कथं चित्संसर्गज्ञानपूर्वकतामात्रेणोक्तसाध्यसंभवान्न व्यभिचार इति भावः । (४३) आशयेनेति । एवं चेच्छाहेतुतया तद्धीर्वाच्येत्यर्थः । ननु संसर्गप्रमापूर्वकत्वं साध्यं तच्च तत्रासंभवीति व्यभिचारतादवस्थ्यमित्यत आह । (४४) योग्यतेति । बाधाभावरूपा योग्यता तत्राभिमता, तथा च साध्यभावसत्त्वेऽपि हेत्वसत्त्वान्न

(४५) शब्दात्संसर्गप्रत्ययस्तु योग्यताभ्रमात् ॥ अथ संसर्गज्ञानं विना शुकस्यान्यस्य वा संवादिवाक्ये (४६) भ्रान्तप्रतारकवाक्ये च व्यभिचारः । (४७) कथं वा तत्र संसर्गप्रमा । वक्तृज्ञानानुमानासंभवादिति चेत् (४८) यदि तत्र संसर्गप्रमा तदा वेदतुल्यतेत्युक्तम् । (४९) आकाङ्क्षा योग्यतासत्तिश्च ज्ञाता उपयुज्यन्ते । (५०) अन्यथा शाब्दभ्रमानुपपत्तेरिति । उच्यते । अर्थज्ञानं प्रवर्त्तकं न तु ज्ञानज्ञानं गौरवाद् (५१) व्यभिचाराच्च । अतो रजतज्ञानवानयमिति ज्ञानं न प्रवर्त्तकं किं त्विदं रजतमिति ज्ञानम् । इदमपि ज्ञानं रजतविषयकमिति चेत् । सत्यम् । न तु रजतत्वप्रकारकं प्रवर्त्तकं च तथा । (५२) अन्यथाभ्रान्तस्येव भ्रान्तिज्ञस्यापि प्रवृत्तिप्रसङ्गः (५३) तद्द्वयसंकरापत्तिश्च ॥ एतेन लक्षणाद्यनुरोधात्तात्पर्यग्रहो वाक्यार्थधीहेतुः । तात्पर्यं च पदार्थसंसर्गविशेषप्रतीत्युद्देश्यकत्वम् । तथा च तद्ग्राहकानुमानादेव तात्पर्यज्ञानावच्छेदकतया संसर्गसिद्धिरित्यपास्तम् ॥

---

व्यभिचार इति भावः । (४५) शब्दादिति । लिङ्गतयेति शेषः । (४६) भ्रान्तेति । न चाहार्यं संसर्गज्ञानमस्त्येव, तच्च विषयाबाधात्प्रमेति न व्यभिचार इति वाच्यम् । बाधितस्यापि स्मृत्युपनीतस्याहार्यारोपसंभवादिति भावः । वस्तुतस्तु भ्रान्तप्रतारकस्येव वाक्यं भ्रान्तप्रतारकवाक्यं तथा च घटाभावसंसर्गज्ञानानन्तरं घटो नास्तीति वक्तव्ये करणापाटवेन घट इति प्रयोगे व्यभिचारो बोध्यः, भ्रान्तप्रतारकोऽपि घटाभावं बुद्ध्वा घट इति प्रयुङ्क्त इति साम्यं, तत्पक्षीकरणे बाधमाह । (४७) कथं वेति (४८) यदीति । यदि न तत्र संसर्गप्रमा तदा तात्पर्यगर्भाकाङ्क्षारूपहेतुविशेषणविरहादेव न व्यभिचारः । यदि तु तत्र संसर्गप्रमा तदीश्वरतात्पर्यं तदीयसंसर्गज्ञानं वादाय साध्यमस्त्येवेति न व्यभिचार इत्यर्थः । (४९) आकाङ्क्षेति । अतो न लिङ्गविशेषणत्वानुपपत्तिरिति भावः । (५०) अन्यथेति । यदि ताः स्वरूपसत्य एव हेतव इत्यर्थः । यद्यपि योग्यतायां सत्यामाकाङ्क्षासत्त्योर्भ्रमाद् न शाब्दभ्रमस्तथापि अयोग्ये शब्दे तयोर्भ्रमाद्यः शाब्दभ्रमः स न स्यात् । स्वरूपसदाकाङ्क्षासत्त्योस्तत्राभावादिति भावः । एतदपि तात्पर्यघटिताकाङ्क्षापक्षे बोध्यम् । (५१) व्यभिचारादिति । इदं रजतमिति ज्ञानादपि प्रवृत्तिदर्शनादित्यर्थः । (५२) अन्यथेति । यदि तत्प्रकारकं ज्ञानं न प्रवृत्तिजनकं किं त्वर्थज्ञानमात्रं तदेत्यर्थः । (५३) तद्द्वयेति । भ्रमो भ्रमविषयकं ज्ञानं द्वयं तस्य

(५४) किं च व्यापकतावच्छेदकप्रकारिकानुमितिस्ततः स्मारितपदार्थसंसर्गज्ञानपूर्वकाणीत्यनुमितिः स्यात्, न तु रजतज्ञानपूर्वकाणीति । (५५) तस्मात्प्रवर्त्तकज्ञानं शब्दादेव, अत एव प्रवृत्त्यर्थमनुवादकता शब्दस्येत्यपास्तम् । शाब्दानुमित्योर्भिन्नप्रकारकत्वादेकविषयत्वाभावेनाननुवादकत्वात्तस्यैव प्रमाणत्वात् ।

---

सांकर्ये प्रवर्तकत्वेन । नन्वन्यत्र यथा तथास्तु प्रकृतानुमानं रजतपदस्मारितरजतत्वविशिष्टमेव रजतं पक्षधर्मतावदवगाहमानं रजते रजतत्वप्रकारकं तत्संसर्गे तत्संसर्गप्रकारकं तज्ज्ञाने तज्ज्ञानत्वप्रकारकं भवति । रजतत्वादिनैव रजतादेः प्रागुपस्थितत्वान्न तु रजतत्वप्रकारकत्वप्रकारकं तेन रूपेण प्रागनुपस्थितेरित्यनुशयेनाह । (५४) किंचेति । अनुमितावुपनीतभानं विरुद्धं तथा च अनुमितिपूर्वं रजतत्वेन रजतोपस्थितावपि न तेन रूपेण तस्यानुमितिविषयत्वं, किं तु स्मारितत्वेनेति भावः । ननु संप्रदायमते पूर्वज्ञानोपनीतस्यानुमितिविषयत्वमेव । युक्तं च तथा । लाघवात् प्रमाणत्वावच्छेदेनैवोपनयसहकारित्वकल्पनात् । अत एव परामर्शोपनीतलिङ्गोपहितलैङ्गिकभानाभ्युपगमः । अत एव लाघवज्ञानोपनीतमेकत्वं कर्तरि भासत इति ग्रन्थकृतोप्यनुमतं, तद्वदेव च रजतपदादिना रजतत्वादिप्रकारेण रजतादेरुपस्थितत्वात्प्रकृतानुमानस्य रजतत्वप्रकारकत्वं प्रवर्तकत्वं च भवतीति तन्मते शब्दप्रामाण्यमसाधितमेवेत्यरुचेराह । (५५) तस्मादिति । इदमत्राकूतमस्तु । उक्तानुमानस्य रजतत्वप्रकारकत्वसंभवः तथापि न तस्य प्रवर्तकत्वम् । तथाहि । नहि ज्ञानं रजतत्वप्रकारकमित्येव रजते प्रवर्तयति, रजतं प्रमेयमिति ज्ञाने ऽप्यप्रवृत्तेः । किं त्विदानीमत्र गेहे रजतमस्तीत्याकारं तत्तद्देशतत्तत्कालसंसर्गविशेषावच्छिन्नतया रजततया रजतमवगाहमानं तत्र ज्ञानं प्रवर्तयति । तादृशं च ज्ञानं नोक्तानुमानात्तेषामाधाराधेयभावसंबन्धविशेषस्य तत्राभानात् । ततो ह्येतानि पदानि रजतादिसंसर्गज्ञानपूर्वकाणि इत्येव प्रतीतिः स्यात् । न च तात्पर्यविषयत्वस्य संसर्गविशेषणत्वात्तल्लाभः । तथापि तात्पर्यविषयत्वेनैव प्रकारेण तद्धीः स्यात् । नहि रजतत्वादे रजतादिपदवत्संसर्गविशेषस्याप्युपस्थापकं पदान्तरमस्ति येन व्यापकतावच्छेदकप्रकारातिरिक्तेनापि रूपेण तत्र संसर्गभानं स्यात् । एवं चैत्रो दण्डीति शब्दाच्चैत्रविशेष्यकं दण्डित्वप्रकारकं ज्ञानमनुभूयते । यतश्चैत्रे दण्डार्थिप्रवृत्तिरदण्डिव्यावृत्तिबोधश्च तदपि नोक्तानुमानात् । पदपक्षके पदानामेव विशेष्यत्वादयिमपदार्थपक्षके दण्डित्वप्रकारत्वाभावात् । न च दण्डित्वेन मनसा तादृशं ज्ञानमिति वाच्यम । तथा सति पदोपस्थापितानामेव पदार्थानां मानसः संसर्गप्रत्यय इति किमान्तरालिकानुमानकल्पनेन । किं च घटमानयेति शब्दात् प्रवर्तते घटः कर्मत्वमानयनं कृतिरित्यतो नेति सर्वानुभवसिद्धम् । सतात्पर्यकयोग्यासन्नपदकदम्बकस्यापि प्रकृतसाध्यव्याप्यत्वात्तस्य च घटः कर्मत्वमित्यादावपि सत्वेन तादृशसंसर्गज्ञानानुमितिसंभवात्ततोपि घटानयनप्रवृत्तिर्वज्रलेपायितैव स्यात् । नह्याकाङ्क्षागर्भेण हेतुना नाहं जनितेत्येवानुमितिर्न प्रवर्तयेत् । प्रवृत्त्यौपयिकस्य घटत्वप्रकारकत्वादेस्तदाप्यनपायात् । न च साध्यमप्याकाङ्क्षागर्भमेव तथा चोक्तहेतुस्तद्व्यभिचारीति न तत्र तदनुमितिमुत्पादयतीति वाच्यम् । एवमाकाङ्क्षागर्भसाध्यानुमितिं मा जनयतु यथाश्रुतानुमितिमुत्पादयेदेव ॥ तथा च प्रवर्तकत्वमपि स्यादेव प्रवृत्त्यौपयिकार्थविषयत्वे विशेषाभावात् । नह्याकाङ्क्षाज्ञानमपि प्रवर्तकं येन तदविषयत्वान्न प्रवर्तयेत् । तस्मादाकाङ्क्षासहकारेण घटमानयेति वाक्यं घटः कर्मत्वमानयनं कृतिः, इत्यादिशब्दस्थलीयसंसर्गानुमितिविलक्षणं शाब्दज्ञानमुत्पादयतीत्यकामेनापि स्वीकरणीयम् । तदिदमुक्तम् । प्रवर्तकं च ज्ञानं शब्दादेव शाब्दानुमित्योर्भिन्नप्रकारकत्वादिति चेत् । एवं च योग्यतादिमत्तया ऽप्रतिसंहितेपि शब्दे लिङ्गान्तरेण तदाभासेनापि तादृशसाध्यानुमितिसंभवे तदापि तस्य प्रवर्तकत्वापत्तिः । तथा च योग्यतादीनां सर्वसिद्धं शब्दसहकारित्वं भज्येत । अपि च सर्वथा यदि शब्दप्रामाण्ये प्रद्वेषस्तदा पदस्मारितपदार्थानां कविकाव्यमूलभूतज्ञानवन्मानस एव संसर्गप्रत्ययः कथं नाभ्युपेयते तस्य शब्दज्ञानसमानप्रकारकस्यापि संभवेन उक्तदूषणावकाशो न भवति इत्यपरमप्यनुकूलं भवति । ननु शब्दस्थले साक्षात्करोमीत्यनुव्यवसायाभावान्न तथेति चेत् । हन्तैवमनुमिनोमीत्यनुव्यवसायाभावादानुमानिकत्वमपि कथम् । प्रत्युत विलक्षणशाब्दानुव्यवसाय एवेति संक्षेपः ॥

---

## ॥ अथ गोपाललीलाकाव्यस्य ॥

॥ तृतीयसर्गारम्भः ॥

अथैकदोत्थानिकपर्वणीश-
जन्मर्क्षयोगे सह वल्लवीभिः ।
वादित्रघोषैर्द्विजवेदमन्त्रै-
र्नन्दस्य जायात्मजमभ्यषिञ्चत् ॥ १ ॥
दत्त्वा दृशोरञ्जनमाप्रधेनु-
र्द्रव्यैर्द्विजैः स्वस्ति च वाचयित्वा ।

विमुद्रिताक्षं किल निद्रयेश-
मशीशयद्बालमनःसमीपे ॥ २ ॥
नन्दस्य पत्नी निजनन्दनस्य
शुश्राव न क्रन्दनमुत्सवोत्का ।
रुदन्नुदस्ताङ्घ्रिरनो निपात्य
पुनः पुनः पातुमसौ रुरोद ॥ ३ ॥
अनो विपर्यस्तममी समीक्ष्य
नन्दादयो ध्वस्तसमस्तभाण्डम् ।
कस्मादकस्मादनसो विवृत्ति-
रित्यूचुरन्योन्यमुदीक्षितास्याः ॥ ४ ॥
बाला विवृत्तावनसो निमित्त-
मुत्क्षेपणं तत्पदयोरवोचन् ।
विशश्वसुर्विश्वपतेर्बलं त-
दनन्तशक्तेर्न तु तेऽविदन्त ॥ ५ ॥
सुतं यशोदा ग्रहभीतिचिन्ता
व्यग्रा क्वचित् तावदुपेत्य नीत्वा ।
अङ्के निधायोज्ज्वलपङ्कजाक्ष-
मधोऽक्षजः पात्विति पर्यपीप्यत् ॥ ६ ॥
अतिष्ठिपन् पूर्ववदेव तेऽनः
शिरो धुनानाः परमाद्भुतेन ।
आजूहवद्द्विप्रवरान् व्रजेश-
स्तद्दोषशान्त्यर्थमजूहवच्च ॥ ७ ॥
मन्त्रैः स ऋक्सामयजुर्भिरेनं
तदा तदुत्पातनिवृत्तिहेतोः ।
सर्वौषधीभिर्दधिपल्लवैश्च
दूर्वाक्षतैः सभ्यजनोऽभ्यषिञ्चत् ॥ ८ ॥
तदाशिषः सत्यतया गृहीत्वा
दोग्ध्रीरदादम्बरहेमकाम्याः ।
लब्ध्वा सहान्नैरथ गा घटोध्नी-
रानन्दयन् नन्दमनिन्दितास्ते ॥ ९ ॥
अथैकदारूढमशङ्कमङ्कं
बालं यशोदा किल लालयन्ती ।
भूभृद्गुरुं वोढुमनीश्वरा तं
न्यधत्त भूमौ सह विस्मयेन ॥ १० ॥

दैत्यस्तृणावर्त इति प्रसिद्धो
वात्यामयः कश्चन कंसभृत्यः ।
आक्रान्तगोष्ठः किल चक्रवात-
क्रमेण हर्षेण हरिं जहार ॥ ११ ॥
चिराय दारूणि महान्ति येन
तनुप्रमाणानि दिवीरितानि ।
विचेरुरुच्चैः स रजोऽतिवृष्ट्या
रुन्धन् दिशोऽन्धीकुरुते स्म दृष्टिम् ॥ १२ ॥
खद्योतवद् द्योमणिनापि यत्र
व्यद्योति तद्योजयतान्धकारम् ।
दैत्येन वात्याकपटेन नीतं
सुतं यशोदा न ददर्श भूमौ ॥ १३ ॥
वात्यास्वरूपे गगनातपत्र-
दण्डेऽधिगोष्ठं परिवर्तमाने ।
नन्दप्रिया पुत्रमनीक्षमाणा-
शोचद्भृशं तं हृदि लोचयन्ती ॥ १४ ॥
आक्रन्दनं काश्चन नन्दपत्न्याः
श्रुत्वाश्रुमुख्यः किमिदं बतेति ।
शान्तेऽथ वात्योद्गतपांशुवर्षे
हर्षं विषादं पुनरापुराप्ताः ॥ १५ ॥
स्वनाशकं नाशकदेष वोढुं
दैत्योऽतिभाराद्गललग्नमारात् ।
विनिर्यदक्षः स विनष्टचेष्ट-
स्तेनैव सार्धं दृषदि न्यपप्तत् ॥ १६ ॥
नाङ्घ्री न जङ्घे न भुजौ च यस्य
विध्वस्तदेहस्य दृषन्निपातात् ।
गोप्योऽक्षताङ्गं हृदयेऽस्य बालं
चरन्तमादाय ददुर्जनन्यै ॥ १७ ॥
दैत्येन नीतं कपटेन मृत्यो-
र्मुखादिवायातममुं विमृश्य ।
गोप्यश्च गोपाश्च मुदा तदानी-
मन्योन्यमुच्चावचमित्यवोचन् ॥ १८ ॥
पापः स्वपापादुपयाति शान्तिं
क्षेमं सदा साधुजनः समेति ।

यदस्य दैवादजनिष्ट भव्य-
मनिष्टमेतस्य दुरात्मनोऽभूत् ॥ १६ ॥
किमन्यदद्यावधि केवलं नः
पुण्यैः प्रसन्नः पुरुषः पुराणः ।
तमेव मन्येमहि बालकोऽसा-
वत्येति मृत्युं कथमन्यथैवम् ॥ २० ॥
देवर्षिमध्ये जनुरस्य युक्तं
शौरेर्यदुक्तं पुरतोऽन्वभावि ।
यत् पूतनापत्तिरनोविवृत्तिः
पुनस्तृणावर्तविपत्तिरैचि ॥ २१ ॥
चतुर्भिः कलापकम् ।

कदाचन स्तन्यमनन्यरूपं
सुतं यशोदा बहु पाययित्वा ।
विजृम्भमाणस्य मुखेऽस्य विश्वं
ददर्श दर्शस्य निजाहितेन्दोः ॥ २२ ॥
सप्तापि सिन्धून् धरणीधरांश्च
धराजलोषर्बुधगन्धवाहान् ।
वियद्दिगिन्द्राग्निदिवाकरेन्दून्
द्वीपांश्च भूतानि चराचराणि ॥ २३ ॥
युग्मम् ।

विश्वं निरीक्ष्यास्य समस्तमास्ये
भयेन माता हृदि वेपमाना ।
उत्पातशान्त्यै हरिमेव दध्यौ
स्वस्था ततोऽवीक्ष्य विजृम्भणेऽभूत् ॥ २४ ॥
गर्गः पुरोधा वसुदेववाचा
तौ रामकृष्णावथ संस्करिष्यन् ।
कदाचिदागादमुमेत्य नन्दः
सजातिरुत्थाय ननाम कामम् ॥ २५ ॥
आतिथ्यमस्मै परिकल्प्य कल्या-
द्यन्तक्रमस्नाननिधानमेनम् ।
समर्चितं चन्दनवन्दनाद्यैः
सप्रश्रयः प्रीतमवोचदित्थम् ॥ २६ ॥
श्रेयो बहु स्यादिह नूतनानि
यत् पूतनादीनि दिने दिने नः ।
भवन्त्यरिष्टानि वियन्ति चाशु
भवत्प्रसादस्य तदेव रूपम् ॥ २७ ॥
त्वमस्मदिष्टानि विधातुमागाः
पूर्णस्य कुर्युः किमु गोदुहस्ते ।
यो ज्योतिषां शास्त्रमशेषदीर्घं
लोकान् कृतार्थानकृत प्रणीय ॥ २८ ॥
प्राप्तं भवन्तं मम भागधेयै-
र्विज्ञापयामि प्रगुणप्रसादम् ।
बालौ विधेहि द्विजसंस्क्रियाभिः
पात्रे कृपालो सदनुग्रहस्य ॥ २९ ॥
कुलकम् ।

मन्दं मुहुर्नन्दमिति ब्रुवाणं
गर्गोऽभिनन्द्य प्रतिवाचमूचे ।
निजस्पृहामात्रविलम्बभाजां
मनीषितं किं महतां दुरापम् ॥ ३० ॥
पुरोधसं मां सुहृदं भवन्तं
शौरेः क्वचित् स्वं रिपुमत्र जातम् ।
जानाति कंसो यदि संस्क्रियेते
बालौ मया हन्त भयं ततः स्यात् ॥ ३१ ॥
आज्ञा यदीया धरणीं समग्रां
क्रामत्यमुष्मिन्निह जागरूके ।
विनापि दोषं प्रतिकूलशङ्की
तथा जनं राजकुलं हिनस्ति ॥ ३२ ॥
कुलकम् ।

इत्युक्तवन्तं मुनिसत्तमं तं
तूष्णीं भवन्तं भवनान्तरं स्वम् ।
स्नेहेन नीत्वा विहिताधिकार्ति
भूयोऽप्यवोचद्वसुदेवमित्रम् ॥ ३३ ॥
मध्येगृहं कैश्चिदलक्ष्यमाणः
स्वीयैरपि स्वस्त्ययनं विधाय ।
मयि स्वभृत्ये करुणाविशेषं
कृत्वार्भकौ संस्कुरु विप्रवर्य ॥ ३४ ॥
श्रुत्वेति नन्दस्य वचो विचार्य
विधाय कार्यं विधिवत् स वेधम् ।

नामानि कृत्वा विविधानि तानि
व्याचष्ट विस्पष्टमुदीरितार्थः ॥ ३५ ॥
रामोऽग्रजोऽसौ रमणार्थधातोः
संकर्षणो लोकहृदेष कर्षन् ।
बलो बलस्यातिशयेन नाम्ना
स्याद्रौहिणेयो जगति प्रसिद्धः ॥ ३६ ॥
युगे युगे संभवतः प्रसिद्धा-
स्त्रयोऽस्य वर्णाः सितरक्तपीताः ।
कृष्णोऽधुनाभूदत एष कृष्णो
नाम्नापि नन्द प्रभवेत् सुतस्ते ॥ ३७ ॥
शौरेरपि प्राक् तव पुत्र एष
कदापि जातः किल नन्दगोप ।
तद्वासुदेवं प्रवदन्ति विज्ञा
विज्ञाय तस्यात्मजमेनमेव ॥ ३८ ॥
यस्मिन् नृणां प्रीतिजुषां करे स्यात्
कीर्तिश्च लक्ष्मीश्च सदाऽभयं च ।
भावी गुणैरेष समः स विष्णो-
स्तरिष्यथैनेन सुदुस्तराणि ॥ ३९ ॥
कुलकम् ।
मुनिस्तमुक्त्वेति जगाम धाम
सभाजितस्तेन कृतस्वकृत्यः ।
नन्दस्तदात्मानममंस्त तृप्य-
माणोःफलानामतिपूर्णकामः ॥ ४० ॥
कियत्यनेहस्यथ याति साधं
संकर्षणेन स्वयमेक आत्मा ।
पश्चाद्विकर्षन् भुवि जानुनी स्वे
चिक्रीड रिङ्गन् धृतपाणिपद्मः ॥ ४१ ॥
विचेरतुश्चन्दनचर्चिताङ्गा-
वाकृष्टजानू व्रजकर्दमेषु ।
तन्मातरावेत्य विमृज्य गाव-
मपीप्यतां स्तन्यमुभौ श्रिताङ्कौ ॥ ४२ ॥
क्वाप्यव्रजन्त्यः परिहृत्य कृष्णं
प्राप्य स्वमात्मानमिहेव गोप्यः ।
प्रमोदपूर्णास्तदुदारलीलां
गायन्त्य ईयुर्जनुषः फलं ताः ॥ ४३ ॥

अम्बेति तातेति च तत्प्रयुक्त-
मव्यक्तवर्णं वचनं हसन्त्यः ।
पुच्छग्रहाद्वत्सविकृष्यमाणौ
दृष्ट्वा ननन्दुश्चिरविस्मृतस्वाः ॥ ४४ ॥
निधाय वल्मीकमुखेषु पाणी
शृङ्गेषु दंष्ट्रासु च चक्षुषु द्राक् ।
संक्रीडमानावनले निषेद्धुं
न शेकतुस्तौ किल तज्जनन्यौ ॥ ४५ ॥
बलेन बालैरपरैः समेतः
स्तेयाय गव्यस्य परालयेषु ।
बहूनुपायान् परिकल्प्य मुष्णन्
कृष्णः स्वयं ब्रह्म परं विजह्रे ॥ ४६ ॥
स्तेयाय सर्पिर्नवनीतदुग्ध-
दध्नां निबध्नन् विविधानुपायान् ।
आभीरनारीभिरभीतिरेत्य
स इत्युपालम्भि सदम्भडिम्भः ॥ ४७ ॥
गोपि कोऽपि न कदापि कुचचित्
केवलस्तव यथास्ति बालकः ।
गम्यमस्य चरितं न योगिनां
ग्राम्यलोक इह किं नु वेत्स्यति ॥ ४८ ॥
मानं विना दधि पयो नवनीतमस्ति
संपत्तिरस्ति कियती बत गोधनानाम् ।
प्रायेण मान्ति जठरेऽस्य जगन्ति हन्त
किं तत्त्वमस्तु मनुजस्य न रीतिरीदृक् ॥ ४९ ॥
ध्वान्तालये विनिहितं विचिनोति वस्तु
स्वज्योतिरुज्ज्वलितगर्भगृहान्तरालः ।
मन्यामहे कमपि नास्य गुणं गृणन्तु
लोकाः शुकादय इव श्रुतिरम्यवाचः ॥ ५० ॥
पिबत्यधिकमुष्णमप्यहह बालकस्ते पयो
दवाग्निमपि पास्यति ध्रुवमसौ वने संचरन् ।
कदापि दधि निक्षिपन् पयसि पीतशेषेऽथ त-
द्रूढांशमयमाशयत्यनिशमाशु कीशान् निजान् ॥ ५१ ॥
अशक्यग्रहं शिक्यभाण्डस्थमुच्चै-
र्दधि क्षीरमश्नाति शङ्के दृशैव ।

समुत्तार्य दृष्टं यतोऽमत्रजातं
तथाभूद्यथेमेन भुक्तं कपित्थम् ॥ ५२ ॥

बन्धं छिनत्ति चरतोऽखिलगोकुलस्य
ग्रन्थिं भिनत्ति निजदर्शननिश्चलस्य ।
तद् ब्रूमहे कथमसच्चरितं पुरस्ते
यद्गोचरो न मनसोऽपि महात्मनोऽस्य ॥ ५३ ॥

एतत्स्वरूपसविशेषनिरूपणेन
पूर्णा श्रुतिर्न भवतीच्छति नेति नेति ।
आसादि सावधिनिषेधगिरा भवत्या
तत् तत्त्वमत्र तु ममोचितमेव मौनम् ॥ ५४ ॥

प्रजानां सन्नन्तर्बहिरपि विभुत्वं विशदय-
न्नयं कामाद्याग्रं हरति सुचिरं संचितमपि ।
इदानीमस्माभिः सति परिहृता स्वाम्यविरहा-
च्छरीरे गेहादावहमिति ममेति व्यवहृतिः ॥ ५५ ॥

नराद्यानन्दानां शतगुणतया साधु गणितात्
प्रजापत्यानन्दादपि शतगुणानन्दमयताम् ।
निजामाविष्कुर्वन् गुणयुजमजां खेलयति यो
न कर्ता नो भोक्तेत्यमुमहह जानाति भवती ॥ ५६ ॥

उभाविमावत्रसदेकवृत्ती
समं सखायौ भवनं प्रविष्टौ ।
अत्त्येनयोरेकतरः समस्त-
मन्यस्तु साक्षीव समस्त्यनश्नन् ॥ ५७ ॥

मायामयीं सृष्टिमिमां चिकीर्षा-
जातः पुरा नाभिभवोऽस्य कोऽपि ।
अन्यां विशेषस्थितिमेतदीयां
वक्तुं न शक्ता वयमाप्रलज्जाः ॥ ५८ ॥

अलेप एवायमबद्धशीलः
सदात्मना ते हृदयं प्रविष्टः ।
असन्तमेनं वदतामसत्त्वं
सत्त्वं तु सत् तं गदतां विचित्रम् ॥ ५९ ॥

सुप्तान् प्रताड्य हृदि जागरयत्यकाण्डे
बालान् बलाद्भ्रमयितुं निजमेव मार्गम् ।
तेषां विधाय विरतिं पितृमातृबन्धु-
स्नेहानुबन्धविधुरां नयति स्वमेव ॥ ६० ॥

कुब्जश्रोणान्धमूकान् व्यथयति जरतो वेपमानान् कुणीन-
प्युत्तानः शेष्व धावेत्तय निगद पटुस्तिष्ठ लोष्ठं क्षिपेति ।
उद्वेगात् क्रन्दतस्तान् कलय कथममी हन्त चेष्टामशक्यां
कुर्वन्त्वस्योक्तिमात्रादहह न करुणा त्वां यशोदे रुणद्धि ॥ ६१ ॥

विघट्य कृपया स्वयं विरचितां समस्तां सृतिं
ददातु तनयस्तव व्रजपतिप्रिये नोऽभयम् ।
भियोऽभिनयतो न विश्वसिहि सोऽद्वितीयः कुतो
बिभेत्विह तु मन्महे सकलमेव यत्कल्पितम् ॥ ६२ ॥

उपालब्धा सेति व्रजवसतिभिर्नन्दगृहिणी
शशाकोपालब्धुं न तनयमुपालभ्य किल ताः ।
क्व रिक्तामत्राणि क्व नु च जरदन्धादिरिति तद्
विवेक्तुं रोहिण्या सह निरगमत् ताभिरपि च ॥ ६३ ॥

तत् तद्वस्तु विनात्र पात्रमथ वा कुत्रापि कुब्जादयो
नादृश्यन्त परं तु तद्वसुभृतं जातं शुभाङ्गाश्च ते ।
तच्चित्रं समुदीक्ष्य गोपवनितास्त्रस्ताः पुरस्तात्तयो-
र्मुक्तादीन्युपनिन्युरच्युतकृतिं मत्वाऽदिषातां च ते ॥ ६४ ॥

तत्रान्तरे धाम निजं व्रजन्त्योः
पुरस्तयोरूचुरुपेत्य बालाः ।
कृष्णो मृदं भक्षितवानिदानीं
पुरोऽस्मदादेश्च बलस्य चेति ॥ ६५ ॥

कस्मान्मृदं वहसि भक्षितवानदान्त
मित्राणि तेऽभिदधते भवतोऽग्रजोऽपि ।
मात्रेति भर्त्सित उवाच हरिर्वदन्ति
सर्वे मृषा यदि न पश्य मुखं ममेति ॥ ६६ ॥

व्यात्ते मुखे सपदि तेन यशोदयास्मिन्
विश्वं निरैक्षि समशायि च विस्मयेन ।
स्वप्नोऽथ वा भ्रम उदेत्युत देवमाया
दोषा भवन्ति कतमे बत मे सदेति ॥ ६७ ॥

क्वचन समये दृष्ट्वा व्यग्राः कृतौ गृहदासिका
रहसि तनयं गायन्ती स्वं चलद्भुजकुण्डला ।
रणितवलया पुत्रस्नेहस्नुतस्तनमण्डला
चिकुरविगलन्माल्या गोपी ममन्थ दधि स्वयम् ॥ ६८ ॥

* पृश्निरल्पतनौ श्रोणः ।

स्तन्यार्थी शिशुरथ मथ्नतीमुपेत्य
प्रारोदीत् करयुगकृष्टमन्थदण्डः ।
मन्थानं द्रुतमपहाय पाययन्ती
तद्वक्त्रं मधुरमुदीक्ष्य सा ननन्द ॥ ६९ ॥

अतृप्तमुत्सृज्य पयस्यधिश्रितेऽ-
गमत् समुत्सर्पति नन्दगेहिनी ।
अमर्षणस्तद्दधिमण्डभाजनं
दृषत्करस्तावदसाववखण्डयत् ॥ ७० ॥

भित्त्वा भाण्डं सारमत्ति स्म दध्न-
स्तृप्तः शेषं प्राशयामास कोशान् ।
दृष्ट्वा मातागत्य कृष्णस्य चेष्टां
भूयो भूयो धुन्वती कं जहास ॥ ७१ ॥

उलूखलगतः शनैर्गणितकोशदन्तावलि-
र्विलोक्य चकितेक्षणो निभृतमागतां मातरम् ।
अदुद्रुवदवाङ्मनोविषयमन्वधावच्च तं
व्रजेशवनिता गुरुस्तनभरार्दितास्रुत्कचा ॥ ७२ ॥

दृढं हस्ते धृत्वा चकितचकिता शङ्कितदृशं
सुतं माता जातागसमतुददग्राङ्गुलिदलैः ।
ततो भीतं मत्वा तनयमनयं सोपनिषदां
रहस्यं दाम्नैनं यमितमकृतोलूखलयुजा ॥ ७३ ॥

यद्दाम न्यधितोदरेऽस्य जननी तद्द्व्यङ्गुलोनं भ्रमा-
न्मत्वा तत्र किलान्यदन्यदथ सा संधातुकामादित ।
इत्थं यद्यदसौ चिराय समधात् तन्न्यूनमेवाभव-
न्मातुः श्रान्तिमथावगत्य सदयः श्रीमानभूद्बन्धने ॥ ७४ ॥

प्रसादमेवंविधमस्य नाम्ना-
दजः शिवो वाङ्मुपाश्रिता श्रीः ।
त्यक्त्वा तथोलूखलबद्धमेनं
गताप्यगारं यमवाप गोपी ॥ ७५ ॥

विलोक्य यमलार्जुनौ धनदनन्दनौ शापतो
मुनेस्तदनु तौ ततः सपदि मोचयिष्यन्नथ ।
विभाव्य जननीं निजां भवनकर्मणि व्यापृता-
मगादगयुगान्तरे विभुरुलूखलाकृष्टिकृत् ॥ ७६ ॥

अन्तरेणोच्चकैरर्जुनौ वीरुहौ
निर्यता तिर्यगाकर्षतोलूखलम् ।
शौरिणा लीलयापातिषातां यथा
स्फूर्जथुः स्फूर्जितः प्रापि नन्दादिभिः ॥ ७७ ॥

तिर्यक्चलद्दृढदुलूखलकर्षणेन
मध्येयुगं ककुभयोरमुना न्यपाति ।
इत्यर्भकेषु विहरत्सु गदत्सु तत्र
गोपा विशश्वसुरमी न परेऽध्यवात्सुः ॥ ७८ ॥

इति श्रीमल्लक्ष्मणभट्टात्मजरामचन्द्रभट्टविरचिते गोपाललीलाख्ये महाकाव्ये यमलार्जुनभङ्गो नाम तृतीयः सर्गः ॥ ३ ॥ :: :: ॥

---

## ॥ अथ गोपाललीलाख्यकाव्यस्य ॥

॥ चतुर्थसर्गारम्भः ॥

इत्थं मत्तौ राजराजस्य पुत्रा-
विन्द्रद्रुत्वं प्रापितौ नारदेन ।
शापात् कृष्णोऽमूमुचत् पूज्यमानं
वाग्भिस्ताभ्यां तेऽप्यमुञ्चन्नमुं च ॥ १ ॥

तर्वाघातोत्पातमुक्तं कुमारं
भीतं नन्दः स्वं परिष्वज्य गाढम् ।
जन्मास्याभूदद्य भूयोऽपि भूयाद्
विष्णुस्त्रातेत्यूचिवान् गेहमागात् ॥ २ ॥

विष्णुः काले याति वर्धिष्णुदेहः
सान्द्रश्लोकश्चान्द्रबिम्बक्रमेण ।
आभीरीभिः खेलितः पाणितालै-
स्तत्तत्तेति प्रेरितो नृत्यति स्म ॥ ३ ॥

कुण्ठीकुर्वन्नीलकण्ठस्य नृत्यं
क्वाप्युच्चैः केकया गायति स्म ।
क्वाप्यादेशादानयद्वस्तु तत् त-
न्नन्दापत्यं नन्दयामास गोष्ठम् ॥ ४ ॥

गोपा गोष्ठस्यापदापत्तिधारां
तत्रेन्द्रद्रुध्वंसनाद्यभ्युदीक्ष्य ।
साकं नन्देनात्मगोवृन्दगुप्त्यै
जात्वन्यत्रामन्त्रयन्त स्थितिं ते ॥ ५ ॥

ज्ञातार्थानां देशकालोचितानां
कामं कर्ता रामकृष्णेप्सितानाम् ।

जानन् बाह्याभ्यन्तरक्षेमवृत्तिं
वृद्धः प्राह स्मोपनन्दोऽथ मन्दम् ॥ ६ ॥
भूरि प्राप्तं भूरिशोऽरिष्टमत्र
स्थानं वस्तुं मृग्यतां योग्यमन्यत् ।
यस्मिन्नापो निर्मलाः सत्तृणाढ्या
भूमिश्छाया भूरुहाणामदूरे ॥ ७ ॥
अस्मिन्नापन्नापि का क्वापि काले
बालं विष्णुः पूतनातोऽप्यपासीत् ।
नानोऽप्यस्योपर्यपप्तद्यदेतत्
कारुण्यं श्रीभर्तुरेवेत्यवेमः ॥ ८ ॥
वात्यागत्योपेत्य खं यन्निपत्य
यावण्येष प्राण तद्दैवकृत्यम् ।
पश्चाद्बद्धोलूखलो मङ्क्षु[1] रिङ्गन्
वृक्षाघाताद्रक्षितोऽघोऽक्षजेन ॥ ९ ॥
क्षागैर्मेषैस्तर्णकैर्बालवृद्धै-
र्नित्यं ग्रासीभूयते यद्वृकाणाम् ।
तस्येदानीमप्युपायो न शान्ते-
स्तद्गन्तव्यं यत्र कुत्रापि तूर्णम् ॥ १० ॥
आरादस्मादिन्दिरामन्दिराभं
वृन्दारण्यं नन्दनश्रीविडम्बि ।
अस्ति स्रोतो यामुनं यत्र रम्यं
यस्यादूरे भाति गोवर्धनोऽद्रिः ॥ ११ ॥
अग्रे कृत्वा गोधनं योधमुख्या
यान्तु स्वस्वानोभिराभीरवध्वः ।
एतच्चान्यच्चोपनन्दस्य वाक्यं
श्रुत्वा सर्वे साधु साध्वित्यवोचन् ॥ १२ ॥
कुलकम् ।

दध्ना गन्धैरक्षतैः पत्रपुष्पै-
र्धूपैर्दीपैः पूपकैर्मोदकैश्च ।
विघ्नेशाद्या देवताः प्रार्च्य विप्रै-
रुक्तस्वस्ति प्रास्थिताभीरवृन्दम् ॥ १३ ॥
प्रापय्याग्रे गोधनं शस्त्रहस्तैः
शस्तानोभिर्बालवृद्धाबलाढ्यैः ।
कैश्चित् पूर्णैर्भूरिभिर्गव्यभाण्डैः
सिद्धैरन्नैर्निर्ययुर्नन्दमुख्याः ॥ १४ ॥
उद्दामुच्चैर्नर्दितैः शृङ्गनादै-
र्गोत्राघोषैर्वात्सकस्याम्भशब्दैः
तूर्यध्वानैः पूरिताशावकाशे
प्रस्थानेऽभूदुत्सवः शौरिसून्वोः ॥ १५ ॥
तुष्टावेकानोगतौ रामकृष्णौ
रोहिण्याप्यश्रीर्यशोदा च माता ।
सार्धं मोक्षेणेव धर्मार्थकामा-
श्चत्वारोऽपि प्रस्थितास्तत्र रेजुः ॥ १६ ॥
कर्णादीर्णस्वर्णताटङ्कवर्णैः
पूर्णैः काम्याः कुङ्कुमाङ्कैः कपोलैः ।
भास्वद्भूषावाससो निष्ककण्ठ्य-
स्तुष्टा गोप्यः कृष्णचेष्टामगायन् ॥ १७ ॥
वृन्दारण्ये कल्पितं शिल्पिमुख्यै-
र्वासं प्रापुस्तेऽनसामन्तरङ्गम् ।
यत्र क्षोणीजन्मगुल्मादयोऽपि
प्रायः प्रापन् नैनसामन्तरङ्गम् ॥ १८ ॥
वृन्दारण्यं वीक्ष्य सर्वर्तुसेव्यं
तस्यादूरे पर्वतं खर्वशृङ्गम् ।
द्वीपं दृष्ट्वा सर्वतः सूर्यपुत्रीं
रन्तुं चेतश्चक्रतू रामकृष्णौ ॥ १९ ॥
तौ क्रीडन्तौ तत्र कालक्रमेण
प्रौढावास्तां पालने वात्सकस्य ।
प्रातर्भुक्त्वा नातिदूरे कियद्भि-
र्बालैः साकं वत्सपालावभूताम् ॥ २० ॥
तं तं वृन्दारण्यदेशं प्रविश्य
प्रक्रीडन्तौ कृत्रिमैर्गोवृषाद्यैः ।
कूजन्नानापक्षिशब्दानुवादै-
र्मन्दं वेणोर्वादनैश्चेरतुस्तौ ॥ २१ ॥
बर्हाकल्पौ चारयन्तौ स्ववत्सान्
दैत्यं कंचिद्वत्सरूपं कदाचित् ।

1—मंङ्क्षु इति पा० ।

* वात्सकं वत्ससमूहः ।

प्राप्तं हन्तुं बोधयन्नग्रजं स्वं
दर्शं दर्शं प्राहसद्वासुदेवः ॥ २२ ॥
मन्दं पश्चादेत्य तस्याक्षवत् तं
क्षिप्रं कृष्णः साङ्घ्रिपुच्छं गृहीत्वा ।
चिक्षेपाथ द्राक् कपित्थस्य मौलौ
क्षेपारम्भभ्रान्तिनिर्मुक्तजीवम् ॥ २३ ॥
दैत्यो बाह्वोर्बोधयन्नस्य सत्त्वं
सर्वैः साकं तत्फलैः स न्यपप्तत् ।
बालाः कृष्णं तुष्टुवुः साधुवाचा
सार्धं देवैः पुष्पवृष्ट्याकिरद्भिः ॥ २४ ॥
साकं तोकैरेकदा वत्सपैः स्वैः
पीत्वा पाथो यामुनं वर्तमानम् ।
शावं निन्दन् पर्वतं वज्रभिन्नं
धृत्वा चञ्च्वा तं बकोऽरं जगार ॥ २५ ॥
तावत् कृष्णं प्राशितं तेन मत्वा
बालाः कालव्यालदंष्ट्रानिभेन ।
कर्तुं रक्षामक्षमाः स्वात्मनोऽपि
प्रोचुः प्रोच्चैः पाहि पाहीति रामम् ॥ २६ ॥
अग्नीभूय स्वं गलन्तं दहन्तं
ग्रासाद्भग्नः सन् बको निर्जगार ।
भूयश्चञ्च्वा हन्तुकामं विकृष्य
चोटीयुग्मं पाटयामास कृष्णः ॥ २७ ॥
राजिर्दैवी धुन्वती मौलिमुच्चैः
स्तोत्रं चित्रात् कुर्वती गुर्वतीव ।
नानापुष्पैर्नन्दनानोकहानां
नन्दापत्यं प्राकिरन्नाकिरत्नम् ॥ २८ ॥
निर्यातं द्योदीर्घहाराद्बकस्य
ग्रीवानालादिन्द्रनीलोपलाभम् ।
आश्लिष्याथो नायकं तं सुराणां
प्रीतैर्बालैरेत्य गेहं न्यगादि ॥ २९ ॥
अन्याश्चर्यालोलचक्षुश्च लोकः
प्रेत्यायातं धन्यमामन्यमानः ।
वारं वारं वीक्ष्य रेमे बकीयात्
कृच्छ्रान्मुक्तं तं गलान्मङ्गलाढ्यम् ॥ ३० ॥

साक्षादेतद्रक्षिताधोऽक्षजो यत्
प्राप्तो नश्यत्येनमेवं जिघांसुः ।
इत्यन्योन्यं भाषमाणा भवाब्धिं
मुक्ता गोपा नन्दमुख्या ननन्दुः ॥ ३१ ॥
कैश्चित् कल्ये बोध्यमानैः कदाचि-
द्वेणोर्नादैरन्वितं वत्सपालैः ।
ब्रह्म श्यामं शाद्वले भोक्तुकामं
वृन्दारण्ये निर्ययौ नीतवत्सम् ॥ ३२ ॥
तावत् सर्वे वत्सपा यूथशस्ते
शस्ते हस्ते विस्फुरद्वेणुशृङ्गाः ।
वत्सव्रातं चारयिष्यन्त ईशं
नित्यानन्दं ब्रह्म तत्रानुसस्रुः ॥ ३३ ॥
अन्वञ्चन्तो रेमिरे नेमिरेखा-
मग्रेयातां स्यन्दना यद्वदन्ये ।
तद्वत् सर्वे बालकाः कालकायं
वृन्दारण्ये तेऽनुयान्तो विजह्रुः ॥ ३४ ॥
स्वच्छैर्मोचालंकृतौ गुच्छहारैः
पौष्पैर्गुच्छैर्धातुभिर्बर्हिपिच्छैः ।
तेऽलंकृत्य भ्रातरौ रामकृष्णौ
जन्मन्यस्मिन् जातकृत्या बभूवुः ॥ ३५ ॥
आम्नायानामद्वयार्थस्वरूपं
मध्ये सन्तं वेदमूर्धोपमेयाः ।
ते तात्पर्येणान्विताः सर्वतस्तं
नित्यानन्दं लक्षयन्तो विजह्रुः ॥ ३६ ॥
हंसश्यामग्रीवहारीतचाष-
श्येनोलूकक्रौञ्चकोयष्टिकादेः ।
प्रायो नादानुन्मदान् सोऽनुकुर्व-
न्नात्मारामः पत्रवाद्येन रेमे ॥ ३७ ॥
अन्यैर्नैत्रे मुद्रिते जानतः स्वे
विष्णोस्तोषः स्वं पणं गृह्णतोऽभूत् ।
तत् तन्मातुः पश्यतो हृष्टचेष्टां
शातं जातं कर्षतः कीशबालान् ॥ ३८ ॥
इत्थं सर्वं सुस्थितं बालवृन्दं
दूरीभूतापल्लवं बल्लवानाम्

ऊरीकुर्वन् पूर्वपुण्यस्य पाकं
गायल्लीलाः क्रीडयामास कृष्णः ॥ ३९ ॥

खर्वीकुर्वन् पर्वतानाजगर्या
तन्वा नाम्नाघोऽनुजन्मा बकस्य ।
क्रुद्धः कंसप्रेरितः स्वाग्रजस्य
ध्वंसादागान्निष्कृतिं कर्तुकामः ॥ ४० ॥

मायाशीलो मायिनामीशमत्तुं
बिभ्रद् व्यालं विग्रहं व्यात्ततुण्डः ।
विष्णोर्वीक्षन् वेशनं वक्त्रदेशे
मध्येमार्गं गह्वरास्योऽवतस्थे ॥ ४१ ॥

बाला व्यालस्यास्यमाराददर्श-
न्नाशु प्रांशु प्राविशन् मुक्तशङ्काः ।
इत्थं चित्तेऽमंसतासौ ग्रसेत
प्राणान् नश्चेत् तन्नशिष्यत्यवश्यम् ॥ ४२ ॥

ते नाजीर्यन् वत्सपालाः सवत्साः
कुक्षावस्यापेक्षमाणस्य कृष्णम् ।
मत्वा मूर्ध्नः पाटनं नष्ट्युपायं
तस्याविक्षद्वक्त्रमीशोऽप्यघस्य ॥ ४३ ॥

रिक्तान् सर्वैरिन्द्रियैरादितेयान्
हा हन्तेति क्रोशतो दिव्यवेत्य ।
मत्वा हृष्टं व्यालपक्षीयमुच्चै-
र्ग्रीवान्तस्थः प्रावृधद्वासुदेवः ॥ ४४ ॥

प्राणाध्वानं वर्धमानेन रुद्ध्वा
मूर्धा दुष्टोऽपाटि तेनासुरोऽघः ।
निर्यातेषु प्रागघस्यासुषु द्राग्-
बाला वत्सा जीविताश्चाथ दृष्ट्या ॥ ४५ ॥

राजिस्तेषां निर्ययावाजगर्या-
स्तन्वाः सार्कं सा जगन्मङ्गलेन ।
ज्योतिश्चाभ्रेऽवस्थितं प्रागघस्य
प्रत्यक्षं तत् प्राविशद्विस्मयाय ॥ ४६ ॥

चित्रं नाद्य ध्वंसनं कंसशत्रो-
र्यन्नामौघं कीर्तितं हन्त्यघानाम् ।
आसीदत्रैवाद्भुतं द्रागघस्य
ज्योतिर्यच्चाविक्षदात्मन्यजस्य ॥ ४७ ॥

देवाः कृष्णं तुष्टुवुः पुष्पवृष्ट्या
पूजां कृत्वा रञ्जितं भञ्जिताघम् ।
गीतैर्वाद्यैरीप्सितैरप्सरोभि-
र्नृत्यन्तीभिश्चाथ नाष्टोऽन्वमानि ॥ ४८ ॥

यत्र श्रीमानाजघानाघमत्र
ब्रह्मा श्रुत्वा देववादित्रघोषम् ।
आगत्यैतस्याथ तत् कर्म दृष्ट्वा
चित्रं तुष्टः सस्मितो विस्मितोऽभूत् ॥ ४९ ॥

तद्व्यूतिद्वन्द्वमायामयुक्तं
चर्माघस्य क्रीडनार्थं बभूव ।
हृष्टा दृष्ट्वा कल्पितानल्पशिल्पं
चित्रं यत्रायत्नसिद्धं व्रजस्थाः ॥ ५० ॥

कृष्णो बालान् मोचितान् मृत्युवक्त्रात्
क्षिप्रं नीतान् सैकतं सारसं तान् ।
आह स्मेति स्वादुनीरं सरोऽत्र
द्वीपं रम्यं भुज्यतां क्षुद्विलक्ष्यैः ॥ ५१ ॥

पत्रैः पुष्पैः पल्लवैरङ्कुरैर्वा
त्वग्भिः पूलैः प्रस्तरैरम्बरैश्च ।
कृत्वा किंचिद्भाजनं भोजनाय
द्रष्टव्यं च स्वस्वशिक्यस्थमन्नम् ॥ ५२ ॥

पूर्वं पाथः पाययन्तु स्ववत्सा-
नेते मन्दं शाद्वलस्थाश्चरन्तु ।
इत्थं बालाः शार्ङ्गपाणेर्नियोगा-
दन्नं पप्सुस्तद्वदेव क्रमेण ॥ ५३ ॥

त्रिभिः कुलकम् ।

बालाः स्वीयं मण्डलं जीवयन्तं
कृष्णं कृत्वा दृष्टिपीयूषवृष्टिम् ।
स्वं स्वं भोज्यं वर्णयित्वोपहृत्य
प्रेम्णादिष्टा हासयन्तो जजक्षुः ॥ ५४ ॥

सव्ये पाणौ दाधिकान्नस्य बिभ्रद्
ग्रासं तत्तत्संहितान्यङ्गुलीषु ।
कक्षे कुक्षौ शृङ्गवेत्रे च वेणुं
स्वर्ग्यै पश्यत्याद यज्ञेषु भोक्ता ॥ ५५ ॥

दूरं याते वत्सवृन्देऽथ नाथः
सोऽनाथानां त्वत्यवाप्या विलक्षान् ।
बालान् दृष्ट्वा मुञ्चतां शोच्यतां मे-
त्यन्वेष्टुं तन्निर्ययौ नित्यबोधः ॥ ५६ ॥

तत्रान्विष्यन्नद्रिकुञ्जेषु वत्सान्
गत्वा दूरं प्रस्फुरद्ग्रासपाणिः ।
नैवादर्शत् तद्गतिं विश्वदृश्वा-
रण्ये क्वापि ख्यापयन् मर्त्यलीलाम् ॥ ५७ ॥

धाता संधिं[1] प्राप्तवान् विस्मितोऽघ-
ध्वंसादन्यच्चाद्भुतं द्रष्टुमैच्छत् ।
मोघीकुर्वन् यत्नमन्वेषणेऽस्य
द्वीपाज्जह्रे बालकान् वत्सवत्सः ॥ ५८ ॥

श्रान्तोऽन्विष्यन् नाम वत्सानरण्ये
कृष्णोऽपश्यन् सैकतं प्राप भूयः ।
तद्वद्बालानप्यथानीक्षमाणः
सद्यश्छद्माबुद्ध पद्मासनस्य ॥ ५९ ॥

सर्वात्मा स स्वस्य सर्वात्मकत्वं
श्रुत्या ख्यातं किंचिदभ्यक्षयिष्यन् ।
आभीराणां वृन्दमानन्दयिष्यन्
सद्यो जातः स्फीतसर्वस्वरूपः ॥ ६० ॥

शान्तिभ्रान्तिक्षान्तिभीरोषदोष-
व्यासग्रासत्रासहासावलोकाः ।
तेजःप्रज्ञावाग्मितापुष्टिदृष्टि-
प्रेमस्थेमक्षेमविद्याविवेकाः ॥ ६१ ॥

धैर्यौदार्यक्रौर्यशौर्याभिमान-
ह्रीश्रीशक्तिक्षोभशीलाङ्गहाराः ।
व्याहारौजःशाठ्यसभ्यत्वशिल्प-
व्याजस्फूर्तिप्रीतिगीतिप्रसादाः ॥ ६२ ॥

धर्मप्रेक्षा नर्मवेगावहित्था
यानोत्साहग्राहकत्वप्रभावाः ।
वर्णो रूपं साहसं शस्त्रशिक्षा
पाशो यष्टिः प्रग्रहः शिक्यशृङ्गे ॥ ६३ ॥

लक्ष्म क्रीडा वेणुवेत्रादिभूषा
वासश्चूडा चेष्टितेङ्गत्वदोषाः ।
एतच्चान्यद्वत्सपालस्वरूपे
सर्वं विष्णौ पूर्वमेवावभासे[1] ॥ ६४ ॥

कुलकम्

आभीराणां मोहयन्नन्तरङ्गं
वत्सान् मन्दं चारयन् वत्सपालैः ।
क्रीडाभेदान् कल्पयन्नध्वनीशः
सर्वात्माथ प्राविशद्गोष्ठमाशु ॥ ६५ ॥

तत् तद्वर्त्मावेशयन् वत्सवृन्दं
तत्तद्रीत्या पूर्ववद् ध्मातवेणुः ।
तत्तन्मातुर्नन्दयन्नन्तरङ्गं
तत्तद्रूपः सद्म तत् तत् प्रविष्टः ॥ ६६ ॥

तैस्तैर्वृन्दारण्यकौतूहलैः स्वं
लीलाबालो नन्दयन् मातृवृन्दम् ।
तेनाप्यङ्गोद्वर्तनैः स्नापनाद्यैः
खाद्यैर्नानालेपनैर्लाल्यते स्म ॥ ६७ ॥

गावो हुङ्कृत्योपहूय स्ववत्सान्
दुग्धान्यूधःप्रस्रुतानि न्यपीप्यन् ।
अङ्गान्येषां यच्च हार्दादलिक्षन्
नैतच्चित्रं सर्वजीवात्मकेऽस्मिन् ॥ ६८ ॥

इति स भगवानब्दं कुर्वन् मुदं व्रजवासिनां
विपिनमविशद्गावो दृष्ट्वा गिरेर्द्रुतमागताः ।
पुनरपि पयोऽपीप्यन् वत्सानहो सह वत्सिका
व्यधिषत रुषोऽपेता गोपा विलोक्य सुतान् मुदम् ॥ ६९ ॥

वत्से गवां चिरविमुक्तपयोधरेऽपि
प्रेमाधिकं न हलिनैतदमानि चित्रम् ।
सर्वात्मकं तमथ पूर्ववदब्दमेवं
क्रीडन्तमेत्य विधिनेदमचिन्ति चित्ते ॥ ७० ॥

बालास्तेऽद्यापि मायाशयमधिगमिता बोधिता नान्यलोके
साकं वत्सैः क्व एते सनिजपरिकराः कौतुकं तन्वतेऽत्र ।
राजीवाक्षस्य मोहं मनसि तितनिषोः प्रत्युताभून्ममेव
भ्रान्तिर्लोकेशभावात् तदिह विहरणं हन्त सर्गे दुरन्तम् ॥७१॥

---

१ संधिः पुमान् सुरङ्गायामिति मेदिनी ।

१ प्रागवदे—इति पा० ।

युग्मम् ।

इति श्रीमल्लक्ष्मणभट्टात्मजश्रीरामचन्द्रभट्टविरचिते गोपाललीलाख्ये महाकाव्ये ब्रह्मव्यामोहो नाम चतुर्थः सर्गः ॥ ४ ॥ :: :: ॥

## ॥ अथ गोपाललीलाख्यकाव्यस्य ॥

॥ पञ्चमसर्गारम्भः ॥

इति तमवधिमीशं वीक्षमाणेऽद्भुतानां
सरसिजभुवि दृष्टा वत्सपाः सर्व एव ।
कलितकरचतुष्काः पद्मशङ्खारिखड्गै-
र्नवघनरुचयोऽर्कज्योतिषः सस्मितास्याः ॥ १ ॥
सपुरटकटिसूत्राः कुण्डलोद्गण्डदीप्ति-
स्फुरितमृदुकपोलाः किङ्किणीकङ्कणाढ्याः ।
मणिघटितकिरीटाः कौस्तुभोद्भासितोरः-
स्थलधृतवनमालाः पीतवासोऽभिरामाः ॥ २ ॥
अनपरतुलसीसन्माल्यमौल्यङ्घ्रिदेशा
दधत उदितरत्नान्यङ्गुलीभूषणानि ।
चरदचरसमूहैः सेविता मूर्तिमद्भिः
पृथगनिशमथर्वप्रान्तकैरागमैश्च ॥ ३ ॥
क्व च महदहमाद्यैस्तत्त्वभेदैस्तथैवा-
णिममहिमसमेतैः षड्भिरन्यैरुपास्याः ।
निजतनुभिरजाद्यैरुद्यशालोकशब्दैः
परिचितपरिवारा दैवतैरिन्द्रमुख्यैः ॥ ४ ॥
मनुजतनुभृतोऽपि स्वप्रकाशप्रमोदा-
द्वयपरिचयसच्चिद्ब्रह्मतत्त्वस्वरूपाः ।
गतमहिमभिराप्तः कालकर्मस्वभावैः
सकलगुणकलाभिः संक्रियाभिश्च मूर्त्या ॥ ५ ॥
सपदि विधिरदर्शत् तान् परात्मस्वरूपा-
नखिलमपि च विश्वं यद्विभासा विभाति ।
भवदतिकुतुकस्तद्धामभिर्धर्षितश्रीः
स्तिमितदृगथ शक्तः क्वापि नोक्तावचोऽभूत् ॥ ६ ॥

कुलकम् ।

तदनु जवनिकाभामात्मशक्त्येश्वरोऽजे
विविधगुणमयीं स्वां दैवमायां ततान ।
शयित इव विबुद्धो लब्धबुद्धिः कथंचि-
द्विवृतदृगुपलेभे पद्मभूः पद्मनाभम् ॥ ७ ॥
विपिनपुलिनदेशे पूर्ववद्वत्सबाला-
नुसरणपरिवृत्तिश्रान्तिजस्वेदबिन्दुम् ।
कलितकवलपाणिं केवलं ब्रह्म साक्षाद्
व्रजभुवि निजलीलारब्धडिम्भैकदम्भम् ॥ ८ ॥

युग्मम् ।

विधिरथ विभुमेनं प्रेक्ष्य कोटीरकोटी-
घटितमणिमयूखैः पञ्चपुष्पाणभेदैः ।
पदयुगमभिषिच्यापूपुजद्धर्षबाष्पै-
रिदमुपरि विधुन्वन् कूर्चकं चामरं च ॥ ९ ॥
विदधतमतिचित्रैर्मोहमन्तश्चरित्रैः
प्रतिमुहुरवितृप्तः सम्यगानम्य कृष्णम् ।
सविनयमनुबध्नन्नञ्जलिं कम्पमानः
सपदि भयजराभ्यामस्तवीत् तं विधाता ॥ १० ॥
परमपुरुष दूरे यो गिरां चेतसश्च
प्रभवति महिमानं कस्तवाख्यातुमेनम् ।
तदहमिदमुदञ्चन्मन्दहासं दयार्द्रं
मुखमभिमुखवृत्ति प्रेक्ष्य नेच्छामि वक्तुम् ॥ ११ ॥
क्वचन तव गुणानां कर्मणामस्ति नान्तः
कति कति च न तेषां न स्मरन्तो विमुक्ताः ।
तव तदजित तत्त्वं सच्चिदानन्दपूर्णा-
द्वयमयमभयं नः साक्षि साक्षान्न चेत् किम् ॥ १२ ॥
त्रिगुणगणितमूर्तिचित्वसत्त्वस्थसर्ग-
स्थितिविलयविधाने भावजातस्य देव ।
वदनमिव निविष्टं दर्पणस्यान्तरस्य
स्वमपि किल परात्मन्नप्रविष्टो विभासि ॥ १३ ॥
अहमजनिषि नाभीवृत्तिरादौ भवत्तो
मम तु तदुचितेत्थं देव भीवृत्तिरेव ।
यदकृषि भयहीनो नाथ दौरात्म्यमेवं
महदपि मम तात क्षन्तुमर्हस्यलं तत् ॥ १४ ॥
यदुवर तव दिव्याः पश्यतो देवमूर्ती-
रजनि जनुरिदानीमर्थवच्चक्षुषोर्मे

१ आरि चक्रम् ।

सकृदपि न परस्यानुग्रहं जातमित्थं
क्वचिदपि कलयामि श्रीमतोऽचिन्त्यभूमन् ॥ १५ ॥

सुकृतसरणयोऽन्याः केवलं कष्टहेतो-
र्भवति भवति भक्तिः केवला मङ्गलाय ।
धिगधिगतवृथान्यासत्कथानुग्रकाल-
ग्रसनकवलकल्पानल्पकायार्थशिल्पान् ॥ १६ ॥

तव सकृदपि नामादम्भबुद्ध्या गृहीतं
हरति भवरतीनां रंहसांहःसमूहम् ।
यदि मुहुरिदमुच्चैः सद्भिराम्नायते त-
त्फलमिह भगवन् कस्तस्य कल्पेत वक्तुम् ॥ १७ ॥

अचिररुचिविडम्बिस्फीतपीताम्बराग्र-
प्रतिम कलितबर्हाकल्प गुञ्जावतंस ।
सकवलकर वंशीवेत्रशृङ्गादिपार्श्व
श्रितवनसुमनःस्रग्गोपमूर्ते नमस्ते ॥ १८ ॥

मयि भव करुणावानीश नाभीसरोज-
प्रभवविकटकीटप्रायकाये कृपालो ।
भवति भवति किं मे मायया मायिमायि-
न्नहह यदिह सैव प्रत्युतामूमुहन्माम् ॥ १९ ॥

त्वमसि ननु पुरैको वत्सपालाः सवत्साः
सनिजपरिकरास्ते दोर्भिरिद्धाश्चतुर्भिः ।
पुनरपि च भवानाभाति सर्वैकशेष-
स्तदवगतमिदानीमद्वयं ते स्वरूपम् ॥ २० ॥

उपनिषद उदासास्त्वत्स्वरूपाभिधाने-
ऽवधिमिव सनिषेधं नेति यल्लक्षयन्ति ।
तदिदमहमवापं ब्रह्म साक्षात् कदाचित्
सततसहचराणां किं नु भाग्यं वदामि ॥ २१ ॥

नलिननयन दुष्टस्वीरजोदूषिताक्षं
चिरमिह निजसर्गेऽवापितं चाधिपत्यम् ।
प्रभवसि कृतमन्तुं मामनन्तानुमन्तुं
जिगमिषुमिति नुत्वा धाम धाता जगाम ॥ २२ ॥

कुलकम् ।

हरिरजमजबुद्ध्या रुद्धमित्थं विमृज्य
प्रभुरनु च यथास्वं वत्सकानानिनाय ।
कवलकरमुदीक्ष्य प्रोद्रुरब्दे गतेऽपि
प्रभुमिति पुलिनस्थाः पूर्ववत् पूर्वबालाः ॥ २३ ॥

अहमहमिह वत्सान् कृष्ण रोत्स्याम्यदूरं
चिरकरपरिक्लृप्तं ग्रासमप्येकमद्धि ।
श्रमभवजलबिन्दुस्ते मुखेन्दुर्व्यनक्ति
स्फुटतरमटवीषु प्रायशो धावनानि ॥ २४ ॥

अघसदजगरस्य ध्वंसकः स्वधर्मेभि-
स्तदुदितमिति वाक्यं शुश्रुवान् स प्रति स्वम् ।
महदजगरचर्म प्रेक्षयन्नक्षयश्री-
र्न्यवृतदथ पथि स्वैः सार्धमाबद्धलीलः ॥ २५ ॥

पुनरुपहिततनन्मूर्तिरुद्गीतकीर्तिः
प्रतिदिशमतिमाद्यध्मातवंशीनिनादैः ।
वनकुसुममहीभृद्धातुधारी सुधांशु-
र्व्रजयुवतिदृशां स प्राविशद्गोष्ठदेशम् ॥ २६ ॥

अजगरहननेन स्वावनं तद्गतेऽब्देऽ-
प्यनुपदमिति बुद्ध्या प्रोद्रुरद्येति बालाः ।
इह किमपि न चित्रं मायया यस्य मुग्धाः
स्वमपि न किल रूपं योगिनोऽपि स्मरन्ति ॥ २७ ॥

अथ रुचिरशरीरौ शैशवानन्तराग्रे
वयसि हलिहरी तौ गोऽवनार्हावभूताम् ।
सुरभिसमजमाराच्चक्रतुश्चारयन्तौ
निजमृदुपदवृत्त्या चारु वृन्दावनं तत् ॥ २८ ॥

गमितसुरभिरग्रे स्वं यशो गीतवद्भिः
सुकृतिभिरनुयातो वल्लवैः सीरिणा च ।
वनमुरुमुरलीजध्वानमुग्धाङ्गनादृक्-
प्रपतनसरणिं द्रागेष मुञ्चन् विवेश ॥ २९ ॥

कुसुमितमथ दृष्ट्वा तद्वनं मृद्वनन्तः
पतदलिपृषतानां मञ्जुलं मञ्जुघोषैः ।
सरसिजवनवातैरिष्टगन्धैश्च जुष्टं
विभुरिह विजिहीर्षां जातहर्षो व्यधत्त ॥ ३० ॥

तदनु दनुजवैरी वीक्ष्य वृक्षानवोचत्
फलकिसलयपुष्पैरानतानग्रजं स्वम् ।
बल तव पदपद्मं नूनमेते नमन्ति
स्वतरुजनुरनिष्टोच्छित्तये दत्तपूजाः ॥ ३१ ॥

परमपुरुष यान्तं त्वानुयान्ति द्विरेफा
यश उरु तव पुण्यं यच्च गायन्ति धन्याः ।
तदिह मुनय एते केऽपि नैवात्मदैवं
जहति बल भवन्तं गोपवेषेण गूढम् ॥ ३२ ॥

व्रज इव बल गोप्यो वीक्षणैस्ते हरिण्यो
विदधति मुदमेते नर्तनैः केकिनोऽपि ।
अमृतमधुरयोक्त्या कोकिलाश्चापि धन्या
यदतिथिषु कदाचिन्नास्ति वैमुख्यमेषाम् ॥ ३३ ॥

क्षितिवनगिरिनद्युत्पत्तिभाजो मृगादेः
सकरुणभवदीक्षाभाजनत्वं गतस्य ।
परिणतमगमानां किं तपो वीरुधां वा
तव करचरणं यत् पावनं संस्पृशन्ति ॥ ३४ ॥

आदिकुलकम् ।

निजदृगमृतसिक्तास्वद्रिनद्यादिरोधो-
वनधरणिषु गव्या[1]चारणादिक्रमेण ।
सह सहचरवर्गैर्बाहुयुद्धादिमार्गै-
ररमत परमात्मा नृत्यगीतादिसर्गैः ॥ ३५ ॥

क्वचन हलिनमीशः स्वापयामास जात-
श्रममिव चरणाब्जप्रान्तसंवाहनाद्यैः ।
स्वयमपि स कदाचिद्गाग्यवन्मर्दिताङ्घ्रिः
किसलयशयनीयेऽशेत शेषाङ्कशायी ॥ ३६ ॥

वियति सकुतुकेन प्रक्षिपन् क्वापि बिल्वा-
न्यनु च भुवि पतन्ति प्रास्य तैरेव तानि ।
प्रभुरपि जगतां स ग्राम्यलोकेन रेमे
स्वयमुपनिषदर्थैः कल्पितग्राम्यमूर्तिः ॥ ३७ ॥

कुहचन सुबलश्रीदामकृष्णादिभिस्तौ
सुरससुरभितालप्रेप्सुभिः प्रार्थिषाताम् ।
क्वचिदिह बलकृष्णावस्ति तालाटवी तां
त्वरितमनुचरा वां गन्तुमिच्छन्ति लुब्धाः ॥ ३८ ॥

अवितफलसमृद्धिस्तत्र बालेयमूर्तिः
किल खरपरिवारो धेनुकाख्योऽसुरोऽस्ति ।
झटिति निहतमेनं रोचते चेत् प्रयातं
सुरभिफलजिघत्सासौरभाद्बाधते नः ॥ ३९ ॥

युग्मम् ।

इति निजसखिवाचं शुश्रुवानच्युतस्तैः
सह सहबलदेवस्तालखण्डं तदाप ।
सकलफलनिपातावध्यनन्तो दुधाव
ध्वनिमनु स ययागाद्धेनुकस्तत्र तूर्णम् ॥ ४० ॥

अवनिमथ सशैलां कम्पयन् घोरघोषो
बलमथ विनिहन्तुं प्राक्षिपत् प्रत्यगङ्घ्री ।
द्रुतमनु तमधावत् क्रोधवानेष पश्चा-
च्चरणयुगलमास्थद्राममासाद्य भूयः ॥ ४१ ॥

पदयुगमिदमीयं कामपालो गृहीत्वा
भ्रमणरयगतासुं प्रास तालस्य मौलौ ।
सच खरहतिरंहःपात्यमानोऽन्तिकस्थं
पुनरपरमधावीदेष तालं तथान्यम् ॥ ४२ ॥

हतखरपरिवारं तद्वनं सुप्रचारं
सपदि विदधतौ तौ तत्फलान्यत्र भुक्त्वा ।
त्रिदशकुसुमवृष्ट्या तानि संगृह्य साकं
सफलितपुरुषार्थावीयतुर्गोष्ठमाशु ॥ ४३ ॥

मिलितसुरभिधूलीधूसरीभूतगण्ड-
स्थलगलितपरागव्यक्तनीपावतंसम् ।
स्मितमधुरमुखाब्जं गोपिका वीक्षमाणाः
प्रतिपथमनु गेहादेत्य तापं जहुः स्वम् ॥ ४४ ॥

कुचतटगलदुच्चैरुत्तरीयस्वदेशा-
र्पणविहितविलासभ्रूलतालास्यदर्शी ।
तरुणिममदपूर्णप्रक्रियाघूर्णमान-
व्रजयुवतिदृगन्तप्रेक्षितः प्राप गेहम् ॥ ४५ ॥

स्नपनमलयजाद्यालेपनैः श्रान्तिमुक्तौ
लघु मधुरमथान्नं किंचनाभूरि भुक्त्वा ।
अधिगतशयनीयौ लाल्यमानौ प्रसूभ्यां
सुषुपतुरतुलात्मज्योतिषा पूर्णबोधौ ॥ ४६ ॥

अथ खलदमनोऽगादेकदोपेक्ष्य रामं
सह सहचरवर्गैः क्वापि गाश्चारयिष्यन् ।
रविदुहितृजलं तेऽवाप्य नैदाघतापाः
किमपि पपुरपश्यन् प्राणमुक्तास्तदैव ॥ ४७ ॥

[1] गवां समूहः ।

ह्रद इह वसतोऽस्य क्ष्वेलतः कालियस्य
व्यसु पतति सखीनां वृन्दमेतद्गवां च ।
इति विभुरमृतार्द्रां दृष्टिमाधाय सद्यः
ससमजमजिजीवद्दोपजातं दयालुः ॥ ४८ ॥

चिरमिति च स चित्तेऽचिन्तयत् चिप्रमेत-
द्ध्रदवसतिरहीशो दूरमुत्सारणीयः ।
यदजनि कलुषेयं निम्नगैतद्विषाग्ने-
र्यदुपरि विचरन्तः खेऽपि जीवाः पतन्ति ॥ ४९ ॥

अहमिह हि खलानां निग्रहं कर्तुकामः
समजनिषि ततोऽसौ कुण्डली दण्डनीयः ।
व्रजवसतिभिरेतत् सेव्यतां मुक्तशङ्कं
सलिलमरुणजायाः स्नानपानावगाहैः ॥ ५० ॥

इति व्यवसितो विभुर्वसनमाशु बद्ध्वा दृढं
कदम्बमहिमांशुजातटजमारुरोहेश्वरः ।
पतन् सपदि कालियह्रदमनु व्यलोकि स्वकैः
सवज्रनिनदः स्खलन्निव दिवः पयोदो नवः ॥ ५१ ॥

इति श्रीमल्लक्ष्मणभट्टात्मजश्रीरामचन्द्रभट्टविरचिते गोपाललीलाख्ये महाकाव्ये धेनुकवधो नाम पञ्चमः सर्गः ॥ ५ ॥ :: :: ॥

---

## ॥ अथ विद्धशालभञ्जिकाख्यनाटिकायाः ॥

॥ द्वितीयोऽङ्कः ॥

ततः प्रविशतो मिथः संमुखीने चेट्यौ ।

परिक्रम्य । एका । इतरामञ्चले विधार्य । हला तरंगिए हिअअप्पविट्ठराअखरा विअ लक्खीअसि जं दाणीं संमुहागदं पि मं अणालक्खीअ पउट्ठासि * ।

द्वितीया । समालिङ्ग्य । सहि कुरंगिए मा उण कुप्प, गोरी मे कुप्पदु, जइ मए दिट्ठासि अण्णहिअअत्तणेण † ।

कुरङ्गिका । अइ कीदिसं ते अण्णहिअअत्तणं ‡ ।

तरङ्गिका । तादिसं जादिसेण तुह वि पुरदो मंतअंतीए उक्कंपदि मे हिअअं § ।

कुरङ्गिका । हिअअणिव्विसेसम्मि जणे आसंक त्ति कोदूहलं मे पुच्छावेदि * ।

तर । जं वा तं वा भोदु ण पच्छादइस्सं ण हि सिणेहो जुत्ताजुत्तमणुरुंधेदि † ।

कुर । अहो ज्जेव्व मे आसंघो कधं विअ सहकारलट्ठीए कलकंठी कुंठिदप्पणआ ‡ ।

तर । अत्थि एव्वं तधा वि एवं भणीअदि मंतस्स रक्खणं कज्जसिद्धीए लक्खणं § ।

कुर । मा एवं भण कधं विअ जीअंतादो किकलासादो सिरसुवण्णं पावीअदि ‖ ।

तर । ता सुणादु प्पिअसही अत्थि एत्थ कुंतलेसो चंडमहासेणो णाम राआ तस्स णिअरज्जपरिब्भट्ठस्स इह आगदस्स सुदा कुवलअमाला णाम सा णम्मदामज्जणुत्तिण्णा देवेण दिट्ठा हिअअं अ संपविट्ठा तां च पडिच्छिदवदी देवी णिअमादुलचंदवम्मसुदस्स मिअंकवम्मस्स किदे तण्णिमित्तं अ विवाहोवअरणाइं सज्जीकादुं पेसिदह्मि तग्गदमणाए मए ण तुमं पेक्खिदासि ¶ ।

कुर । अहो देवीए विअक्खणत्तणं एव्वं किल किदे सवत्तिलंभो पडिकदो भोदि देवस्स चंदवम्ममादुलस्स सिणेहो अ दंसिदो भोदि ** ।

तर । तुमं उण कहि पत्थिदासि †† ।

कुर । अज्ज देवीए अलीअविवाहेण विडंबिदुं आरद्धो अज्जचाराअणो तस्स विवाहसामग्गी उप्पादेदुं अहं पेसिदा

---

* हला तरङ्गिके हृदयप्रविष्टराजाक्षरेव लक्ष्यसे, यदिदानीं संमुखागतामपि मामनालक्ष्य प्रवृत्तासि । "हलेति चेटीसंबुद्धौ„ ।

† सखि कुरङ्गिके मा पुनः कुप्यस्व, गौरी मे कुप्यतु, यदि मया दृष्टाऽसि अन्यहृदयत्वेन ।

‡ अयि कीदृशं ते अन्यहृदयत्वम् ।

§ तादृशं यादृशेन तवापि पुरतो मन्त्रयन्त्या उत्कम्पते मे हृदयम् ।

* हृदयनिर्विशेषे जने आशङ्केति कौतूहलं मां पृच्छयति ।

† यद्वा तद्वा भवतु न प्रच्छादयिष्ये नहि स्नेहो युक्तायुक्तमनुरुन्धते ।

‡ अत एव मे आसंघः "आसंघ विचारः आश्वासो वा„ कथमिव सहकारयष्ट्या कलकण्ठी कुण्ठितप्रणया ।

§ अस्त्येवं तथाप्येवं भण्यते मन्त्रस्य रक्षणं कार्यसिद्ध्या लक्षणम् ।

‖ मैवं भण कथमिव जीवतः कृकलासात् शिरः सुवर्णं प्राप्यते । कृकलासः सरटस्तच्छिरसि सुवर्णं वर्तते मयूरचन्द्रकेसुताम्रमिव । उक्तं च रामायणे उत्तरकाण्डे । अथाब्रवीद्वैश्रवणः कृकलासंगिरौ स्थितम् । हैरण्यं संप्रयच्छामि वर्णं प्रीतस्तवाप्यहम् । सहिरण्यं शिरो नित्यं भविष्यति तवाक्षयमिति„ ॥

¶ तत् शृणोतु प्रियसखी, अस्त्यत्र कुन्तलेशश्चण्डमहासेनो नाम राजा, तस्य निजराज्यपरिभ्रष्टस्येहागतस्य सुता कुवलयमाला नाम, सा नर्मदामज्जनोत्तीर्णा देवेन दृष्टा हृदयं चास्यप्रविष्टा, तां च प्रतीच्छितवती देवी निजमातुलचन्द्रवर्मसुतस्य मृगाङ्कवर्मणः कृते, तन्निमित्तं च विवाहोपकरणानि सज्जीकर्तुं प्रेषितास्मि, तद्गतमनसा मया न त्वं प्रेक्षितासि ।

** अहो देव्या विचक्षणत्वं एवं किल कृते सपत्नीलम्भः प्रतिकृतो भवति देवस्य चन्द्रवर्ममातुलस्य स्नेहश्च दर्शितो भवति ।

†† त्वं पुनः कुत्र प्रस्थितासि ।

ता एहिं दुवे वि अम्हे जधासमीहिदसिद्धीए गच्छम्ह * इति निष्क्रान्ते ॥ प्रवेशकः ।

ततः प्रविशति सोत्कण्ठो राजा विशेषविभूषितो विदूषकश्च ।

राजा । मदनाकूतमभिनीय ।

तस्मिन् पञ्चशरे स्मरे भगवता
भर्गेण भस्मीकृते
जानाम्यक्षयसायकं कमलभूः
कामान्तरं निर्ममे ।
यस्यामीभिरितस्ततश्च विशिखै-
रापुङ्खमग्नात्मभि-
र्जातं मे विदलत्कदम्बमुकुल-
स्पर्धोपमानं वपुः ॥ १ ॥

संतापमभिनीय ।

विलीयेन्दुः साक्षादमृतरसवापी यदि भवे-
त्कलङ्कस्तत्रत्यो यदि च विरुचेन्दीवरवनम् ।
ततः स्नानक्रीडाजनितजडभावैरवयवैः
कदाचिन्मुञ्चेयं मदनशिखिपीडाव्यतिकरम् ॥ २ ॥

अपि च । सखे चारायण ।

मन्दादरः कुसुमपत्रिषु पेलवेषु
नूनं बिभर्ति मदनः पवनास्त्रमद्य ।
हारप्रकाण्डसरलाः कथमन्यथाऽमी
श्वासाः प्रनर्तितदुकूलदशाः सरन्ति ॥ ३ ॥

तत्फुल्लातिमुक्तलताच्छन्नस्य तुषारपुञ्जनाम्नः कदलीगृहस्य मार्गमादेशय ।

विदूषकः । संज्ञया निर्दिशति ।

राजा । केयमतुल्यमौनमुद्रा ।

विदूषकः । भूमावक्षराणि लिखति ।

राजा । अष्टादशलिपिविदो वयं न त्वदीयाक्षरविचक्षणाः ।

विदूषकः । दन्तैर्जिह्वामवष्टभ्य । भो दिक्खिदोहं मउणे चिट्ठामि † ।

राजा । किमिति ।

विदूषकः । देवी संपदं ज्जेव्व मं परिणाइस्सदि * ।

राजा । तामेव चिरन्तनब्राह्मणीम् ।

विदूषकः । णहुणहु † ।

राजा । अन्या का ।

विदूषकः । ओल्लागदस्स मिअंकवम्मस्स पुरोहिदस्स दुहिदा क्खु सा ‡ ।

राजा । किंनामधेयः पुरोहितः ।

विदूषकः । सससिंगो णाम जणणी उण मिअतण्हिआ भविस्सघरिणी असे दुहिदा अंबरमाला णाम § ।

राजा । स्वगतम् । मन्ये देवी उपहसितुमेनमिच्छति । तज्जोपमास्महे । वर्धतां परिहासलता ।

ततः प्रविशति चेटी ।

परिक्रम्य पुरतोऽवलोक्य । कधं एस देवो चारायणबह्मणेण समं कोदूहलकदस्स तुसारपुंजस्स ज्जेव्व सण्णिहिदो वट्टदि । ता विण्णवेमि, देवीसदिट्ठं । उपसृत्य । जअदु जअदु भट्टा देवी विण्णवेदि चाराअणो दुदीअविआहे विआहिदुमारद्धो जा तुम्हेहिं वरइत्तकेहिं होदव्वं, एदस्स ज्जेव्व एक्काए गेहिणीए कदं कदलीघरं ता पविसदु देवो देवी सपरिअणा तहिं वट्टदि ‖ इति प्रवेशं नाटयति ।

ततः प्रविशति देवी कृतवधूटीवेषश्चेटो विभवतश्च परीवारः ।

देवी । हला मेहले कुणीअदु जामादुणो मुहावलोअणं ¶ ।

मेखला । तथाविधाय शिरसि चाघ्राय । अज्ज चाराअण अवणेसु रत्तसुअं कुणसु तारामेलणं ** ।

विदूषकः । तथा करोति ।

---

* अद्य देव्या अलीकविवाहेन विडम्बयितुमारब्ध आर्यचारायणः तस्य विवाहसामग्रीमुत्पादयितुमहं प्रेषिता; तदेहि द्वे आवां यथासमीहितसिद्ध्यै गच्छावः ।

† भो दीक्षितोऽहं मौने तिष्ठामि ।

* देवी सांप्रतमेव मां परिणायिष्यति ।

† न खलु न खलु ।

‡ ओल्लागतस्य "ओल्लं बन्धकत्वं तेनागतस्य,, मृगाङ्कवर्मणः पुरोहितस्य दुहिता खलु सा ।

§ शशशृङ्गो नाम जननी पुनर्मृगतृष्णा भविष्यगृहिणी चास्या दुहिता अम्बरमाला नाम । "खपुष्पस्रगित्यर्थः" ॥

‖ कथमेष देवश्चारायणब्राह्मणेन समं कौतूहलकृतस्य तुषारपुञ्जस्यैव संनिहितो वर्तते, तद्विज्ञापयामि देवीसंदिष्टम् । जयतु जयतु भट्टा देवी विज्ञापयति, चारायणो द्वितीयविवाहे विवाहितुमारब्धो यद्युष्माभिर्वरयितृभिर्भवितव्यम् । एतस्यैव एकया गेहिन्या कृतं कदलीगृहं तत्प्रविशतु देवः, देवी सपरिजना तत्र वर्तते ।

¶ हला मेखले क्रियतां जामातुर्मुखावलोकनम् ।

** आर्य चारायण अपनयस्व रक्तांशुकं कुरुष्व तारामेलनम् । "तारामेलनं परस्परं मुखावलोकनम्" ॥

देवी । मेहले तुरिदं देवावेसु भामरीत्र्रो जेण प्पज्जलिदे हुदवहे लात्र्रंजलीत्र्रो मुंचेदि * ।

विदूषकः । दुदीत्र्रबह्म णा धुवं सत्तरिसिमंडलं च प्पेख्ख † ।

चेटः । विलोक्य । दिठ्ठद्दुत्र्रो दिठ्ठसतरिसिमंडलो संवुत्तो ह्मि ‡ ।

विदूषकः । त्र्रयि मुद्धे दिठ्ठधुत्र्रा दिठ्ठसत्तरिसिमंडला संवुत्ता ह्मि त्ति भण § ।

चेटविदूषकौ पुनःपुनस्तथाभिदधतः ।

चेटः । त्र्रज्ज चारात्र्रण देवीदासो बंधुलो ख्खु त्र्रहं तुए परिणीत्र्रामि । ण सुणीत्र्रदि दीवंतरे वि एसावत्था जं पुरिसो पुरिसं परिणेदि इत्थित्र्रा च इत्थित्र्रं त्र्रंबरमाला उण त्र्रंबरमाला ज्जेव ‖ ।

विदूषकः । त्र्राः दासीए दुहिदे कुट्टणि भ्रमरिणि टेटेटेंटाकारिणि दुट्ठसंघलिदे विसमकात्तरि छलिद ह्मि तुए ता रख्खित्र्रसु त्र्रत्ताणं ¶ ।

सर्वे हसन्ति ।

विदूषकः । परिक्रामति ।

राजा । देवि विलक्षणः क्रुद्धश्चारायणः कुवलयवीथीं प्रतिगतः । त्र्रस्माभिरपि गन्तव्यम् । तत्केन चित्कर्पूरद्वीपादागतेन नरेन्द्रेण ** सिद्धौषधो माधवीलतामण्डपो माञ्जिष्ठस्तबकालंकृतः कृतस्तदद्दृष्टपूर्वकं चरितमवलोकयितुं प्रियवयस्यमावर्जयितुं च गच्छामः । त्वं पुनस्तदद्भुतं प्रदोषे द्रक्ष्यसि ।

देवी । कुरंगिए देवतादुदीत्र्रस्स देवस्स पास्सपडिवत्तिणी होहिं †† इति सपरिवारा निष्क्रान्ता ॥

कुर । परिक्रामितकेन । त्र्रत्र्रं त्र्रज्जचारात्र्रणो णोमालित्र्रागुम्मंतरे बरही वित्र्र मुहमेत्तणिलुक्को चिट्ठदि * ।

राजा । तदानयैनम् ।

कुर । किं चिदुपसृत्य । भो त्र्रंबरमालावल्लहदेवो वाहरदि † इत्यञ्चले कर्षति ।

विदूषकः । त्र्राः दुष्टदासि भविस्सकुट्टणि तुमं पि मं उत्र्रहससि, ता तुह्मारिसजणहित्र्रत्र्रकुडिलेन दंडकठ्ठेण झत्ति ताडइस्सं ‡ ।

राजा । कुरङ्गिके देवीमनुवर्तस्व तत्परिवारे क्रुद्धश्चारायणः ।

कुर । निष्क्रान्ता परिक्रामितकेन ।

विदूषकः । पित्र्रवत्र्रस्सविणोदत्थं महामंतिकारिदा रत्र्रणावदी णाम चउक्कित्र्रा किं उण कीए वि सदेवदव्व एसा § ।

राजा । विलोक्य । स्वगतम् । हृदय दिष्ट्या वर्धसे स्वप्नदृष्टजनप्रत्यक्षदर्शनेन । तां प्रति । सखे चारायण सैवेयमस्मन्मनःशिखण्डिताण्डवयित्री वर्षालक्ष्मीः । इदमन्यत्ते कथयामि । निपुणप्रजापतिनिर्माणमेषा । यतः

चन्द्रो जडः कदलिकाण्डमकाण्डशीत-  
मिन्दीवराणि च विसूचितविभ्रमाणि ‖ ।  
येनाक्रियन्त सुतनोः स कथं विधाता  
किं चन्द्रिकां क्वचिदशीतरुचिः प्रसूते ॥ ४ ॥

त्र्रपि चास्याः खलु लक्षयामि तामियं वयोवस्थामलंकुरुते । यस्या दिवानिशमभिनवाकल्पविकल्पगतमानसा तिष्ठति ।

उत्तालालकभञ्जनानि कबरी-  
पाशेषु शिक्षारसो  
दन्तानां परिकर्म नीविनहनं  
भ्रूलास्ययोग्याग्रहः ।  
तिर्यग्लोचनचेष्टितानि वचसां  
छेकोक्तिसंक्रान्तयः  
स्त्रीणां म्लायति शैशवे प्रतिकलं  
कोप्येष केलिक्रमः ॥ ५ ॥

* मेखले त्वरितं दापयस्व भ्रामर्यः येन प्रज्वलिते हुतवहे लाजाञ्जलयो मुच्यन्ते ।

† द्वितीयब्राह्मणि ध्रुवं सप्तर्षिमण्डलं च प्रेक्षस्व ।

‡ दृष्टध्रुवो दृष्टसप्तर्षिमण्डलश्च संवृत्तोऽस्मि ।

§ अयि मुग्धे दृष्टध्रुवा दृष्टसप्तर्षिमण्डला संवृत्ताऽस्मीति भण ।

‖ आर्य चारायण देवीदासो बन्धुलः खल्वहं त्वया परिणीये न श्रूयते द्वीपान्तरेऽप्येषावस्था यत्पुरुषः पुरुषं परिणयति स्त्री च स्त्रियमम्बरमाला पुनरम्बरमालेव । "बन्धुलः कौलटेरः" ॥

¶ आः दास्या दुहितः कुट्टिनि भ्रमरिणि "सा सदा भ्रमणशीला" टेटेटेंटा कारिणि "टेटेटेंटा एतादृशशब्दकरणशीले, अथवा इदं विकृतस्य क्रूरस्य वा शब्दस्यानुकरणं कर्कशशब्देत्यर्थः । यद्वा भ्रमरटेंटे टेन्टाकराले इत्यपि क्वचित्पाठः तत्र भ्रमरवत् टेंटे विकृतचक्षुर्गोलको यस्याः सा तादृशि टेंटा शब्देन कराले भयानके इत्यर्थः" दुष्टसंघट्टिते विषमकर्तरि छलितोऽस्मि त्वया तद् रक्षस्वात्मानम् ।

** नरेन्द्रो विषवैद्यः । नरेन्द्रो वार्त्तिके राज्ञि विषवैद्येऽपि कथ्यत इति कोशात् ॥

†† कुरङ्गिके देवताद्वितीयस्य देवस्य पार्श्वपरिवर्त्तिनी भव ।

* अयमार्यचारायणो नवमालिकागुल्मान्तरे बर्हीव मुखमात्रनिलीनस्तिष्ठति ।

† भो अम्बरमालावल्लभदेवो व्याहरति ।

‡ आः दुष्टदासि भविष्यकुट्टनि त्वमपि मामुपहससि, तद्युष्मादृशजनहृदयकुटिलेन दण्डकाष्ठेन झटिति ताडयिष्ये ।

§ प्रियवयस्यविनोदार्थं महामन्त्रिकारिता रत्नवतीनाम चतुष्किका किं पुनः कयाऽपि सदेवतैवैषा ।

‖ विमुद्रितविभ्रमाणीति क्वचित्पाठः ।

विदूषकः । आकारमाकलय्य सोपहासम् । एहि पुरतो भवीअ देवीसआसं गच्छह्म * ।

राजा । सखे पश्यामस्तावत् ।

विदूषकः । किं तुमं गलिबइल्लो व्व ट्ठाणे ट्ठाणे ठक्कसि, ता गुडूचीदंड व्व भवं इध ज्जेव्व प्परोहदु अहं उण देवीसआसं गच्छेह्मि † ।

राजा । सर्वं संभाव्यते त्वयि किं मधुर्न कुसुमयति ।

विदूषकः । विहस्य पुरोऽवलोक्य च । भो उप्फालसंफालाइ करेदुं लग्गा ‡ ।

राजा । विहस्य । कन्दुकेन क्रीडति । तथाहि ।

अमन्दमणिनूपुरक्वणनचारुचारिक्रमं §
झणज्झणितिमेखलास्खलिततारहारच्छटम् ।
इदं तरलकङ्कणावलिविशेषवाचालितं
मनो हरति सुभ्रुवः किमपि कन्दुकक्रीडनम् ॥ ६ ॥

विदूषकः । एव्वं णेदं ।

चंचलचलणचारिवक्किमवेल्लिदचोलअंचलं
वेल्लिए वेणिवल्लिहल्लावणधुअविअइलमल्लिअं ।
रेहद घणघणंतरसणावलिकिंकिणिअंकणुच्चअं
चंदमुहीए मअणरंगगणं गेंदुअकेलितांडवं ॥ ॥ ७ ॥

राजा ।

अस्याः स्वेदाम्बुबिम्बच्युततिलकतया
व्यक्तवक्रेन्दुकान्ते-
र्वारंवारेण वेगप्रहणनगणना-
केलिवाचालितायाः ।
तत्पातोत्थानतालक्रमनमितदृश-
स्ताण्डवोत्तालताली-
लालित्याल्लोभिताःस्मः प्रतिकलममुना
कन्दुकक्रीडितेन ॥ ८ ॥

भूयो विभाव्य । अहह महता वेगेन वर्तते ।

चेलाञ्चलेन चलहारलताप्रकाण्डै-
र्वेणीगुणेन च बलाद्वलयीकृतेन ।
हेलाहितभ्रमरकभ्रममण्डलीभि-
श्छत्त्रत्रयं रचयतीव चिरं नतभ्रूः ॥ ९ ॥

पुनर्निरूप्य ।

स्मरशरधिनिकाशं कर्णपाशं कृशाङ्गी-
रपविगलिततालीपत्त्रताटङ्कमेकम् ।
वहति हृदयचोरं कुङ्कुमन्यासगौरं
वलयितमिव नालं लोचनेन्दीवरस्य ॥ १० ॥

विदूषकः । भो विरदा गेंदुअखेलणादो * ।

राजा । न केवलं विरता सखी किं तु करतलन्यस्तपाणिपद्मा सप्रत्यभिज्ञमिवास्मानवलोकयति च । पश्य ।

वक्त्रश्रीजितजर्जरेन्दुमलिनं कृत्वा करे कन्दुकं
क्रीडाकौतुकमिश्रभावमनया ताम्रं वहन्त्याननम् ।
भृङ्गाग्रग्रहकष्टकेतकदलस्पर्धावतीनां दृशा
दीर्घापाङ्गतरङ्गणैकसुहृदामेषोऽस्मि पात्रीकृतः ॥ ११ ॥

विदूषकः । ता एहि अणुसरह्म सुंदरी । उब्भिज्जदु प्पेम्मदुद्दोणी घुट्टीअदु दिट्ठीए पीऊसगंडूसो दिज्जदु मअणस्स हत्थालंबो पअट्टदु पंचमभंकाराहिआरो भोदु विरहाउलो परिचारिआवग्गो मुच्छदु मअरद्धअसंधिविग्गहचिंता वावडदाए कंठट्ठिदजीविदो चाराअणबह्मणो † ।

परिक्रम्य सोपानावतरणं नाटयतः ।

विदूषकः । अदेवं देवउलं अणक्खरो लेहो जदो ण दीसदि सा ‡ ।

राजा । दृष्टा हरिश्चन्द्रपुरी § प्रनष्टा च ।

विदूषकः । एहि णिउणं णिरूप ह्म । सा कहिं पि खंभंतरिदा चिट्ठदि ॥ । चतुर्दिशमवलोकितकेन ।

राजा । सविषादं भुवमवलोक्य ।

इयं चरणकुङ्कुमच्छुरितकुट्टिमा मेदिनी
निवेदयति कुन्दुकव्यतिकरं कुरङ्गीदृशः ।

---

* एहि पुरतो भूत्वा देवीसकाशं गच्छावः ।

† किं त्वमधूर्वहबलीवर्दइव स्थानेस्थाने श्रान्तो भवसि, तद् गुडूचीदण्डइव भवानत्रैव प्ररोहतु अहं पुनर्देवीसकाशं गच्छामि ।

‡ भो उत्फालसंफालानि कर्तुं लग्ना ।

§ नृत्ये पादविन्यासश्चारिः ॥

|| एवमेवै तत् ।

चंचलचरणचारिविक्रमवेल्लितचोलाञ्चलं
वल्लनशीलवेणिवल्लीचालनधुतविचकिलमल्लिकम् ।
राजते घणघणद्रसनावलिकिङ्किणीकंकणोच्चयं
चन्द्रमुख्या मदनरङ्गाङ्गणं गेन्दुककेलिताण्डवम् ॥

* भो विरता गेन्दुकखेलनात् ।

† तदेहि अनुसरावः सुन्दरीम् । उद्भिद्यतां प्रेमदुर्द्रोणीः पीयतां दृष्ट्या पीयूषगण्डूषं दीयतां मदनस्य हस्तालम्बः प्रवर्ततां पञ्चमझङ्काराधिकारो भवतु विरहाकुलः परिचारिकावर्गो मूर्छतु मकरध्वजसंधिविग्रहचिन्ताव्यापृततया कण्ठस्थितजीवितश्चारायणब्राह्मणः ।

‡ अदेवं देवकुलमनक्षरो लेखो यतो न दृश्यते सा ।

§ हरिश्चन्द्रपुरी गन्धर्वनगरी ॥

|| एहि निपुणं निरूपयावः । सा कुत्रापि स्तम्भान्तरिता तिष्ठति ।

हहा किमिदमद्भुतं न च कृशोदरी दृश्यते
भवत्ववगतं स्मर: सृजति मोहमायामिमाम् ॥१२॥

संतोषमभिनीय समन्तादवलोक्य च ।

शिखामणिरितोऽरुणस्तिलकयत्ययं मेदिनी-
मितो ललितगुम्फनास्तरलवेणिवान्ता:स्रज: ।
इतश्छुरितमन्तरं त्रुटितहारमुक्ताफलै-
रित: श्रवणपाशतश्च तलपत्रमास्ते च्युतम् ॥ १३ ॥

विदूषकः । सुट्ठु क्खु सुसण्णिवेसं विअ तालच्छदं । आदाय प्रसार्य च । कधं अक्खराइं पि पिअवअस्स जइ कालक्खरिओसि ता पढ एदं * ।

राजा । वाचयति ।

विधत्ते सोल्लेखं कतरदिह नाङ्गं तरुणिमा
तथापि प्रागल्भ्यं किमपि चतुरं लोचनयुगे ।

विभाव्य । अये द्विपदीयं न पुनरद्यापि चतुष्पदी ।

विदूषकः । पोगंडआ विअ कोच्चिरं उद्धजाणुअं चिट्ठिस्सामो । ता एहि मत्तवारणीए उअविसह्न † ।

तथा कुरुत: । नेपथ्ये ।

यत्तालीदलपाकपाण्डु वदनं
यद्दुर्दिनं नेत्रयो-
र्यत्प्रह्वोलितकेलिपङ्कजवना:
श्वासा: प्रसर्पन्ति च ।
गौरी क्रुध्यतु वर्तते यदि न ते
तत्कोपि चित्ते युवा
धिक्धिक् त्वां खलु पांसुखेलनसखी-
लोकेऽपि यन्निन्हव: ॥ १४ ॥

विदूषकः । भो सिहाबंध करेहि अमाणुसी वाणी सुणीअदि ‡ ।

राजा । भित्त्यन्तरित: कश्चिदभिधत्ते ।

विदूषकः । भो वक्खाणेहि मे § ।

राजा । काचित्कंचिदनुरक्ता लज्जावती च वयस्य भित्तरहस्या क्रियते ।

* सुष्ठु खलु सुसंनिवेशितमिव तालच्छदम् । कथमक्षराण्यपि यदि कालाक्षरिकोसि तत्पठ एतत् "कालानि कृष्णानि अक्षराणि यो वेत्ति स कालाक्षरिक:"

† पौगण्डा इव कियच्चिरमूर्ध्वजानुकं स्थास्याम: । तदेहि मत्तवारणयामुपविशाव: । "गजदन्तै: कृता शाला ज्ञेया सा मत्तवारणीति केचित् । कपोतपालि केत्यन्ये । पौगण्डा विकलाङ्गा:" ।

‡ भो शिखाबन्धं कुरु अमानुषी वाणी श्रूयते ।

§ भो व्याचक्ष्व मे ।

नेपथ्ये । सवाक्स्तम्भम् । सहीओ किं एत्थ अलिअं संभावेध * ।

राजा । वयस्य श्रुतम् ।

विदूषकः । हीहीभो एदं क्खु पंडिदा अलिअविअप्पेहिं फलचुक्का विअ मक्कला मूलमलहंता पल्लवग्गाहिणो होन्ति, मुक्खा उण फणसवणपालआ विअ मूलमणुसरंता फलं पावंति, ता सुण अब्भुदं ज्जेव्व वक्खाणइस्सं । ण हु एदं सामण्णजणवअणं तुमं ज्जेव्व भणीअसि ण हु मिअलंछणमुब्भिअ ससिकंतपुत्तलिआ बद्धणिब्भरा पज्झरदि † ।

राजा । तदिदं तर्के, अनाकरे पद्मरागरत्नम् ।

पुनर्नेपथ्ये ।

कहं तक्कालप्फुडिदसिप्पिसंपुडुम्मुक्कमोत्तिअच्छाआ ।
थक्कंतु तुह धोअंजणाणं णअणाणं बाहकणा ॥ १५ ॥

सक्किसिहि कहं णु पेक्खिदुं पारदरसच्छित्तकंचणच्छाअं ।
तणुकदलीए परिपंडुरत्तणं डिंभहरिणच्छि ॥ १६ ॥

कहं णु तए तरलिज्जंति केलिपंकेरुहग्गक्खलणेण ।
णीसास कट्ठिअ हारलट्ठिसंठाणपरिमाणा ॥ १७ ॥

पसिढिलणीविअकंचुअत्तणं कहं णु फ़ुरइ देहदोब्बल्लं ।
अंगं पुण दिनहरिणंकबिंबपरिपंडुरं कहं णु होइ ॥ १८ ॥

इअ तुह विज्जाहरमल्लदंसणेण फ़ुडमिमाओ भंगीओ ।
ण विणा चंदं सेहालिआए विअसंति कुसुमाइं ‡ ॥ १९ ॥

विदूषकः । सिविणअदिट्ठा दोलणदोलिणी विद्धसंचारिदसालभंजिअत्तणेण त्थलत्तरे परिणदा गेंदुअखेलिणी कअक-

* सख्य: किमत्रालीकं संभाव्यते ।

† हीही भो "अयं शब्दो विस्मये" एतद् खलु पण्डिता अलीकविकल्पैर्विस्मृतफला इव मर्कटा मूलमलभन्त: पल्लवग्राहिणो भवन्ति, मूर्खा: पुन: पनसवनपालका इव मूलमनुसरन्त: फलं प्राप्नुवन्ति तद् शृणु अद्भुतमेव व्याख्यास्याम: । न खलु एतत्सामान्यजनवचनं त्वमेव भण्यसे न खलु मृगलाञ्छनमुद्भिद्य शशिकान्तपुत्तलिका बद्धनिर्भरा प्रसरति ।

‡ कथं तत्कालस्फुटितशुक्तिसंपुटोन्मुक्तमौक्तिकच्छाया: ।
विरमन्तु तव धौताञ्जनयोर्नयनयोर्बाष्पकणा: ॥ १५ ॥
शक्यसे कथं नु प्रेक्षितुं पारदरससिक्तकाञ्चनच्छायम् ।
तनुकदल्या: परिपाण्डुरत्वं डिम्भहरिणाक्षि ॥ १६ ॥
कथं नु त्वया तरलीयन्ते केलिपङ्केरुहाग्रस्खलनेन ।
नि:श्वासा: कष्टा हारयष्टिसंस्थानपरिमाणा: ॥ १७ ॥
प्रशिथिलनीविककञ्चुकत्वं कथं नु स्फुरति देहदौर्बल्यम् ।
अङ्गं पुनर्दिनहरिणाङ्कबिम्बपरिपाण्डुरं कथं नु भवति ॥ १८ ॥
इह तव विद्याधरमल्लदर्शनेन स्फुटमिमा भङ्ग्य: ।
न विना चन्द्रं शेफालिकाया विकसन्ति कुसुमानि ॥ १९ ॥
डिम्भो बालमृग: ।

व्वबंधरअणा, सा ज्जेव एसा तुए आलक्खिदा तुह चित्तं अक्खिवदि * ।

नेपथ्ये । सहि मिअंकावलि ता मए संपदं णिसट्ठत्थाए दूदीए होदव्वं † ।

राजा । सैवेयमस्मन्मनसि मन्मथेनेदानीमुत्कीर्यते मृगाङ्कावलीति पञ्चाक्षरी ।

नेपथ्ये । रइदा अ मए तुहावत्थाणिवेदणत्थं महाराअ पुरदो पठणिज्जा दुवे सिलोआ ते पियसहीए सुणीअदु ‡ ।

संस्कृतमाश्रित्य ।

चन्द्रं चन्दनकर्दमेन लिखितं संमार्ष्टि दग्धाधरा
कामः पुष्पशरः किलेति सुमनोवर्गं लुनीते च यत् ।
वन्द्यं निन्दति यच्च मन्मथमसौ भङ्क्त्वाग्रहस्ताङ्गुली-
स्तत्कामं सुभग त्वया वरतनुर्वातूलतां लम्भिता ॥२०॥

अपि च ।

तापोम्भः प्रसृतिंपचः प्रचयवान् बाष्पः प्रणालोचितः
श्वासाः कम्पितदीपवर्तिकलिकाः पाण्डिम्नि मग्नं वपुः ।
किं चान्यत्कथयामि रात्रिमखिलां त्वन्मार्गवातायने
हस्तच्छत्रनिरुद्धचन्द्रमहसस्तस्याः स्थितिर्वर्तते ॥२१॥

विदूषकः । अहं उण जाणे अणुप्पविस्सीअ अह्मे छलिदुमिह सुवण्णचउक्किआसंक्कंता के वि बह्मरक्खसा जप्पन्ति । भूअप्पिआ अ संझा सण्णिहिदा वट्टदि, ता ओदरह्म § ।

राजा । यथाह भवानिति उभाववतरणं नाटयतः ।

नेपथ्ये । सुखाय सायंतनसंध्या भवतु देवस्य । संप्रति हि ।

निर्यद्वासरजीवपिण्डसरुणां बिभ्रत्कवोष्णैः करै-
र्माञ्जिष्ठं रविबिम्बमम्बरतलादस्ताचलं चुम्बति ।
किं च स्तोकतमःकलापकलनाश्यामायमानं मना-
ग्धूमश्यामपुराणचित्ररचनारूपं जगज्जायते ॥ २२ ॥

अपि च ।

सैरन्ध्रीकरकृष्टकङ्कणसरद्वीरध्वनिः संचर-
द्दूतीसूचितसंधिविग्रहविधिः सोल्लासलीलाधरः ।
वारस्त्रीजनसज्जमानशयनः संनद्धपुष्पायुधः
श्रीखण्डद्रवधौतसौधतलिमो रम्यः क्षणो वर्तते ॥२३॥

राजा । संध्यामुपासितुं देवीभवनमेव गच्छाम इति निष्क्रान्तौ ॥

॥ इति श्रीकविराजराजशेखरविरचितायां
विद्धशालभञ्जिकाभिधनाटिकायां द्वितीयोऽङ्कः ॥

* स्वप्नदृष्टा दोलान्दोलिनी विद्धसंचारितशालभञ्जिकात्वेन स्थलान्तरे परिणता गेन्दुकखेलिनी कृतकाव्यबन्धरचना सैवैषा त्वया आलक्षिता तव चित्तमाक्षिपति ।

† सखि मृगाङ्कावलि तन्मया सांप्रतं निसृष्टार्थया दूत्या भवितव्यम् ।

‡ रचितौ च मया तवावस्थानिवेदनार्थं महाराज पुरतः पठनीयौ द्वौ श्लोकौ तौ प्रियसख्याः श्रूयताम् ।

§ अहं पुनर्जाने अनुप्रविश्यास्मान् छलितुमिह सुवर्णचतुष्किकासंक्रान्ताः केऽपि ब्रह्मराक्षसा जल्पन्ति । भूतप्रिया च संध्या संनिहिता वर्तते तदवतरामः ।

THE APHORISMS

OF THE

# YOGA PHILOSOPHY

OF

PATAÑJALI.

(Continued from page 126.)

तदसङ्ख्येयवासनाभिश्चित्रमपि परार्थं संहत्यकारित्वात् ॥ २३ ॥

Aph. 23. Though variegated by innumerable impressions (mental deposits) it exists for the sake of another, because it operates in association.

[1] It—the mind—or understanding, though variegated—assuming various forms by innumerable mental impressions, exists for the sake of another—that is it accomplishes the aim of another—i e of the governing principle, which aim is characterised as experiencer, experience and emancipation. If we be asked why, we reply that it is because it operates in performing the aim in association—conjointly—i. e together with another; whatever performs operations in association with another is observed to exist for the sake of another as a seat, or bed; and the qualities of purity, Passion and Darkness assuming modification in the shape of understanding operate in association; hence they exist for the sake of another, And that other is the soul.

[2] He now proceeds to ascertain what isolation i. e the aim of the system, is, by the ten following aphorisms.

[1] तदेव चित्तं सङ्ख्यातुमशक्याभिर्वासनाभिश्चित्रमपि नानारूपमपि परार्थं परस्य स्वामिनो [illegible] यतीति कुतः संहत्यकारित्वात् संहत्य सम्भूय [illegible] त्वात् यद्यत्संहत्यार्थक्रियाकारि तत्परार्थं दृष्टं यथा शयनासनादि । सत्त्वरजस्तमांसि च चित्तलक्षणपरिणामभाञ्जि संहत्यकारीणि यश्च परः स पुरुषः ॥

[2] इदानीं शास्त्रफलङ्कैवल्यं निर्णेतुं दशभिः सूत्रैरुपक्रमते ॥

विशेषदर्शिन आत्मभावभावनाविनिवृत्तिः ॥ २४ ॥

Aph. 24. The cessation of the (false) notion regarding the soul takes place in him who knows the difference.

[1] Thus the difference between soul and mind being proved, whoever observes their peculiarity, that the one is different from the other, the idea of such a one knowing the proper nature of the mind, as to the understanding being the soul, ceases That is to say, the false notion that the mind itself is the knower and experiencer is removed.

[2] What happens when this has taken place? to this he replies:

तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम् ॥ २५ ॥

Aph 25. Then the mind becomes deflected towards discrimination and bowed down towards [or by] Isolation.

[3] The mind of the ascetic which was inclined towards Ignorance, and directed towards, i e. bowed down towards, objects, and had the experience of objects for its fruit, is now turned towards discrimination, i. e comes into the right path and is directed inwards; and becomes bowed down towards "Isolation"—i e. has Isolation for its result, or is possessed of the germ of Isolation.

[4] Now by describing the causes of the impediments, which occur to the mind flowing in [the path of] discrimination, he mentions the means of abandoning those [obstacles] —

तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः ॥ २६ ॥

Aph. 26. In the intervals thereof other thoughts arise from the self-continuant impressions.

[1] Different thoughts characterised by non-abstraction, which arise in the intervals in the vacuities, in the mind of the ascetic abiding in meditation, spring up in the shape of "I" "mine" &c. from the former impressions of the mind produced by the perceptions of non-abstraction, though now extenuated.

Therefore such thoughts must be abandoned by extirpating their causes. This is what is to be stated.

[2] He now states that the methods of abandoning these are as they have been described before:

हानं तेषां क्लेशवदुक्तम् ॥ २७ ॥

Aph. 27. The means of the avoidance of these are explained to be as in the case of the afflictions.

[3] The abandonment of the train of the self-reproductive thoughts must be made in the same manner as the methods described before for the avoidance of afflictions, ignorance &c That is, as they [the afflictions] being consumed in the fire of knowledge do not acquire germination again in the soil of the mind, like burnt seeds, so also the train of the self-reproductive thoughts [does not continue]. G. D.

---

[1] एवं सत्त्वपुरुषयोरन्यत्वे साधिते यस्तयोर्विशेषम्पश्यति । अयमस्मादन्य इत्येवं रूपं विशेषं जानाति । तस्य विज्ञातचित्तस्वरूपस्य चित्ते यात्मभावभावना सा विनिवर्तते । चित्तमेव ज्ञातृ भोक्तृ इत्यभिमानो निवर्तत इत्यर्थः ॥

[2] तस्मिन् सति किम्भवतीत्याह ॥

[3] यदस्याज्ञाननिम्नं बहिर्मुखं विषयोपभोगफलंचित्तमासीत्तदिदानीं विवेकनिम्नं मार्गावर्त्यन्तर्मुखङ्कैवल्यप्राग्भारङ्कैवल्यफलं कैवल्यप्रारम्भं वा सम्पद्यत इति ॥

[4] अस्मिंश्च विवेकवाहिनिचित्ते येऽन्तरायाः प्रादुर्भवन्ति तेषां हेतुप्रतिपादनद्वारेण त्यागोपायमाह ॥

[1] तस्मिन् समाधौ स्थितस्य छिद्रेष्वन्तरालेषु यानि प्रत्ययान्तराणि व्युत्थानरूपाणि ज्ञानानि तानि प्राग्भवेभ्यो व्युत्थानाऽनुभवजेभ्यः संस्कारेभ्योऽहं ममेत्येवंरूपाणि क्षीयमाणेभ्योऽपि प्रभवन्ति । अतःकारणोच्छित्तिद्वारेण तेषां हानं कर्त्तव्यमित्युक्तं भवति ॥

[2] हानोपायश्च पूर्वमेवोक्तइत्याह ॥

[3] यथा क्लेशानामविद्यादीनां हानं पूर्वमुक्तं तथा संस्काराणामपि कर्त्तव्यं यथा ते ज्ञानाग्निसंप्लुष्टा दग्धबीजकल्पा न पुनश्चित्तभूमौ प्ररोहं लभन्ते तथा संस्कारा अपि ॥

---



PRINTED AND PUBLISHED BY THE PROPRIETORS, E. J. LAZARUS AND CO., AT THE MEDICAL HALL PRESS, BENARES.

# काशीविद्यासुधानिधिः

श्रीगणेशाय नमः

श्रीमद्विजयिनीदेवीपाठशालोदयोदितः । प्राच्यप्रतीच्यवाक्पूर्वापरपक्षद्वयान्वितः ॥ १ ॥
अङ्करश्मिः स्फुटयतु काशीविद्यासुधानिधिः । प्राचीनार्यजनप्रज्ञाविलासकुमुदोत्करान् ॥ २ ॥

A Monthly Journal of the Benares College, devoted to Sanskrit Literature.

No. 67. Benares, December 1st, 1871. Vol. VI.


## ॥ चिन्तामणेः शब्दखण्डम् ॥

(१) नन्वेते पदार्थास्तत्पर्यविषय(२)मिथःसंसर्गवन्तः, (३) आकाङ्क्षादिमत्पदस्मारितत्वाद्, (४) योग्यतासत्तिमत्त्वे सति संसर्गपरपदस्मारितत्वाद्वा । आनाप्तोक्ते योग्यताविरहान्न व्यभिचारः । तत्र बाधकसत्त्वात्, (५) तज्जन्यज्ञानस्य भ्रमत्वाद्, एकाकारवाक्यस्यापि बाधकसत्त्वासत्त्वाभ्यां योग्यायोग्यत्वात् । अथ प्रतिपत्तुर्जिज्ञासां प्रति योग्यता, सा च श्रोतरि तदुत्पाद्यसंसर्गावगमप्रागभावरूपा ऽऽकाङ्क्षा, बाधकप्रमाविरहो योग्यता, अव्यवहितसंसर्गप्रतियोगिज्ञानमासत्तिः, स्ताश्च स्वरूपसत्यो हेतवो, न तु ज्ञाताः, गौरवात्, तज्ज्ञानं विना ऽन्वयानुभवे विलम्बाभावात्, संसर्गनिरूप्यत्वेन प्रथमं दुरवधारणत्वाच्चे,ति न ता लिङ्गविशेषणानीति चेत्, न । योग्यतादिशून्ये ऽपि तदभिमानेन संसर्गप्रत्ययात् । अन्यथा

## ॥ शब्दचिन्तामणिव्याख्या रुचिदत्तीया ॥

रजतादिपदार्थपक्षत्वे रजतत्वादेः पक्षतावच्छेदकतया तत्प्रकारकत्वं सिद्धं स्यादित्याशयेन पदार्थपक्षकमनुमानमाह । (१) नन्विति । रजतादिपदार्थाश्च तत्तत्पदेन विशिष्योपस्थिता इति भावः । वह्नितात्पर्यके धूमोच्चारणे वह्निसंसर्गसिद्धा ऽर्थान्तरमित्यत उक्तं (२) मिथ इति । तथा च ययोराकाङ्क्षादिमत्त्वं तयोः संसर्गः पर्यवस्यति । न च प्रमेयत्वे प्रमेयत्वमित्यत्र मिथो ऽर्थाप्रसिद्धा साध्यासत्त्वाद्व्यभिचारः । भेदघटितयोग्यतायाः प्रकृतहेतुविशेषणत्वात् । न चैवं तत्रैव शब्दपार्थक्यम् । मिथ इत्यस्य तत्रानुपादानादित्याहुः । वस्तुतो यन्निरूपिताकाङ्क्षादिकं यत्र तत्र तत्संसर्ग इत्येव सामान्यतो व्याप्तिर्मिथःशब्देन सूच्यतइति भावः । घटमानयेत्यादिवाक्ये शुकाद्युच्चरिते व्यभिचारः, ज्ञानानुत्पत्त्या ईश्वरतात्पर्यस्याप्यभावादित्युक्तम् । (३) आकाङ्क्षेति । आकाङ्क्षा च तात्पर्यगर्भा पूर्ववद्बोध्या । यत्र भूतले घटो ऽस्तीति योग्यसाकाङ्क्षपदेनायोग्यघटः शक्तिभ्रमात् स्मारितस्तत्र व्यभिचारवारणायासत्तीति । तथा च योग्यतांशे आसत्तिः पूर्ववद्बोध्या । यद्वा ऽऽदिपदग्राह्यं योग्यतामात्रं, यदंशे स्मारितत्वं तदंशे योग्यत्वं बोध्यम् । तेन नोक्तव्यभिचारः । ननु पृथिव्यां गन्ध इत्यादौ सर्वगन्धपृथिव्यादिव्यक्तीनामाकाङ्क्षादिमत्पदस्मारितत्वमस्ति, न च घटादिगन्धेन पटादेः संसर्गोस्तीति व्यभिचार इतियोग्यतापदार्थविशेषणमुचितम् । किं चाकाङ्क्षायां तात्पर्यांशातिरिक्तभागोपादाने प्रयत्नगौरवमित्यरुचेस्तथैव हेत्वन्तरमाह । (४) योग्यतेति । एवं चासत्तिपदं चिन्त्यम् । के चित्तु साध्ये ऽप्यासत्त्यादिप्रवेशान्न वैयर्थ्यं, संसर्गपरत्वं साकाङ्क्षत्वमेव, तेन निराकाङ्क्षपदस्मारिते न व्यभिचारः । प्रथमे योग्यतासत्ती पदविशेषणे, अत्र पदार्थविशेषणे, इति भेद इत्याहुः ॥ ननु यदि अनाप्तवाक्ये न योग्यता तदा ततः कथं संसर्गज्ञानमित्यत आह । (५) तज्जन्येति । तथा च योग्यताप्रमाया-

(६) शाब्दाभासोच्छेदप्रसङ्गः । (७) राजा पुत्रमाका-
ङ्क्षति पुरुषं वेति संशये (८) विपर्यये च वाक्यार्थधीप्रतिब-
न्धाच्च । (९) योग्यतायाश्च संशयसाधारणं ज्ञानमात्रं
हेतुः (१०) स्वपरबाधकप्रमाविरहः क्व चिन्निश्चीयते
ऽपि यथेह घटो नास्तीत्यत्र स्वयोग्यानुपलब्ध्या घटाभा-
वनिश्चयेनान्यस्यापि घटप्रमाविरहो निश्चीयते । क्व चिद्
बाधकप्रमामात्रविरहसंशये ऽप्यन्वयबोधः । (११) बा-
धसंशयस्यादूषणत्वात् । (१२) किं च तवापि योग्यता-
दिकं प्रामाण्ये प्रयोजकम् । (१३)आप्तोक्त त्वस्य तथात्वे
गौरवाद् अनाप्तोक्तेपि संवादेन प्रामाण्याच्च । (१४) एवं
च ज्ञायमानकरणे प्रामाण्यप्रयोजकरूपवत्तया ज्ञानमावश्य-
कमिति तासां ज्ञानं हेतुः, (१५) तच्च समभिव्याहार-
विशेषा (१६) दिनेति ॥ मैवम् । यत्र विमलं जलमित्य-
श्रुत्वैव नद्याः कच्छे महिषश्चरतीति शृणोति तत्राका-
ङ्क्षादिकमस्ति, (१७) न च नदीकच्छयोः संसर्ग, इति
व्यभिचारात् । (१८) अत एव तन्मात्रं न प्रयोजकं प्रा-
माण्ये । (१९) अथ यावत्समभिव्याहृतेत्यपि लिङ्गवि-
शेषणं, कतिपयपदश्राविणस्तु संसर्गप्रत्ययो लिङ्गाभिमाना-
दिति चेत् । न । (२०) तत्संदेहेपि वाक्यार्थावगमात् ।
तत्र संसर्गभ्रान्तिरिति चेत् । न (२१) अन्यकरणाभावे (२२)
पदमेव भ्रान्तिजनकं (२३) तथा चादुष्टं तदेवाभ्रान्तिं
जनयत् केन वारणीयम् । असंसर्गाग्रहस्तत्रेति चेन्न । (२४)
संसर्गे बाधकाभावात् । अथाप्तोक्तत्वं लिङ्गविशेषणं, ॥

---

मेव प्रयोजिका न तु भ्रमेपीति भावः । (६) शाब्देति ।
शाब्दभ्रमप्रयोजकत्वं योग्यताभ्रमस्यैवा,काङ्क्षासत्तिज्ञानं च शा-
ब्दज्ञानमात्रप्रयोजकमेवेत्यत्र तात्पर्यम् । अत एव योग्ये ऽना-
काङ्क्षे ऽनासन्ने तद्भ्रमात्प्रमापीति भावः । आकाङ्क्षानिश्चयस्य
कारणत्वे बीजान्तरमाह । (७) राजेति । अयमेति पुत्रो
राज्ञः पुरुषो ऽपसार्यतामित्यत्र वाक्यइति शेषः । (८) विप-
र्यय इति । व्यतिरेकनिश्चय इत्यर्थः । तथा च यत्संशयेत्या-
दिव्याप्तिबलात्तद्धेतुत्वमिति भावः । उक्तसंशयादेस्तात्पर्यवि-
षयत्वपर्यवसन्नत्वात्ततस्तात्पर्यनिश्चयस्यैव कारणत्वमायाति,
न त्वाकाङ्क्षानिश्चयस्येति चिन्त्यम् । ननु वाक्यार्थनिश्चयं विना
योग्यतानिश्चयासंभवात्सा कथं लिङ्गविशेषणमत आह । (९)
योग्यतायाश्चेति । ननु साधारणेन रूपेण तदा हेतुता यदि
निश्चयोपि कदा चित्तद्धेतुः स्यान्न चैवमित्यत आह । (१०)
स्वेति । ननु मम मते योग्यतासंशये ऽन्वयबोधो भवति,
त्वन्मते लिङ्गविशेषणतत्संदेहे कथं स्यादित्यत आह । (११)
बाधसंशयेति । तथा च पक्षधर्मीभूतायां लिङ्गव्यक्तौ यस्य
विशेषणस्य संशयो बाधसंशयपर्यवसन्नस्तत्संदेहस्य नानुमिति-
प्रतिबन्धकत्वमुपेयम् । बाधसंशयस्य तदप्रतिबन्धकत्वादि-
त्याहुः ॥ आकाङ्क्षादिकं च वक्ष्यमाणरीत्या संसर्गघटितं बो-
ध्यम् । पराभ्युपगतहेत्वन्तरेणापि तासां ज्ञानं हेतुरित्याह ।
(१२) किं चेति । यद्यपि योग्यताया एव तथात्वं प्रामाण्यं
निर्वहति तथापि परेण तथा ऽङ्गीक्रियत एवेति कृत्वा तथोक्तम् ।
ननु तत् त्रयं न तथा, गौरवात्, किं तु आप्तोक्तत्वमेवेत्यत आह ।
(१३) आप्तोक्तत्वस्येति । भ्रमाद्यभावचतुष्टयवतः प्रकृतवा-
क्यार्थयथार्थज्ञानवतश्चाप्तत्वादिति भावः । (१४) एवं चेति ।
लिङ्गे तथा दर्शनादिति भावः । संसर्गघटितत्वात्तासां कथं
धीरित्यत आह । (१५) तच्चेति । सामान्यतः संसर्गज्ञाना-
त्समभिव्याहारादिना ऽऽकाङ्क्षाज्ञानं, विशेषतः संसर्गसिद्धिः फ-
लमित्यर्थः । (१६) आदिपदग्राह्यमाप्तोपदेशादि । (१७) न
चेति । संसर्ग इत्यनन्तरं तात्पर्यविषय इति शेषस्तेन संसर्गस-
त्त्वेपि विशिष्टाभावसत्त्वाद्व्यभिचार इति भावः । न चेश्वरता-
त्पर्यमादाय न दोषः । अजनितान्वयबोधवाक्याभिप्रायेणोक्तेः ।
तत्रेश्वरतात्पर्याभावात् । तज्ज्ञापनार्थमेवाश्रुत्वेत्युक्तम् । शृणो-
तीति चासत्यर्थमुक्तम् । न चैवं तात्पर्यगर्भाकाङ्क्षाविरहादेव
न व्यभिचार इति वाच्यम् । परस्पराकाङ्क्षाविरहेप्यश्रुतजल-
पदेन सहाकाङ्क्षादिसत्त्वेन हेतुसत्त्वात् साध्यस्य च परस्परगर्भ-
त्वेन तत्राभावादिति भावः । हेतावपि यदि परस्पराकाङ्क्षा-
गर्भत्वमभिमतं तदा वयं त्वित्ययिमदोषो बोध्यः । (१८)
अत एवेति । तन्मात्रस्य तत्रैवाप्रमाणीभूते शब्दभागे गतत्वा-
देवेत्यर्थः (१९) अथेति । श्रुतभागमात्रे च न यावत्समभि-
व्याहृतत्वमिति भावः । (२०) तत्संदेहेपीति । लिङ्गविशेष-
णस्यानिश्चितस्यागमकत्वादिति भावः । एतच्चोपलक्षणम् । उ-
क्तन्यायेनाजनितान्वयबोधे यावत्समभिव्याहृतेपि तस्मिन्वाक्ये
नदीकच्छपदार्थे व्यभिचार एव । यदि च परस्पराकाङ्क्षा वि-
वक्षिता तदा यावत्समभिव्याहृतेति व्यर्थमित्यपि द्रष्टव्यम् ।
(२१) अन्येति । विशेषणसंदेहेन लिङ्गाभावादित्यर्थः (२२)
पदमेवेति । स्वातन्त्र्येणैवेति शेषः । (२३) तथा चेति । ज्ञान-
सामान्यसामर्थ्यं भ्रमजननादेव सिद्धमिति दोषाभावरूपविशे-
षणसामग्र्यां सत्यां प्रमाजननमशक्यापह्नवं, भ्रमेपि धर्म्यंशे
प्रमात्वमेवेति भावः । (२४) संसर्गइति । तथापि तत्स्वीकारे
संसर्गोच्छेद इति भावः । व्यर्थविशेषणत्वमाशङ्क्याह ।

(२५) तदेव वा लिङ्गं, (२६) न च नदीकच्छयोः संसर्गे आप्तोक्तत्वम् । (२७) आप्तोक्तत्वं च प्रामाण्ये तन्त्रमिति तद्वत्तया ज्ञायमानस्य हेतुत्वेन तज्ज्ञानमावश्यकं, व्याप्तिमत्तया ज्ञातस्यैव लिङ्गस्य । तदवगमश्च लोके भ्रमाद्यमूलकतया महाजनपरिग्रहेण वेदे स्मृतौ वेति चेत् । न । यत्र क्वचिदाप्तत्वमनाप्तस्यापि । सर्वत्राप्तत्वमप्रमितम् । भ्रान्तेः पुरुषधर्मत्वात् । प्रकृतवाक्यार्थयथार्थज्ञानवत्त्वमाप्तत्वं प्रथमं दुर्ग्रहम् । भ्रमाद्यमूलकत्वस्य प्रवृत्तिसंवादादेश्च तद्ग्राहकस्याज्ञानात् । (२८) प्रवृत्तिश्च संदेहादपि । किं च प्रकृतसंसर्गे ऽयमभ्रान्तो यथार्थज्ञानवान्वेति संसर्गमप्रतीत्य ज्ञातुमशक्यम् । वाक्यार्थस्यापूर्वत्वात् । (२९) वयं तु ब्रूमः । बाधकप्रमाणाभावो योग्यता, सा च न लिङ्गविशेषणं, बाधकप्रमामात्रविरहस्य सर्वत्र निश्चेतुमशक्यत्वात् । तत्संशयेपि शब्दादन्वयबोधाच्च । शब्दप्रामाण्ये तु योग्यतायाः संशयसाधारणं ज्ञानं प्रयोजकमिति शब्दः प्रमाणमिति । (३०) जरन्मीमांसकास्तु (३१) लोके वक्तृज्ञानानुमानात्तदुपजीविसंसर्गानुमानाद्वा वाक्यार्थसिद्धौ शब्दस्यानुवादकत्वं, वेदे तु तदभावात् स्वातन्त्र्येण प्रमाणत्वमिति वदन्ति । तन्न । वेदे क्लृप्तसामग्रीतो लोकेपि संसर्गप्रत्ययात् । (३२) अन्यथा ऽनुवादकतापि न स्यात् । (३३) लिङ्गस्य पूर्णत्वेपि व्याप्तिस्मृतिविलम्बेन तद्विलम्बात् । अनाप्तोक्तौ व्यभिचारात् । वेदतुल्यापि (३४) सामग्री न निश्चायिकेति चेत् न । (३५) चक्षुरादेस्तथात्वेन तच्छङ्कायामपि प्रमापकत्वात् । ज्ञायमानं करणं संदेहे न निश्चायकं लिङ्गवदिति चेत् । न । संशयो हि न वाक्ये तस्य निश्चयात् । न तज्जन्यज्ञानप्रामाण्ये तस्य तदुत्तरकालीनत्वात् । नाप्तोक्तत्वे, तन्निश्चयस्या (३६) नङ्गत्वात् । ननु लोके आप्तोक्तत्वसंदेहे वाक्यार्थधीर्नेति तन्निश्चयो हेतुस्तथा च वाक्यार्थगोचरयथार्थज्ञानजन्यत्वग्राहकात् (३७) तदुपजीविनोनुमानाद्वाक्यार्थधीरिति चेत् । न । (३८) वेदे तद्रहितस्यापि सामर्थ्यावधारणात् । (३९) तदनिश्चये ऽपि वेदानुकारेण पठ्यमानमन्वादिवाक्येष्वपौरुषेयत्वाभिमानिनो गौडमीमांसकस्यार्थनिश्चयात् । न चासौ भ्रान्तिर्बाधकाभावात् । (४०) पौरुषेयत्वनिश्चयदशायामपि तस्य तथात्वात् । न चासंसर्गाग्रहमात्रं तत् । अर्थस्य तथाभावेप्यसंसर्गाग्रहत्वे (४१) संसर्गोच्छेदापत्तेः । (४२) न चाप्तोक्तत्वनिश्चयरूपकार-

---

(२५) तदेव वेति । (२६) न चेति । तत्राप्तत्वं हि तद्गोचरयथार्थज्ञानविख्यापयिषादिमत्त्वं, न च नदीकच्छयोः संसर्गे वक्तुस्तदस्तीत्यर्थः । ननु स्वरूपसद्धेतुत्वाच्चाप्तोक्तत्वस्य लिङ्गविशेषणत्वमित्यत आह । (२७) आप्तेति । ननु यद्याप्तत्वं प्रथमं दुर्ग्रहं तदा वाक्यात्कथं प्रवृत्तिरित्यत आह (२८) । प्रवृत्तिश्चेति । तन्निश्चयस्य शाब्दप्रतीतावनङ्गत्वेन तत्संदेहेपि वाक्यादर्थप्रतीतौ प्रवृत्तिरुपपद्यत एवेत्यर्थः । एवं योग्यतादीनां शब्दसहकारित्वभङ्गप्रसङ्ग इत्यपि दूषणं बोध्यम् । (२९) वयं त्विति । न च बाधसंशयत्वेनास्य न दोषत्वमिति वाच्यम् । व्याप्यतावच्छेदकावच्छिन्नलिङ्गस्य पक्षे संदिग्धतया पक्षधर्मतासंदेहेनावश्यमनुमितिसामग्रीवैकल्यादिति भावः । न च तर्कादिसाचिव्याद्योग्यतानिश्चये ऽनुमानमविकलमिति वाच्यम् । तर्काद्यनवतारे तत्संदेहेपि शाब्दान्वयबोधस्यानुभाविकत्वादिति भावः । प्रसङ्गादाह । (३०) जरन्मीमांसकास्त्विति । (३१) लोके वक्तृज्ञानेति । प्रभाकरमतएव दर्शनीयादिति भावः । (३२) अन्यथेति । वेदे या सामग्री क्लृप्ता सा यदि लौकिकशब्दे नास्ति तदा पश्चादपि तस्य प्रत्यायकत्वं न स्यादित्यनुवादकत्वमेव न स्यादित्यर्थः । ननु वक्तृज्ञानानुमितिसामग्र्यपि तत्रास्तीति तदा तदनुमितिरेव किं न स्यादित्यत आह । (३३) लिङ्गस्येति । शाब्दानुभवे तु कर्त्तव्ये तस्यापेक्षणीयान्तराभावादित्यर्थः । (३४) सामग्रीति । सामग्री योग्यतादिज्ञानकलापः, तथा च तथाभूतसाधारणधर्मदर्शनात्प्रमापकसंशयान्न निश्चायिकेति तच्छङ्कापगमार्थमाप्तोक्तत्वानुमानमावश्यकमिति भावः । (३५) चक्षुरादेरिति । विरोध्यविषयकसंशयमात्रस्य न प्रतिबन्धकत्वमिति भावः । यत्र संशयो न जातस्तत्र नानुवादकतेत्यपि दूषणं बोध्यम् । (३६) अनङ्गत्वादिति । तथा चाप्तोक्तत्वसंदेहेपि न वाक्यार्थधीप्रतिबन्धक इति भावः । (३७) तदुपजीवीति । नन्वाप्तोक्तत्वानुमाने सति शब्दस्य संभूतसामग्रीकतया न तदनुमानावसर इति चेत्, न । तदा योग्यताद्यप्रतिसंधाने कदाचित्तथा संभवादिति भावः । (३८) वेद इति । त्वन्नयइति शेषः । लौकिके तथात्वमित्यत आह । (३९) तदिति । (४०) पौरुषेयत्वेति । तथा सति प्रतीत्योर्वैलक्षण्यमनुभूयेतेति भावः । (४१) संसर्गेति । प्रमाणाभावादित्यर्थः । (४२) न चाप्तोक्त-

णाबाधात् संसर्गज्ञानबाधः । (४३) व्यभिचारेण हेतुतायामेव बाधात् । (४४) लौकिकत्वेन ज्ञाते तदङ्गमिति चेत् । न । (४५) मानाभावात् । (४६) वाक्यार्थस्यापूर्वत्वेन लिङ्गाभावेन तद्ग्रहासंभवात् । ननु अनाप्तोक्तत्वशङ्काव्युदासो ऽङ्गं, स च वेदे ऽपौरुषेयत्वनिश्चयात्, लोके चाप्तोक्तत्वावधारणादिति चेत् । न । तस्या (४७) शक्यत्वात् । यदि चापौरुषेयत्वनिश्चये सत्येव वेदादर्थनिश्चयः, तदा (४८) दोषवत्पुरुषाप्रणीतत्वे सत्याकाङ्क्षादिमत्पदस्मारित्वेन वेदे पदार्थसंसर्गसिद्धिरस्त्विति वेदोऽप्यनुवादकः स्यात् । तदुक्तम् ।

"व्यस्तपुंदूषणाशङ्कैः स्मारितत्वात्पदैरमी ।
अन्विता इति निर्णीते वेदस्यापि न तत्कृतः" ॥

इति । (४९) न चैवं शब्दस्य प्रमाणत्वमपि । अनुमानादेव वाक्यार्थ(५०)प्रमोपपत्तेरिति ॥

प्राभाकरास्तु व्यभिचारिशब्दव्यावृत्तमव्यभिचार्यनुगतं प्रमाप्रयोजकमुपेयम् । यदभावादनाप्तोक्तवाक्यादप्रमा । अन्यथा कार्यवैचित्र्यं न स्यात् । तच्च (५१) ज्ञातमुपयुज्यते । (५२) ज्ञायमानकरणे (५३) ज्ञानोपयोगि (५४)

---

त्वेति । न चाप्तोक्तत्वज्ञानेत्यर्थः । (४३) व्यभिचारेणेति । वेदानुकारस्थले तं विनापि शाब्दानुभवस्यानुभूयमानत्वादित्यर्थः । (४४) लौकिकत्वेनेति । तथा च नोक्तव्यभिचार इति भावः । (४५) मानेति । सामान्यसामग्रीत एव कार्यसंभवादित्यर्थः । नन्वन्वयाद्यनुविधानमेव मानमित्यत आह । (४६) वाक्येति । तथा च तदेव नास्तीति भावः । (४७) अशक्यत्वादिति । वाक्यार्थस्यापूर्वत्वादिति भावः । अत्र यत्र शङ्का न जाता तत्र नानुवादकत्वमित्यपि बोध्यम् । (४८) दोषवदिति । सत्यन्तं व्यर्थमिति चेन्न । हेतुद्वये तात्पर्यात् । अत एव व्यस्तपुंदूषणाशङ्कैरित्यत्र तदेव विभावयिष्यतीति । न चाद्यहेतोर्विसंवादिशुकवाक्ये व्यभिचारः । दोषवत्पुरुषाप्रणीतसतात्पर्यकपदस्मारितत्वस्याद्यहेत्वर्थत्वात् । अत एव विशिष्टहेतुज्ञानकाले शब्दस्य संभृतसामग्रीकतया शाब्दबोधः स्यान्नानुमितिः, व्याप्तिस्मृत्यादिविलम्बादित्यपास्तम् । एकहेत्वर्थज्ञाने ऽपरहेत्वर्थज्ञानानावश्यकत्वेनातथात्वात् । इष्टापत्तिमाशङ्क्याह । (४९) नचैवमिति । वेदेपि चेदुक्तानुमानादेव संसर्गसिद्धिस्तदा शब्दविधया बोधकत्वमेव दुष्कल्पम्, मानाभावादित्यर्थः । यदि च व्याप्त्यादिप्रतिसंधानं विनापि वेदादर्थप्रत्ययस्तदा लौकिकस्थलेपि तुल्यमिति भावः । अत्र यत्रावैदिकत्वाभिमानस्तत्र वैदिकत्वेप्यनुवादकत्वं दुष्परिहरमिति बोध्यम् । (५०) प्रमेति । न चैवं गुणजन्यत्वस्वीकारापत्तिः, दोषाभावत्वेनोक्तस्य प्रयोजकत्वस्वीकारादिति भावः । तदेकदेशिमतेनोक्तमित्याहुः । (५१) ज्ञातमुपयुज्यतइति । ज्ञातं सत्स्वाधिकरणीभूतप्रमाणजन्यज्ञानजनकमित्यर्थः । (५२) ज्ञायमानेति । अत्र सप्तमीबलेन ज्ञायमानकरणनिष्ठत्वं लभ्यते । तच्च पित्ताद्यभावे चक्षुरादिनिष्ठे व्यभिचारवारणायोपात्तम् । धूमविशेषत्वादौ व्यभिचारवारणाय (५३) ज्ञानोपयोगीति । शाब्दादिभ्रमजनके शब्दादिनिष्ठदोषे व्यभिचारवारणाय (५४) व्यभिचारिवैलक्षण्येति । व्यभिचारिवैलक्षण्यं च यदभावप्रयुक्तः क्व चिद्भ्रमस्तदेव विवक्षितं, तेन दृष्टान्तयोर्न साधनवैकल्यम् । यद्वा भ्रममात्रनिष्ठकार्यताप्रतियोगिककारणताश्रयत्वं तद्विवक्षितम् । यदि सत्यपरामर्शोपि विषयविषयिभावसंबन्धेन करणनिष्ठ एव तदा तज्ज्ञानभिन्नत्वेन हेतुर्विशेषणीय इत्याहुः । तच्चिन्त्यम् । शाब्दभ्रमजनकस्य भ्रमादिदोषचतुष्टयस्य शब्दनिष्ठत्वाभावात् । सहकारितामात्रेण कथं चित् परम्परासंबन्धेन तन्निष्ठत्वविवक्षायामात्मनः संयोगविशेषादौ पक्षतायां च व्यभिचारात् । मनसो ऽपि कदाचिल्लिङ्गत्वेन ज्ञायमानकरणनिष्ठतया मनःसंयोगविशेषे सर्वथा व्यभिचाराच्च । किं च यदभावप्रयुक्तो भ्रम इत्यत्र यदभावे सति भ्रम इत्येव विवक्षितं यदभावप्रयोज्यो भ्रम इति वा । आद्ये शब्ददोषे व्यभिचारतादवस्थ्यमेव । तदन्यतराभावे सति कदा चिद् भ्रमात् । अन्त्ये साधनवैकल्यमेव । शक्तिविरहस्य भ्रमाप्रयोजकत्वात् । योग्यताविरहस्यैव तथात्वात् । योग्यतासत्त्वे शक्तिभ्रमेणापि भ्रमासंभवात् ॥ यत्तु ज्ञायमानकरणनिष्ठज्ञानोपयोगित्वमबाधितत्वासत्प्रतिपक्षितत्वादौ व्यभिचारीति व्यभिचारिवैलक्षण्यपदम् । तदर्थस्त्वाभासव्यावृत्तत्वमेव । अबाधितत्वादि न तथा । बाधादौ सति भ्रमस्याप्यभावादिति ॥ तदपि चिन्त्यम् । अबाधितत्वं हि साध्याभावनिश्चयविरहो वा, निश्चितसाध्याभाववत्पक्षकत्वाभावो वा । नाद्यः । तस्यात्मनिष्ठत्वेन ज्ञायमानकरणनिष्ठत्वाभावाद्, आद्यपदेनैव तद्वारणात् । नान्त्यः । तस्य ज्ञानोपयोगित्वाभावेन द्वितीयपदेनैव तद्वारणात् । नहि निश्चितसाध्याभाववत्पक्षकत्वस्यानुमितिप्रतिबन्धकत्वं, येन प्रतिबन्धकाभावत्वेन तस्य ज्ञानोपयोगित्वं स्यात् । किं तु लाघवेन पक्षे साध्याभावनिश्चयमात्रस्यैव प्रतिबन्धकतया तदभावस्यैव तथात्वमिति । तस्माद्व्यभिचारिव्यावृत्तत्वमप्रमाणाव्यावृत्तत्वं प्रमाण-

व्यभिचारिवैलक्षण्यत्वात्, (५५) प्रमाहेतुत्वाद्वा, व्याप्तिवत्, शब्दशक्तिवच्च । (५६) अन्यथा शाब्दाभासोच्छेदप्रसङ्गः । (५७) न चाप्तोक्तत्वं तथा । संवादात्प्रमाणे शुकोदीरिते भ्रान्तप्रतारकसंवादिवाक्ये वेदे च तदभावात् । (५८) आप्तोक्तत्वानुमाने व्यभिचारिव्यावृत्तलिङ्गाभावाच्च । भावे वा तद्वत एव शब्दस्य प्रत्यायकत्वात् । एतेनाप्रमाहेतुत्वं न भ्रमप्रमादविप्रलिप्साकरणापाटवानां परस्परं व्यभिचाराद्, मिलितस्याव्यापकत्वात् । किं त्वाप्तोक्तत्वाभावस्याप्रमाहेतुत्वं तदभावस्तु आप्तोक्तत्वं प्रमाहेतुरित्यपास्तम् । आप्तोक्तत्वस्य प्रथमं लिङ्गाभावेन ग्रहीतुमशक्यत्वात् । अत एव (५९) व्यभिचारशङ्काविरहो हेतुः । सा च लोके भ्रमादिमूलेत्याप्तोक्तत्वानुमानाद्विच्छिद्यते । (६०) वेदे चापौरुषेयत्वनिश्चयेनेति निरस्तम् । अभिमतवाक्यार्थस्यापूर्वत्वेन साध्याप्रसिद्धेः । (६१) वेदे सदोषपुरुषाप्रणीतपदस्मारितत्वेन संसर्गसिद्धेरनुवादकतापत्तेश्च । (६२) नापि दोषाभावः । भ्रान्तप्रतारकवाक्यजन्यज्ञाने प्रत्यक्षेण गृहीतसंवादे तदभावात् । दोषाभावस्य हेतुत्वात् । तच्च वाक्यं मूकमेव, व्यवहारस्तु प्रत्यक्षादिति चेत् । न । अनुभवापलापात् । (६३) तद्धेतुत्वे विवादात् । (६४) वेदे ऽप्यनुवादकतापत्तेश्च । (६५) किं च दोषाभावस्य प्रमाहेतुत्वे ऽप्रमायां दोषः कारणं (६६) तस्य च हेतुत्वे प्रत्येकं व्यभिचारः । मिलितस्य तत्त्वे एकस्मादप्रमा न स्यात् । भ्रमादीनां प्रत्येकं (६७) दोषत्वे ऽननुगमः, मिलितस्य तु (६८) तत्त्वे एकस्मादप्रमानुदयप्रसङ्गः । तस्मा (६९) ल्लाघवाद्यथार्थतात्पर्यकत्वं शाब्दप्रमाप्रयोजकं, (७०) तच्च यथार्थवाक्यार्थप्रतीतिप्रयोजनकत्वं लो-

---

वृत्तित्वमिति यावत् । तथा च ज्ञायमानकरणजन्यज्ञानासाधारणसहकारित्वे सति प्रमाणवृत्तित्वादिति हेत्वर्थः । अत्र च भूयोवयवेन्द्रियसंनिकर्षे व्यभिचारवारणाय जन्यान्तम् । मनोयोगे तद्वारणायासाधारणेति । पक्षतायां तद्वारणायान्त्यपदम् । तस्याः सिद्ध्यभावरूपाया आत्मनिष्ठत्वेनातथात्वात् । शब्ददोषे भ्रमादावत एव न व्यभिचारः । न चैवं पक्षीभूततात्पर्यस्यापीच्छारूपतया ऽऽत्मवृत्तित्वादसिद्धिरिति वाच्यम् । तस्य यथार्थतात्पर्यकत्वरूपस्यैव शब्दनिष्ठस्यात्र निर्वचनात् । ज्ञानभिन्नत्वेनापि हेतुर्विशेषणीयः, तेन न व्यभिचारः परामर्शादौ । विषयतातिरिक्तसंबन्धेन तद्वृत्तित्वं वा विवक्षितमित्यन्ये ॥ (५५) प्रमाहेतुत्वाद्वेति । अत्रापि ज्ञायमानकरणेति बोध्यम् । एवं च विषयतातिरिक्तसंबन्धेन ज्ञायमानकरणनिष्ठत्वे सति ज्ञायमानकरणजन्यप्रमाहेतुत्वादित्यर्थः । प्रमाहेतुत्वं च प्रमामात्रनिष्ठकार्यताप्रतियोगिककारणताश्रयत्वमिति मनोयोगादौ न व्यभिचारः । यथार्थपरामर्शे व्यभिचारवारणाय सत्यन्तम् । भूयोऽवयवेन्द्रियसंनिकर्षे व्यभिचारवारणाय जन्यान्तम् । इन्द्रियस्यापि कदाचिल्लिङ्गतया तस्यापि ज्ञायमानकरणनिष्ठत्वात् । अत्र च हेतौ पक्षधर्मतादिसहकृतव्याप्त्यादेर्दृष्टान्तत्वं बोध्यम् । विपक्षबाधकमाह (५६) अन्यथेति । वस्तुतस्तस्य तत्राभावादिति भावः । यद्यपि लाघवात् तत्स्वरूपसदेव हेतुरस्तु, शाब्दाभासे तु तदभावः प्रयोजकः, न तु तज्ज्ञानं गौरवात्, यदभावादप्रमेत्यादिना परस्य तथैवाभिधानात्, तथापि तद्व्यतिरेकनिश्चयस्य शाब्दबोधप्रतिबन्धकत्वं न स्यात् । यन्निश्चयस्य यत्र हेतुत्वं तद्व्यतिरेकनिश्चयस्यैव प्रतिबन्धकत्वादिति विपक्षबाधकमत्र द्रष्टव्यम् । परिशेषयितुमाह । (५७) न चेति । ईश्वरस्यानङ्गीकारादिति भावः । अभ्युपेत्याह । (५८) आप्तोक्तत्वेति । (५९) व्यभिचारशङ्केति । बाधितार्थकत्वशङ्काविरह इत्यर्थः । (६०) वेदे चेति । तथा चाप्तत्वस्य संसर्गघटितत्वाल्लोके ऽनुवादकं, वेदे चाननुवादकत्वमिति भावः । (६१) वेदइति । जरन्मीमांसकपक्षवदिति ध्येयम् । एतच्चोपलक्षणम् । यत्र लोके स्वतःसिद्धशङ्काविरहस्तत्रानुवादकतापत्तेश्चेत्यपि द्रष्टव्यम् । (६२) नापीति । तथा च ज्ञातस्य तस्योपयोगित्वे निर्दोषपदस्मारितत्वेन लोके संसर्गसिद्धेरनुवादकत्वमिति भावः । ननु सर्वसिद्धकारणाभावे ऽनुभव एव न तादृश इत्यत आह । (६३) तद्धेतुत्वइति । एतच्चोपलक्षणम् । अतीन्द्रियार्थे मूकत्वे व्यवहारानुपपत्तिः, शुकादिविसंवादिवाक्ये ऽतिप्रसङ्गश्चेत्यपि बोध्यम् । (६४) वेदे ऽपीति । लोकवदिति शेषः । दोषान्तरमाह । (६५) किं चेति । (६६) तस्य चेति । भ्रमादेर्दोषस्येत्यर्थः । (६७) दोषत्वइति । पूर्वं प्रत्येकं मिलितस्य वा हेतुत्वमात्रं विकल्पितमत्र दोषत्वमपि विकल्पितमित्यपौनरुक्त्यम् । यद्यपि प्रत्येकमपि दोषत्वेनानुगतेन रूपेण तद्धेतुत्वेनानुगमः, न वैकस्मादप्रमानुदयप्रसङ्गः, तथापि भ्रमाद्यनुगतं दोषत्वमसिद्धम् । शाब्दभ्रमजनकत्वादिना तन्निर्वचने चात्माश्रयः, विसंवादिशुकवाक्ये व्यभिचारश्चेति दूषणं द्रष्टव्यम् । (६८) तत्त्वे । दोषत्वे । (६९) लाघवादिति । भ्रमाद्यभावापेक्षयेदं बोध्यम् । (७०) तच्चेति । ननु यथार्थ-

कवेदसाधारणं, तदभावादप्रमा, स एव दोषः । (७१) नहि जात्यैव कश्चिद्दोषः । (७२) तद्विघातकत्वाच्च भ्रमादीनां दोषत्वम् । (७३) अत एव भ्रान्तप्रतारकवाक्यं शुकादिवाक्यं च प्रमाणं, संवादात् । (७४) अत एव अन्यगृहवर्त्तिघटाभिप्रायेण गृहे घटोऽस्तीत्युक्ते यत्र घटान्तरं दृष्ट्वा तमानयति तत्रान्यपरत्वाच्छब्दो (७५) न प्रमाणम् । (७६) व्यवहारस्तु प्रत्यक्षादेव । (७७) यष्टीः प्रवेशयेति च मुख्यार्थबाधे न प्रमाणम् । यत्परः शब्दः स शब्दार्थो यत इति न्यायात् । (७८) तच्च तात्पर्यं ज्ञातमुपयुज्यते । ज्ञायमानकारणे ज्ञानोपयोगिव्यभिचारिवैलक्षण्यात्, व्याप्तिवत्, शब्दशक्तिवच्च । अन्यथा ऽन्यपरादन्यान्वयबोधो न स्यादिति शाब्दाभासोच्छेदप्रसङ्गः । (७९) तद्भ्रमाच्च (८०) शाब्दभ्रमः । अत एव यष्टीः प्रवेशयेत्यत्र लक्षणा नानार्थे विनिगमना च । तयोस्तात्पर्यग्रहमूलकत्वात् । यदि च यत्र वास्तवं तात्पर्यं तं

---

ज्ञानप्रयोजनकत्वं यदि तत्प्रतीतिजननोपहितत्वं तदा तस्यैव तज्जनकत्वे आत्माश्रयः, तज्ज्ञानस्य तज्जनकत्वे ऽन्योन्याश्रयः, यदि च तत्प्रतीतिजननस्वरूपयोग्यत्वं तद्विवक्षितं तदा ऽवच्छेदकज्ञानं विना तज्ज्ञानमशक्यमित्यनुगतमवच्छेदकं वाच्यम्, तत्सत्त्वे तदेवास्तु किमनेनेति चेत् । अत्र वदन्ति । स्वरूपयोग्यत्वमेव विवक्षितम् । तच्च यथार्थप्रतीतीच्छयोच्चरितत्वमेव । पूर्वपूर्वाध्यापकेच्छामादाय वेदेपि तत्संभवात् । अत एव मीमांसकमते वक्ष्यति । "तदिच्छया तदुच्चारणमेव हि तत्परत्वं लोकवेदसाधारणम्, सा चेच्छा स्वतन्त्रा परतन्त्रा वेति न कश्चिद्विशेष" इति । तच्चिन्त्यम् । नित्यानुमेयवेदे तदभावात् । न च तत्रान्यैव सामग्रीति वाच्यम् । शुकादिवाक्ये तथापि तदसंभवात् । अर्थज्ञानं विनोच्चरितवेदे तदभावाच्च । न च तज्जातीयत्वात्तत्र प्रामाण्यमिति वाच्यम् । एवं ह्यन्यपरादन्यान्वयबोधे ऽपि प्रामाण्यं स्यात् । तज्जातीयस्य कदाचित्तदिच्छया ऽप्युच्चरितत्वात् । न चेष्टापत्तिः । अग्रिमग्रन्थविरोधात् । दैववशसंपन्ने तावत्पदज्ञानमात्रादपूर्वशुकादिवाक्ये तज्जातीयत्वस्याप्यभावाच्च । न चान्यघटाभिप्रायिकवाक्यवत्तदप्रमाणमेवेति वाच्यम् । तस्य तात्पर्यविरुद्धार्थप्रतिपादकत्वादस्य चातथात्वात् । अत एव शुकादीत्यादिना संवादिशुकादिवाक्यस्य सामान्यत एव प्रामाण्यमिति विभावयिष्यति । यदि चेच्छागर्भत्वशून्यं योग्यतावच्छेदकत्वं निर्वाच्यं, तथाप्यग्रिमग्रन्थविरोध इति ॥ यत्तु स्वविरोध्यभिप्रायापूर्वकवाक्यप्रतिपाद्यवाक्यार्थयथार्थप्रतीतिप्रयोजनकत्वं विवक्षितं, स च विशिष्टाभाव उभयथा तात्पर्यसामान्याभावे तद्विषयतात्पर्ये वा ऽविशिष्ट इति । तदपि चिन्त्यम् । अग्रिमग्रन्थपर्यालोचनया विनिगमनादिप्रयोजकज्ञानविषयस्यैव तत्त्वेन पराभिमतत्वात् । अस्य चातथात्वात् । तदभिप्रायपूर्वकत्वज्ञानं विना विनिगमनाद्यसंभवात् । एतद्ग्रहस्य चाभिप्रायापूर्वकत्वेपि पर्यवसानात् ॥ यदपि यथार्थवाक्यार्थप्रतीतिप्रयोजनकत्वं लोकवेदयोः सामान्यसामग्री । लोके वाक्यार्थप्रतिपादनेच्छा विशेषसामग्री । अत एवेत्यादिग्रन्थस्तु सामान्यसामग्र्यां सत्यामपि विशेषसामग्र्यभावपर इति । तदपि चिन्त्यम् । अर्थज्ञानं विना बालाद्युच्चरितसंवादिलौकिकवाक्ये विशेषसामग्रीविरहेण प्रामाण्याभावापत्तेः ॥ अत्राहुः । शुकबालादिभिन्ने लौकिके यथार्थवाक्यार्थप्रतीतीच्छयोच्चरितत्वम् । वेदे वेदत्वादि, शुकबालादिवाक्ये ऽबाधितत्वादि, नानैव प्रयोजकम् । एवं चाननुगमेप्येकशक्तिमत्त्वेनानुगमान्नोक्तदोष इति ॥ वस्तुतस्तु यथार्थवाक्यार्थप्रतीतिस्वरूपयोग्यत्वमेव तद्विवक्षितम् । तदवच्छेदकं चाबाधितार्थकत्वादि लोकवेदशुकादिसाधारणम् । तच्च सामान्यसामग्री । विशेषसामग्री च शुकबालादिभिन्नलौकिकवाक्यत्वावच्छेदेन तदर्थप्रतीतीच्छयोच्चरितत्वं, तदभिप्रायेणाग्रिमग्रन्थो बोध्यः । (७१) नहीति । नहि दोषत्वजातिमान्कश्चित्पदार्थो ऽप्रमाहेतुः, किं तु यस्यैव तद्धेतुत्वे प्रमाणं तस्यैव दोषत्वमिति तदभाव एव दोष इत्यर्थः । नन्वेवं भ्रमादीनां कथं दोषत्वव्यवहार इत्यत आह । (७२) तद्विघातेति । औपचारिको व्यवहार इति भावः । तद्विघातकत्वं च काचित्काभिप्रायेण । (७३) अत एवेति । यत एव भ्रमादिदोषेप्युक्तसामग्रीत्यर्थः । (७४) अत एवेति । लौकिकवाक्यविशेषे यत एव विशेषसामग्रीत्यर्थः । (७५) न प्रमाणमिति । तज्ज्ञानजनकमित्यर्थः । तर्हि कथं व्यवहार इत्यत आह । (७६) व्यवहार इति । एतच्च यत्र तात्पर्यभ्रमो न जातस्तदभिप्रायेण बोध्यम् । अन्यथा ऽन्यपरादित्यादिना तद्भ्रमाच्छाब्दभ्रमाङ्गीकारादत्रापि तत्संभवे प्रत्यक्षात्तद्व्यवहारोपवर्णनमसङ्गतं स्यादिति । (७७) यष्टीरित्यत्राप्यत एवेत्यनुषज्यते । पूर्वस्वरूपमनवधार्यैव तज्ज्ञानस्य प्रयोजकत्वमुक्तम् । इदानीं स्वरूपमवधार्य विशिष्यानुवदति । (७८) तच्चेति । न चैवं पूर्वं तदभिधानवैफल्यम्, आप्तोक्तत्वादिनिरासस्य तत्फलत्वादिति भावः । (७९) तद्भ्रमात् । तात्पर्यासंसर्गाग्रहात् । (८०) शाब्दभ्रमः । शाब्दासंसर्गाग्रहः । परमते ऽन्यथाख्यात्यनङ्गीकारात् । यद्यपि तात्पर्यग्रहरूपकारणबाधादन्य-

शब्दो बोधयति, (८१) तदा लक्षणायां मुख्यार्थान्वयानुपपत्त्युपयोगो न स्यात् । अत एव पचतीत्युक्ते ऽन्योक्तेन स्वयं स्मृतेन वा कलायपदेनोपस्थितेन कलायं पचतीत्यन्वयबोधो न भवति । (८२) तात्पर्यानिश्चयात् । (८३) न च तात्पर्यग्राहकप्रकरणादेः प्राथम्यादावश्यकत्वाच्च शब्दसहकारिता, न तु तात्पर्यग्रहस्येति वाच्यम् । तेषा (८४) मननुगतत्वेन परस्परव्यभिचारादहेतुत्वात् । तात्पर्यग्राहकता त्वननुगतानामपि व्याप्यत्वाद् धूमादीनामिव । (८५) तच्च तात्पर्यं वेदे न्यायगम्यम् । (८६) यत्र न्यायात्तात्पर्यमवधार्यते स वेदार्थः । (८७) लोके च न केवलं न्यायानुसारि तात्पर्यमिति न न्यायगम्यं, किं तु (८८) पुमभिप्रायनियन्त्रितम् । न्यायाविषयेपि पुरुषेच्छाविषये प्रतीतिजनकत्वात् पुंवचसाम् । (८९) वक्ता च परकीयवाक्यार्थज्ञानोत्पादनेच्छया वाक्यं रचयति । सा चेच्छा वक्तुर्यदि यथार्थवाक्यार्थज्ञानपूर्विका भवति तदैव परं तदुच्चारणस्य पुमभिप्रेतयथार्थज्ञानपरत्वं । (९०) यथार्थज्ञापनेच्छाव्याप्यं निर्वहतीति वक्तुर्यथार्थवाक्यार्थज्ञानवत्त्वमविज्ञाय यथार्थप्रतीतिपरत्वं ज्ञातुं न शक्यत इति प्रथम(९१)माप्तवाक्याद् वक्तृज्ञानानुमानपूर्वकमर्थतथात्वमनुसंधाय यथार्थतात्पर्यनिश्चयः ॥ अनुमानं च इदं वाक्यं भ्रमादिविशिष्टज्ञानयोरन्यतरजन्यं (९२) वाक्यत्वादिति । ततो (९३) भ्रमादिनिरासे सति परिशेषाद् वाक्यार्थज्ञानानुमानम् । अयं वक्ता स्वप्रयुक्त-

---

थेत्यादावप्यसंसर्गाग्रह एव, तथापि तत्राविद्यमानासंसर्गाग्रहो ऽत्र च विद्यमानासंसर्गाग्रह इति विशेषः । (८१) तदेति । मुख्यार्थान्वयानुपपत्तिज्ञानस्य तत्र लक्ष्यगोचरतात्पर्यग्राहकत्वेनैवोपयिकत्वादिति भावः । (८२) तात्पर्येति । न च समभिव्याहारविशेषाभावान्नैवमिति वाच्यम् । तात्पर्यनिश्चये तस्मादेवान्वयबोधदर्शनादिति भावः । (८३) न चेति । तात्पर्यसंदेहादौ न प्रतिबन्धः तत्संशयाभावोऽपि वा हेतुरित्यभिमानवतः शङ्केयम् । (८४) अननुगतत्वेनेति । तात्पर्यव्याप्यत्वेन त्वनुगमे लाघवात्तात्पर्यमेव तथेति । भावः । यथा लोकेनुवादकत्वं न तथा वेदे इति दर्शयति । (८५) तच्चेत्यादिना । न्यायस्तर्कः । कपिञ्जलानालभेतेत्यादौ सर्वोपादानाशक्यत्वेन बहुवचनस्य प्रथमोपस्थितत्वात्त्रित्वमात्रमर्थ इत्येवमादिरूपः । लाघवपुरस्कारप्रवृत्तं प्रमाणं न्याय इत्यन्ये । (८६) यत्रेति । यत्परः शब्दः स शब्दार्थो यत इत्यर्थः । तथा चोक्तस्थले त्रित्वमेवार्थो न तु चतुष्ट्वादीति भावः । (८७) लोके चेति । कपिञ्जलानालभेतेत्यादौ चतुष्ट्वादावपि लौकिकतात्पर्यसंभवादिति भावः । ननु वेदेपि न्यायाविषये तात्पर्यशङ्का कुतो न भवतीति चेन्न । तात्पर्यं यद्यभिप्रायस्तदा वक्तुरभावादित्युत्तरम् । यदि च तत्प्रतीतिप्रयोजनकत्वं तदा स्वभावादित्युत्तरम् । अयमेव हि वेदस्य स्वभावो यल्लाघवाद्युपहितएव विषये प्रतीतिं जनयति, न तु गौरवादिग्रस्ते, यथा प्रत्यक्षानुमानादाविति भावः । ईश्वराभ्युपगमेपि न्यायविषय एव तदभिप्रायो ऽभ्युपेयः । अन्यथा लोकवदन्यस्य तदभिप्रायग्राहकप्रमाणस्याभावात्तात्पर्यानवसाये वेदात्प्रवृत्तिर्न स्यादिति ध्येयम् । (८८) पुमभिप्रायनियन्त्रितम् । यथार्थप्रतीतिप्रयोजकत्वमित्यर्थः । लोके ऽनुवादकत्वनिर्वाहार्थं भूमिमारचयति । (८९) वक्ता चेति । तदैव परं तदुच्चारणस्य तादृशज्ञानपरत्वं निर्वहति । अत्र हेतुगर्भं विशेषणमाह । (९०) यथार्थज्ञापनेच्छाव्याप्यमिति । यतस्तादृशेच्छाव्याप्यं ततस्तां विना न निर्वहति, व्यापकं विना व्याप्याभावात् । तादृशेच्छा च यथार्थज्ञानव्याप्यतया तद्विना न निर्वहतीति यथार्थज्ञानानुमानमिति भावः । ननु व्यापकं विना व्याप्यसत्त्वेपि व्यापकज्ञानं विना न व्याप्यज्ञानमिति नास्ति, वह्न्यग्रहे ऽपि धूमग्रहात्, एवं च यथार्थज्ञानवत्तामविज्ञायापि तज्ज्ञातुं शक्यत एवेति चेत् । अत्र वदन्ति । वाक्यार्थस्याबाधितत्वसंशये सत्युत्पन्नमपि यथार्थवाक्यार्थप्रतीतिपरत्वज्ञानमप्रामाण्यशङ्काक्रान्तं स्वकार्याक्षममिति वाक्यमूलभूतवाक्यार्थज्ञानस्य याथार्थ्यानुमाने तत्र बाधितत्वशङ्काविरहात्तज्ज्ञाने ऽपि प्रामाण्यशङ्का न भवति । वेदे तु वेदार्थत्वेनैवाबाधितत्वनिश्चयेन न तच्छङ्केति न तदनुसरणमिति ॥ वस्तुतस्त्वबाधितार्थकत्वं तादृशप्रतीतिजनकतावच्छेदकमित्युक्तम् । वाक्यार्थस्य बाधितत्वसंशये ऽवच्छेदकसंशयात्र तन्निश्चय इति स्वसमानविषयकवाक्यार्थज्ञाने याथार्थ्यानुमाने सति न तत्संशयः । वेदे तु वेदत्वेनैवाबाधितार्थकत्वनिश्चयः । अत एव वक्ष्यति "अर्थतथात्वमनुसंधाये"ति । (९१) आप्तवाक्यादिति । भ्रमाद्यजन्यवाक्यप्रयोक्तृत्वादित्यर्थः । यद्वा ऽऽप्तोक्तत्वे सतीत्यादिवक्ष्यमाणहेत्वभिप्रायेणेदम् । (९२) वाक्यत्वादिति । वाक्यार्थज्ञानपूर्वकवाक्यत्वादित्यर्थः । (९३) भ्रमादीति । नायमत्र भ्रान्तः । प्रमादीवास्वभ्यस्तवाक्यार्थत्वात् । न प्रतारकः । साधुत्वात् । नाप्यपटुकरणः । अवहितत्वादित्यादिनेति शेषः ।

वाक्यार्थयथार्थज्ञानवान् (९४) भ्रमाद्यजन्यवाक्यप्रयोक्तृत्वाद्, (९५) अहमिव । न त्वाप्तत्वात् साध्याविशेषात् । (९६) तत एते पदार्था यथोचितसंसर्गवन्तः, (९७) यथार्थज्ञानविषयत्वाद्, आप्तोक्तपदस्मारित्वाद् वा, मदुक्तपदार्थवदिति । ननु वक्तृज्ञानविशेषोऽनुमेयः, ज्ञाने चार्थ एव विशेषो नत्वर्थाधीनोऽन्यः, अर्थेनैव विशेष (९८) इत्यौपचारिकी तृतीया, तथा च वाक्यार्थज्ञानविशेषोऽनुमेयः, तस्य चाप्रसिद्धया न व्याप्तिग्रहः, अत एवास्मिन् वाक्ये ऽयमभ्रान्त आप्तो वेति ज्ञातुमशक्यमिति शब्द एव तमर्थं बोधयेदिति चेत्, न । तात्पर्यावधारणार्थं त्वयापि अशाब्द्या एव संसर्गविशेषप्रतीतिरभ्युपेयत्वात् । अन्यथा क्व तात्पर्यनिरूपणम् (९९) अत एवाप्तोक्तत्वभ्रमाद्यजन्यत्वनिरूपणमपि सुकरम् । शाब्दं तु संसर्गज्ञानं प्रथमं न भवति । ज्ञानान्तरं भवत्येव । न चैवं शब्दो न प्रमाणं, तदर्थस्य प्रागेव सिद्धेरिति वाच्यम् । तवापि तुल्यत्वात् । ननु तथापि कथमर्थसिद्धिः, विशेषेण व्याप्त्यग्रहादिति चेत् । यथा यो यत्र प्रवर्त्तते स त(१००)ज्जानातीति सामान्यतो व्याप्तिज्ञाने पाकादौ प्रवृत्तिदर्शनात् पाकविषयककार्यताज्ञानानुमानं यथा च चेष्टाविशेषदर्शनाद्दशसंख्याभिप्रायमात्रज्ञाने घटे तच्चेष्टादर्शनाद् घटे दशत्वज्ञानं (१) तथा सामान्यतो व्याप्त्या ऽत्रापि विशेषसिद्धिः । (२) यद्वा इदं वाक्यं साकाङ्क्षतदर्थविषयकैकज्ञानहेतुकम् । आप्तोक्तत्वे सत्येतदर्थप्रतिपादकत्वात् (३) मद्वाक्यवत् । तत एते पदार्थाः परस्परसंसर्गवन्तः, (४) साकाङ्क्षत्वे सत्येकज्ञानविषयत्वात् । सत्यरजतज्ञानविषयवत् । एवं वक्तुर्यथार्थवाक्यार्थज्ञाने ऽनुमिते प्रकरणादिना वक्त्रभिप्रेतयथार्थप्रतीतिपरत्वज्ञानं ततो वेदतुल्यतया शब्दादर्थप्रत्यय इत्यनुवादकः शब्दः । वक्तृज्ञानावच्छेदकतया तदुपजीविसंसर्गानुमानाद्वा वाक्यार्थस्य प्रागेव सिद्धेः ।

(९४) भ्रमेति । भ्रमाद्यजन्यवाक्यार्थज्ञानजन्यवाक्यप्रयोक्तृत्वादित्यर्थः । एतद्धेतुसिद्ध्यर्थं पूर्वानुमानमिति ध्येयम् । यो भ्रमाद्यजन्ययद्वाक्यप्रयोक्ता स तदर्थयथार्थज्ञानवानिति सामान्यव्याप्तौ दृष्टान्तमाह । (९५) अहमिवेति । (९६) तत इति । न च पूर्वानुमानादेव संसर्गसिद्धिरतो व्यर्थमिदमनुमानमिति वाच्यम् । कार्येण हि कारणानुमाने ऽकारणीभूतस्य तत्संसर्गस्याविषयत्वमिति परसिद्धान्तावष्टम्भेनेदम् । अत एव स्मृतिः स्मृत्यर्थानुभवजनकवेदमूलेत्यनुमाने स्मृत्यर्थस्य न विषयत्वमिति वक्ष्यति । अत एव सिद्धान्तभेदेनोपसंहारे विकल्पेनाभिधानं ज्ञानावच्छेदकतया तदुपजीविसंसर्गानुमानाद्वेत्याहुः ॥ वस्तुतस्तु कार्येण कारणमात्रानुमाने धूमेन वह्न्यनुमाने वह्नित्वादिकमपि न भासेत । व्यापकतावच्छेदकतया कारणतावच्छेदकतया वा तज्ज्ञाने संसर्गस्यापि तथात्वेन प्रकृते तद्भानमविरुद्धमिति न तत्सिद्धान्तो युक्तिसह इति स्वातन्त्र्येण संसर्गसिद्ध्यर्थमिदमित्यन्ये ॥ (९७) यथार्थज्ञानविषयत्वात् । यथार्थसंसर्गज्ञानविषयत्वादित्यर्थः । (९८) औपचारिकीति । ननु सुब्विभक्तावुपचारो ऽव्युत्पन्न इति चेन्न । औपचारिकपदसंबन्धमात्रेणौपचारिकपदप्रयोगात् । तथाचार्थज्ञानपरो ऽर्थशब्दो विशेषज्ञानपरो विशेषशब्दो वेत्याशयादित्याहुः । (९९) अत एवेति । तथा च हेत्वसिद्धिरपीति भावः । (१००) जानातीति । कार्यतयेति शेषः । (१) तथा सामान्यत इति । पक्षधर्मताबलादिति भावः । पुरुषभेदेन व्यवस्थितं विकल्पमाह (२) यद्वेति । साकाङ्क्षत्वमगृहीतासंसर्गत्वम्, तथा च परस्य तादृशज्ञानमेव विशिष्टज्ञानं, तदेव च प्रमेति एतदर्थविषयकप्रमाहेतुकमिति पर्यवसितो ऽर्थः । आप्तोक्तत्वं च भ्रमाद्यजन्यत्वं, न तु यथार्थज्ञानवदुक्तत्वं, साध्याविशेष्यादग्रिमवैयर्थ्याच्च । एवं च शुकादिवाक्ये व्यभिचारवारणाय तदुपादानम् । तदपि यथाश्रुतं व्यभिचार्येव तथाप्येतदर्थप्रतिपिपादयिषाप्रयुक्तत्वादिति विवक्षितमिति नोक्तदोषः । सामान्यव्याप्त्यभिप्रायेण दृष्टान्तमाह । (३) मद्वाक्यवदिति । (४) साकाङ्क्षेति । विशिष्टज्ञानविषयत्वादित्यर्थः ॥

## ॥ अथ गोपाललीलाख्यकाव्यस्य ॥

॥ षष्ठसर्गारम्भः ॥

संक्षोभं सकलगुरुप्रपातजातं
संप्राप्य प्रबलमुदञ्चदूर्मिरुच्चैः ।
क्ष्वेलाम्बुज्वलितबृहद्धनुःशताध्वा
सर्पस्य ह्रद उपकूलमुत्ससर्प ॥ १ ॥
आस्कन्दं निजवसतेरमृष्यमाणो
रोषं द्रागुपरि वमन्मिषाद्विषाग्नेः ।
क्रीडन्तं गतभयमेत्य दष्टदेहो
भोगेनाच्युतमथ कालियोऽविवेष्टत् ॥ २ ॥

आलोक्य स्मितमधुराननेन्दुमीशं
तद्भोगभ्रमिकृतवेष्टनादचेष्टम् ।
गोपालाः सह पशुभिः स्रवद्भगस्रा
हा हेति ज्वलितनिजान्तरा विषेदुः ॥ ३ ॥
स्पन्दोऽभूद्व्रजभुवि सव्यदक्षिणाक्ष्णोः
सर्वासामपि नरयोषितां तदानीम् ।
त्रस्तास्ते महदशुभं विशङ्कमाना
नन्दाद्या ययुरचिरेण कृष्णमार्गे ॥ ४ ॥
पद्यायां सपदि पदानि वीक्षमाणाः
कृष्णस्य ध्वजकुलिशादिचिह्नितानि ।
सस्त्रीकास्तटनिकटं सबालवृद्धाः
सर्वे ते ययुररविन्दबन्धुजायाः ॥ ५ ॥
तद्भोगावृतनिखिलाङ्गकं निरीहं
मध्येतद्ध्रदमवलोक्य बालकृष्णम् ।
गोपालान् सह रुदतश्च गोचया[1] ते
हा हन्तेत्यथ रुरुदुः समेत्य सर्वे ॥ ६ ॥
श्रीनाथे निहितहृदोऽथ गोपवध्वो
विध्वस्तावसररुचं मुखैर्वहन्त्यः ।
स्मेरं तद्वदनमतिस्मरं स्मरन्त्यः
शोकार्ता भुवनममंसतातिशून्यम् ॥ ७ ॥
मुच्येत स्वयमहिवेष्टनात् पुरेव
क्षिप्रं ते शिशुरचिरेण मा स्म शोचः ।
इत्युक्त्वा कतिचन गोपिका जरत्यः
साश्वासामकृषत नन्दवद्यशोदाम् ॥ ८ ॥
नन्दादीनधिकशुचो विचिन्त्य विद्वान्
रामस्तद्बलमकृत प्रतीतिभाजः ।
कृष्णश्च स्वगतिमवेत्य तं समाजं
भित्त्वाशीविषतनुबन्धनान्युदस्थात् ॥ ९ ॥
उत्फुल्लत्फणफलकावलिः फणीन्द्र-
स्तद्बाहुप्रमथितभोगभग्नसंधिः ।
निश्वासप्रसृतविषाग्निधूमकल्पं
कल्पान्तश्रितवटपत्त्रमीक्षते स्म ॥ १० ॥
गर्जन्तं भुजगमतीव जर्जराङ्गं
कृत्वा स्वप्रबलपरिक्रमाभिघातैः ।
उत्तुङ्गं झटिति गतस्तदुत्तमाङ्गं
रङ्गस्थो नट इव शार्ङ्गभृन्ननर्त ॥ ११ ॥
नृत्यन्तं मृदुलमृदङ्गमुख्यवाद्यै-
रातोद्यैर्दिवि सुरकिंनरादिवध्वः ।
गीतैश्च प्रचुरतरप्रबन्धतालै-
रामोद्य द्युकुसुमवृष्टिभिः शशंसुः ॥ १२ ॥
उद्दीप्रस्वफणमणिप्रदीपपुञ्जै-
र्नीराज्य प्रपदविमृद्यमानमूर्धा ।
विध्वस्ताखिलजनिसंचिताघसंघः
सर्पोऽसृग्भव इव रागमुद्ववाम ॥ १३ ॥
संहारं सपदि विदन् निजं भुजंगः
कृष्णातिक्रमणविभञ्जितोत्तमाङ्गः ।
स्मृत्वान्तः पुरुषमगात् परं शरण्यं
कृच्छ्रे हि प्रभवति पूर्वमेव पुण्यम् ॥ १४ ॥
दिग्धाङ्गं वदनविषक्तरक्तवर्षै-
र्भग्नास्थिं किमपि लघु श्वसन्तमन्तः ।
मत्वा तं गतिरयमुक्तकेशबन्धाः
श्रीनाथं किल परिवव्रुरस्य पत्न्यः ॥ १५ ॥
कृत्वाग्रे निजशिशुपङ्क्तिमानमन्त्यो
मौलिस्थाञ्जलिपुटबद्धपद्मकोशाः ।
कृष्णं ताः कथमपि कान्तमन्तुशान्त्यै
नत्वाथ स्तुतिमिति कर्तुमारभन्त ॥ १६ ॥
दुष्टानामसि भुवि निग्रहैर्विधातुं
साधूनां त्वमिह कृतावतारलीलः ।
तद्दण्डः समुचित एष देव चण्ड-
क्रोधैकस्थितिजनुषः कृतागसोऽस्य ॥ १७ ॥
दण्डोऽपि प्रियकृदभूदसौ प्रसादो
यस्मात् तेऽजनिषत दर्शनाङ्घ्रियोगाः ।
अस्याहेरहह महान् पुरा कृतानां
पुण्यानामजनि चिरादद्य पाकः ॥ १८ ॥
कुत्रासावहिरतितामसस्वभावः
क्व श्रीमन्निह भवतः शुभाङ्घ्रियोगः ।
तत् साधुष्विव कुटिलेष्वपीयमिष्टं
दृष्टिस्ते कृतकरुणा समं रुणद्धि ॥ १९ ॥

१ गोत्रा गोसमूहस्तयेत्यर्थः ।

त्रैलोक्याधिकतरगौरवत्वदङ्घ्रि-
प्रत्यग्रप्रपतनचूर्णितोरुमूर्धा ।
प्राणान् न त्यजति फणी यथा तथाशु
प्राणाग:प्रतिकृतिरेषकोऽनुकम्प्य: ॥ २० ॥

त्वद्भक्तिप्रवणहृद: कदापि गन्तुं
न ब्राह्मं नच पदमैन्द्रमप्युशन्ति ।
नैश्वर्यं नच गणयन्ति योगसिद्धिं
मोक्षं वा किमु धनदारपुत्रवर्गम् ॥ २१ ॥

कुक्षिस्थीकृतभुवनत्रयावसाने
प्रत्यक्षीकृतसकलप्रपञ्च सर्गे ।
विद्यानां जगति पुन: प्रवर्तकाय
क्रत्वादिप्रभवकृते नमो नमस्ते ॥ २२ ॥

सत्तात्मन् सकलचराचरान्तरान्त:-
स्वज्योति:स्फुरणविभासितेतराय ।
आनन्दानुभवमयात्मतत्त्वगुप्त्या
गोपालप्रभवजुषे नमो नमस्ते ॥ २३ ॥

कुलकम् ।

पत्नीनां कृपणदृशां फणीश्वरस्य
स्तुत्येति प्रमुदितहृज्जहौ हरिस्तम् ।
नागोऽपि प्रणतशिराश्चिराप्तसंज्ञ:
प्राह स्म प्रति भगवन्तमित्थमार्त: ॥ २४ ॥

सक्रोधं जनुरधमं भुजंगमानां
गर्हायै प्रभवति तामसत्वसीम्नाम् ।
तज्जातेर्मम खलु दुस्त्यज: स्वभावो
यस्येदं फलमजनि प्रभो दुरन्तम् ॥ २५ ॥

दृष्टान्ता: प्रबलरुषां त्वयैव सृष्टा
यत् सृष्टाविह वयमेव दन्दशूका: ।
तन्मन्तुर्मम न तथाविधोऽस्ति देव
त्वन्नाथं कथमपि मामव प्रसीद ॥ २६ ॥

त्रिभिर्विशेषकम् ।

जल्पन्तं सविनयमित्यहिं महेश:
प्रावोचद्वचनमिति स्थितिं विधित्सु: ।
त्वं द्वीपं रमणकमाशु याहि नेह
स्थातव्यंससुतकलत्रभृत्यकेन ॥ २७ ॥

शिष्टं ते य इह नर: स्मरेत् स युष्म-
ज्जातिभ्यो न भयमवाप्नुयात् कदाचित् ।
स्नात्वा मच्चरितमनुस्मरन्नुपोष्य
स्वर्गाय प्रभवति वर्जितोऽघसंघै: ॥ २८ ॥

युग्मम् ।

सस्त्रीक: स्वयमिति कृष्णमुक्तवन्तं
वास:स्रङ्मणिभिरपूपुजद्भुजंग: ।
नत्वागाद्धरिचरणाङ्कभागथाब्धे:
स द्वीपं ससुतसुहृत्कलत्रभृत्य: ॥ २९ ॥

रोमाञ्चच्छलमवलम्ब्य संमदानां
रेखाभि: परिगणनां करिष्यमाणा: ।
आयातं तमथ तथाविधं विलोक्य
प्रीतास्ते हृषिततनूरुहा बभूवु: ॥ ३० ॥

संभाव्य व्रजवशमीश्वरं तदा द्रा-
गाश्लेषप्रणमनभाषणेक्षणाद्यै: ।
अर्थासुप्रियतनयात्मना गृणद्भि-
र्ब्रह्म स्वप्रमितिबलादलुण्ठि गोपै: ॥ ३१ ॥

तल्लाभाद्भुजगनिवर्हणाच्च तुष्टा
विस्मृत्यालयमशनादिकृत्यजातम् ।
तत्कर्माण्युपनदमादराद्वदन्त-
स्तत्रोषु: सुखमथ वल्लवा निदद्रु: ॥ ३२ ॥

दावाग्नि: कवलयत: समन्ततोऽस्मान्
रे गोपा महदहहागतं भयं न: ।
संवेशं विजहित जागृतेति रात्रौ
तत्राभूत् कलकल एष वल्लवानाम् ॥ ३३ ॥

गोपाला: पुनरपि हर्षतो विषादं
संप्राप्य त्रिजगदधीश्वरावथोचु: ।
हन्तासौ कवलयतीव न: समन्ता-
द्दावाग्निस्तदवतमाश्रितानिहेति ॥ ३४ ॥

सिन्धुश्रीर्दवदहनं तमार्तबन्धु:
कुक्षौ स्वेऽक्षिपदथ वाडवोग्रभासम् ।
चित्रं तच्चिरमजनिष्ट वल्लवानां
किं तत्राद्भुतमिव वस्त्वनन्तशक्तौ ॥ ३५ ॥

एकार्थव्यसनितया समन्विताभि-
र्गोपीभिस्तदुपनिषन्निभाभिराप्तम् ।

तात्पर्यान्मुनिभिरिव स्वकैरुपेतं
ब्रह्मेव स्वयमविशद्व्रजं सगोचम् ॥ ३६ ॥
गोपालाकृतिनि वनेऽच मन्दमित्थं
क्रीडत्यप्रतिमसुखाद्वयात्मतत्त्वे ।
संप्राप्तः कृतसुमनःसमृद्धिरीशं
खेलन्तं सुरभिरुपासनाधियेव[1] ॥ ३७ ॥
गोपीनां करचरणाधरस्य कान्तिं
निर्जेतुं स्वकिसलयैरशक्नुवन्तः ।
प्रत्यग्रारुणकुसुमश्रिया विजेतुं
सोद्योगा इव मधुनाभवन्नशोकाः ॥ ३८ ॥
प्रत्येकं निजविशिखैर्मनांसि यूना-
मुद्भिद्य प्रसवशरेण लक्षयित्वा ।
उच्छाल्य द्युनलमवापिता बभौ त-
द्धूलीवानिलवितता परागपालिः ॥ ३९ ॥
उज्झित्वा मधुकरकोकिलारसाला-
नप्यादौ गतकुसुमप्रबालशोभान् ।
आवव्रुः सपदि सपल्लवप्रसूनान्
सत्यर्थे कति कति नाम नाद्रियन्ते ॥ ४० ॥
श्रीनाथं मधुभिदमप्यहो मधुश्री-
रामोदं बहिरिव सान्तरं नयन्ती ।
चक्रेऽतिप्रियवनराजिवासखेलं
का नाम प्रभवति नानुकूलवृत्तिः ॥ ४१ ॥
विद्येव श्रितविनया बभूव वृन्दा-
रण्यश्रीरपि मधुनाधिका तदानीम् ।
प्रायेण प्रभवति योग्यसंगमाना-
मन्येव प्रकृतिमनोहरा गुणश्रीः ॥ ४२ ॥
भृङ्गालिस्तरुषु बभौ वसन्तलक्ष्म्या
वेणीव श्रितसुमना विडम्बयन्ती ।
दोलास्त्रीकृतकलगीतभेदमुह्य-
त्सिद्धान्तःकरगलितां नवाक्षमालाम् ॥ ४३ ॥
आधाय प्रसवशरेण किंशुकाग्रा-
नाहूतप्रचुरपठत्पिकद्विजेन ।
हन्तुं द्रागलिषु च सामगेषु यूनः
प्रावर्ति ध्रुवमभिचारकर्म चैत्रे ॥ ४४ ॥

सद्धातुस्तबककमृदुप्रबालबर्ह-
सम्भूषाविभवजुषामसौ वसन्ते ।
गोपानां सदसि रुचिं समेत्य चक्री
चिक्रीड व्रजवनितामनोज्ञमूर्तिः ॥ ४५ ॥
वंशीभिः कतिचन शीत्कृतैः कृताभिः
पत्रैरप्यथ कतिचिज्जगुः स्वकण्ठैः ।
तत्रान्ये मुखमुरजैः सपाणितालैः
शब्दैरप्यकृषत केऽपि नृत्यतीशे ॥ ४६ ॥
गोविन्दः स्वयमपि वेणुपाणिवाद्यै-
र्गोपालान् मुहुरिह नर्तयन्नगासीत् ।
वक्रोद्यद्विकृतिरजीहसद्वयस्या-
नास्यानि प्रति नुदतः स्वयं जहास ॥ ४७ ॥
सास्फोटभ्रमणविलङ्घनैर्नियुद्धैः
साक्षेपैः करचरणादिकर्षणैश्च ।
अन्योन्यं पणकृतवाह्यवाहकत्वैः
सत्त्वैकस्थितिरपि राजसो विजह्रे ॥ ४८ ॥
ग्रीष्मोऽभूदथ पृथुलातपातिभीष्मो
जन्तूनामनभिमतः प्रतापिताध्वा ।
सौरभ्यं समुपनयन्ननन्यलभ्यं
मल्लीनामिव कुसुमेषु पाटलानाम् ॥ ४९ ॥
कासारा बहुपयसः कलिन्दजार्णः-
पूर्णा सचितिरनिर्झराः समीराः ।
ग्रीष्मं तं सपदि तपन्तमत्र वृन्दा-
रण्ये तेऽत्यकृषत शीतलप्रचारम् ॥ ५० ॥
इत्थं गाः क्वचिदपि चारयत्यनन्ते
कान्तारे शिखरिसरित्सरोवनादौ ।
गोपालाकृतिरसुरः प्रलम्बनामा
तत्रागात् कुतुकनिभेन तौ जिघांसुः ॥ ५१ ॥
तं दृष्ट्वा सपदि बलेन घातयिष्य-
न्ननेन प्रणयवशाच्चकार सख्यम् ।
प्राह स्म प्रभुरिह खेलनाय गोपा
द्वन्द्वानि प्रकुरुत खेलताञ्जसेति ॥ ५२ ॥
गोपालाः पृथगथ यूथयुग्मकॢप्तौ
तद्भ्रातृद्वयमुभयाधिपं विधाय ।

१ सुरभिर्वसन्तः ।

भाण्डीरावधि कृतवाह्यवाहकत्वाः
क्षिप्रोद्यद्विजयपराजया विजह्रुः ॥ ५३ ॥

विश्रान्तिं विजहदुवाह साहसेन
श्रीदामाह्वयमजितो बलं प्रलम्बः ।
वाह्यत्वं कतिचन केऽपि वाहकत्वं
भाण्डीरावधि दधतो विनिर्ययुस्ते ॥ ५४ ॥

दत्तातिप्रचुरभरं बलं प्रलम्ब-
स्तं वोढुं धरणिधरं वहन्नशक्तिम् ।
स्वं रूपं भ्रुकुटिकरालमुग्रदंष्ट्रं
व्योमस्पृग्ज्वलदनलेक्षणं दधार ॥ ५५ ॥

संतुष्टं फलितकृतिं दिवि प्रयान्तं
वीक्ष्येषद्भयचकितः पुनः स्मृतात्मा ।
रामोऽथ प्रबलतरेण मुष्टिना तं
वज्रेणाहतं[1] मघवेव मूर्ध्नि शैलम् ॥ ५६ ॥

तन्मुष्टिप्रबलहतेर्विशीर्णशीर्षो
भूरि द्रागसृगसुरो वमन् पपात ।
आलिङ्ग्य द्रुतममरेन्द्रपुष्पवृष्ट्या
साकं ते बलमथ वल्लवाः शशंसुः ॥ ५७ ॥

गोपालेष्विति विहरत्सु तत्र गावो
विभ्रष्टा नवतृणलोभतोऽतिदूरे ।
मुञ्जानां विविशुररण्यमाशु गोपा
नापश्यन्नथ मिलिताश्चिरं विषेदुः ॥ ५८ ॥

धृत्वा स्वं सपदि शिरश्चिरावधान-
भ्रंशेन द्रुतमनुसृत्य चोपलभ्य ।
सोदन्याः[2] श्रमजनिताधिकाशनाया
गोपालाः कथमपि ते न्यवीवृतन् गाः ॥ ५९ ॥

अदूरादाभीरैस्तदनु ददृशे दावदहनः
स्फुरन् मुञ्जाटव्यां विपिनमभितो मारुतसखः ।
तयोरग्रे भीत्या त्वरितमुपगत्याशु पशुपै-
र्न्यवेदि स्वान् पातं दवकवलितान् सत्वरमिति ॥ ६० ॥

तदुदितमिति शुश्रुवानवादी-
दथ जगदीश इतो बिभीत मेति ।

दवदहनमपान्निमीलिताक्षै-
रकलिततत्त्वगतिर्निजाज्ञया तैः ॥ ६१ ॥

गतवति दववह्नौ ते समुन्मील्य नेत्रे
ददृशुरथ निजा गा मङ्क्षु भाण्डीरमाप्ताः ।
अमरमनु च मत्वा तं शशंसुर्निजेभ्यो
दवदहनविमोक्षं सप्रलम्बप्रमेयम् ॥ ६२ ॥

गोप्यः स्मितातिमधुरेक्षणमीक्षमाणाः
सायं ननन्दुरतिवाह्य कथंचनाहः ।
स्मेरं तदीयवदनं च विलोक्य कृष्णः
सप्रीतिवल्लिसुमनस्कमिवाभ्यनन्दत् ॥ ६३ ॥

स्फुटकुटजकदम्बकेतकादि-
प्रकटितसौरभवासिताखिलाशः ।
मुररिपुमिव सेवितुं तडित्वा-
नथ समयो जलदागमः समागात् ॥ ६४ ॥

अहर्दिवोदीतमहाब्दसंहतिः
पयोधरोत्तम्भितमेचकाम्बरा ।
निशादृशा प्रावृडुदीतकौतुका
मिलत्कदम्बाभिससार शार्ङ्गिणम् ॥ ६५ ॥

वातेरिताम्बरमहोरुपयोधरश्री-
मिश्रीभवत्सकुतुकोत्कदृशोऽध्वनीनाः ।
सद्यः स्मृतप्रियतमाङ्गविशेषशोभा
लोभाद्ययुस्त्वरितमब्दसमागमोत्काः ॥ ६६ ॥

अलक्ष्याः पन्थानो युवतिमनसो वृत्तय इव
प्रवृद्धा नद्योऽपि श्रुतनयजुषां संपद इव ।
दिशश्छन्ना मेघैः श्रुतय इव दुस्तर्कनिवहै-
रभूत् प्रावृष्यम्भः कलुषमसतां मानसमिव ॥ ६७ ॥

द्वन्द्वानि स्तनितभयच्छलेन यूना-
माश्लेषं ददति मुहुर्यदृच्छयैव ।
आनन्दात्यतिशयभाञ्जि वर्षकालं
सोत्कर्षं सकलऋतुष्वमंसत द्राक् ॥ ६८ ॥

दृष्टः कदाचन विधुः क्वचनाम्बरान्तः
संतोषमाशु तरुणीकुचवच्चकार ।
सज्योतिरिङ्गणमभाज्जलदान्धकारं
मूढस्य मानसमिवाल्पमतिप्रकाशम् ॥ ६९ ॥

१ आङो यमहन इत्यात्मनेपदम् ।
२ अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु ।

परिणतिरमणीयस्वाम्रखर्जूरजम्बू-
पनसवनसमुद्यत्सौरभाकृष्टचित्तैः ।
सह सखिभिरधीशो धेनुभिश्चाग्रजेन
व्रजति सपदि स स्म प्रावृषि क्वापि रन्तुम् ॥ १० ॥

क्वचन भूधरकोटरकन्दरा-
स्वकृत कन्दफलाद्यशनं हरिः ।
सदधिमोदनमच्छशिलातले
सबलगोपबलो बुभुजे विभुः ॥ ११ ॥

ससौहित्योद्रेकं क्वचन शयितं शाद्वलतले
समुद्यद्रोमन्थाननमसकलोन्मीलितदृशम् ।
मुहुर्दृष्ट्वानन्दत् सुरभिसमजं नन्दतनयः
सुखं रेमे विन्दन्निति कतिपयान् वर्षदिवसान् ॥ १२ ॥

ततः संचितश्रीः स्वयं राजहंसैः
समुद्यद्वयःपक्षपाता सिताभ्रैः ।
शरत् प्रावृतत् प्रावृषं काशपुष्पै-
र्हसन्ती विनश्यत्कदम्बानुरागाम् ॥ १३ ॥

अचिराच्छशलाञ्छनच्छवे-
रधिकाच्छत्वमभूच्छरत्कृतम् ।
अमलप्रकृति प्रियस्थिते-
रिव सच्छात्रमतेर्गुरूक्तिजम् ॥ १४ ॥

सिता घनाः सपदि विरेजुरूर्जिताः
सदर्थकध्वनिरसमात्रसंग्रहाः ।
समुद्भवच्चिरशुचिसत्त्वनिर्मला
हरिश्रिता इव सकलार्थनिस्पृहाः ॥ १५ ॥

सानन्दं भगवान् विभाव्य शरदं वृन्दावने नन्दन-
श्रीहारिण्यथ गोपगोपरिकरप्रत्यग्रहर्षास्पदम् ।
युक्तः स्वैर्विपिनं विवेश विकसत्सौगन्धिकेन्दीवरा-
मोदान्धालिकुलान्धकारितसरो वंशीं मुदा वादयन् ॥ १६ ॥[१]

इति श्रीमल्लक्ष्मणभट्टात्मजश्रीरामचन्द्रभट्टविरचिते गो-
पाललीलाख्ये महाकाव्ये प्रलम्बवधो नाम षष्ठः सर्गः ॥६॥ ::

१ प्रथमसर्गपञ्चत्रिंशत्तमपद्ये कुतश्चिद्धेतोरीदृश्येति गतं तत्र ईदृश्येति कल्पनीयम् ।

## ॥ अथ गोपाललीलाख्यकाव्यस्य ॥

॥ सप्तमसर्गारम्भः ॥

अधिवल्लवमण्डलं हरे-
रुपवर्ण्योनणु वेणुवादनम् ।
प्रमदोन्मदचेतसोऽभवन्
वनरीत्या भवनेऽपि गोपिकाः ॥ १ ॥

दशनद्युतिमन्विताधरां
सुमनोविद्रुमसङ्गवद्दधत् ।
मुरलीं क्व नु वादयत्यसा-
विति काश्चित् प्रतिसख्यथोचिरे ॥ २ ॥

त्रिदिवं त्रिजगत्यनुत्तमं
प्रवदन्ति प्रमदान्मनीषिणः ।
मुरजिन्मुरलीरवोत्सवा-
न्मम हूत् तत् तु तृणाय मन्यते ॥ ३ ॥

मुहुरन्नमदन्ति येऽमृतं
त्रिदिवे तैरपि यच्च लभ्यते ।
तदवैमि सुधापि नाधिका
सखि नन्दात्मजवंशनादतः ॥ ४ ॥

नवपल्लवमञ्जुमञ्जरी-
वनमालौ रमणीयवाससौ ।
मधुरध्वनिवेणुवादिनौ
बलकृष्णौ सखि गायतः क्वचित् ॥ ५ ॥

अटवीभुवि पालकं गवां
मुरलीनादकटूकृतामृतम् ।
तमुदीक्ष्य सुरस्त्रियो गलद्-
वसना निश्वनानि तन्वते ॥ ६ ॥

क्षितिभृद्वर एष पुण्यकृ-
च्चरणौ यो बलकृष्णयोः स्पृशन् ।
फलमूलतृणाम्बुकन्दभृत्
कुरुते प्रत्यहमच्युतार्चनम् ॥ ७ ॥

बृहदुन्नमदूर्मिबाहवः
श्रुतवंशीकलनादमन्थराः ।
उपदीकृतपद्मराजयः
पदयुग्मं दधतेऽस्य निम्नगाः ॥ ८ ॥

इति वस्तु तदाप्य वास्तवं
सकलं ब्रह्म समाधिदुर्लभम् ।
दधति स्म तदेकचेतसः
प्रणयात् तन्मयतां व्रजस्त्रियः ॥ ९ ॥

सरसीरुहसंहृतिस्ततो-
ऽधिकशीतादिव संकुचद्दिनः ।
विरहिव्रजनिग्रहान्तकः
समयः प्रावृतदाशु हैमनः ॥ १० ॥

भवति स्म रजन्यतिस्मर-
त्वरखेलद्युवभाग्यवर्धिता ।
दिवसश्च कृशो दिने दिने
सुकृतेनेव कलोपजीविनाम् ॥ ११ ॥

सुदृशोऽगुरुसारलेपनं
निविडं कञ्चुकमम्बरं नवम् ।
तुहिने कटुतैलसेवनं
बहुताम्बूलमपीषुरादृताः ॥ १२ ॥

कुसुमेषुमहोत्सवचये
कतिचिद्गोपकुमारिका व्रजे ।
सहसीष्टहविष्यभोजना
विदधुः शैलसुतार्चनव्रतम् ॥ १३ ॥

उषसि प्रविमज्ज्य यामुने
पयसीमा गिरिजामपूपुजन् ।
फलचन्दनधूपदीपकै-
रुपहारैः कुसुमस्रगक्षतैः ॥ १४ ॥

गिरिजे जगतामधीश्वरि
प्रणतातिप्रियदानविश्रुते ।
मम नन्दसुतं पतिं कुरु
द्रुतमम्बेति च मन्त्रमूचिरे ॥ १५ ॥

इति मासमुदञ्चितेऽरुणे
विहितस्नाननतीश्वरार्चनाः ।
इतरेतरमात्तपाणयो
यमुनारोधसि कृष्णमुज्जगुः ॥ १६ ॥

वसनानि निधाय पूर्वव-
द्यमुनामेत्य कदापि बालिकाः ।
कृतनन्दसुतैकगीतयः
सलिले तत्र सुखेन रेमिरे ॥ १७ ॥

भगवान् व्रजबालिकातपः-
परिपाकेन कदापि नोदितः ।
सखिभिः सह तत्तपःफलं
स्वयमेवागमदत्र मूर्तिमत् ॥ १८ ॥

शिशुभिः सह बद्धकौतुकः
शनकैरेत्य हसन् स सत्वरः ।
हृततद्वसनः समाश्रित-
स्तटजं बालकदम्बमूचिवान् ॥ १९ ॥

वसनानि यदिच्छथ स्वका-
न्यचिरादन्वित तत् प्रतीच्छत ।
अवगच्छत नानृतं मया
क्वचनोक्तं शिशवोऽत्र साक्षिणः ॥ २० ॥

न मृषा द्रुतमेत्य गृह्यतां
वसनं दत्तमिहैकयैकया ।
सहितास्तदुपेत सुभ्रुवः
सह वासोग्रहणस्पृहा यदि ॥ २१ ॥

मुरजित्परिहासलज्जित-
स्मरविस्मेरचलद्दृगञ्चलाः ।
स्मितदृष्टपरस्परानना
निरयुर्नो जलवासवाससः ॥ २२ ॥

भगवत्कृतनर्मनिर्मिति-
प्रभवच्छर्ममदोर्मिमानसाः ।
अतिशीतविकम्पिताधरा-
स्तमवोचन्निति सस्मितेक्षणाः ॥ २३ ॥

त्वमनङ्गसमाङ्ग मङ्गल
प्रियशील व्रजवासिनां गतिः ।
वसनानि तदङ्ग देहि नो-
ऽनुचितं दुर्नयमत्र मा कृथाः ॥ २४ ॥

इह चान्वहमार्चिचाम यद्
गिरिजां तस्य फलं त्वमेव नः ।
करवाम वयं त्वदीरितं
निजदासीर्न निरोद्धुमर्हसि ॥ २५ ॥

इह तामस एष भूपतिः
प्रथितो दुर्नयकारिनिग्रहे ।
तदरं वितरांशुकानि नः
क्षितिपालाय नचेद्व्रजाम हे ॥ २६ ॥

त्रिभिर्विशेषकम् ।

इति तद्वचनं ससौहृदं
श्रुतवान् सोऽपि हसन्नवोचत ।
वसनं निजमेत्य गृह्यतां
यदि दास्यो वचनं करिष्यथ ॥ २७ ॥

वसनं सुलभं नचान्यथा
नृपतिः किं कुपितः करिष्यति ।
स्वयमेष्यति या यथा नृपं
किमिदं वेत्त्य तथा न विन्दति ॥ २८ ॥

युग्मम् ।

अवधार्य चिराय त्वित्वरं
वचनं तस्य हिमातिवेपिताः ।
निजपाणिनिवारितत्रपा
निरयुस्ताः सलिलान्नताननाः ॥ २९ ॥

मुदितः पुनराह च स्म ताः
स निजस्कन्धनिवेशिताम्बरः ।
सुदृशोऽनुदिनं धृतव्रताः
किमु नाग्नावसना बतांहसे ॥ ३० ॥

अतिपिच्छिलवर्त्मधावनं
करणं वित्थ न धर्मकर्मणः ।
तदघच्छिदमानमन्तु मां
मुकुलीकृत्य शिरस्यमञ्जलिम् ॥ ३१ ॥

इति तद्वचसा न ता निज-
व्रतलोपप्रभवद्भियः प्रभुम् ।
अथ यच्छति स स्म सस्मितो
वसनानि स्वयमङ्गमापयन् ॥ ३२ ॥

विरजस्कमभूत् तदम्बरं
सुरभिश्रीपतिपाणियोगतः ।
किमु चित्रमिदं हरेः स्मृते-
रपि यद्योगिमनस्तथाभवत् ॥ ३३ ॥

अवदद्विभुरेकिकैकिका
परिचित्य स्वकमाददातु तत् ।
अथवा कलहोऽपि मास्तु वो-
ऽध्यवसायाहमितः क्षिपामि चेत् ॥ ३४ ॥

कलिके हरिदंशुकं तवो-
त्कलिके पीतमिदं तवान्ततः ।
तव गौरि कुसुम्भरञ्जितं
तव माञ्जिष्ठमिदं कलावति ॥ ३५ ॥

तव मञ्जरि कञ्जमञ्जुलं
सितमध्यं तव चारुहासिनि ।
अरुणान्तरमन्ततोऽसितं
तव लीलावति गृह्यतामिति ॥ ३६ ॥

वसनं सुनिरीक्ष्य स क्षणा-
दददादुद्यतबाहवे हरिः ।
क्रमशो वसते स्म सस्मिताः
परिचित्यांशुकमाशु विस्मिताः ॥ ३७ ॥

त्रिभिर्विशेषकम् ।

अथ काचन वृश्चिकभ्रमाद्
वसनं स्वं विससर्ज सार्जवा ।
तदुदीक्ष्य पराश्च शङ्कया
दुधुवुः स्वाम्बरमात्तविभ्रमाः ॥ ३८ ॥

चिरमित्थमुदीक्ष्य सोरु त-
ज्जघनश्रोणिकुचश्रियं हरिः ।
मुमुदे हृदि नाभ्यसूयितुं
प्रबभूवुः प्रभवे कुमारिकाः ॥ ३९ ॥

अतिसत्रपकातरेक्षणा
निजलज्जावसनापहारिणि ।
प्रणयाच्चलितुं ततोऽशकन्
पदमेकं न तदेकचेतसः ॥ ४० ॥

प्रणयामृतवर्षहर्षितो
वचनं चैतदवोचदच्युतः ।
विदितोऽस्ति मनोरथोऽग्रिमा
अभिरन्तुं तदुपेष्यथ क्षपाः ॥ ४१ ॥

मयि वेशितधीः कथंचन
श्रयतां काममपि कामनां मनाक् ।

खलु तस्य न बन्धनाय सा-
ग्निमशस्याय विभृष्टबीजवत् ॥ ४२ ॥
युग्मम् ।

इति तास्तमवाप्य कामुकं
निजसंकल्पपलाशिनः फलम् ।
श्रिततत्पदबद्धबुद्धयः
कथमप्यापुरथो निजं व्रजम् ॥ ४३ ॥
वसनानि विलोक्य वल्लवा
विरजस्कानि ससौरभाणि च ।
अवदन् किमिदं कुतो न्विति
त्वणमासां पुनरस्मरन् न ते ॥ ४४ ॥
सखिभिर्निजपार्श्ववर्तिभिः
सह दूरं पशुचारणक्रमात् ।
गतवान् सहरोहिणीसुतो
विहसन् किंचिदुवाच वल्लवान् ॥ ४५ ॥
स्तूपभार्जुन हे विशाल ये
हिमवर्षातपवारणा द्रुमाः ।
दधति श्रयदातपव्रतां
कथमेषां कथयन्तु के गुणान् ॥ ४६ ॥
कृतनीडपतत्रिपीडना-
न्यनिशं प्राप्य निवेशदायिनः ।
श्रितविश्रमदानशिक्षिताः
क इहान्ये स्पृहयन्ति येऽर्थिने ॥ ४७ ॥
अपरं किमु कथ्यतेऽर्थिनो
विमुखा यान्ति न यत् सतामिव ।
फलवल्कलमूलपल्लवै-
श्छदनैधःसुमनोरसादिभिः ॥ ४८ ॥
नियतं प्रतिभाति जन्मनः
फलमेतत् सकलस्य जन्मिनः ।
असुवाग्वसुदेहबुद्धिभि-
र्विहितं यद्धितमन्यदेहिषु ॥ ४९ ॥
इति भूमिरुहस्तुतिच्छला-
न्निजदासाननुशिक्षयन्निव ।
यमुनामगमन्मुहुः स्तुवन्
फलपुष्पानमितान् पलाशिनः ॥ ५० ॥

यमुनाममुना सहाप्य त-
त्सलिलं शीतमपाययन् पशून् ।
अनु चापुरथ क्षुधार्दिताः
पशुपास्तस्य पुरो व्यजिज्ञपन् ॥ ५१ ॥
क्षुधितानव तानवं गता-
निति तानुक्तवतोऽवदद्विभुः ।
मखमाङ्गिरसं द्विजातयो
विदधत्यत्र सुखेन गच्छत ॥ ५२ ॥
वदतान्नमभीप्सवः पुरः
क्रतुभाजामभिधानमावयोः ।
इति तत्प्रहिता ययाचिरे
पशुपा दूरत एव यज्वनः ॥ ५३ ॥
शृणुतावहिता महत्तमा
वचनं किंचन रामकृष्णयोः ।
लघु नावुचितं सगोपयोः
प्रियमन्नं बहु दीयतामिति ॥ ५४ ॥
क्रतुकर्मविषक्तचेतसः
श्रुतवन्तोऽपि न शुश्रुवुर्गिरम् ।
बत यज्ञमयस्य ते वचो
विफलं चक्रुरतद्विदो द्विजाः ॥ ५५ ॥
विधिनैव विमुद्रिताननाः
नच ते नेति नचोचुरोमिति ।
पशुपा विहताशतां गताः
पुनरेत्याग्रत ऊचिरे तयोः ॥ ५६ ॥
हरिराह पुनः स्म सस्मितः
प्रमदा याचत यज्वनामिति ।
अथ तेऽपि तथेति तद्गिरा
द्रुतमभ्येत्य बभाषिरेऽबलाः ॥ ५७ ॥
बलकृष्णवशानुगा वयं
पशुपा नन्दसुतेन नोदिताः ।
बहु यच्छत सम्यगोदनं
क्षुधितानां व्रजवासिनामिति ॥ ५८ ॥
द्विजपत्न्य उदीतसंभ्रमाः
श्रवणादेव समुत्थिता हरेः

उपनीय सदन्नमादरात्
पशुपालैः सहिताः प्रतस्थिरे ॥ ५६ ॥

कुपितैः पतिपुत्रबन्धुभिः
प्रययुस्ता विनिवारिता अपि ।
निरुणद्धु क इष्टदर्शन-
व्यवसाये कृतनिश्चयाः स्त्रियः ॥ ६० ॥

वनपल्लवमाल्यबर्हभू-
धरधात्वादिभिरेव भूषितम् ।
उपलभ्य सबल्लवाग्रजं
हरिमस्मै प्रमदेन तस्थिरे ॥ ६१ ॥

अथ तद्व्यवसायसस्मितो
वनिता विश्वदृगाह स स्म ताः ।
सुखमागतमाध्वमध्वनि
श्रमितास्तत् कृपया द्विजाङ्गनाः ॥ ६२ ॥

अनपेक्ष्य निजानिहागतं
भवतीभिर्यदि मां दिदृक्षुभिः ।
उचितं विहितं तदात्मनः
शुभहेतोर्भजनं नृणां मयि ॥ ६३ ॥

मुदिता वयमन्नदानतो
द्विजपत्न्यो व्रजत द्विजातयः ।
सहिता भवतीभिरध्वरं
विधिनैवाशु समापयन्त्वमी ॥ ६४ ॥

त्रिभिर्विशेषकम् ।

इति ता हरिसत्कृता अपि
व्रजतेत्येव न साधु मेनिरे ।
इदमूचुरथोचितन्न मा
प्रवद प्रेष्ठ वचोऽतिनिष्ठुरम् ॥ ६५ ॥

शरणाय भवन्तमागताः
प्रणयादत्युदयन्मनोरथाः ।
प्रतिपुत्रपितृप्रसूसुहृ-
ज्जनताभिः समुपेक्षिता वयम् ॥ ६६ ॥

युग्मम् ।

व्रजताशु गिरा मदीयया
कुरुत स्वैः सह यज्ञसंविधाम् ।
शुभकृत् खलु मन्मनस्कता
न तनोः संगतिरित्यजोऽवदत् ॥ ६७ ॥

कुपितेश्वरसद्ध्यैक्रया
हृदयध्यातयथाश्रुतेशया ।
किल तन्मयताऽऽपि धाम ता
निजधीयुः परितेपुरग्रजाः ॥ ६८ ॥

बुभुजेऽथ स भोजयन् निजान्
द्विजपत्नीकरदत्तमोदनम् ।
तदनु व्रजमागतः स्वका-
नवदज्ज्ञातु हरिक्रतूद्यतान् ॥ ६९ ॥

उचितं न खलु व्रजौकसा-
मिदमत्यद्रिवनोपजीविनाम् ।
उपजीव्यमखं विहाय यद्
गिरिशक्रं बत यष्टुमुद्यताः ॥ ७० ॥

नियतं खलु कर्मनिर्मितं
सुखदुःखादिकमत्र जन्मिनाम् ।
निजकर्मवशस्य देहिनो
न हि कश्चिन्नियमाय कल्पते ॥ ७१ ॥

कतिचिद्बहुधा मतिं नृणां
भ्रमयन्त्यप्रमितात्मकर्मणाम् ।
यदि सृष्टिरदृष्टनिर्मिता
ननु वृष्टिः कथमन्यतो भवेत् ॥ ७२ ॥

इह वच्मि मतं ममोचितं
द्विजभूभृद्यजनं व्रजौकसाम् ।
अचिरेण विधत्त रोचते
यदि वः सैव समस्तसंभृतिः ॥ ७३ ॥

पचत व्रजदोहसंग्रहाद्
विपुलं पायसमन्नमुत्तमम् ।
सहसूपमपूपशष्कुली-
प्रभृतिप्रस्तुतखण्डलड्डुकम् ॥ ७४ ॥

लघु दत्त सधेनुदक्षिणं
घृतमन्नं हुतवह्नि उत्तमम् ।
तृणवल्यशनेद्धगोपयोः
ऽनुच भुक्त्वा कुरुत प्रदक्षिणाम् ॥ ७५ ॥

आदिकुलकम् ।

मन्दात्मनो घनमदस्य पुरंदरस्य
दर्पं बलादपनिनीषुमिति ब्रुवन्तम् ।
नन्दादयो लघु मुकुन्दमथाभिनन्द्य
तं द्योपतेर्मखममी जहुरञ्जसेति ॥ १६ ॥

इति श्रीमल्लक्ष्मणभट्टात्मजश्रीरामचन्द्रभट्टविरचिते गोपाललीलाख्ये महाकाव्ये गिरिमखप्रवृत्तिर्नाम सप्तमः सर्गः ॥ ७ ॥ :: :: ॥

---

## ॥ अथ गोपाललीलाख्यकाव्यस्य ॥

॥ अष्टमसर्गारम्भः ॥

व्रजवसतिभिरिज्यारम्भि तत्राद्रिगोभू-
सुरवरपरितुष्ट्यै तुष्टकृष्णोक्तरीत्या ।
सपदि विहितहोमैः स्वस्तिपुण्याहपूर्वैं
सह कविभिरभीष्टैर्गीतवादित्रघोषैः ॥ १ ॥
क्वचन शुभमुहूर्ते शैलगोविप्रहृष्ट्यै
वलियवसहिरण्यादीनि दत्त्वा क्रमेण ।
स्फुरदुरुवरभूषा भुक्तवन्तः सभार्याः
क्षितिधरमभितस्ते चक्रमुर्गीतवाद्यैः ॥ २ ॥
अथ सदसि निजानां गोपवद्वर्तमानो
गिरिरहमिति कृत्वा मूर्तिमन्यां जघास ।
अवददपि वलिं स्वं जक्षतं कामरूपं
नमत धरममुष्यानुग्रहं पश्यतेति ॥ ३ ॥
सपदि सुरभिविप्रक्षोणिभृत्पूजयान्त-
र्मुदितवति मुकुन्दे बल्लवा नन्दमुख्याः ।
व्रजभुवमभिजग्मुर्लब्धविप्राशिषः श्री-
पतिचरितमुदारं गीतवन्तो मुदारम् ॥ ४ ॥
प्रतिहतनिजपूजामन्त्रितौजा विडौजा
व्रजभुवि निवसद्भ्यो गोपकेभ्यश्चुकोप ।
जलदगणमदित्सन्मङ्क्षु संवर्तकाख्यं
वचनमिति च धुन्वन् मौलिमुच्चैरवोचत् ॥ ५ ॥
व्रजवसतय एते दूरमाध्मापितान्तः-
करणसरण्यो यत् कृष्णपक्षेण जाताः ।
प्रणिहत तदमीषां वातवर्षैर्मरुद्भिः
सममहमपि नागाधीश्वरेणागतोऽस्मि ॥ ६ ॥

युग्मम् ।

इति जलदगणोऽसौ जिष्णुनादिश्य मुक्तो
बृहदनिलसहायस्तत्र गत्वोपरिष्टात् ।
घनमघवदघश्रीघोरनिर्घातघोष-
द्युतलगलितविद्युद्वज्रसंघो ववर्ष ॥ ७ ॥
जवनपवनमेघज्योतिरुज्जृम्भितद्यु-
प्रगलदुपलवर्षध्वस्तवृन्दावनश्रीः ।
अजनि समतयाम्भःप्लाविता कुम्भिनी न
क्वचिदपि किल लक्ष्या वृक्षवेश्मानि मुक्त्वा ॥ ८ ॥
स्तनितकुलिशपातप्रध्वनद्वातवर्ष-
प्रपतनहतदेहा गोदुहो जर्जराङ्गाः ।
सहपशुसुतदाराश्छादयन्तः स्वमूर्ध्नो
शिशुगणमभि कृष्णं कृच्छ्रभीतेरगच्छन् ॥ ९ ॥
व्रजमव भवदेकत्राणकं कृष्ण कृष्ण
द्रुतमिति स निजानामार्तवाचा विचार्य ।
कुपितकुलिशपाणिप्रापितं वर्षमीशः
प्रतिकृतिमिह रागादात्मयोगादवागात् ॥ १० ॥
भयभरविनिमीलच्चक्षुषो वीक्ष्य तत्तद्-
विपदपसदमृत्यून् गोदुहः स्वैकनाथान् ।
मिषति दिविषदीशे मङ्क्षु गोवर्धनाद्रिं
शिशुरलिमिव सार्धं विस्मयेनोद्दधार ॥ ११ ॥
करतलभुवि बिभ्रत् तं महीध्रं शिलीन्ध्रं
शिशुरिव निजबन्धून् बिभ्यतस्तान् बभाषे ।
प्रविशत गिरिगर्तं मा बिभीताद्रिपाता-
दपि वहति धुरं वः क्वैव भीतिर्मयीति ॥ १२ ॥
तदनु भगवदाज्ञावर्तिनो गोधनैः स्वैः
सह सपरिकरास्ते दारभृत्यादिभिश्च ।
विविशुरचलगर्तं गोदुहः सावकाशं
गिरिमपि धरति स्म श्रीपतिः सप्त रात्रीः ॥ १३ ॥
व्रजमथ गिरिगर्ते तत्करे शैलमिन्द्रो
हतकृतिरवगच्छन् वारयामास मेघान् ।
गतवति घनवर्षे सातपेऽभ्रेऽप्यनभ्रे
करतलधृतभूभृत्कन्दुकस्तानवोचत् ॥ १४ ॥
जहित भयमितोऽद्रेर्गर्ततो निःसरन्तः
स्थविरतरुणबाला वित्त वृष्टिं विनष्टाम् ।

निजसुकृतवशेन प्राप्य गोचाकलचा-
दिकमिति हरिणोक्ता निर्भया निर्ययुस्ते ॥ १५ ॥
स गिरिमथ तथैवातिष्ठिपद्देवतानां
सदसि वियति पश्यत्यस्तवास्तोऽप्यतिश्री: ।
मुमुचुरसकृदीशास्ते दृशां पुष्पवृष्टिं
गगनविगलदुस्रस्थूलमालासदृक्षाम् ॥ १६ ॥
व्रजवसतिमिरेत्य प्रेमत: पर्यरम्भि
प्रभुरभयकृदेवं देवदेवादिदेव: ।
विहितबहुविधाशीर्वादवादित्रघोषै-
र्दधिकुसुमफलाद्यैर्गोपदारैरपूजि ॥ १७ ॥
सुतमथ परिरभ्य ब्रह्म शर्वाद्यलभ्यं
सहनिजपरिवारो नन्दगोपो ननन्द ।
चरितमिति विचित्रं चैतदीयं विचिन्त्य
व्रजपतिमनु गोपा विस्मिताश्चेत्यवोचन् ॥ १८ ॥
हृदि न भवति कस्य प्रेक्षमाणस्य शङ्का
क्वचन महदपूर्वं यन्न दृष्टं श्रुतं वा ।
अतिमनुजचरित्रो नार्हति ग्राम्यगेहे
जननमिह जुगुप्साभाजने बालकृष्ण: ॥ १९ ॥
धरभरणकृतोऽस्य प्रायशोऽभून्न भारो
यदयममत सप्ताहानि हस्तेऽगुमद्रिम् ।
खलु न वयममुष्य क्वापि तत्त्वं प्रकृत्या
परिचिनुम इदानीं सप्तवर्षस्य किंचित् ॥ २० ॥
स्मरथ तदयमभो निर्दश: पूतनाया:
सममसुभिरभीक्ष्णं पास्यति[1] स्तन्यमादौ ।
यदपि च विपरीतं मासि पूर्वे भविष्य-
त्युरु शकटममुष्य प्रेयमाणं पदेन ॥ २१ ॥
किमिदमनतिचित्रं यच्च वात्यासुरेण
प्रति दिवमपि नीतस्तं गलेऽहन् निगृह्य ।
यमित इह जनन्योलूखलं जातु कर्ष-
न्नगमयुगमभाङ्क्षीत् साक्षिणस्तत्र बाला: ॥ २२ ॥
गलविगलितमन्तुं भूय एव प्रवृत्तं
बकमपि तृणरीत्यापाटयद्वत्सपाल: ।

१ पास्यत्यादावभिज्ञावचन इति भूते लृट् ।

असुरमपि च वत्सव्याजमास्थत् कपित्थे
सपदि सफलसंघं भुव्यथापीपतत् तम् ॥ २३ ॥
नट इव कृतवेषो बर्हधातुप्रसूनै:
क्वचन सबलबाल: प्राप्य वालेयदैत्यम् ।
अनुगसहितमत्रागत्य सार्धं भयेन
व्यधित भुवि सुलम्भं तालखण्डस्य यानम् ॥ २४ ॥
अग्रमजगरकुक्षेर्वत्सपालानपासी-
द्दवदहनपरीतान् क्वापि मुञ्जाटवीषु ।
विषमपि यमुनाया नागमस्यन्नहार्षी-
दिह तटभुवि सुप्तान् दावतश्चावति स्म ॥ २५ ॥
इति विविधविचित्रैरेष विष्णो: किमंश:
स्वयमयमथवाभूदित्यलं तर्कयाम: ।
इह तव तनये यत् प्रेमबन्धु: सखा न:
प्रभुरयमिति नित्यं वर्धते तत् किमेतत् ॥ २६ ॥
कुलकम् ।
अथ गिरमिति तेषां शुश्रुवानाशु नन्दो-
ऽवददिति न विचित्रं मन्यतामत्र गोपै: ।
अचकथदिह गर्गस्तद्गुणान् भाविनो मे
नृजनुरपि सम: स्यादेष दैत्यद्रुहेति ॥ २७ ॥
श्रुतिपथमिति नन्दस्याननाद्गर्गवाचं
व्यरचि किल नयद्भिर्वल्लवैरस्य पूजा ।
अवनमथ निजानामाकलय्याद्रिधृत्या
सुरभिरपि महेन्द्रस्तं स्वलोकादगाताम् ॥ २८ ॥
अथ मिथ उपगम्य ब्रह्म पूर्णं प्रणम्य
स्वविहितमपहन्तुं मन्तुमाद्यां च मन्तुम् ।
मुकुटमणिगणार्चिर्दीपनीराजिताङ्घ्रिं
निजमनुजमभीदं जम्भजिद्व्याजहार ॥ २९ ॥
परमिह तव तत्त्वं शुद्धसत्त्वं न वेद
प्रबलतरतमोऽन्ध: शान्तमद्वैतदीपम् ।
प्रकृतिसरजसं मामीश कीशस्य चेष्टां
कृतिमिति कृतवन्तं पाहि दर्पापहारिन् ॥ ३० ॥
तव कृतिमपहन्तुं किं न बर्हिर्मुखानां
प्रथममपरमेवाभूदिदानीं विभुत्वम् ।

वदनमदनशीलं केवलं यस्य न त्वां
जपति पशुवदस्य प्रायशो नायशोऽपि ॥ ३१ ॥

त्रिजगदवनजाग्रद्रूप देवाधिदेव
त्रिदिवपरिबृढत्वप्रापितप्रौढिभाजः ।
मम बहुमपि मन्तुं क्षन्तुमर्हस्यनन्त
प्रभुरनुचितमागस्कारिणो हि क्षिणोति ॥ ३२ ॥

अपनयति भवान् यद्दर्पमागस्कृतोऽसौ
समसकरुणवृत्तेः प्रत्युतानुग्रहस्ते ।
यदयमपि मदं स्वं राजसं तामसं वा
सपदि विजहदुच्चैरच्युताङ्घ्रिं तवैति ॥ ३३ ॥

त्रिदशभुवनलब्धस्तब्धबुद्धेर्ममेदृक्
क्वचिदपि न कदाचिन्मा स्म भूच्चित्तवृत्तिः ।
प्रबलसकलभूभृद्दम्भसंभूतदैत्य-
प्रवरभरनमद्भूभारहारिन् नमस्ते ॥ ३४ ॥

कुलकम् ।

हरिरिति मघवन्तं लाघवं तद् ब्रुवन्तं
निजमथच नुवन्तं सस्मितास्यो बभाषे ।
त्रिदिवविपुलसंपत्सर्पदुद्दामदर्प-
क्रतुरिह विहतस्ते मामनुस्मर्तुमिन्द्र ॥ ३५ ॥

विपुलतरमदानां संततैश्वर्यभाजा-
महमिह हृतसंपद्धाहितानुग्रहोऽस्मि ।
कुरु निजमधिकारं शासनं संस्मरन् मे
विदलितमदमस्तु स्वस्ति वास्तोष्पते ते ॥ ३६ ॥

युग्मम् ।

यदुकुलभृति कृष्णे जिष्णुमाभाषमाणे
सुरभिरवददीशं कृष्णगोपालमायम् ।
प्रभुरसि परमं नो दैवतं नाथ इन्द्र-
स्त्वदपरमुरुदैवं नैव विद्मः सदेति ॥ ३७ ॥

इह कलयसि धातुः शासनादागतां मां
स्वकृतिभिरभिषिच्य त्वां गवेन्द्रं विधातुम् ।
इति निजपयसा तं देवगव्यभ्यषिञ्चत्
करिवरकरनीतैर्गाङ्गतोयैस्तथेन्द्रः ॥ ३८ ॥

समुपगतमहर्षिस्तोमहर्षोच्चघोष-
प्रकृतविधिविशेषैः सर्ग्यजुःसाममन्त्रैः ।
सह सुरमुनिमुख्यैरुद्यतातोद्यवाद्यै-
र्व्यरचि मघवतोच्चैरस्य गोविन्दनाम ॥ ३९ ॥

इति हरिमभिषिच्याधीश्वरस्तत्र शच्या-
स्त्रिदिवकुसुमवृष्ट्यानम्य भूयः प्रसाद्य ।
सुरसुरभिसमेतः प्रापदिन्द्रः स्वलोकं
व्रजमथ भगवानप्याजगामान्वितः स्वैः ॥ ४० ॥

रविदुहितरि मज्जन् द्वादशीपारणार्थी
किल कुहचिदनेहस्यासुरीमाप्य वेलाम् ।
गृहमथ वरुणस्यानायि नन्दोऽनुगेन
प्रभुरहह न कश्चित् क्वापि कालातिवृत्तौ ॥ ४१ ॥

तदनु पयसि नन्दं क्रन्दते द्रागदृष्ट्वा
निजपशुपजनाय त्रिप्रदत्ताभयोऽम्भः ।
हरिरविशदथैनं प्रेक्ष्य तुष्टः प्रचेता
रचितचरणपूजः सम्यगूचे प्रणम्य ॥ ४२ ॥

पतिरहमिह लोके यादसां त्वन्निदेशा-
दजनिषि चरितार्थः श्रीमतो दर्शनेन ।
फलमविकलमापं जन्मनो यन्मनोज्ञं
पदनलिनयुगं तेऽदर्शमीशार्चितं च ॥ ४३ ॥

क्व नु सुखमिह कालव्यालदष्टस्य जन्तो-
र्भवति यदतिवेलक्ष्वेलमूर्च्छातुरस्य ।
क्वचन च भवति त्वन्नामवर्णानुपूर्वी-
कथनमुदितभक्तेः कस्यचित् सिद्धमन्त्रः ॥ ४४ ॥

तव पितरमबुद्ध्वानीतवान् किंकरो यत्
तमधिकमपराधं मेऽर्हसि क्षन्तुमर्हन् ।
नय नलिननिभाक्षिद्वन्द्व गोविन्द नन्दं
निजगृहमचिरेण प्रीणयन् स्वान् नमस्ते ॥ ४५ ॥

कुलकम् ।

इति वरुणकृतानुच्छन्दनो नन्दमीशः
सपदि गृहमनैषीदीषदुन्मज्ज्य नीरात् ।
विदितसलिलराजस्तोत्रपूजास्ततस्ते
कृतमुद इह कृष्णं बन्धवोऽस्याभ्यनन्दन् ॥ ४६ ॥

इति विहितविचित्रादुत्सुकास्तत्र गोपा
विभुमथ नतवक्त्राश्चित्त एवाभिलेषुः ।
प्रभुरयमकृतार्थान् गोदुहो ब्रह्म पूर्णं
क्वचन निजनिवासं नः कदा नेष्यतीति ॥ ४७ ॥

सकलधरणिराज्ये रङ्कस्याभिलाष:
खलु मनसि समीहा तादृशी वल्लवानाम् ।
तनुषु ननु कथंचिद्भ्राम्यतोच्चावचासु
क्व नु बत मनुजेन स्वीयकर्माध्यगामि ॥ ४८ ॥
मदविरतविचारक्षीणकर्माण एते
तदधिकृतिरमोषामस्ति तत्रेत्यवेत्य ।
निजगणमभिमज्जद्ब्रह्मधाम्नि ह्रदेऽज:
सकलमकलि चित्रं गान्दिनीयेन यत्र ॥ ४९ ॥
प्रकृतिपरमतो यत् त्यक्तमायागुणादि-
व्यतिकरमवयन्ति क्वापि युक्ता: समाधौ ।
तदमलतरमात्मज्योतिरानन्दपूर्णं
ददृशुरजरमेकं ब्रह्म ते तत्र तूर्णम् ॥ ५० ॥
उपनिषदुपगीतं शङ्खचक्रादिहस्तं
तमपि मनुजलीलाविग्रहं वीक्ष्य तत्र ।
पुनरपि पशुपाला उत्थिता मङ्क्षु मङ्क्त्वा
किमिदमिति चिरं ते विस्मिता नन्दमुख्या: ॥ ५१ ॥
इति स्वानां वाञ्छां सफलयति सद्यो भगवति
व्रजस्त्रीभि: श्रीभि: सह विहरणाय स्पृहयति ।
हरेरिष्टं कुर्वन्निव दिवसनिर्वासनमिषा-
दगादस्तक्षोणीधरशिखरसीमां दिनकर: ॥ ५२ ॥

इति श्रीमल्लक्ष्मणभट्टात्मजश्रीरामचन्द्रभट्टविरचिते गोपाललीलाख्ये महाकाव्ये ब्रह्मलोकदर्शनोत्सवो नामाष्टम: सर्ग: ॥ ८ ॥ :: :: ॥

## ॥ अथ विद्धशालभञ्जिकाख्यनाटिकाया: ॥

॥ तृतीयोऽङ्क: ॥

तत: प्रविशति चेटी ।

चेटी । परिक्रम्य । को विअ कालो वट्टदि पिअसहीए विअक्खणाए दिट्ठाए उक्कंठाभरेण अ ससिअरकरंबिज्जमाणं विअ करिदंतमुसलं फुट्टणभूइट्ठं वट्टदि मे हिअअं, ता कहिं खु तां प्पेक्खिस्सं । पुरोवलोक्य । कधं एसा पिअसही किंपि मंतअंती आअच्छदि * ।

* कोऽपि च कालो वर्तते प्रियसख्या विचक्षणाया दृष्टाया उत्कण्ठाभरेण च शशिकरकरंब्यमानमि[illegible] करिदन्तमुसलं स्फुटनभूयिष्टं वर्तते मे हृदयं, तत् कुत्र खलु तां प्रेक्षिष्ये । कथमेषा प्रियसखी किमपि मन्त्रयन्ती आगच्छति ।

तत: प्रविशति यथा निर्दिष्टा द्वितीया चेटी ।

चेटी । स्वगतम् । अहो महामंतिणो पहुकज्जे णिरदिसआ भत्ती * ।

प्रथमा । कधं महाभाअधेअजणकज्जसिद्धी विअ चिंतिदोवणदा पिअसही । स्वगतम् । ता पच्छा भविअ णअणाइं स्से पिहाइस्सं † । तथा करोति ।

द्वितीया । पिअसहीए सुलक्खणाए विअ करप्फंसो । प्रकाशम् । सहि सुलक्खणे जाणिदासि ता मुंच णअणाइं ‡ ।

सुलक्षणा । नयने परित्यज्य सप्रणयकोपम् । हला विअक्खणे एद्दहमेत्ते वि सलिलसित्तसणगुणगंठिगाढे वि सिणेहे कधं उब्भिण्णसिहा खंजरीटी विअ अदंसणा चिट्ठसि ता एसा दे कुविस्सं § ।

विचक्षणा । स प्रश्रयम् । पिअसहि सुलक्खणे मा कुप्प महामंतिभागुराअणणिओओ एत्थ अवरज्झदि ण उण अहं ‖ ।

सुल । सोपहासम् । को तुह्माहिंतो अण्णो छगुण्णअनिउणो ¶ ।

विच । अह्मारिसजणजोग्गं महिलाछगुण्णअं खु एदं ** ।

सुल । महिलाछगुण्णएण जइ महिलाअणस्स अदंसणं ता अह्मारिसीओ अक्खिहिं वि ण दीसंति †† ।

विच । अध दे कीदिसं महिलाछगुण्णअं ‡‡ ।

सुल । तुमं भण दाव उण अहं भणिस्सं, प्पठमं सह आरमंजरीओ उब्भिज्जंति पच्छा तांचुंबिणी कलअठी कंठमुद्दं सिठिलीकरेदि §§ ।

विच । ता सुण, अहमेकदा भअवदा भागुराअणेण सबहुमाणं भणिदा, जधा, विअक्खणे तुए अह्माणं राअरहस्से साहज्जं कादव्वं त्ति ‖‖ ।

* अहो महामन्त्रिण: प्रभुकार्ये निरतिशया भक्ति: ।

† कथं महाभागधेयजनकार्यसिद्धिरिव चिन्तितोपनता प्रियसखी तत्पश्चाद्भूत्वा नयनान्यस्या: पिधास्ये ।

‡ प्रियसख्या: सुलक्षणाया इव करस्पर्श: । सखि सुलक्षणे ज्ञातासि तन्मुञ्च नयनानि ।

§ हला विचक्षणे एतावन्मात्रेऽपि सलिलसिक्तशणगुणग्रन्थिगाढेऽपि स्नेहे कथमुद्भिन्नशिखाखञ्जरीटीवादर्शना तिष्ठसि । तदेषा ते कुपिष्ये ।

‖ प्रियसखि सुलक्षणे मा कुप्य महामन्त्रिभागुरायणनियोगोऽत्रापराध्यति न पुनरहम् ।

¶ को युष्मत्तोऽन्य: षाड्गुण्यनिपुण: ।

** अस्मादृशजनयोग्यं महिलाषाड्गुण्यं खल्वेतत् ।

†† महिलाषाड्गुण्येन यदि महिला जनस्यादर्शनं तत अस्मादृश्योऽक्षिभिरपि न दृश्यन्ते ।

‡‡ अथ ते कीदृशं महिलाषाड्गुण्यम् ।

§§ त्वं भण तावत् पुनरहं भणिष्ये, प्रथमं सहकारमञ्जर्य उद्भिद्यन्ते पश्चात्तच्चुम्बिनी कलकण्ठी कण्ठमुद्रां शिथिलीकरोति ।

‖‖ तत् शृणु, अहमेकदा भगवता भागुरायणेन सबहुमानं भणिता, यथा, विचक्षणे त्वयाऽस्माकं राजरहस्ये साहाय्यं कर्तव्यमिति ।

सुल । अहो दे मतिविहवो जेण महामंती वि एदं संभावेदि, कावण्णना बकुलावली सुरहि गंधुग्गारत्ति * ।

विच । तदो विणओवणदाए मए तधत्ति पडिवण्णं, कधिदं अ मे तेण, जधा, एसो जो मिअंकवम्मा सा मिअंकावलीत्ति † ।

सुल । तदोतदो ‡ ।

विच । तदो तं परिणीअ महाराअसिरिविज्जाहरमल्लदेवेण महिअलचक्कवट्टिणा होदव्व, ता तुए तस्स कदाचिद् किदभवणभित्तिसंचारे वासहरे दंसिदेव्व, जेण देवस्स सिविणआवगमो होदि, कज्जंतरट्ठाणाइं दे हरदासो कधइस्सदि, एदस्सिं महाराअकज्जरहस्से तुमं तीए वि पिअसही तत्थ राअकज्जसाहज्ज विअ अत्थीअसि, ण हु सोवाणवंतिमंतरेण वलहीए समारोहो, मए तदो हरदासकधिदकज्जाणुसारेण सा सविस्संभं भणिदा, जधा, सहि मिअंकावलि इह वासहरे मकरद्धओ ओदरदि, तं अ दट्ठुण कंठाहिकट्ठिदेण हारउसुमदामेण तुए अज्जिदव्वो, जेण दे एदादिसो कंतो होदि, तए वि तह अब्भुवअदं, किदं अ, उण हिंदोलए दंसिदा, केलिकैलासभवणे सुट्ठिदप्फलिहभित्तिसु अत्तणो चित्तं लेहाविदा, त्थंभगब्भसंचारेण तं तं भणाइदा पढाविदा अ § ।

सुल । अध तं विविहेहिं विलासेहिं पक्खंतेण महाराएण किं पडिवण्णं ‖ ।

विच । जं केलिअरिणी चाडुकम्मछलिदो रणकरी पडिवज्जेदि, तदो तहणकोफलिलकल्लिक्कोल्लिदद्दविडसामलीदंतपंतिविसदासु मुद्धससिजामिणीसु असमंजस विप्पलवदि,

* अहो ते मतिविभवो येन महामन्त्र्यपि एतत्संभावयति । कावर्णानाबकुलावली सुरभिगन्धोद्गारेति ।

† ततो विनयोपनतया तथेति प्रतिपन्नं, कथितं च मे तेन, यथा, एष यो मृगाङ्कवर्मा सा मृगाङ्कावलीति ।

‡ ततस्ततः ।

§ ततस्तां परिणीय महाराजश्रीविद्याधरमल्लदेवेन महीतलचक्रवर्तिना भवितव्य तत्त्वया तस्य कदाचित्कृतभवनभित्तिगर्भसंचारे वासगृहे सा दर्शयितव्या, येन देवस्य स्वप्नावगमो भवति, कार्यान्तरस्थानानि ते हरदासः कथयिष्यति, एतस्मिन्महाराजकार्यरहस्ये त्वं तस्या अपि प्रियसखी तत्र राजकार्यसाहाय्यमिवात्यर्थ्यसे, न खलु सोपानपङ्क्तिमन्तरेण वलभ्याः समारोहः । मया ततो हरदासकथितकार्यानुसारेण सा सविस्रम्भं भणिता, यथा सखि मृगाङ्कावलि इह वासगृहे मकरध्वजोऽवतरति तं च दृष्ट्वा कण्ठाकृष्टेन हारकुसुमदाम्ना त्वयार्जयितव्य । येन ते एतादृशः कान्तो भवति, तयापि तथाऽभ्युपगतम् । कृतं च । पुनर्हिन्दोलायां दर्शिता केलिकैलासभवने सुस्थितस्फटिकभित्तिषु आत्मनश्चित्रं लेखिता स्तम्भगर्भसंचारेण तत्तद् भणायिता पाठिता च ।

‖ अथ तां विविधैर्विलासैः प्रेक्षता महाराजेन किं प्रतिपन्नम् ।

जधा तं * संस्कृतमाश्रित्य ।

श्यामां † श्यामलिमानमानयतभोः
सान्द्रैर्मषीकूर्चकै-
र्मन्त्रं तन्त्रमथ प्रयुज्य हरत
श्वेतोत्पलानां स्मितम् ।
चन्द्रं चूर्णयत क्षणाच्च कणशः
कृत्वा शिलापट्टके
येन द्रष्टुमहं क्षमे दशदिश-
स्तद्वक्त्रमुद्राङ्किताः ॥ १ ॥

सुल । तीए उण का अवत्था वट्टदि ‡ ।

विच । संस्कृतमेवाश्रित्य ।

सौधादुद्विजते त्यजत्युपवनं
द्वेष्टि प्रभामैन्दवीं
द्वारात्त्रस्यति चित्रकेलिसदसो
वेषं विषं मन्यते ।
आस्ते केवलमब्जिनीकिसलय-
प्रस्तारशय्यातले
संकल्पोपनमतदाकृतिरसा-
यत्तेन चित्तेन सा ॥ २ ॥

संपदं उण तुमं कधेहि कीदिसं तं महिलाकुणअं § ।

सुल । सुणु जादिसं, एक्कदाहं महाराएण कण्णे सप्पसादमादिट्ठा, जधा ण तुए भिण्णरहस्सा देवी कादव्वत्ति ‖ ।

विच । किं विअ तं ¶ ।

सुल । तं जधा, अलिअविवाहविलक्खो चाराअणो देवी धात्तेइअं वि प्पदारिदुमिच्छदि । ता दिणावसाणसमए तरुणीरंधअधआरे केसरतरुमारुहिअ प्पमदुज्जाणमज्झगामिणी तए मेहला साणुणासिअं भणिदव्वा, जधा, अयि मेहले इह

* यत्कोलिकारिणीचाटुकर्मच्छलितोऽरण्यकरी प्रतिपद्यते, ततस्तरुणपूगत्वग्घर्षितद्राविडश्यामलीदन्तपङ्क्तिविशदा सुमुग्धशशियामिनीषु असमञ्जसं विप्रलपति, तथा तत् ।

† श्यामामित्यत्र ज्यौत्स्नीमिति पाठ्यमिति काव्यप्रकाशकृतः ।

‡ तस्याः पुनः काऽवस्था वर्तते ।

§ सांप्रतं पुनस्त्वं कथय कीदृशं तन्महिलाकाकुणम् ।

‖ शृणु यादृशम् । एकदाहं महाराजेन कर्णे सप्रसादमादिष्टा, यथा, न त्वया भिन्नरहस्यादेवी कर्तव्येति ।

¶ किमिव तत् ।

वेसाहपुण्णिमापदोसे ज्जेव्व तुए मरिदव्वंत्ति भणिदा अ सा * ।

विच । तदोतदो † ।

सुल । तदो तीए सज्झसवसवेविदंगीए कथं कथं पि तदो हिमुहं भविअ किदणिबिडञ्जलि सपुडाए भणिदं, भअवदि असरीरिणि दिव्ववाणि मं अणुकपंतीए जधा मरणं तुए जाणिदं जीविदं पि मे जाण ‡।

विच । तदोतदो § ।

सुल । तदो तधा जेव्वं कहद, जइ गंधव्ववेअविअक्खणं बह्मणं गुरुणा सक्कारेण अहिणंदिअ पाएसु वलती जंघंतरमज्झदुआरेण संचरदि तदा जीविदलंभो त्ति ‖ ।

विच । अहो दे विअक्खणत्तणं जदो मुणिणो वि एवं सुमरंति, पादाहिं तो बह्मणस्स पवित्तत्तणं त्ति ।

सुल । विभाव्य । अहो से किं पि कवडणाडअकइत्तणं बह्मणस्स ¶ ।

विच । तदोतदो ** ।

सुल । तदो तं सुणिअ मेहलाए अंसुजलगलज्जलाइं णअणाइं उणउत्तमुप्फुसतीए मह पुरदो जेव्व महाराअसमीववट्टिनीए देवीए तह ज्जेव्व विणत्तं देवेण वि देवी मण्णुमवहरंतेण चारायणचरिदं अ णिव्वाहंतेण भणिदा, जधा, सुंदरि मा विमणा होहि, जादो गंधव्ववेअविअक्खणो साहीणो ज्जेव्व बह्मणो ता किं त्ति अंसुकणकरंबिअबिंबाहरा वट्टसि त्ति संठाविदा देवी, देवीए अ अहं अज्ज सापुण्णिम त्ति भणिअ पूआसक्कारं सज्जीकादुं पेसिदह्मि †† ।

* तद्यथा, अलीकविवाहविलक्षचारायणो देवीं धात्रेयीमपि प्रतारयितुमिच्छति । तद्दिनावसानसमये नीरन्ध्रान्धकारे केसरतरुमारुह्य प्रमदोद्यानमध्यगामिनी त्वया मेखला सानुनासिकं भणितव्या, यथा, अयि मेखले इह वैशाखपूर्णिमाप्रदोष एव त्वया मर्तव्यमिति, भणिता च सा।

† ततस्ततः ।

‡ ततस्तयासाध्वसवशवेपिताङ्गा कथंकथमपि ततोऽभिमुखं भूत्वा कृतनिबिडाञ्जलिसंपुटया भणितम्, भगवति अशरीरिणि दिव्यवाणि मामनुकम्पयन्त्या यथा मरणं त्वया ज्ञातं जीवितमपि मे जानीहि।

§ ततस्ततः ।

‖ ततस्तथैव कथितं, "सानुनासिकम्" यदि गान्धर्ववेदविचक्षणं ब्राह्मणं गुरुणा सत्कारेणाभिनन्द्य पादयोः पतन्ती जङ्घान्तरमध्यद्वारेण संचरति तदा जीवितलम्भ इति ।

¶ अहो ते विचक्षणत्वं यतो मुनयोऽप्येवं स्मरन्ति, पादाभ्यां ब्राह्मणस्य पवित्रत्वमिति ।

** अहोऽस्य किमपि कपटनाटककवित्वं ब्राह्मणस्य ।

†† ततस्ततः ।

विच । ता एहि जधाणिद्दिट्ठमणुचिट्ठह्म * इति निष्क्रान्ते । प्रवेशकः † ।

॥ शेष उत्तराङ्के ॥

* ततस्तच्छ्रुत्वा मेखलाया अश्रुजलगलज्जले नयने पुनरुक्तमुन्प्रोञ्छन्त्या मम पुरत एव महाराजसमीपवर्तिन्या देव्या तथैव विज्ञप्तं देवेनापि देवी मन्युमपहरता चारायणचरितं च निर्वाहयता भणिता, यथा, सुन्दरि मा विमना भव, यतो गान्धर्ववेदविचक्षणः स्वाधीन एव ब्राह्मणस्तत्किमित्यश्रुकणकरम्बितबिम्बाधरा वर्तसे इति संस्थापिता देवी, देव्या चाहं अद्य सा पूर्णिमेति भणित्वा पूजासत्कारं सज्जीकर्तुं प्रेषिताऽस्मि ।

† तदेहि यथानिर्दिष्टमनुतिष्ठावः ।

# THE APHORISMS

OF THE

# YOGA PHILOSOPHY

OF

PATAÑJALI.

(*Continued from page 152.*)

[1] He mentions the method of that kind by which, when meditation has been consolidated by the non-production of other thoughts, any particular kind of ascetic attains excellence in meditation.

**प्रसङ्ख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः ॥ २८ ॥**

Aph. 28 If the ascetic is not desirous of fruit [or is not merit] even when the perfect knowledge has been attained, [then] the meditation, [technically called] Dharma-Megha, cloud of virtue, takes place from the entire discriminative knowledge

[2] "Perfect knowledge" means, knowing the nature differing from each other of all elements in whatever order they exist, even, when this knowledge has taken place if the ascetic has not the desire for the fruit, or is not inactive, then, by means of the discriminative knowledge being entirely consolidated on non-production of other thoughts, the meditation, that is called "Dharma-Megha" cloud of virtue is attained. It is called the cloud of virtue, because it irrigates or waters the highest virtue, which is called "aśukla-krishna" neither white nor black, and is the provider of the chief aim of the soul.

१ एवम्प्रत्ययान्तरानुदये स्थिरीभूते समाधौ यादृशस्य योगिनः प्रकर्षसमाधिप्राप्तिर्भवति तथाविधमुपायमाह ॥

२ प्रसङ्ख्यानं यावतां तत्त्वानां यथाक्रमं व्यवस्थितानाम्परस्परविलक्षणस्वरूपपरिभावनं तस्मिन् सत्यप्यकुसीदस्य फलमलिप्सोः प्रत्ययान्तराणामनुदये सर्वप्रकारं विवेकख्यातेः परिपोषाद्धर्ममेघः समाधिर्भवति । प्रकृष्टमशुक्लकृष्णम्परमपुरुषार्थसाधकं मेहति सिञ्चतीति धर्ममेघः ॥

[1] What results from that? To this he replies.

**ततः क्लेशकर्म्मनिवृत्तिः ॥ २९ ॥**

Aph. 29. Therefrom takes place removal of the afflictions and works.

[2] "Therefrom" from the meditation called "Dharma-Megha," springs up the removal of the afflictions, from Ignorance up to the tenacity [of mundane existence] and of the works of three kinds, differing as white &c. [*i. e.*, white, black, and neither white nor black] by means of the extirpation of their respective antecedent causes from the arising of the knowledge

[3] What takes place after these have been removed? To this it is replied.

**तदा सर्वावरणमलापेतस्य ज्ञानस्यानन्त्याज्ज्ञेयमल्पम् ॥ ३० ॥**

Aph 30. Then from infiniteness of the knowledge free from the impurity all of its obscurations, the knowable appears small.

[4] "Then" after the removal of the afflictions and works The knowable becomes small, *i e* the object of little estimation or calculation, because knowlege, freed from these, that is void of the obscurations, *i. e.* afflictions [Ignorance &c] which obscure the mind, becomes infinite, unlimited, like the sky when the clouds have departed That is the ascetic knows all that is knowable without any trouble.

[5] He states what takes place after this:

**ततः कृतार्थानाम्परिणामक्रमसमाप्तिर्गुणानाम् ॥ ३१ ॥**

Aph. 31. Thereupon takes place the termination of the succession of the modification of the qualities which have done what was to be done [or which have realised their end].

[6] "Thereupon" after this takes place the termination, *i. e.* complete cessation, *i e* non-production of the succession, to be described hereafter, of modification, in succession and regression up to the attainment of the aim of the soul, characterised by their relation of existing [qualities] as primary and secondary, of the qualities, *i. e.* "Purity" "Passion" and "Darkness" which have done what was to be done, *i. e.* which have effected the soul's aim, characterised as experience and emancipation

[1] He now defines the order above mentioned.

**क्षणप्रतियोगी परिणामापरान्तनिर्ग्राह्यः क्रमः ॥ ३२ ॥**

Aph. 32 The order is counterpart of the moment, perceptible in the latter end of the modification.

[2] "Moment" is a very small portion of time; the counterpart of that, means, perceptible in the latter end of the modification [of time, or moment] differing from one [preceding] moment. That is whatever is perceived by calculative cognition after the moments have been perceived, the same thing is called the order of moments. It can not be perceived if the moments are not perceived.

[3] He now states the general nature of "Isolation"—the result.

**पुरुषार्थशून्यानाम्प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति ॥ ३३ ॥**

Aph. 33. The re-absorption of those [qualities] void of the aim of the soul, or the abiding of the power of intelligence in its own nature, is Isolation.

The re-absorption is the regressive modification of the qualities which have consummated the ends of the soul characterised as fruition and emancipation. On the consummation thereof there is non-production of modification, in other words, the state of the intellectual faculty, on the cessation of identity [with objects], abiding in its own proper nature, is called "Isolation."

G. D.

---

१ तस्माद्धर्म्ममेघात्किम्भवतीत्याह ॥

२ ततो धर्म्ममेघात्क्लेशानामविद्यादीनामभिनिवेशान्तानाङ्कर्म्मणाञ्च शुक्लादिभेदेन त्रिविधानाञ्ज्ञानोदयात्पूर्वपूर्वकारणनिवृत्त्या निवृत्तिर्भवतीत्यर्थः ॥

३ निवृत्तेषु तेषु किम्भवतीत्याह ॥

४ आव्रियते चित्तमेभिरित्यावरणानि क्लेशास्तेभ्यो ऽपेतस्य तद्विरहितस्य ज्ञानस्य गतघनगगननिभस्यानन्त्यादनवच्छेदाज्ज्ञेयमल्पमल्पगणनास्पदम्भवति । अक्लेशेनैव सर्वं जानातीत्यर्थः ॥

५ ततः किमित्याह ॥

६ कृतो निष्पादितो भोगापवर्गलक्षणः पुरुषार्थः प्रयोजनं यैस्ते कृतार्था गुणाः सत्त्वरजस्तमांसि तेषाम्परिणाम आपुरुषार्थसमाप्तेरानुलोम्येन प्रातिलोम्येन चाङ्गाङ्गिभावस्थितिलक्षणस्तस्य यो ऽसौ क्रमो वक्ष्यमाणस्तस्य परिसमाप्तिरपुनरुद्भव इत्यर्थः ॥

१ क्रमस्योक्तस्य लक्षणमाह ॥

२ क्षणो ऽल्पीयान् कालस्तस्य यो ऽसौ क्रम एकक्षणविलक्षणपरिणामापरान्तनिर्ग्राह्यो ऽनुभूतेषु क्षणेषु पश्चात् सङ्कलनबुद्ध्या यो गृह्यते स क्षणानाङ्क्रम उच्यते । नह्यननुभूतेषु क्षणेषु क्रमः परिज्ञातुं शक्यः ॥

३ इदानीम्फलभूतस्य कैवल्यस्यासाधारणं स्वरूपमाह ॥

४ समाप्तभोगापवर्गलक्षणपुरुषार्थानाङ्गुणानां यः प्रतिप्रसवः प्रतिलोमपरिणामः समाप्तौ विकारानुद्भवो यद् वा चिच्छक्तेर्वृत्तिः सारूप्यनिवृत्तौ वृत्तिमात्रेऽवस्थानं तत्कैवल्यमुच्यते ॥ इति ॥

# THE VAIŚESHIKA APHORISMS OF KAŃÁDA.

## NINTH BOOK, FIRST DAILY LESSON.

*(Continued from page 101.)*

**नास्ति घटो गेहे इति सतो घटस्य गेहसंसर्गप्रतिषेधः ॥ १० ॥**

Aph 10 [The proposition] that there is not a water-pot in a house, is a negation of connection between an existent water-pot and the house.

[1] It may be urged that non-existence of a water-pot in any given house is not absolute non-existence, inasmuch as a water-pot exists sometimes there, nor is it antecedent or emergent non-existence, inasmuch as these reside only in material causes ; nor is it absolute non-existence characterised as production and destruction, since there is a contradiction between the absolute and that which comes into being and ceases to be ; nor is this the fourth kind of non-existence, general non-existence, inasmuch as that is repugnant to the threefold division. Accordingly this aphorism is stated. U.

**आत्मन्यात्ममनसोः संयोगविशेषादात्मप्रत्यक्षम् ॥ ११ ॥**

Aph. 11. Perception of the soul [results] from a particular conjunction between the soul and the internal organ in the soul.

[2] Common perception of existence and non-existence having been described, another section is commenced with the purpose of describing the perception of ascetics. The words cognition is produced, are to be supplied. Ascetics are of two kinds, those who have meditated on the internal organ, and are called united, and those who have not meditated on the internal organ, and are called disunited. Of these the united having reverently fixed their mind on the object to be presented to it, are engaged in meditation ; and in them cognition of soul, whether of their own soul or of that of others, is produced Perception of soul is that cognition wherein the soul is the percept or object of presentation. Although there is in ourselves and others occasionally a cognition of spirit, this being obscured by nescience has been declared to be virtually non-existent From a particular conjunction between the soul and the internal organ, means from that particular contiguity between the soul and the internal organ which is the mental state produced by union [with infinite spirit]. U

**तथा द्रव्यान्तरेषु प्रत्यक्षम् ॥ १२ ॥**

Aph 12. Likewise perception of other substances.

[1] It might be asked how, if the knowledge of those who are united be of the soul only, they can possess omniscience Accordingly the aphorism is stated. The words Cognition is produced are implied by the nature of the topic. There is, therefore, by means of the internal organ accompanied with the merit acquired by asceticism perception of other substances, that is, of the four atomic substances, of the internal organ, air, space, time, and ether. The term substance comprehends the qualities, actions, and universal entities residing in substance, the category of individuality, co-inherence, gravity, elasticity &c. residing in perception, and spontaneous activity, indiscriminative mental impressions, merit and demerit residing in the soul For the possession of the attribute produced by asceticism is equivalent to a perceptive apparatus ; otherwise omniscience would not be affirmed [of those ascetics who are said to be united.] U.

**असमाहितान्तःकरणा उपसंहृतसमाधयस्तेषाञ्च ॥ १३ ॥**

Aph. 13. In those also whose internal organ is not meditative, and in those whose meditation is consummated [there is perception of soul &c]

[2] Those whose internal organ is not meditative are those whose inner sense is destitute of meditation ; and they whose meditation is consummated, perfected, or

---

[1] ननु गेहे घटाभावो नात्यन्ताभावः कदाचित्तत्र घटसत्त्वात् नापि प्रागभावप्रध्वंसौ तयोः समवायिकारणमात्रवृत्तित्वात् नाप्युत्पादविनाशशीलोऽत्यन्ताभाव एव आत्यन्तिकश्चोत्पादविनाशशीलश्चेति विरोधात् नापि चतुर्थ एवायं संसर्गाभावः तस्य त्रैविध्यविभागव्याघातादित्यत आह ॥

[2] तदेवं भावाभावविषयकं लौकिकप्रत्यक्षं निरूप्य योगिप्रत्यक्षं निरूपयितुं प्रकरणान्तरमारभते । ज्ञानमुत्पद्यते इतिशेषः द्विविधास्तावद्योगिनः समाहितान्तःकरणा ये युक्ता इत्यभिधीयन्ते असमाहितान्तःकरणाश्च ये वियुक्ता इत्यभिधीयन्ते तत्र युक्ताः साक्षात्कर्तव्ये वस्तुन्यादरेण मनो निधाय निदिध्यासनवन्तः तेषामात्मनि स्वात्मनि परात्मनि च ज्ञानमुत्पद्यते आत्मप्रत्यक्षमिति आत्मा प्रत्यक्षः साक्षात्कारविषयो यत्र ज्ञाने तत्तथा यद्यप्यस्मदादीनामपि कदाचिदात्मज्ञानमस्ति तथाप्यविद्यातिरस्कृतत्वात् तदसत्कल्पमित्युक्तमात्ममनसोः सन्निकर्षविशेषादिति योगजधर्मानुगृहीत आत्ममनसोः सन्निकर्षो विशेषस्तस्मादित्यर्थः ॥

[1] तत् किमात्मन्येव युक्तानां ज्ञानं तत् कुतः सार्वज्ञ्यमित्यत आह । ज्ञानमुत्पद्यत इति प्रकरणायातम् तथेति योगजधर्मानुगृहीतेन मनसा द्रव्यान्तरेषु चतुर्ष्वणुषु मनसि वायुदिक्कालाकाशेषु द्रव्यपदेन तद्गतगुणकर्मसामान्यानां विशेषपदार्थस्य समवायस्य प्रत्यक्षगतस्यापि गुरुत्वस्थितिस्थापकादेरात्मगतस्यापि जीवनयोनियत्ननिर्विकल्पकभावनाधर्माधर्मादेः संग्रहः सामग्र्या योगजधर्मापेक्षस्य तुल्यत्वात् अन्यथा सार्वज्ञ्यमुक्तं न भवेत् ॥

[2] असमाहितान्तःकरणाः असमाहितं समाधिरहितम् अन्तःकरणं येषां ते तथा उपसंहृतः समापितः सफलीकृतः समाधिर्यैस्ते समाधेः फलंविविधाः सिद्धयस्ता येषामुत्पन्नास्तादृशाः ये युक्तास्तेषामपि आत्मनाम् अन्येषां द्रव्याणाञ्च प्रत्यक्षं भवतीति समुदितार्थः युञ्जानस्य प्रत्यक्षे ध्यानापेक्षा युक्तस्य प्रत्यक्षे तु ध्यानात्मकसमाध्यपेक्षा नास्तीति भावः ॥

rendered fruitful, in whom are produced the various perfections which are the fruit of meditation, attain perception of souls and other substances. Such is the sense to be gathered from the aphorism. In fine the ascetic who is in course of union requires contemplation, while he who is united has no need of meditation which is identical with contemplation. V.

**तत्समवायात् कर्मगुणेषु ॥ १४ ॥**

Aph. 14. [Perception] of actions and qualities [arises] from co-inherence therein.

[1] It might be urged that omniscience is not possible in an ascetic, for though there be perception of substances, there is no such cognition of qualities and actions. To this the reply is furnished. From co inherence therein, that is, in conjunction with the internal organ assisted by merit acquired by asceticism, there is produced in the ascetic, whether in course of union or united the perception of qualities and actions. For the efficacy of the merit acquired by asceticism is inconceivable. By the power thereof the sage Agastya drank up the ocean, Saurabhi asumed a multitude of bodies, and Vasishtha discovered the curse of Dilípa by Surabhi. The production therefore by merit acquired by asceticism of presentation of all the categories is not impossible. The term actions and qualities involves more, and universality &c. is to be understood. In a like manner we are to understand perception effected by supersensual cognition in the form of general implication, and implication of cognition. V.

**आत्मसमवायादात्मगुणेषु ॥ १५ ॥**

Aph. 15. [Perception] of the attributes of the soul [arises] from co-inherence in soul.

[2] This aphorism is stated inasmuch as it might be asked whether ascetics have not also the common perception. The conclusion gathered is that there arises in ascetics also the common perception of the attributes of the soul, that is, of pleasure and the other attributes which reside in the soul from co-inherence in soul, that is, from co-inherence in the soul conjoined with the internal organ, being accomplished by that as its instrument. V.

---

[1] ननु द्रव्याणां प्रत्यक्षसम्भवेऽपि सर्वज्ञत्वं योगिनोऽनुपपन्नमेव गुणादीनामज्ञानादत आह । तस्य योगजधर्मसहकृतमनःसंयोगस्य समवायात् युक्तयुञ्जानयोः कर्मसु गुणेषु च प्रत्यक्षमुत्पद्यते इत्यर्थः अचिन्त्योऽहि योगजधर्मप्रभावः यद्बलेनागस्त्यमुनिः पारावारं पपौ सौभरिश्च कायव्यूहं परिगृहीतवान् वशिष्ठश्च दिलीपस्य सुरभिशापं ज्ञातवान् तस्य योगजधर्मस्य पदार्थसार्थसाक्षात्कारसम्पादनं नासम्भावनीयमिति कर्मगुणेत्युपलक्षणं सामान्यादिकमपि बोध्यम् एवं सामान्यलक्षणाज्ञानलक्षणारूपालौकिकप्रत्यासत्तिजन्यं प्रत्यक्षमप्यूहनीयम् ॥

[2] तत् किं योगिनां लौकिकप्रत्यक्षं न भवतीत्यत आह । आत्मसमवायात् मनःसंयुक्तात्मसमवायात् आत्मगुणेषु स्वात्मवृत्तिसुखादिगुणेषु योगिनां लौकिकमपि प्रत्यक्षं भवति तत्सामग्र्या वृत्तत्वादिति समुदितनिष्कर्षः ॥

SECOND DAILY LESSON.

**अस्येदं कार्यं कारणं संयोगि विरोधि समवायि चेति लैङ्गिकम् ॥ १ ॥**

Aph 1. Inferential congnition is that one thing is the effect or cause of, conjunct with, repugnant to, or co-inherent in, another.

[1] In the preceding daily lesson the perception of ascetics and of non-ascetics was described according to its cause, its nature, and its characteristic. Assurance having been formerly divided into perceptive and inferential, the description of inferential assurance is here commenced. The term cognition [is to be supplied, being] the subject treated of. Inferential knowledge is that which is produced from a mark [or middle term]. The mark is that attribute of the subject [of the conclusion, or minor term] which is characterised by pervasion. Pervasion is said to exist therein The subject is that wherein there is non-existence of assurance repugnant to that which there is desire to prove. Such assurance is proof and disproof, for the minor term is that wherein there is non-existence of both proof and

---

[1] तदेव पूर्वाह्निके योगिप्रत्यक्षमयोगिप्रत्यक्षञ्च कारणतः स्वरूपतो लक्षणतश्च निरूपितम् प्रमाणं द्विविधं प्रत्यक्षं लैङ्गिकञ्चेति यद्विभक्तं तत्र लैङ्गिकमिदानीं निरूपयितुमुपक्रमते । ज्ञानमिति प्रकृतम् लिङ्गाज्जातं लैङ्गिकं व्याप्तिविशिष्टः पक्षधर्मो लिङ्गम् तत्र व्याप्तिरुक्ता यत्सिषाधयिषाविरोधिप्रमाणाभावो यत्र स तं प्रति पक्षः तदृशं प्रमाणं साधकं बाधकश्च तदुभयाभाववतः पक्षत्वात् नहि साधके बाधके वा प्रमाणे सति कस्यचित् संशयः सिषाधयिषा वा अतएव सन्दिग्धसाध्यधर्मा धर्मी सिषाधयिषितसाध्यधर्मा धर्मी वा पक्ष इति प्राञ्चः उत्पाद्यसाध्यवत्तानिर्णयनिवर्त्यसंशयोत्पत्तिप्रतिबन्धकमानत्वावच्छिन्नाभावो यत्र स पक्ष इति जीवनाथमिश्राः सिषाधयिषाविरहसहकृतसाधकमानाभावो यत्र स पक्ष इति केचित् एतन्मते बाधस्थलेऽपि पक्षता तदेतदनुमानमयूखे द्रष्टव्यम् तदेतस्य पक्षस्य धर्मो लिङ्गमित्युक्तं भवति लिङ्गञ्च दृष्टमनुमितं श्रुतं वा यदनुभवरूपं ज्ञानं जनयति तल्लैङ्गिकं तदुक्तम् अनुमेयेन सम्बद्धं प्रसिद्धञ्च तदन्विते । तदभावे तु नास्त्येव तल्लिङ्गमनुमापकम् ॥ इति ॥ एतेन लिङ्गमेवानुमितिकरणं नतु तस्य परामर्शः तस्य निर्व्यापारत्वेनाकरणत्वात् लिङ्गस्य तु स एव व्यापारः यत्र धूमादेरतीतत्वमनागतत्वं वा तत्र कथमनुमितिरिति चेन्न साध्यस्याप्यतीतानागतत्वयोस्तत्रानुमानात् तत्रैव प्रतिबन्धात् अतीतत्वमनागतत्वं वर्तमानत्वञ्च धूमादेर्यत्र न निश्चितं तत्र कथमनुमितिरिति चेत् न कथञ्चित् तत्र साध्यस्यापि सन्देहात् पूर्वापरदिनयोः सत्त्वनिश्चये मध्यदिनेतु सन्देहे कथमनुमितिरिति चेत् तद्दिनावच्छिन्नधूमादिना तद्दिनावच्छिन्नवह्न्यादेरनुमानात् तथैव व्याप्तेः कारणत्वावधारणात् धूलीपटलात् कथं धूमभ्रमादनुमितिरिति चेत् व्याप्तत्वेन ज्ञातस्यैव लिङ्गत्वात् ज्ञानस्य च याथार्थ्यायाथार्थ्याभ्यामनुमितेस्तद्रूप्यात् अन्यथा तवापि कथं तत्र परामर्शः करणं स्यात् अतीन्द्रियलिङ्गस्थले परामर्शस्य तदजन्यतया कथं तद्व्यापारत्वमिति चेत् तत्सत्तानिर्वाहकत्वरूपधर्मिकसाधनतायास्तत्र व्यापारत्वघटकत्वात् अन्यथा समवायस्य श्रवणादेर्व्यापारत्वानुपपत्तेरिति कार्याल्लिङ्गात् धूमालोकादेरग्न्याद्यनुमानं कारणादपि यथा बधिरस्य भेरीदण्डसंयोगविशेषात् शब्दानुमानम् यथा वा धार्मिकस्य यथाविधियागस्नानाद्यनुष्ठानाद्धर्मस्वर्गाद्यनुमानम् यथाविधिकारीर्याद्यनुष्ठानाद्वा वर्षानुमानम् पयः पूर्णनद्यादौ स्वन्यमानप्रवाहाद्वा जलनिःसरणानुमानम् उपरि वृष्टिदर्शनाद्वा नदीवृद्ध्यनुमानम् सचायं कार्यकारणभावलक्षण एकसम्बन्धः प्रकारद्वयेनोक्तः संयोगिनः शरीरस्य दर्शनात्त्वगिन्द्रियानुमानम् विरोधिनोविस्फुर्जतोऽहेर्दर्शनाज्झाटाद्यन्तरितनकुलानुमानम् समवायिना जलौष्ण्येन तत्सम्बद्धतेजोऽनुमानम् ॥

निविशेत न योगिनां यदन्तः
सततात्मायशिरोविचारभाजाम् ।
तदनन्तमलुण्ठि हन्त ताभिः
सकलं ब्रह्म सुखेन पामरीभिः ॥ २६ ॥

प्रमदात् कुचदुर्गमध्यभाजा
रमणीनां रतिकामिना तदानीम् ।
करपातमवाप्य शार्ङ्गपाणे-
रतिसंख्यं सनखाङ्कमभ्यनन्दि ॥ २७ ॥

बहुधा निजमाययात्तदेह-
श्चिरमन्योन्यमलक्षितात्मयोगः ।
पशुपालवधूररीरमत् ताः
परमात्मा स्मरभृच्छरीरमताः ॥ २८ ॥

अधरोऽत्यनुरागभूमिरासां
यदखण्डि स्फुटबन्धुजीवहारी ।
कुटिलाश्च कचाश्चिरं गृहीता
न हि तच्चित्रमभूत् खलान्तकेन ॥ २९ ॥

उचितं परिपूजनं तयोर्य-
द्रतिकामावधिदेवते रतेषु ।
उदयत्पुलकस्तनापदेशा-
दयमादत्त कदम्बयोर्युगं तत् ॥ ३० ॥

परिचर्चितमर्दितोपरुद्धा-
धरवक्षोजकचं नयन्ननङ्गम् ।
अभिनत् सुदृशां स नीविबन्धं
भवबन्धं किमु भेत्तुरस्य चित्रम् ॥ ३१ ॥

जघनोरुकपोलबाहुमूल-
चिकवक्षोजतटे नखाङ्कदानैः ।
वनिता वयमुत्तमा वधूना-
मिति मानं रमयत्यधीश्वरेऽयुः ॥ ३२ ॥

समदस्मयहारिशील ईशः
पशुपस्त्रैणमदं नियन्तुकामः ।
भुवनत्रयदृश्यमूर्तिराशु
व्रजनारीदृगदृश्यमूर्तिरासीत् ॥ ३३ ॥

स्वीयग्रन्थिनिबद्धकामदमणिभ्रंशादिवास्वादित-
प्रत्यग्रामृतपात्रपाणिगलनक्लेशादिवाशाजुषः ।
कृच्छ्रप्राप्तनिधिव्ययादिव करप्रान्तात् प्रियेऽन्तर्हिते
स्वप्नश्रीविगमादिवेष्टवसवस्तेपुश्चिरं ताः स्त्रियः ॥ ३४ ॥

न यं योगिनो लक्षयन्ति प्रयत्नात्
तमन्तर्वसन्तं विचेतुं प्रवृत्ताः ।
तदा सानुरागस्मितप्रेक्षितं ताः
स्मरन्त्यस्तदीयं ययुस्तन्मयत्वम् ॥ ३५ ॥

त्यक्त्वाबलाः क्व नु गतोऽसि यतो निरुद्धः
प्रोद्दामयौवनगुरुस्तनशैलसंधिम् ।
इत्युक्तवत्य उरुगायविहारलीला-
गत्यानुकृत्य दयितात्मतया विचेरुः ॥ ३६ ॥

चित्रगता इव काश्चन वध्वो
निश्चलतामगमन् प्रियचिन्ताः ।
आनतकन्धरमन्यदृशस्ताः
शस्तरवा रुरुदुर्गुरुदुःखात् ॥ ३७ ॥

कुचभरनमिताः शुचा नतास्या
विबभुरनन्तरसाञ्जनाश्रुधाराः ।
हरिपरिभवकामकामसज्जी-
कृतबहुचम्पकचापरोचिषस्ताः ॥ ३८ ॥

अन्तर्बहिः सन्तमनन्तमेताः
पूर्णं कराद् ब्रह्म गतं प्रमादात् ।
अप्राक्षुरीशं लतिकाद्रुमादीन्
कामोन्मदानां क्व विवेकशङ्का ॥ ३९ ॥

अयि मालतिके तमालवर्णः
परमालक्ष्यगतिः श्रमालसाक्षः ।
अलमालपनैः किमालये ते
सुषमालम्बनमस्ति मालभारी ॥ ४० ॥

त्यक्त्वा यातः कामतः कामतप्ताः
कृष्णो बाला भव्यलाभव्ययार्ताः ।
दृष्टः श्रीमानत्र मानत्रपाहृद्
दृप्ताः का वा सन्ति वासन्ति सुस्थाः ॥ ४१ ॥

अतुलशिल्पकृती तुलसि प्रभु-
स्तव सदा दयितोऽवसदात्मनि ।
प्रकथयास्य गतिं कथयापि नः
शमय तापमनामयतापहम् ॥ ४२ ॥

सर्वस्वसारं सकलश्रुतीनां
प्रोतं त्रिलोकीस्रज एकसूत्रम् ।
मायामनुष्यं मृगयामहे तं
शंस त्वयासाविह मल्लि दृष्टः ॥ ४३ ॥

कथयाशु मुकुन्दममुं भवती
भवतीव्रसुखप्रदमस्त्विति यत् ।
प्रभुरागमदत्र न कुन्दलते
दलते हृदयाय हितं वद नः ॥ ४४ ॥

चलदलक उपेत्य वल्लवीनं-
श्चलदल कच्चिदुपागतोऽन्तिकं ते ।
स्फुटदधिकमिदं हृदेति दैन्यं
स्फुटदधिकर्तनरीति तद्वियोगात् ॥ ४५ ॥

अधुना मधुनाशन एष गतः
कररत्नवदस्मदभाग्यवशात् ।
यदि वित्थ कपित्थमुखास्तरव-
स्तदुदन्तममुष्य मुदा वदत ॥ ४६ ॥

पनस घनसमः पुमानिहागात्
कुहचन चम्पक कम्पकः परेषाम् ।
कुरुवक तव कम्पयन् दलानि
प्रभुरगमत् सुकृतानि सार्थयन् वः ॥ ४७ ॥

लवली पुरतोऽस्ति पृच्छ्यतां
कवलीकृत्य गतः स्मरस्य नः ।
दवलीढतनूर्विहाय किं
तव लीलामधिगन्तुमागतः ॥ ४८ ॥

कुररि मुररिपुस्तवान्तिकेऽगा-
दणुमितवेणुमितः प्रमोदयंस्त्वाम् ।
विलपसि लपनानि वीक्ष्य नश्चे-
द्वयमपि किं यमपिण्डिता अनाम ॥ ४९ ॥

उपलक्षितावहह नोपलक्षिता-
वसितद्युतेस्त्विषि पदौ सितद्युतेः ॥
सरसप्रभावमितसारसप्रभा-
वनुमायया न पुरतो नु मायया ॥ ५० ॥

धरणि सरणिमस्याचक्ष्व नः क्ष्वेलपाना-
दिव विकलविघूर्णद्विग्रहाणां वियोगात् ।
विदितमपि सपत्नि क्वापि पुष्पप्रबालैः
स रचितशयनीयां त्वां समालिङ्ग्य शेते ॥ ५१ ॥

अये तारानाथ श्लथय न धृतिं नः कथय स
क्व यातो गोपीनां प्रभुरुदरवर्तित्रिभुवनः ।
सदा यो गोप्यात्माहमिति वनितानां सुहृदभू-
दिदानीं तच्छब्दच्छलमजनि यस्य स्फुटमिव ॥ ५२ ॥

कमलिनी मलिनीभवदानना
मुकुलिताक्षदृगन्वितकण्टका ।
प्रियमनुस्मरति स्मरतिग्मता-
मितरथा विषहेत कथं वधूः ॥ ५३ ॥

इयमनुसरति स्वकान्तमेषा
चरति तृणानि विभावयत्यसौ नः ।
इति विविधदशासु पृच्छ्यतां का
न समरसा हरिणी लघुर्गुरुश्च ॥ ५४ ॥

त्वमसि हरिणि धन्या जीवनं कृष्णसारं
वयमिव यमुनायाः प्राप्य तीरस्थलीषु ।
यदिह मृगयसे तं कान्तमेवान्तरङ्ग-
ज्वलितविरहवह्निज्वालमालप्य खिन्ना ॥ ५५ ॥

हरिणगृहिणि हा हतासि नास्ति
प्रतिकृतिरत्र विना प्रियोपलम्भम् ।
वयमपि यमपित्तशान्तिहेतो-
र्नियतमभूम हरीतकीसिताभाः ॥ ५६ ॥

अक्ष्णामभीक्ष्णमिह विस्तृतयो मुकुन्द-
संदर्शनात् फलमलप्सत पूर्वमेण्यः ।
एतर्हि गर्हिततमां कुदशामवाप्य
वाप्यो भवन्त्यविरताश्रुजलस्रुतिभ्यः ॥ ५७ ॥

किं चक्रवाकि विलपस्यलमालपन्ती
किं चक्रपाणिचरितं भवती न वेत्ति ।
जीवातुरस्ति तव संप्रति वागिहैव
कान्तस्तु नो कृतकृतान्तभगिन्युपेयाः ॥ ५८ ॥

असदधिककृतान्तग्रासतामस्मिता नः
सपदि गमयति स्म प्रापयन्नस्मयत्वम् ।
सदधिकबलकाङ्क्षी नाबला जक्षिति स्म
स्मरशरदवदग्धाश्चक्रवाक्यन्तकः किम् ॥ ५९ ॥

मुहुर्मुहुर्लिहन्नहो कुमुद्वतीमतीव यो
न तृप्यति प्रतिक्षणं पुरा हरिर्वधूरिव ।
उदन्तमन्तरायकृज्जनाय मज्जतेऽर्णवे
मधुव्रतः स एष किं मधुच्छिदो वदिष्यति ॥ ६० ॥

यमुने कथयाद्य मुनेः पदवीं
मदवीतधियां तदवाप्तिहृदाम् ।
अयि जीवय नस्तदुदन्तरसै-
र्न कृतान्तभगिन्युचितं रचय ॥ ६१ ॥

भद्राभद्रे वाचमाचक्ष्व यस्मा-
दुच्चैर्मौलिस्त्वं विजानासि विष्णुम् ।
दृष्टो गच्छन्नत्र स च्छन्नमूर्तिः
शंसैतावन्मुञ्च गोवर्धनत्वम् ॥ ६२ ॥

शुक हरिमिहाशु कथय
द्विजेषु जानाति तं भवानेव ।
श्लाघ्यस्त्वमेव धन्यो
हरितत्वं स्फुरति दर्शने यस्य ॥ ६३ ॥

कुलकम् ।

इत्थं तमौपनिषदं पुरुषं पुराणं
पृष्ट्वा चिराय विविधागमवञ्चुकादीन् ।
अप्राप्य गोप्य इदमीयचरित्रजात-
माबाल्यसिद्धमनुचक्रुरथैतदात्म्यात् ॥ ६४ ॥

तत्रैका पूतनाभूदपिबदथ कुचं कापि कृष्णायितास्या
काचित्कृष्णायमाना स्म नुदति रुदती स्वाङ्घ्रिणानायमानाम् ।
अन्या वात्यायमानाहरदवनिगतां नन्दसूनूभवन्तीं
बालीभूयाख्युरन्याः क्वचिदशितमृदं कापि कृष्णीभवन्तीम् ॥ ६५ ॥

जानुकर्षणेन पीवरोरुरङ्गना परा
रिङ्गति स्म सस्मिता चिराय बालकृष्णवत् ।
तामनैषुरङ्कगां निजं चुचुम्बुरेङ्किकाः
पाययन्ति च स्म दुग्धमाशु मुग्धचेतसः ॥ ६६ ॥

भुजंगायितायाश्चिरं काचिदंसे
मुकुन्दायमाना नरीनृत्यते स्म ।
पुनः सैव गोपायमानाभिरुक्ता
दवात् पाहि पाहीति पाति स्म चैताः ॥ ६७ ॥

किमिति बिभित वातवर्षतः स्या-
दवनमिहेति पटीमुदास्थदेका ।
अगमदगमयोः परान्तराल्योः
प्रमिलदुलूखलमाशु पेततुस्तौ ॥ ६८ ॥

शवले धवलेऽतिसुव्रते
सुकरे द्रोणदुघे च नैचिकि ।
इति कापि जुहाव कृष्णवत्
सुरभीवत् परिवव्रुरेङ्किकाः ॥ ६९ ॥

एकापरांसे विनिधाय बाहु-
माचुम्ब्य तां किंचन संचरन्ती ।
कृष्णोऽहमेषा गतिरीक्ष्यतां मे
भव्येति गोपीर्मुहुराबभाषे ॥ ७० ॥

अभूत् कृष्णः काचिद्बल इव परा गोदुह इव
न्यहन् कृष्णप्रायाः सपदि बकवत्सायिततनू ।
धमन्तीर्वेणुं ताश्चिरमभिननन्दुः कतिचन
क्वचिद्गीता दाम्नाजनि नियमितोलूखल इव ॥ ७१ ॥

इह वितनुत बाला भोजनं स्वस्वभोज्यं
समुपनयत पात्राण्याशु पत्रैर्विधत्त ।
इति हरिरिव मध्ये कापि तत्रोपविश्य
स्वयमघसदुपेता गोपबालायिताभिः ॥ ७२ ॥

काप्याह स्म हरीभवन्त्यथ वनेष्वन्नार्थिनीर्गोपवत्
सत्रोऽस्त्यत्र जवाद्दितेति पुनरप्राप्येत्य तामूचिरे ।
तद्वाचा द्विजगेहिनीप्रकृतिभिर्दत्ते तदान्ने पुन-
स्ताभ्यो दत्तवती विभज्य तदसावत्ति स्म ताभिः सह ॥ ७३ ॥

वनान्तादायान्तीं हरिमिव परीताः प्रणुदतीं
पुरो वत्सप्राया मुखरमुरलीमोहितजनाम् ।
सबर्हस्रग्धातुस्मितवदनगोधूलिमधुरां
समायाता द्रष्टुं किल निजगृहेभ्यः कतिचन ॥ ७४ ॥

इत्थं वल्लिशकुन्तिशाखिशिखरिक्षोणीशशाङ्कादिकान्
पृष्ट्वा मत्तवदात्तवज्रकठिनस्वान्ताश्चिरं तास्तदा ।
तच्चेष्टानुकृतौ तदात्मकतया गोप्यः क्षणं सुस्थिता-
स्तत्र च्छत्रपविध्वजादिविदितं शौरेरदर्शन् पदम् ॥ ७५ ॥

इति श्रीमल्लक्ष्मणभट्टात्मजश्रीरामचन्द्रभट्टविरचिते
गोपाललीलाख्ये महाकाव्ये दशमः सर्गः ॥ १० ॥ :: :: ॥

## ॥ अथ गोपाललीलाख्यकाव्यस्य ॥

॥ एकादशतमसर्गारम्भः ॥

व्रजाङ्गना वीक्ष्य पदानि विष्णोः
प्रमोदपूर्णाः पुरतो व्रजन्त्यः ।
विलोक्य तत्रैव तथापराणि
शिरो धुनानाः सहसेदमूचुः ॥ १ ॥

जगत्यहो सत्यवतीयमेव
स्फुरन्ति यस्याः पुरतः पदानि ।
इमानि कृष्णांसनिषक्तबाहोः
समेतरत्वं दधतीति विद्मः ॥ २ ॥

पुरा यदेषा पुरुषं पुराण-
मपूपुजत् पुण्यतमां तदेनाम् ।
विहाय सर्वास्त्रितमाममैषी-
न्मषीमिवास्मद्वदने विलिप्य ॥ ३ ॥

पदानि तस्या विदधन्त्यधैर्यं
वहत्यलं चक्षुरुदीक्ष्य दाहम् ।
रसेन भुङ्क्ते तरसाधरस्य
सुधां यदेका मधुसूदनस्य ॥ ४ ॥

इतः कियद्दूरमलक्षितान्य-
प्यदःपदानि प्रदहन्ति चक्षुः ।
चिराटनश्रान्तिजुषं यदेना-
मुदस्य दोर्भ्यां नयति स्म कामी ॥ ५ ॥

परिक्रमोऽस्याः प्रपदेन हन्ति
पविप्रपातप्रतिभः सपत्नीः ।
समुन्नमत्युन्नमनेन तस्य
पदे यदेषाऽसकले निधत्ते ॥ ६ ॥

प्रसाधनं हन्त शिरोरुहाणा-
मिहाहृतास्याः प्रभुरित्यवेमः ।
यदुच्चनीचं कुसुमप्रवाल-
प्रकॢप्तमत्रासनयुग्ममस्ति ॥ ७ ॥

इहोपविश्य स्फुटबाहुमूल-
द्वयान्तरावेष्टितजानुरीशः ।
निबध्य केशानिदमीयमंस-
द्वयं च निष्पीड्य चिरादचुम्बीत् ॥ ८ ॥

न जीवितानि त्यजतेक्ष्य तल्पं
प्रकल्पितं पल्लवपुष्पसंघैः ।
अरीरमत् तां वयसातिमत्ता-
मिहेक्ष्यते येन महान् विमर्दः ॥ ९ ॥

विहाय संतापमनन्तमत्र
विभाव्यतां नूपुरमेकमस्याः ।
गृहीतमौनं रणनश्रमेण
रते स्वसङ्गिव्यवधेः शुचेव ॥ १० ॥

सुपक्वपूगीफलनागवल्ली-
दलोरुचन्द्रं मुखवासमस्याः ।
सुवर्णमुक्तामणिरूपमेक्ष्य
स्मरस्य सर्वस्वमिहेति वित्त ॥ ११ ॥

सुहृत्परीरम्भमहान्तरायं
चिराय वक्षोरुहमुद्रणार्हम् ।
सकुङ्कुमं पश्यत चोलमस्याः
शुचेव पीतं कुचयोर्वियोगात् ॥ १२ ॥

कुलकम् ।

इति स्त्रियस्ता बहुधा विचिन्त्य
निजापमानं बहु मानमस्याः ।
कृतिं हरेस्तां कृतिनः स्मरन्त्यो
विचेतसस्तत्र चिरं विचेरुः ॥ १३ ॥

पुरैव नीता हरिणाथ गोपी
शुभाहमेवेत्यभिमन्यमाना ।
उवाच सौभाग्यमदेन दृप्ता
न गन्तुमीशा प्रिय ते प्रियेति ॥ १४ ॥

यदीशिषे गोपि न गन्तुमेहि
मदं समाप्य त्वरितं व्रजेति ।
निजां समारूढवतीं विहाय
क्षणाददृश्योऽभवदेकदृश्यः ॥ १५ ॥

अवाप संतापमथापराधा-
च्चिराय राधानुमतापमुग्धा ।
प्रसीद सीदज्जनसानुकम्प
कृतागसं मां त्वमवेत्यवोचत् ॥ १६ ॥

इतीश्वरेऽन्तर्हितवत्यनन्तं
विहाय तामेकतमामदूरे ।
इमाः प्रणीताश्रुभरामपश्यन्
वियोगवह्नेः प्रजिहीर्षयेव ॥ १७ ॥

स्वकर्मणामेव विपाक एष
प्रियातिसंमानविमाननादिः ।
इतीदमीयां गिरमाकलय्य
तया समेता न्यवृतन् वनान्तात् ॥ १८ ॥

हरिं युवत्योऽनुपलभ्य सर्वा
निरस्तगर्वा निगमान्तधाम्ना ।
तदेकचेष्टालपनाङ्गहारा-
स्तदात्मिकास्तन्मयतामवापुः ॥ १९ ॥

अथाधिगन्तुं कृतमन्तवस्ताः
प्रियं समेताः पुलिनं समेत्य ।
कथंचिदुच्चैरवसन्नकण्ठ्यो
जगुस्तमित्थं जगदेकनाथम् ॥ २० ॥

तवैणनाभेस्तिलकस्य भाले
विधो कलङ्कः स्मरयत्यलं नः ।
तमीसमीरः श्वसितानिलं ते
प्रफुल्लसौगन्धिकसौरभेण ॥ २१ ॥

समुन्नताः सूरसुतातरङ्गा
भुजौ परीरम्भकृतोद्यमौ ते ।
मधुव्रता वेणुनिनादमङ्ग
तव ध्वनन्तः स्मरयन्ति कान्त ॥ २२ ॥

स्मितं तवेश स्मृतमाशु हन्ति
धृतिं वधूनां यदिदं मुकुन्द ।
कुमुद्वतीनां कुमुदं विनिद्र-
मनुक्षणं नः स्मरयत्यनन्त ॥ २३ ॥

समापतद्वैद्युतवह्निवात-
जवातिवर्षाद्गिरिणावमि स्म ।
विषाम्बुपानाजगराशनादे-
श्चिराय रक्षन् किमुपेक्षसे नः ॥ २४ ॥

लयं प्रपन्नं वलयं वधूना-
मव प्रयातोऽसि कुतो नु कुप्यन् ।
उरोजयोर्नो नख[illegible]भि-
र्विलेखनं ते न [illegible] प्रमाणम् ॥ २५ ॥

किमत्र चित्रं न [illegible]रपीश
पवित्रमित्याहुर[illegible] कथं ते ।
श्रुतं स्मृतं वा बहुशो यदेतत्
प्रसूनबाणाशनिसात् करोति ॥ २६ ॥

नमोऽस्तु तुभ्यं गुरवे रतेषु
विचित्रबन्धेष्विव वाङ्मयेषु ।
न युक्तमेवं प्रिय वालिशासु
विशिष्य शिष्यासु निजात्मिकासु ॥ २७ ॥

इयं तिथिर्नोऽतिथितामुपेता
स्वकृपहानि कुरुते स्वभाजाम् ।
वयं पिबन्त्योऽप्यधरामृतं ते
धरामृतत्वं यदिहान्वभूम ॥ २८ ॥

विचार्यतामच्युत कोऽत्र दोषः
स्मयोऽपि नः सात्त्विक एव नान्यः ।
त्वदाश्रितं यत् खलु सात्त्विकं त-
दितोऽन्यदुद्भिन्नरजस्तमस्कम् ॥ २९ ॥

क्व वल्लवानां वनिता विमुग्धाः
क्व साक्षिचिन्मोदमयस्त्वमीशः ।
अतः कथं नाम भवेद्भवन्त-
मनन्त गर्वो गगनस्पृशां नः ॥ ३० ॥

कुलकम् ।

इति प्रियो भर्तुरनन्यभावा
गुणान् मुहुः कर्म च वर्णयन्त्यः ।
दुरन्तदुःखा रुरुदुस्त्रियोऽल-
मयं हि तासामवधिः प्रियेषु ॥ ३१ ॥

अथ प्रणामन्थरमन्मथश्रीः
सुवर्णवर्णे वसने वसानः ।
निध्यीयमानो हृदि तामिरासां
निध्यीयमानो हरिराविरासीत् ॥ ३२ ॥

तदात्मकं विश्वमिदं भ्रमेण
निसर्गतश्चापि विलोकयन्त्यः ।
कथंचिदेताः परमार्थमेनं
विशश्वसुर्न क्षणमीक्षमाणाः ॥ ३३ ॥

तमेत्य तारा इव रोहिणीशं
क्वणत्क्वणत्कङ्कणकिङ्किणीकाः ।
उदस्युरुद्यत्पुलकच्छलेन
स्मरेषुसंख्यामिव दर्शयन्त्यः ॥ ३४ ॥

तमाशु गोप्यो जगृहुस्तदानु-
गृहीतवन्तं भगवन्तमन्ताः ।
कराङ्घ्रिजङ्घाकटिकण्ठवक्षः-
कपोलकेशांसभुजादिभाजः ॥ ३५ ॥

कुचान्तरे तापभृति प्रतीत्यै
कयापि कृष्णस्य करो न्यधायि ।
भुजान्यया सौरभभृन्निजांसे
पदाम्बुजन्मा परया हृदि स्वे ॥ ३६ ॥

अथैकया मूर्धनि पाणिपद्मं
न्यधायि संध्यारुणमेतदीयम् ।
स्वयं स केशग्रहमस्तनीवि
चिरं यथासौ हरिणाप्यचुम्बि ॥ ३७ ॥

हरिं फलं काप्यवलम्ब्य धन्या
मनीषितानामिव मूर्तमेकम् ।
स्तनप्ररूपैत्पुलका कदम्ब-
युगेन पूजामकृतेव तस्य ॥ ३८ ॥

सविभ्रमान्या कुटिलभ्रुलीला-
भ्रमत्प्रमत्तभ्रमरोरुतारम् ।
घ्नतीव तीव्रव्रणया कटाक्षै-
श्चिरं विदश्याधरमीक्षते स्म ॥ ३९ ॥

परं परैका पुरुषं तमाप्य
मुखाम्बुजं तस्य चिरं भजन्ती ।
अवाप्य नातृप्यदतिप्रमोदं
पदाम्बुजं तस्य भजन् कृतीव ॥ ४० ॥

· निजाक्षिरन्ध्राध्वगतं निवेश्य
निमील्य नेत्रे दयितं चिराय ।
व्रजाङ्गनान्तः परिरभ्य कापि
यमीव मोदस्रवदस्रमास्त ॥ ४१ ॥

स्वयोगमायोपहृतातिभूरि-
तनुं तमासाद्य सहस्रशस्ताः ।
चिराय चिक्रीडुरतस्तु तासां
न काचिदासीदनवाप्तकामा ॥ ४२ ॥

तमाप्य गोप्यः परितृप्यदन्त-
र्महोत्सवोत्सर्पणनिर्वृताङ्ग्यः ।
पुनस्तदाप्तिप्रभवातिभासो
जहुर्वियोगोद्भमशेषमाधिम् ॥ ४३ ॥

निरस्तनिःशेषवियोगतापं
मुदान्तरात्मावगमेन पूर्णम् ।
सनन्दनादिव्रजवद् व्रजस्त्री-
गणं स बिभ्रद्भगवान् बभासे ॥ ४४ ॥

अमन्दसौन्दर्यसमेन्दिराभि-
र्विहर्तुकामः सह वल्लवीभिः ।
ततोऽन्तरीपान्तरमर्कजाया
जगाम जायाभिरिवेभराजः ॥ ४५ ॥

तदा तरङ्गान्तररिङ्गणेन
पतङ्गजायाः शिशिरः समीरः ।
अवादवाप्तस्फुटकैरवादि-
प्रसूनसौरभ्यमधुव्रतेभ्यः ॥ ४६ ॥

सितावदाताः सिकताः सिताभ्राः
प्रभावभूवन् विहरिष्यतीह ।
अभूत् प्रदीपः शशिबिम्बमेव
वितानमप्यम्बरमृक्षमुक्तम् ॥ ४७ ॥

प्रभुर्विहर्तुं विविधोपचारान्
न कल्पयामास कृतानुकल्पः ।
किमन्यदन्योन्यमिहानुरागा-
दपेक्षितं चौर्यरतप्रबन्धे ॥ ४८ ॥

प्रदीपतल्पालयवस्त्रवास-
विलेपनस्रक्कुसुमादिशून्ये ।
नखाङ्कदन्तक्षतभेदहीने
समुत्सुकाश्चौर्यरते युवानः ॥ ४९ ॥

हरिर्यदासां कुचकुङ्कुमाङ्कं
समग्रहीदासनमुत्तरीयम् ।
अभून्मुनिस्फीतमनोऽधिकं तत्
परिग्रहात् किं न शुभं प्रभूणाम् ॥ ५० ॥

निरस्तधैर्यः स्वकोटिदर्प-
स्त्रिलोकदृष्टेः स्वरुचिप्रपञ्चः ।
समन्विताथाब्जनिषण्णिभानां
स वल्लवीनां परिषद्यभासीत् ॥ ५१ ॥
अथ स्मरं तं निशि दीपयन्तं
सविभ्रमस्मेरमुखाब्जपद्मः ।
निधाय तस्याङ्घ्रियुगं निजाङ्के
निपीडयन्त्यो लघु किंचिदूचुः ॥ ५२ ॥
इदं किमाचक्ष्व वयं न विद्मो
भजन्ति केचिद्भजतोऽनुरक्ताः ।
भजन्ति ये ते भजतश्च केचि-
द्भजन्ति नैवोभयथापि केचित् ॥ ५३ ॥
युग्मम् ।
उवाच गोपीर्मुदितो मुकुन्द-
स्ततोऽन्तरात्मा विदिताखिलार्थः ।
विधाय पश्चाद्गतगोपिकोच्च-
कुचोपधानव्यवधानमीषत् ॥ ५४ ॥
परस्परं ये दधतेऽनुरागं
भजन्ति चान्योन्यमनन्यभावाः ।
कथं मिथः स्वार्थजुषाममीषां
किंचं विना सौहृदमस्तु धर्मः ॥ ५५ ॥
सुतानिव स्वान् पितरः सदैव
दयालवो येऽभजतो भजन्ते ।
अनाविलोऽयं प्रतिभाति तेषां
विभूषितश्च प्रणयेन धर्मः ॥ ५६ ॥
भजन्ति नामी भजतोऽपि किंतु
भजेयुरत्राभजतोऽत्युदासाः ।
मतात्मतत्त्वा यदि वा कृतघ्ना
नरोऽथवा नष्टगतिर्गुरुध्रुक् ॥ ५७ ॥
भजत्सु यन्मेऽभजनं वयस्या-
स्तदप्यदश्चित्तदृढानुवृत्त्यै ।
मनोऽनुवृत्तिर्मयि चेत् कथंचि-
न्न शोचनीयं तदिहास्ति किंचित् ॥ ५८ ॥
न लोकवेदाद्यनुरोधवत्यो
भवत्य एकान्तमदेकचिताः ।
वशीकृतोऽहं तदिहाभ्यसूयां
न धत्त किं वो वितराणि योग्यम् ॥ ५९ ॥
विधाय रूपं मम चित्तभित्तौ
चिराय चित्रं परिचिन्तयन्त्यः ।
अपारसंसारजमोहमुक्ता
मदात्मिकाः स्यात गृहेऽपि सत्यः ॥ ६० ॥
कुलकम् ।
इति निगदति सत्यमात्मतत्त्वं
किरति सुधारसमीश्वरे युवत्यः ।
मनसिजविशिखा निपातधूत-
स्वविरहवह्निदशोपशान्तिमापुः ॥ ६१ ॥
इति श्रीमल्लक्ष्मणभट्टात्मजश्रीरामचन्द्रभट्टविरचिते गोपाललीलाख्ये महाकाव्ये एकादशः सर्गः ॥ ११ ॥::::॥

---

## ॥ अथ विद्धशालभञ्जिकानाटिकायाः ॥

॥ तृतीयाङ्कस्य शेषः ॥

ततः प्रविशति निबिडोत्कण्ठो राजा स्नानशुचिर्विदूषकश्च ।

राजा । अनुध्याननाटितकेन ।

क्रमसरलितकण्ठप्रक्रमोल्लासितोर-
स्तरलितवलिलेखासूचसर्वस्वमस्याः ।
स्थितमतिचिरमुच्चैरग्रपादाङ्गुलीभिः
करकलितसखीकं मां दिदृक्षोः स्मरामि ॥ ४ ॥

विदूषकः । मा समाधानभंगं कुण देवीपुरदो मेहला जीवइदव्वा । स्वगतम् । अइ दुट्ठदासि णिवडिस्सदि देऽग्गइः कुसट्ठो चारायणबह्मणो * ।

राजा । तद्वचनमनाकर्ण्य तदेव † पठति ।

विदूषकः । मा पुणो तं सुमर संदावदाइणी डाइणी क्खु सा ‡ ।

राजा । किमात्थ संतापकारिणीति । तत्तव पञ्चमकाकलीकलगीतयः कर्णौ कलुषयन्ति सुधास्यन्दिनी चन्द्रमूर्तिश्चक्षुषी तापयति चन्दनरसनिष्यन्दस्तनुं दहति ।

---

* मा समाधानभङ्गं मे कुरु देवी पुरतो मेखला जीवयितव्या । अयि दुष्टदासि निपतिष्यति तेऽग्रतः कुब्जश्चारायणब्राह्मणः ।

† क्रमसरलितेत्याद्येव ।

‡ मा पुनस्तां स्मर संतापदायिनी डाकिनी खलु सा ।

विदूषकः । भो वक्कं मए कहिदं, तुमं जेव्व सव्वदो सारमुच्चिणोसि हंसो जेव्व जलाहिं दुद्धमुद्धरेदि किं उण भणामि अलसेण विअ विज्जा झत्ति दे विसुमरिदा देवी * ।

राजा । आशैशवात्प्ररूढप्रेमा देवी कथं विस्मर्यते । किंतु ।

देव्या निधायोपरि वामपादं
यत्सुन्दरीणां प्रसभेन युक्तम् ।
कृतं मनो रिक्थमथ द्विधा त-
त्तुल्यं विभज्य स्मरशासनेन ॥ ४ ॥

विदूषकः । ता हिंदोलदोलिदं व दे चित्तं गमगमाहिंतो ण विरमदि † ।

राजा । एवमेतत् । यतः

न मालतीदामविमर्दयोग्यं
न प्रेम नव्यं सहतेन्तरायम् ।
म्लानापि मोच्या नहि केसरस्रक्
देवी न खण्डप्रणया कथं चित् ॥ ५ ॥

विदूषकः । भोः किं एदेण दक्खिणवअणोवण्णासेण पुराणपत्तमपेल्लिअ णो णवपल्लवो समुल्लसदि । ण अ तरुणगंठिवण्णअकंदलीकवलणलुद्धो गंधहरिणो दवणअकेदारिआए अहिरमदि ‡ ।

राजा । सखे निरर्गलवागसि । यदनाशङ्कनीयं तदा शङ्कसे ।

विदूषकः । किं मम परकेरिकाए चिन्ताए ता भणीअसि मा ससाधिभंगं मे कुण देवी पुरदो मेहला जीवइदव्वा § ।

ततः प्रविशति देवी प्रयता च मेखला विभवतश्च परिवारः ।

देवी । हला सुलक्खणे अपि संणिहिदो अंतेउरदुवारप्पगीवे अज्जउत्त चाराअणबह्मणो अ ‖ ।

सुलक्षणा । किं अण्णधा देवी विण्णवीअदि ¶ ।

विदूषकः । एदं पग्गीवं ता उअविसदु प्पिअवअस्सो * । तथा कुरुतः ।

देवी । जअदुजअदु अज्जउत्तो अज्जचाराअण देसु मे धत्तेइआ भिक्खा जीआवेसु मेहलअं † ।

विदूषकः । एस सज्जो ह्मि ‡ ।

मेखला । बद्धाञ्जलिः । अज्ज चाराअण अअं जणो तुमं महाबंभणं सरणं पडिवज्जदि § । इति पादौ शिरस्यारोपयति ।

नेपथ्ये । कहिं कहिं सा दुट्ठदासी एदे अह्मे कालपुरिसा सिंखलाहिं गले बाढं बंधिअ मेहलं णेदुमाअदा ‖ ।

विदूषकः । बहुविधं दण्डकाष्ठमुद्यम्य । जइ अहं पिंगलिआवल्लहो गंधव्ववेअविअक्खणो रक्खको चिट्ठामि । ता को कालो के कालपुरिसा का वा कालसिंखला ¶ इति बहुविधं वल्गति ।

मेखला । पादयोरन्तरे प्रविशति । भो परित्ताअस्सु मं ** ।

विदूषकः । उच्चैर्गायन्नपवार्य । भो पेक्खपेक्ख महाराअविलासिणी मम्महरहाहिरूढं अत्तणो पिअवअस्सं । किंचिदुच्चैः । भो पेक्खध मे बह्मणत्तणं जेण खलखलाविद्धसिंखला कालपुरिसा पणट्ठा †† ।

मेखला । अह्महे । जीविदह्मि ‡‡ ।

विदूषकः । सास्फोटं विहस्य । आः दासीए दुधीए अलीअविवाहविडम्बिदो दुक्कुद्धो णिवडिदो दे चाराअणबह्मणो संपदमेत्तिकं आसंसे दीहसमग्गकंकणा भोदु मे बह्मणी, मेहला विलक्खा रोदिति §§ ।

---

* भो वक्रं मया कथितं, त्वमेव सर्वतः सारमुच्चिनोषि । हंस एव जलाद्दुग्धमुद्धरति । किं पुनर्भणामि । अलसेनेव विद्या ते झटिति विस्मृता देवी ।

† तद् हिन्दोलदोलितमिव ते चित्तं गमागमाभ्यां न विरमति ।

‡ भोः किमेतेन दाक्षिण्यवचनोपन्यासेन पुराणपत्रं दूरीकृत्य नो नवपल्लवः समुल्लसति । न च तरुणग्रन्थिपर्णकाङ्कुरकवलनलुब्धो गन्धहरिणो दमनककेदारिकायामभिरमति ।

§ किं मम परकीयया चिन्तया तद् भणयसे, मा समाधिभङ्गं मे कुरु देवीपुरतो मेखला जीवयितव्या ।

‖ हला सुलक्षणे अपि संनिहितोऽन्तःपुरद्वारप्रग्रीवे "उपान्त्यप्रदेशे" आर्यपुत्रश्चारायणब्राह्मणश्च ।

¶ किमन्यथा देवी विज्ञाप्यते ।

* एतत्प्रग्रीवं तदुपविशतु प्रियवयस्यः ।

† जयतुजयतु आर्यपुत्रः । आर्यचारायण देहि मे धात्रेयिकीं भिक्षां, जीवय मेखलाम् ।

‡ एष सज्जोऽस्मि ।

§ आर्यचारायणायं जनस्त्वां महाब्राह्मणं शरणं प्रतिपद्यते ।

‖ कुत्रकुत्र सा दुष्टदासी एते वयं कालपुरुषाः शृङ्खलाभिर्गले गाढं बध्वा मेखलां नेतुमागताः ।

¶ यद्यहं पिङ्गलिकावल्लभो गान्धर्ववेदविचक्षणो रक्षकस्तिष्ठामि । तत् कः कालः के कालपुरुषाः का वा कालशृङ्खलाः ।

** भोः परित्रायस्व माम् ।

†† भोः प्रेक्षप्रेक्ष महाराज विलासिनीमन्मथरथाधिरूढमात्मनः प्रियवयस्यम् । भोः प्रेक्षत मे ब्राह्मणत्वं येन खलखलायितशृङ्खलाः कालपुरुषाः प्रनष्टाः ।

‡‡ अह्महे, "अयं शब्दः सोच्छ्वासविस्मये" । जीवितास्मि ।

§§ आः दास्याः दुहितः अलीकविवाहविडम्बितो दुःक्रुद्धो निपतितस्ते चारायणब्राह्मणस्तत्सांप्रतमेतावदाशंसे, दीर्घसमग्रकङ्कणा भवतु मे ब्राह्मणीति ।

देवी । अज्जउत्त जुत्तं णेमं सरिसं णेमं जं दाणीं मे पिअसहि मेहला एवं विडंबीअदि * ।

विदूषकः । भोदीए जुत्तं णेमं सरिसं णेमं जं महाराअपिअवअस्सो तधा विडंबीअदि † ।

देवी । अज्जस्स संबंधिओत्ति तुए सह एदाए वक्कारं किद ‡ ।

विदूषकः । संबंधिणीत्ति मए वि वक्कारं किदं § ।

मेखला । देवि सक्कीअदि उत्तरं दादुं । पराजेदु एसो, महाराओ एदस्स गुरुः । केअइकुसुमवासिदस्स खदिरसारस्स वि अण्णो गंधुग्गारो ‖ ।

देवी । कोपनाटितकेन सपरिवारा निष्क्रान्ता ।

विदूषकः । पार्श्वमवलोक्य । संपदं णिम्मक्खिअं मे पिअवअस्सस्स ¶ ।

राजा । अतिविलक्षा देवी यतो रुदती गता ।

विदूषकः । रुदतुरुदतु किं स्से मोत्तिआओ गलिस्संति ता इदो उज्जाणाहिमुहं एदु पिअवअस्सो ** इति परिक्रामतः ।

विदूषकः । भो महकरट्ठविदपाणी मसिणणिवेसिदपादमुद्दो संचरजदो बहलालिपडलणिम्मिदं व कोलकुलकलिदजम्मेव तेलमंजिदकज्जलपुंजसंजणिदं व इंदणीलचुण्णसभूदं व सिदिकंठकंठसंघडिदं व णाराअणतणुविणिग्गदं व मिअंककलंकणिक्कालिदं व कुवलअदलपरिकप्पिदं व तिमिरचक्कवाल अविण्णादसमविसमं अणिण्णीदसामधवलं अपरिच्छिण्णलहुदीहं अणधिगददूरसंणिहिदं भुअणगब्भगणं करेदि †† ।

* आर्यपुत्र युक्तमेतत्सदृशमेतद्यदिदानीं मे प्रियसखी मेखलैवं विडम्ब्यते ।

† भवत्या युक्तमेतत्सदृशमेतद्यन्महाराजप्रियवयस्यस्तथा विडम्ब्यते ।

‡ आर्यस्य "मत्पितुः„ संबन्धीति त्वयासहैतया वक्रं "उपहास" कृतम् ।

§ संबन्धिनीति मयापि वक्रं कृतम् ।

‖ देवी शक्यते उत्तरं दातुं, पराजयत्वेषः, महाराज एतस्य गुरुः, केतकीकुसुमवासितस्य खदिरसारस्याप्यन्यो गन्धोद्गारः ।

¶ सांप्रतं निर्मक्षिकं मे प्रियवयस्यस्य ।

** रुदतुरुदतु किमस्या मौक्तिकानि गलिष्यन्ति । तदित उद्यानाभिमुखमेतु प्रियवयस्यः ।

†† भोः मम करस्थापितपाणिर्मसृणनिवेशितपादमुद्रः संचरयतो बहुलालिपटलनिर्मितमिव कोकिलकुलकलितजन्मेव तैलमार्जितकज्जलपुञ्जसंजनितमिव इन्द्रनीलचूर्णसंभूतमिव शितिकण्ठकण्ठसंघटितमिव नारायणतनुविनिर्गतमिव मृगाङ्ककलङ्कनिष्कासितमिव कुवलयदलपरिकल्पितमिव करिदानप्रवृत्तमिव तिमिरचक्रवालमविज्ञातसमविषममनिर्णीतश्यामधवलमपरिच्छिन्नलघुदीर्घमनधिगतदूरसंनिहितं भुवनगभङ्गियं करोति ।

राजा । एवमेतत् ।

तनुलग्ना इव ककुभः
क्ष्मावलयं चरणचारपार्श्वमिव ।
वियदपि चालिकदघ्नं
मुष्टिग्राह्यं तमः कुरुते ॥ ६ ॥

किं चित्तकेयामि ।

उत्तंसः केकिपिच्छैर्मरकतवलयैः श्यामलैर्दोःप्रकाण्डे
हारः सान्द्रेन्द्रनीलैर्मृगमदरचितो वक्षपत्रप्रपञ्चः ।
नीलाङ्गैः शेखरश्रीरसितवसनताचेन्यभीकाभिसारे
संप्रत्येणेक्षणानां तिमिरभरसखी वर्तते वेषलीला ॥ ७ ॥

नेपथ्ये ।

आवट्टिअदुद्धमुद्धकरतलिअजलणिहिसलिलसंचओ
तिहुवणभवणवलअविक्कुरणसुहारसधवलणकुच्चओ ।
चंदो मअणवल्लिपल्लवणमहोसहिसरिसजोह्णओ
जअइ अणंगकेलिभवणंगणचंदणपंकवण्णओ * ॥ ८ ॥

अपिच ।

जणाणंदो चंदो हसइ मलिणी होइ णलिणी
विसट्टन्ते तारा रअणिसिरिहारा दिसिदिसि ।
रहंगा दड्ढंगा विरहसिहिणा दड्ढविहिना
इमे दुक्खक्कंता ससिकरकिलंता विहडिदा † ॥ ९ ॥

पुनर्नेपथ्ये ।

ये पूर्वं यवसूचिसूचसुहृदो ये केतकाग्रच्छदच्छायासाम्यभृतो मृणाललतिकालावण्यभाजोऽच ये ।
ये धाराम्बुविडम्बिनः क्षणमथो ये तारहारश्रियस्तेऽमीस्फाटिकदण्डडम्बरजितोजाताः सुधांशोः कराः ॥ १० ॥

अपिच ।

सद्यश्चन्दनपङ्कपिच्छिलमिव व्योमाङ्गणं कल्पयन्
पश्यैरावतकान्तदन्तमुसलच्छेदोपमेयाकृतिः ।

* आवर्तितदुग्धमुग्धकरतलितजलनिधिसलिलसंचयः
त्रिभुवनभवनवलयविक्कुरणसुधारसधवलनकूर्चकः ।
चन्द्रो मदनवल्लिपल्लवनमहौषधिसदृशज्योत्स्नः
जयत्यनङ्गकेलिभवनाङ्गणचन्दनपङ्कवर्णकः ॥ ८ ॥

† जनानन्दश्चन्द्रो हसति मलिनी भवति नलिनी "विघटन्ती„
विकसन्ति ताराराजनिश्रीहारा दिशिदिशि ।
रथाङ्गा दग्धाङ्गा विरहशिखिना दग्धविधिना
इमे दुःखाक्रान्ताः शशिकरकिरन्ता विघटिताः ॥ ९ ॥

उद्गच्छत्ययमच्छमौक्तिकलताप्रालम्बलम्बैः करै-
र्मुग्धानां स्मरलेखवाचनकलाकेलिप्रदीपः शशी ॥ ११ ॥

विदूषकः । एसा भो कलकण्ठी णाम देवी णग्गरिणी तीए वश्रणादो पुण्णिमाचंदोदश्रं कप्पूरचंडणामधेयो मागधो अहिणंदेदि मिअंकुज्जोतलच्छिं, ता ममावि वड्ढदि तुंडकंडूः अहं पि वण्णिस्सं, ससिश्रोलश्राहिं ढलिश्रो जोण्हाखडिआरसो मसीकुणइ णक्खत्तक्खरमालं णहफलए तिमिरकज्जलिए* ।

राजा । सखेनाद्यापि शैशवोक्तेरतिरिच्यते ।

विदूषकः । किं विश्र मक्कडो उवट्ठाणं करंतो चुक्कदि, अहवा, तरुणुत्तीहिं वण्णइस्सं† ।

अक्कणामकुंडलं दसदिसा बहूमंडणं
अचंदणमकुंकुमं धरणिमंडलीभूसणं ।
असोसणममोहणं मअरलंछणस्सांउहं
मिअंककिरणावलीणहअलम्मिपुंजिज्जए ॥ १२ ॥

राजा । समन्तादवलोक्य । मदनाकूतमभिनीय । भगवन्यामिनीनाथ कस्तवायं विरुद्धो विधिः ।

सूतिर्दुग्धसमुद्रतो भगवतः श्रीकौस्तुभौ सोदरौ
सौहार्दं कुमुदाकरेषु किरणाः पीयूषधाराकिरः ।
स्पर्धाते वदनाम्बुजैर्मृगदृशां तत्स्थाणुचूडामणे
हंहो चन्द्र कथं नु सिञ्चसि मयि ज्वालामुचो रोचिषः ॥१३॥

अपिच ।

यन्त्रद्रावितकेतकोदरदलस्रोतश्रियं बिभ्रती
येयं मौक्तिकदामगुम्फनविधेर्योग्यच्छविः प्रागभूत् ।
उत्सेच्या कलशीभिरञ्जलिपुटैर्ग्राह्या मृणालाङ्कुरैः
पातव्या च शशिन्यमुग्धविभवे सा चन्द्रिका वर्तते ॥१४॥

विभाव्य । वैमत्यमेव वा शशलक्ष्मणो मादृग्जनप्राणसंदेहहेतुः, वैशद्यमेव वा विषमं विषस्य । चतुर्दिशमवलोक्य । साभ्यर्थनम् ।

अयि पिबत चकोराः कृत्स्नमुन्नाम्य कण्ठं
क्रमकवलनचञ्चुच्चञ्चवश्चन्द्रिकाम्भः ।
विरहविधुरितानां जीवितत्राणहेतो-
र्भवति हरिणलक्ष्मा येन तेजोदरिद्रः ॥ १५ ॥

पुरोऽवलोक्य । सैवेयं मृगाङ्कावली ।

विदूषकः । भो मिअङ्कावलि ज्जेव्व एसा णहु एक्कचंदस्स एत्तिश्रो कंतिवित्थारो * ।

राजा । ततः कदलीलतान्तरिताविव शृणुवस्तावदस्या विश्रम्भजल्पितानि । आतृप्ति पिबेतां श्रवसो रसायनम् । तथा कुरुतः ।

॥ एतदङ्कशेष उत्तराङ्के ॥

* एषा भोः कलकण्ठी नाम देवी नागरिणी "वाद्यवादनकर्त्री" तस्या वचनात् पूर्णिमाचन्द्रोदये कर्पूरचन्द्रनामधेयो मागधोऽभिनन्दयति मृगाङ्कोद्योतलक्ष्मीं, तत् ममापि वर्धते तुण्डकण्डूः अहमपि वर्णयिष्ये शशिमणीपात्रात्स्यन्दितो ज्योत्स्नाखडिकारसो मषीकरोति नक्षत्रमालां नभःफलके तिमिरकज्जलिते ।

† किमिवमर्कट उपस्थानं कुर्वन् विस्मरति । अथवा तरुणोक्तिभिर्वर्णयिष्ये ।

अकर्कणमकुण्डलं दशदिशो वधूमण्डनं
अकुङ्कुममचन्दनं धरणिमण्डलीभूषणम् ।
अशोषणममोहनं मकरलाञ्छनस्याङ्कुशं
मृगाङ्ककिरणावली नभस्तलेऽपि संयुज्यते ॥ ॥१२

* भोः मृगाङ्कावल्येवैषा न खलु एकचन्द्रस्य एतावान्कान्तिविस्तारः ।

---

THE

# VAIŚESHIKA APHORISMS

OF

## KAṆA'DA.

### NINTH BOOK, SECOND DAILY LESSON.

*(Continued from page 180.)*

एतेन शाब्दं व्याख्यातम् ॥ ३ ॥

Aph 3 By this verbal [knowledge] is explained.

[1] Another section is commenced with the view of including in inferential knowledge other forms of evidence That knowledge which under the name of verbal knowledge, knowledge whereof words are the instrument, is approved by the Naiyáyikas and others, is explained by this, by the nature of illation, that is, as derived from an inferential mark. Verbal knowledge, like inferential, requires consideration of pervasion [or invariable concomitance], and of the nature of the attributes of the subject of the question For example, such and such verbal meanings are mutually connected, inasmuch as they are recalled by terms involving an ellipse &c, as in the aggregate of verbal meaning, Drive the cow hither. In this instance a man infers the mutual connection, on recognising that there is something recalled by a plurality of terms requiring others to complete the sense pervaded by mutual connection of the meaning of the terms. U.

[1] प्रमाणान्तराणि लैङ्गिकेऽन्तर्भावयितुं प्रकरणान्तरमारभते । शाब्दं शब्दकरणकं ज्ञानमिदमिति यन्नैयायिकादीनामभिमतं तदप्येतेन लैङ्गिकत्वेन लिङ्गप्रभवत्वेनैव व्याख्यातं यथा व्याप्तिपक्षधर्मताप्रतिसन्धानापेक्षं लैङ्गिकं यथा शाब्दमपि तथाहि एते पदार्थाः मिथः संसर्गवन्तः आकाङ्क्षादिमद्भिः स्मारितत्वात् गामभ्याजेति पदार्थसार्थवत् तत्रहि आकाङ्क्षादिमत्पदकदम्बस्मारितत्वं पदार्थानां मिथःसंसर्गवत्त्वव्याप्यं गृहीत्वैव संसर्गवत्त्वमनुमिनोति ॥

[2] By this, by the explanation of inferential knowledge verbal knowledge or cognition produced by knowledge, of words, is explained. The Naiyáyiks and others hold that there is a kind of experiential cognition termed apprehension of construction, differing both from perception and inference In the teaching of the Vaiseshikas this is not admitted In the case of verbal knowledge they hold that what takes place is inference regarding contiguity of the senses of terms For instance upon hearing the proposition The cow exists, it is inferred that the cow is characterised by existence inasmuch as this is recalled by the term wherein resides implication of words to be supplied favourable to apprehension of construction characterised by the notion of existence in the proper object qualified, as in [the familiar instance of] a water-pot; or the inference results from what is recalled by the term *cow*, this term being uttered together with *exists*, as in the case of the eye; but there is no peculiar kind of cognition produced by words. For according to the doctrine of the Naiyáyikas also, apprehension of construction is impossible unless there be assurance that terms were pronounced consecutively in virtue of their forming a sentence, since such assurance is a pre-requisite. V.

हेतुरपदेशो लिङ्गं प्रमाणं करणमित्यनर्थान्तरम् ॥ ४ ॥

Aph. 4. There is no difference of meaning in argument, reason, mark, evidence, and instrument

[3] Though the term *reason (apadeśa)* applies in technical language to merely apparent argument [or fallacy] yet it applies also to a term, according to the derivation, something being reasoned or affirmed thereby It is of inferential knowledge that a term, in its character of inferential mark, is the cause. A term is also the instrument of illative certainty. Similarly instrumentality resides in a term in its character of inferential mark There is no difference of meaning, therefore, in argument, reason, mark, evidence, and instrument. These terms denote only the inferential mark, and do not denote only that which is fallacious There is therefore no impossibility in the fallacious not producing an inference, and the term producing an inference, and great, accordingly, is the error of the objector. V

अस्येदं बुद्ध्यपेक्षितत्वात् ॥ ५ ॥

Aph 5. Because they are implicated in the notion of this belonging to that.

[1] It is laid down that recognition through similarity *(upamána)* &c., are included in inference, because their nature is such that there arises respecting them an implication of the notion that such and such an argument, included, belongs to such and such a major, inclusive; in fine, because they involve a knowledge of pervasion [or universal concomitance] It is to be supplied as an ellipse, that the nature of inference belongs to the cognitions instanced as recognition through similarity, presumption, probability, and traditional teaching. Of these the cognition produced by recognition through similarity is the perceptive cognition of a

[2] एतेन लैङ्गिकज्ञानकथनेन शाब्दं शब्दज्ञानजन्यज्ञानमपि व्याख्यातं कथितमित्यर्थः नैयायिकप्रभृतिभिरन्वयबोधनामकं प्रत्यक्षानुमितिभिन्नमनुभवरूपं ज्ञानं मन्यते वैशेषिकमतेतु न तदङ्गीकारः पदज्ञानस्थले पदार्थसंसर्गस्यानुमितिरेव भवति तथाहि गौरस्तीतिवाक्यश्रवणान्तरं गौरस्तितावान् स्वधर्मिकास्तित्वान्वयबोधानुकूलाकाङ्क्षाश्रयपदस्मारितत्वात् घटवत् अस्तिपदसमभिव्याहृतगोःपदस्मारितत्वाद्वा चक्षुर्वदित्यनुमानमेव नतु शब्दजन्यो विलक्षणोबोधः पदानामेकवाक्यतापन्नत्वरूपसमभिव्याहृतत्वनिश्चयं विना न्यायनयेऽप्यन्वबोधस्यानुत्पत्त्या पूर्वं तस्यावश्यकत्वात् ॥

[3] अपदेशशब्दो यद्यपि परिभाषया हेत्वाभासे वर्तते तथापि अपदिश्यते कथ्यतेऽनेनेतिव्युत्पत्त्या शब्देऽपि स वर्तते शब्दश्च लिङ्गविधया लैङ्गिकज्ञान एव हेतुरिति अनुमितिप्रमितिकरणञ्च शब्दोऽपि एवं लिङ्गविधया करणत्वमपि शब्दे वर्तते तथाच हेतुरपदेशोलिङ्गं प्रमाणं करणमित्यनर्थान्तरं एते शब्दा एकस्य लिङ्गस्य बोधकाः नतु हेत्वाभासमात्रबोधकाः हेत्वाभासस्याननुमापकत्वेऽपि शब्दस्यानुमापकत्वे न काचिदनुपपत्तिरित्याशङ्कितुर्भ्रान्तिर्महतीतिभावः ॥

[1] उपमानादेरप्यनुमान एवान्तर्भाव इति प्रतिपादयति । अस्य व्यापकस्य साध्यस्य इदं साधनं व्याप्यमिति बुद्धेर्याऽपेक्षा सा जाता येषां तत्त्वात् व्याप्तिज्ञानसापेक्षत्वादिति तु फलितार्थः उपमानार्थापत्तिसम्भवैतिह्यस्थलीयबुद्धीनां लैङ्गिकत्वमिति शेषः । तत्रोपमानजन्या बुद्धिस्तावत् ग्रामीणस्य प्राथमिकगवयचक्षुःसंयोगानन्तरमयं गोसदृश इति प्रात्यक्षिकं ज्ञानं ततो गोसदृशोगवयपदवाच्य इत्यतिदेशवाक्यार्थस्मरणं तत एतज्जातीयो गवयपदवाच्य इति या बुद्धिरुदेति सोपमितिरिति न्यायमतानुसारिणः काणादमते तु साऽनुमितिरेव गोसादृश्यलिङ्गेन गवयपदवाच्यत्वव्याप्यतया गृहीतेन गवयपदवाच्यत्वस्यानुमितेरेव तदानीं जननात् व्याप्तिधीविरहदशायाञ्च न भवत्येव गवयपदवाच्यत्वधीरिति । अथवा गवयप्रत्यक्षानन्तरं गवयपदं गवयत्वप्रवृत्तिनिमित्तकम् असति वृत्त्यन्तरे वृद्धैस्तत्र प्रयुज्यमानत्वात् यथा गोपदं गोत्वप्रवृत्तिनिमित्तकम् यद्वा गवयपदं सप्रवृत्तिनिमित्तकं साधुपदत्वादित्यनुमानेन पक्षधर्मताबलाद्गवयत्वप्रवृत्तिनिमित्तकत्वं भासते इति । मीमांसका अर्थापत्तिं प्रमाणान्तरं मन्यन्ते तथाहि यत्र देवदत्तस्य शतवर्षजीवित्वं ज्योतिःशास्त्रादवगतं जीविनो गृहासत्त्वञ्च प्रत्यक्षादवगतं । तत्र शतवर्षजीवित्वान्यथानुपपत्त्या बहिः सत्त्वं कल्प्यते तदनुमानेन गतार्थत्वान्नेष्यते तथाहि जीवित्वस्य बहिःसत्त्वगृहसत्त्वान्यतरव्याप्यत्वं गृहीतं तत्रान्यतरसिद्धौ जायमानायां गृहसत्त्वबाधात् बहिः सत्त्वमनुमिनोतीति भासते एवं पीनो देवदत्तो दिवा न भुङ्क्ते इत्यादौ पीनत्वस्य भोजनव्याप्यत्वावगमाद्भोजनं सिद्ध्यत् दिवाभोजनबाधे रात्रिभोजनं सिध्यति । एवं सम्भवैतिह्ययोरपि प्रमाणान्तरत्वं मन्यन्ते पौराणिकाः तथाहि सम्भवो भूयः सहचाराधीनज्ञानं यथा सम्भवति ब्राह्मणे विद्या सम्भवति सहस्रे शतमत्र च व्याप्तिर्नापेक्षितेति तेषामाशयः एवमैतिह्यमिति होचुरित्यनेन प्रकारेण यदुच्यते तद्धि अनिर्दिष्टप्रवक्तृकं परम्परागतं वाक्यं यथा वटे वटे यक्ष इत्यादि तस्याप्रोक्तत्वानिश्चयान्न शब्देऽन्तर्भाव इति पौराणिकानभिसन्धः तदेतन्मतं न समीचीनम् ऐतिह्यस्य शब्दरूपतयाऽनुमानएवान्तर्भावात् सम्भवोऽपि व्याप्तिसापेक्षोऽनुमान एवान्तर्भवति तन्निरपेक्षस्तु प्रमाणमेव न तदुक्तं गौतमीये शब्द ऐतिह्यानर्थान्तरभावादनुमानेऽर्थापत्तिसम्भवाभावानामनर्थान्तरभावाच्चाप्रतिषेधः इति भट्टमते वेदान्तमते चानुपलब्धेरपि प्रमाणान्तरत्वमस्ति तयाचाभावप्रत्यक्षोभवतीति तन्मतमपि न मनोरमम् अनुपलब्धिस्थले इन्द्रियसम्बद्धविशेषणताप्रत्यासत्त्या प्रत्यक्षमेव भवतीति तत्र चानुपलब्धेः कारणत्वं न विप्रतिपद्यामहे प्रमाणान्तरत्वन्तु तस्या न युक्तिपदवीं स्पृशतीति संक्षेपः ॥

rustic after the first conjunction of his eye with a gayal that it is like a cow. Next ensues recollection of the ampliative proposition that by the term gayal an animal like a cow is designated The cognition that arises that an animal of the present kind is designated by the term gayal is a recognition through similarity. Thus the followers of the Nyáya doctrine. In the teaching of Kanáda this is merely an illation, because there is produced at that time only an inference of the designation of the term gayal by means of similitude to a cow as an inferential mark included under designation by the term gayal; while the notion of the applicability of the term gayal does not so much as come into being under the circumstance of absence of the notion of pervasion. Or else the term gayal, after perception of a gayal, occasions a sense of the nature of a gayal, it having no other function, since it has been applied to that object by the ancients just as the term cow is the occasion of a sense of the nature of a cow. Or it may be that the occasion of the sense of the nature of a gayal appears from the force of the attribution concerning the subject of the question, by means of the inference that the term gayal is an occasion of a practical acceptation inasmuch as it is a legitimate term. The Mímáṇsakas hold that presumption is another form of evidence. For instance, when it has been ascertained from astrology that Deva-datta is to live for a hundred years, and from observation that he has no house to live in, it is next presumed that, inasmuch as his living a hundred years is otherwise impossible, he must live in the open air This as being a fact of implication is not accepted by them as an inference. In this example, inasmuch as the notion of living involves the notion of living either in a house or in the open air, and inasmuch as it is impossible that he should live in a house, the other alternative being established, his living in the open air appears in the process of illation In like manner in the familiar example Deva-datta is stout but does not eat by day, [therefore he eats at night], it being settled that he must eat, since stoutness is observed to be pervaded [or universally accompanied] by eating, and it being contrary to hypothesis that he should eat by day, it follows that he eats at night. Similarly the Pauráṇikas hold probability and traditional teaching to be other forms of evidence. Probability is a cognition dependent on a plurality of concomitances, as for instance learning is probable in a Bráhman, and a hundred instances are probable among a thousand, while there is no pervasion [or universal concomitance] necessitated. Such is their view. In like manner traditional teaching, which is delivered in the form Thus indeed they have declared, for this is a proposition derived through a succession of witnesses and having no determinate author. For instance In every sacred fig-tree a Yaksha dwells &c. This, in the view of the Pauráṇikas, being ascertained as having been declared by competent authority, is not included under verbal knowledge This doctrine of theirs is not correct, for traditional teaching being a kind of verbal knowledge is included under inference. Probability, also, so far as it involves a pervasion is included under inference, and so far as it is irrespective of universal concomitance, it is not a form of evidence at all Accordingly it is declared in the aphorisms of Gautama, Inasmuch as traditional teaching is not a different thing, it is not denied of verbal knowledge, and inasmuch as presumption, probability, and impossibility are not different things, they are not denied of inference. According to the doctrine of Bhaṭṭa and that of the Vedánta non observation is also another form of evidence, and apprehension of non-existence takes place thereby This doctrine also cannot be accepted. In the case of non-observation it is perception that arises by means of a presentation of attribution connected with the organs of sense We do not controvert the fact that this is the cause of non-observation, but to maintain that non-observation is an independent form of evidence does not belong to the course of propriety V.

**आत्ममनसोः संयोगविशेषात् संस्काराच्च स्मृतिः ॥ ६ ॥**

Aph. 6. Reminiscence [results] from a particular conjunction of the soul with the internal organ, and from reproduction.

[1] The word results is to be supplied. The particular conjunction is reflection and other attention. From this, as the non-coinherent cause, reminiscence, a kind of knowledge, is produced in the soul, as the co-inherent cause The instrumental cause is stated in the words from reproduction and by the particle and the active element of former experience is involved. This recollection [or reminiscence] imitates the correctness or incorrectness of the previous experience, such being the recollection of one who mistakes a rope for a snake and flees from it. Reminiscence does not take place always in every case, since it depends on the resuscita-

[1] उत्पद्यत इतिशेषः संयोगविशेष प्रणिधानादिसन्निधानम् एतस्मा-दसमवायिकारणादात्मनि समवायिनि स्मृतिर्विद्याविशेष उत्पद्यते निमित्तकारणमाह संस्कारादिति चकारेण व्यापारी पूर्वानुभवः समुच्चीयते अनुभवयाथार्थ्यायाथार्थ्यमियमनुविधत्ते रज्जुंभुजङ्गतयोपलभ्य पलायितस्य तथैव स्मृतेः नच सततं स्मृतिप्रसङ्गः संस्कारोद्बोधाधीनत्वात् आर्षं ज्ञानं सूत्रकृता पृथग् लक्षितं योगिप्रत्यक्षान्तर्भावितं पदार्थप्रदेशाख्ये तु प्रकरणे-तदुक्तं तद्यथा आम्नायविधातॄणामृषीणामतीतानागतवर्तमानेष्वतीन्द्रियेषु धर्मादिषु ग्रन्थोपनिबद्धेषु वा लिङ्गाद्यनपेक्षादात्ममनसोः संयोगाद्धर्मविशेषाच्च प्रातिभं ज्ञानं यदुत्पद्यते तदार्षम् इति तच्च कदाचिल्लौकिकानामपि भवति यथा कन्यका वदति श्वो मे भ्राता गन्तेति हृदयं मे कथयतीति ॥

tion of a mental impression. The knowledge of inspired sages is not separately defined by the au hor of the aphorisms, being included in the perception of ascetics but it is stated in the section intitled Enunciation of the categories that the presentative cognition which is declared to belong to inspired sages, the promulgators of revelation, resulting from particular merit, from conjunction of the soul and the internal organ irrespective of inferential marks &c, and conversant about supersensible objects past, present, and to come, about merit &c, and about the contents of books, is called the knowledge of inspired sages. This belongs also at times to ordinary people, as when a young maiden says My heart assures me that my brother will depart tomorrow. U.

[2] Reminiscence arises from a particular conjunction of the soul and the internal organ, that is, from a conjunction of the soul and the internal organ accompanied with a desire of recollection, from reproduction in its common form called resuscitation, and from an excitant implied by the particle and. The instrument therein is purpose, not identical with disregard; the operation [or active element] is reproduction; the excitants are the concomitants [or associated ideas]; the non-coinherent cause is conjunction of the soul and the internal organ; and the instrumental cause is reflection &c., consisting of the desire of recollection. V.

तथा स्वप्नः ॥ ७ ॥

Aph. 7. So also dreaming.

[3] As reminiscence results from a particular conjunction of the soul and the internal organ, so also does cognition in dreaming. Cognition in dreaming is the intellection of the internal organ which arises by means of the organs of sense in one whose senses are at rest, and whose internal organ is absorbed. This of three kinds It arises partly from acuteness of reproduction, whatever object one in love or anger thinks of intently when he goes to sleep taking with him in that state the form of perceptive cognition, through the influence of mental reproductive power produced by previous hearing of the legendaries [*Puránas*] &c, in the form This is the contest between Karna and Arjuna, and the like. It arises partly from derangement of the bodily affections wind, bile and phlegm. Of these, one under disorder of the wind experiences transit through the air, wandering about on the earth, fleeing with fear from tigers &c., another by the excess of the derangement caused by increase of bile experiences entrance into fire, the embracing of flames of fire and sees golden mountains, the corruscations of flashing lightning, the conflagration of the spheres &c, another through predominance of phlegmatic disorder experiences passages through the sea, immersions in rivers and sprinklings with showers of rain, and sees mountains of silver and the like. Through the influence of deserts, also, in the cognition which is produced in the internal organ immersed in the experiences of this or former states of being, arises auspicious imagination, due to merit, and having as its objects the riding upon elephants, ascent of mountains, assumption of the princely umbrella, feasting upon rice and milk, interviews with the sovereign, and the like; while through demerit arises dreaming imagination of unction with oil, the falling through blindness into a well, riding upon camels, immersion in mire, the sight of one's own nuptials and the like. Herein the three are conjointly causes, and this division is to be considered as reposing on the relation of predominance among the qualities U.

स्वप्नान्तिकम् ॥ ८ ॥

Aph 8 [So also] consciousness in dreaming.

[1] Some one may say The cognition which arises in the midst of a dream, in the form of recollection of that which is experienced in dreaming cognition, has not the nature of dreaming, inasmuch as it is an experience of dreaming; whence then does it arise? The answer is

[2] आत्ममनसोः संयोगविशेषात् सुस्मूर्षादिसहितादात्ममनःसंयोगात् संस्कारात् समानाकारकात् भावनाख्यात् चकारादुद्बोधकाच्च स्मृतिर्भवति तत्र च उपेक्षानात्मकनिश्चयः करणं संस्कारो व्यापार उद्बोधकास्तत् सहकारिणः आत्ममनःसंयोगोऽसमवायिकारणं सुस्मूर्षारूपप्रणिधानादिकं निमित्तकारणमित्यर्थः ॥

[3] यथात्ममनसोः संयोगविशेषात् संस्काराच्च स्मृतिस्तथा स्वप्नज्ञानमपीत्यर्थः । उपरतेन्द्रियग्रामस्य प्रलीनमनस्कस्य इन्द्रियद्वारेण यदनुभवनं मानसम् तत स्वप्नज्ञानम् तच्च त्रिविधं किञ्चित् संस्कारपाटवात् कामी क्रुद्धो वा यमर्थमादृतश्चिन्तयन् स्वपिति तस्य तस्यामवस्थायां प्रत्यक्षाकारं ज्ञानं पुराणादिश्रवणजनितसंस्कारवशाज्जायते कर्णार्जुनीयं युद्धमिदमित्याकारम् किञ्चिद्धातूनां वातपित्तश्लेष्मणां दोषात् तत्र वातदोषादाकाशगमनवसुन्धरापर्यटनव्याघ्रादिभयपलायनादीनि पश्यति पित्तोपचयदोषमहिम्ना वह्निप्रवेशवह्निज्वालालिङ्गनकनकपर्वतविद्युल्लताविस्फुरणदिग्दाहादिकं पश्यति श्लेष्मदोषप्राबल्यात्तु समुद्रसन्तरणनदीमज्जनधारासारवर्षणरजतपर्वतादि पश्यति अदृष्टवशादपि तज्जन्मानुभूतेषु जन्मान्तरानुभूते वा सिद्धोपप्लुतान्तःकरणस्य यज्ज्ञानमुत्पद्यते तत्र शुभावेदकं धर्मात् गजारोहणपर्वतारोहणछत्रलाभपायसभक्षणराजसन्दर्शनादिविषयकम् अधर्मात्तु [illegible] विवाहदर्शनादि विषयकं [illegible] कारणत्वं गुणप्रधानभावमाश्रित्यायं विभागो द्रष्टव्यः ॥

[1] ननु यज्ज्ञानं स्वप्नमध्ये स्वप्नज्ञानानुभूतस्यैवार्थस्य स्मृतिरूपं जायते तत्र स्वप्नत्वं न वर्तते स्वप्नस्यानुभवरूपत्वात् तथाच कस्मात् कारणात्तदुत्पत्तिरित्यत आह । तथेति पूर्वसूत्रादनुवर्तते तेनात्ममनसोः संयोगविशेषात् संस्काराच्च यथा स्वप्नस्तथा स्वप्नान्तिकमपीत्यर्थः । एतावानेव विशेषो यत् स्वप्नज्ञानं पूर्वानुभवजनितात् संस्कारात् [illegible] तत्कालीनात्वनुभवजनितसंस्कारादेव तदुक्तं प्रशस्तदेवाचार्यैः अतीतज्ञानप्रत्यवेक्षणात् स्मृतिरेव इति । उक्तञ्च वृत्तिकारैः अनुभूतवस्तुस्फुरणार्थतया न स्मरणादर्थान्तरं स्वप्नज्ञानम् इति । स्वप्नमध्ये प्रमाभूतं यज्ज्ञानं तत् स्वप्नान्तिकमिति केचित् यथा शय्यायां शयानोऽस्मीत्यादि ॥

furnished in the aphorism The words *So also* are to be taken in from the preceding aphorism The meaning, therefore, is that as dreaming, so also the consciousness in dreaming, arises from a particular conjunction of the soul with the internal organ, and from reproduction. The difference extends thus far that cognition in dreaming results from reproduction produced by former experience, while consciousness in dreaming results from reproduction produced by experience arising at the very time. It has therefore been stated by Praśasta-deváchárya that from looking back upon past cognitions recollection only results, and the author of the Vṛitti says that cognition in dreaming, being a flash of experienced objects is not a different thing from reminiscence Some teach that consciousness in dreaming is knowledge amounting to certitude during dreams, such as that one is lying in bed. U.

धर्माच्च ॥ ९ ॥

Aph. 9. Also from merit.

[2] A cause of dreams and of consciousness in dreaming is added The particle *also* implies the addition of demerit. The explanation of this has already been given U.

इन्द्रियदोषात् संस्कारदोषाच्चाविद्या ॥ १० ॥

Aph 10 Nescience [results] from derangement of the organs of sense, and from imperfection in reproduction.

[3] Intelligence according to another mode is divided into two kinds, certitude and incertitude Of these, the cause of incertitude is stated Derangements of the organs of sense are ophthalmia &c Imperfection in reproduction is the resulting from erroneous experience. The particle *and* implies the addition of such imperfections as remoteness &c, and as sumptions of which the inferential mark [or middle term] is illegitimate The cause then of nescience or incertitude is imperfection; and imperfection, as consisting of biliousness, remoteness &c, is of various kinds V.

तद्दुष्टज्ञानम् ॥ ११ ॥

Aph. 11. This [nescience] is imperfect cognition.

[4] This, an indeclinable word, conveying the general sense of the pronouns, refers to nescience. This nescience is defective cognition, cognition assertory of too much or too little, cognition determined by the form of the wrong object and asserting that this is in that, a cognition the form of which does not reside in its subject Imperfection is defined as being uncertainty of cognition Suspense, therefore, though admitting of one valid alternative, is vicious, being identical with inattention The four [forms of nescience], therefore, [known as] suspense erroneous assurance, dreaming, and non-apprehension are hereby implied U.

अदुष्टं विद्या ॥ १२ ॥

Aph 12. [Cognition] free from imperfection is science.

[5] The word cognition is to be supplied from the preceding aphorism Science is experience of that wherein there is cognition free from imperfection, that is, produced by organs of sense which are not deranged; or experience the form of which resides in a common substratum, or experience such that that which is not its form does not reside in its subject, and this is of two kinds, immediate and inferred U.

आर्षं सिद्धदर्शनञ्च धर्मेभ्यः ॥ १३ ॥

Aph 13 The knowledge of inspired sages, and perfect vision [result] from merits.

[1] Some might ask wherefore the knowledge of ascetics is not nescience, since imperfection of the objects, as remoteness &c, is possible in such cognition. To this the answer is furnished in the aphorism. The knowledge of inspired sages, which is produced by merit acquired by asceticism, the perfect vision, the

---

[2] स्वप्नस्वप्नान्तिकयोः कारणं समुच्चिनोति । अधर्मसमुच्चयार्थश्चकारः कृतव्याख्यानमेतत् ॥

[3] प्रकारान्तरेणापि बुद्धिर्द्विविधा प्रमाऽप्रमा चेति तत्राप्रमायाः कारणमाह । इन्द्रियदोषः काचादिः संस्कारदोषोभ्रमानुभवजातत्वादिः चकाराद्दूरत्वादिरूपाणामसल्लिङ्गपरामर्शादिरूपाणाञ्च दोषाणां सङ्ग्रहः तथाचाविद्यायामप्रमायां दोषः कारणं दोषस्तु पित्तदूरत्वादिरूपो नानाविध इत्यर्थः ॥

[4] तदित्यव्ययपदं सर्वनामसमानार्थकमविद्यां परामृशति साऽविद्या दुष्टज्ञानं व्यभिचारिज्ञानमेतस्मिंस्तदितिज्ञानं व्यधिकरणप्रकारावच्छिन्नविशेष्यावृत्तिप्रकारकमिति यावत् दोषश्च ज्ञानस्यानिश्चयरूपत्वमपि तेनैककोटिसत्त्वेऽपि संशयोदुष्ट एवानवधारणात्मकत्वात् तदनेन संशयविपर्यस्वप्नानध्यवसायानाञ्चतुर्णामप्युपसंग्रहः ॥

[5] ज्ञानमित्यनुवर्तते अदुष्टमदुष्टेन्द्रियजन्यं यत्र यदस्ति तत्र तदनुभवो वा समानाधिकरणप्रकारानुभवो वा विशेष्यावृत्त्यप्रकारकानुभवो वा विद्येत्यर्थः तच्चाध्यक्षं लैङ्गिकञ्च द्वयमेव ॥

[1] ननु योगिनां ज्ञानं कथमविद्या न भवति दूरत्वादिरूपविषयदोषस्य तत्रापि सम्भवादत आह । आर्षमृषीणां योगजधर्मेण जनितं यत् सिद्धदर्शनं सिद्धानां सतां सर्वेषां वस्तूनां दर्शनं तद्धर्मेभ्यो जायते नतु तत्राधर्मकारणमिति न तत् कदाचिदपि भ्रमरूपं भ्रमं प्रति अधर्मस्य हेतुत्वात् योगिनां ज्ञानन्तु धर्ममात्राधीनं प्रमारूपमेव भवति दूरत्वादेर्विषयदोषस्य तत्र भ्रमत्वासम्पादकत्वात् दोषाणां भ्रमजनकत्वधर्मसहकारेणैवेतिहृदयम् केचित्तु सिद्धेन मन्त्राद्यभिमन्त्रितेन गुटिकाञ्जनविशेषादिना यद्दर्शनं भवति तदपि आर्षवत् धर्मेभ्य एव भवति अतएव रघुवंशे अतीन्द्रियेष्वप्युपपन्नदर्शनो बभूव भावेषु दिलीपनन्दनः इत्यादिकमपि साधु सङ्गच्छते तथाच तादृशज्ञानमपि धर्ममात्राधीनतया प्रमारूपमेव भवतीतिभाव इति व्याचक्षते ॥

vision of all objects perfect or real, arises from merits If it be suggested that demerit may be the cause thereof, we deny this, for such knowledge is never erroneous, and demerit is the cause of error. But the knowledge of ascetics, depending solely upon merit, arises solely in the form of certitude, inasmuch as remoteness and the like, the defects of the object, cannot effect erroneousness therein, and we feel assured that defects beget error only by the assistance of demerit Some maintain that the vision which results by means of a spell, as by means of a particular kind of ball of collyrium over which a sacred text has been recited results only from merits, like the knowledge of inspired sages The verse of the Raghu-vanśa, [ch. 3. 41,] The son of Dilípa acquired the vision of supersensible objects &c, well accords with this exposition Hence they explain the meaning to be that such knowledge also, as depending only upon merit, arises solely in the form of certitude. V.

---

## TENTH BOOK, FIRST DAILY LESSON.

**इष्टानिष्टकारणविशेषाद्विरोधाच्च मिथः सुखदुःखयोरर्थान्तरभावः ॥ १ ॥**

Aph. 1 Inasmuch as causes desirable and undesirable are different and opposed. the mutual relation of pleasure and pain is that of different objects.

[1] The object of the tenth book is the exposition of the division of the attributes of the soul according to their cause. The division of pleasure and pain is first stated among these, with the purpose of rejecting the error that pleasure differs not from pain, which error might arise from the omission of pleasure in the aphorism of Gautama which enumerates the objects of certitude. Soul, body, organ of sense, object of sense, intelligence, internal organ, activity, fault, transmigration recompense, pain, and emancipation are the objects of certitude. There exists between pleasure and pain the mutual relation of different objects, difference, or variety. Should it be asked why it is so, it is stated that it is because there is a difference in causes desirable and undesirable, that is, because there is a distinction between a desirable cause such as garlands, sandal-wood, women &c., and an undesirable cause, such as snakes, thorns &c Difference of effect necessarily depends upon difference of cause. Another ground of the distinction is laid down in the opposition, for pleasure and pain are never experienced simultaneously in one and the same soul By the particle *and* the difference of the effects of pleasure and pain is implied also as a ground for distinguishing between them. For instance, graciousness, the embrace, clearness of the eyes &c are the effects of pleasure, while despondency and a sullied countenance are the effects of pain; wherefore pleasure and pain must differ. It has therefore been stated by Praśasta-deváchárya, Pleasure has graciousness as its characteristic; and is that which is produced through conjunction of the soul and internal organ supposing merit &c, or through the contiguity of the organ and the object of sense in the recognition of something desirable produced, where garlands and other desirable objects are at hand, and is productive of graciousness, embraces, clearness of the eyes &c. In the case of past objects, such as garlands, sandal-wood, and the like, pleasure arises from reminiscence; in the case of future objects, from purpose [or resolution] The non-enumeration of pleasure in the aphorism of Gautama is to promote indifference; since indifference would arise in one who should account even pleasure as pain. U.

**संशयनिर्णयान्तराभावश्च ज्ञानान्तरत्वे हेतुः ॥ २ ॥**

Aph 2 Non-inclusion in doubt and assurance is a mark that [pleasure and pain] are different from cognition

[1] The mark that pleasure and pain are different from cognition, distinct from the attribute knowledge, is that they are not included under doubt and assurance, that is, that they do not fall under either certainty or uncertainty For the attribute knowledge is of two kinds, doubt and assurance; and neither

[1] आत्मगुणानां कारणतो भेदव्युत्पादनं दशमाध्यायार्थः तत्र आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम् इति गौतमीये प्रमेयविभागसूत्रे सुखस्यानभिधानात् दुःखाभिन्नमेव सुखमिति भ्रमनिरासार्थं सुखदुःखयोरेव प्रथमं भेदमाह । सुखदुःखयोर्मिथः परस्परमर्थान्तरभावो भेदो वैजात्यमितियावत् कुत इत्यत आह इष्टानिष्टकारणविशेषात् इष्टं इष्यमाणं स्रक्चन्दनवनितादि अनिष्टमनिष्यमाणमहिकण्टकादि तद्रूपं यत्कारणं तस्य विशेषाद्भेदात् कारणवैजात्याधीनं कार्यवैजात्यमावश्यकं यतः भेदकान्तरमाह विरोधात् सहानवस्थानलक्षणात् नह्येकस्मिन्नात्मन्येकदा सुखदुःखयोरनुभवः । चकारादनयोः कार्यभेदं भेदकं समुच्चिनोति तथाहि अनुग्रहाभिष्वङ्गनयनप्रसादादि सुखस्य दैन्यमुखमालिन्यादि दुःखस्य कार्यमिति ततोऽप्यनयोर्भेदः । तदुक्तं प्रशस्ताचार्यैः अनुग्रहलक्षणं सुखं स्रगाद्यभिप्रेतविषयसान्निध्ये सति इष्टोपलब्धीन्द्रियार्थसन्निकर्षाद्धर्माद्यपेक्षादात्ममनसोः संयोगाद्यदनुग्रहाभिष्वङ्गनयनादिप्रसादजनकमुत्पद्यते तत् सुखम् इति तदिदमतीतेषु स्रक्चन्दनादिषु स्मृतिजमनागतेषु सङ्कल्पजम् गौतमीये सूत्रे सुखापरिगणनं वैराग्याय सुखमपि दुःखत्वेन भावयतो वैराग्यं स्यादेतदर्थमिति ॥

[1] सुखदुःखयोर्ज्ञानान्तरत्वे ज्ञानगुणभिन्नत्वे संशयनिर्णयान्तराभावसंशयनिश्चयान्तर्गतत्वाभावो हेतुः । ज्ञानगुणो हि द्विविधा सन्देहो निश्चयश्चेति नहि तयोरन्यतरस्मिन्नपि सुखं दुःखं वाऽन्तर्भवितुमर्हति नहि सुखं दुःखं वा विरुद्धकोटिद्वयप्रकारकं येन तयोः सन्देहत्वं सम्भाव्येत नापि तदभावाप्रकारकं सत्तत् प्रकारकं येन निर्णयत्वं सम्भावनीयमिति ज्ञानस्य तृतीयप्रकारस्तु शशविषाणायमानः नातस्तत्र सुखं दुःखं वा प्रवेष्टुमीष्टे इति ॥

pleasure nor pain can be included under either of those kinds. For neither pleasure nor pain has the form of two repugnant alternatives, that it should be probable that they have the nature of doubt, nor has either possession of a given form together with absence of the negation of that form, that it should be likely that they have the nature of assurance or certainty. The supposition of a third form of cognition is chimerical, and consequently neither pleasure nor pain can come under knowledge. V.

तयोर्निष्पत्तिः प्रत्यक्षलैङ्गिकाभ्याम् ॥ ३ ॥

Aph. 3. The production thereof [i. e. of doubt and assurance] is by means of perception and inference.

[2] The production thereof, that is of doubt and assurance, results from perception, and from an inferential mark. Neither pleasure nor pain is produced by the perceptive or inferential apparatus. For pleasure is of four kinds, sensuous, accompanying desire, relating to self-esteem, or resulting from practice. Of the last three of these origination from contiguity [of the object] with the organ of sense cannot be predicated. And should it be contended that the first is cognition inasmuch as it is generated by contiguity of the organ and object of sense, we reply that it is not so, for part only of the causal apparatus cannot prove homogeneity in the product, else all products would be uniform as having time and space as their common antecedents. Moreover [if pleasure were cognition] the pleasure which is not produced, through contiguity of the organ and object of sense would be either non-discriminative or discriminative; but it cannot be the former, for then it would be supersensible, nor can it be the latter, inasmuch as it does not consist of a judgment respecting two objects in the relation of subject and predicate. Again, a pleasure and pain are necessarily accompanied with sensibility, [were they forms of cognition] there would be involved in the notion of a sensibility of cognition a regression to infinity. The inferential means an argument, as the objective [means an object] The author of the Vritti explains the aphorism thus, that the origin of these, that is of cognition and pleasure, is explained by perception and inference, that is, by perceptive and inferential cognition, and that whereas perceptive cognition is produced by the senses, and inferential by arguments. it is otherwise with pleasure, &c. U.

अभूदित्यपि ॥ ४ ॥

Aph. 4. The notion of the past also [is a difference between cognition and pleasure and pain]

[3] A difference depending upon a difference of form in pleasure &c, as compared with inferential knowledge is here stated. The word *iti* means the form; and the word also adds another form, that of the future. A form, therefore, past &c., is observed in inferential knowledge, as that fire has been or will be in the mountain; but pleasure or pain produced under this form has never been observed. U.

A. E. G.

[2] तयोः संशयनिर्णययोर्निष्पत्तिरुत्पत्तिः प्रत्यक्षाल्लिङ्गाच्च सुखं दुःखं वा न प्रत्यक्षसामग्रीजन्यं न वा लिङ्गजन्यम् चतुर्विधं हि सुखं वैषयिकं मानोरथिकम् आभिमानिकमाभ्यासिकञ्च तत्र त्रयाणामिन्द्रियसन्निकर्षप्रभवत्वं नास्त्येव प्रथममिन्द्रियार्थसन्निकर्षजत्वात् ज्ञानं स्यादिति चेन्न सामग्र्येकदेशस्य कार्यस्य साजात्यानापादकत्वात् अन्यथा दिक्कालसाधारण्येन सकलकार्यैकजात्यापत्तेः किञ्च इन्द्रियार्थसन्निकर्षानुत्पद्यमानं सुखं निर्विकल्पकं वा स्यात् सविकल्पकं वा नाद्यः अतीन्द्रियत्वप्रसङ्गात् न द्वितीयः विशेष्यविशेषणभावेन द्वयोरनाकलनरूपत्वात् किञ्च सुखदुःखयोरावश्यकसंवेद्यत्वात् ज्ञानस्यावश्यसंवेद्यत्वेऽनवस्थाप्रसङ्गात् लैङ्गिकमिति लिङ्गमेव वैषयिकवत् । वृत्तिकृतस्तु तयोर्ज्ञानसुखयोर्निष्पत्तिः प्रत्यक्षलैङ्गिकाभ्यां प्रत्यक्षलैङ्गिकज्ञानव्याख्यानाभ्यां व्याख्याता प्रत्यक्षं ज्ञानमिन्द्रियजम् लैङ्गिकन्तु लिङ्गजम् सुखादिकन्तु नैतादृशमिति व्याचक्षुः ॥

[3] लैङ्गिकज्ञानात्सुखादेः प्रकारभेदाधीनं भेदमाह । इतिशब्दः प्रकारे अपिशब्दो भविष्यतीत्याकारान्तरसमुच्चये तथाच पर्वते वह्निरभूद्भविष्यति वेति लैङ्गिके ज्ञानेऽतीतादिः प्रकारो दृश्यते नचैवंप्रकारं सुखं व्याप्तिर्वा उत्पद्यमानमुपलब्धम् ॥



PRINTED AND PUBLISHED BY THE PROPRIETORS, E. J. LAZARUS AND CO., AT THE MEDICAL HALL PRESS, BENARES.

# काशीविद्यासुधानिधिः

श्रीगणेशाय नमः

श्रीमद्विजयिनीदेवीपाठशालोदयोदितः । प्राच्यप्रतीच्यवाक्पूर्वापरपक्षद्वयान्वितः ॥ १ ॥

अङ्करश्मिः स्फुटयतु काशीविद्यासुधानिधिः । प्राचीनार्यजनप्रज्ञाविलासकुमुदोत्करान् ॥ २ ॥

# THE PANDIT.

A Monthly Journal, of the Benares College, devoted to Sanskrit Literature.

No. 69. Benares, February 1st, 1872. Vol. VI.


## ॥ चिन्तामणेः शब्दखण्डम् ॥

(१) यद्वा समानविभक्तिकयोरभेदानुभवबलाद्विशेषणान्वितविभक्तेरभेदार्थकत्वमतो विशेषणविशेष्यभावानुभावकत्वं तत्पदयोर्न परस्परं विना । द्वारमित्यत्राध्याहारं विना प्रतियोग्यलाभान्न स्वार्थान्वयानुभावकत्वम् । विश्वजिता यजेतेत्यत्र ममेदं कार्यमिति प्रवर्तकतात्पर्यविषयज्ञानं नाधिकारिणं विनेति(२)तदाकाङ्क्षा । यद्वा कर्तुरिवाधिकारिणो ऽप्या(३)क्षेपादेव लाभ इति तदन्वयो न शाब्दः, किं त्वानुमानिकः । (४) गौणलाक्षणिकयोरननुभावकत्वपक्षे तदुपस्थापितस्यार्थस्याध्याहृतस्येवेतरपदं विना नानुभावकत्वम् । (५) घटः कर्मत्वमानयनं कृतिरित्यादावभेदेन नान्वयबोधो, (६) ऽयोग्यत्वात् । तत्तत्पदेभ्यस्तात्पर्यविषय(७)तत्तत्पदार्थस्वरूपज्ञानं च प-

## ॥ शब्दचिन्तामणिव्याख्या रुचिदत्तीया ॥

संभवत्यर्थसाधुत्वे शब्दसाधुत्वं कथमित्यनुशयादाह । (१) यद्वेति । अभेदानुभवबलादभेदप्रकारकानुभवबलाद्विशेषणोत्तरविभक्तित्वेन तत्र शक्तिरिति भावः । ननु कर्मधारये ऽप्येवं विशेषणविभक्त्यर्थे लक्षणा स्याद्विग्रहवाक्यसमासयोः समानार्थत्वात्, तथा च निषादस्थपत्यधिकरणविरोध इति चेत्, न । कर्मधारये ऽभेदस्य संसर्गविधयैव भानाभ्युपगमात्समानार्थत्वनियमो ऽसिद्ध एव, मानाभावादिति भावः । (२) तदाकाङ्क्षेति । अर्थाध्याहारपक्षमभ्युपेत्येदम् । (३) आक्षेपादिति । अनुमानादित्यर्थः । वस्तुतः कर्तुराक्षेपो ऽयमेव यत्प्रथमान्तपदोपस्थापितत्वमिति वक्ष्यते । ननु गौणादेरितरेतरपदव्यतिरेकप्रयुक्तं नाननुभावकत्वं किं तु स्वरूपायोग्यत्वप्रयुक्तमेवेति तत्राव्याप्तिरित्यत आह । (४) गौणेति । लाक्षणिकाद्युपस्थितस्य तीरादेरनुभावकत्वं घोषादिपदस्य न लाक्षणिकादिपदं विनेति घोषादिपदं तत्र साकाङ्क्षमेव, लाक्षणिकादेस्तन्निराकाङ्क्षत्वेपि न क्षतिरनुभावकपदस्यैवाकाङ्क्षायाः सहकारित्वादित्यर्थः । अन्ये तु यदुपस्थापितस्यार्थस्य यत्पदव्यतिरेकेण नानुभवविषयत्वं तस्य तत्साकाङ्क्षत्वमिति लक्षणार्थः । एवं च तीरादेरनुभवविषयत्वं न घोषादिपदं विनेति लाक्षणिकादेरपि साकाङ्क्षत्वमेवेत्यर्थ इत्याहुः । ननु नामविभक्त्यादिवत्सामान्यतः पदान्तराभावो ग्राह्यः, तथा च समानविभक्तिकपदान्तराभावप्रयुक्ताभेदान्वयाननुभावकत्वं निराकाङ्क्षेपि गतमित्यत आह । (५) घट इति । तथा च तदन्वयबोधे तस्य साकाङ्क्षत्वमेवेत्यर्थः । तर्हि कथं नान्वयधीरित्यत आह । (६) अयोग्यत्वादिति । अत एव धर्म्यभिन्नधर्मवादिनो योग्यताभ्रमाद् भवत्येवेति भावः । नन्वन्वयपदमनुभवपर्यन्तानुसरणं च गुरु । एवं च पदान्तराभावप्रयुक्तस्वार्थज्ञापकत्वाभावसत्त्वाद्घटः कर्मत्वमित्यादौ क्रियाकर्मभावान्वये ऽप्याकाङ्क्षास्त्येव । अन्वयधीस्तु न भवति । असमर्थस्वभावत्वात् । शिलाशकलादेरङ्कुरादिवदिति यदि कश्चिद् ब्रूयात् तं प्रत्याह । (७) तत्तदिति । तथापि तत्र नाकाङ्क्षेत्यर्थः । शब्दे च

ान्तरं विनैव । (८) घटमानयतीत्यत्रैव भ्रमेण तथान्वयतात्पर्येऽपि क्रियाकारकभावेन नान्वयः । नामविभक्तिधात्वाख्यातक्रियाकारकपदार्थानामन्योन्यान्वयबोधे तान्येव समर्थानि, न तु तत्तदर्थकानि पदान्तराणि । अग्निः करणत्वमोदनः कर्मता पाकः कृतिरिष्टसाधनतेतिपदेभ्यो ऽग्निनौदनं पचेतेत्यत्रेवान्वयाबोधात् । अग्निकरणकौदनकर्मकपाकविषयकृतिरिष्टसाधनमिति (९) वाक्यं न पदम् । अत एव द्वारमित्यत्र पिधेहिपदाध्याहारः । क्रियापदार्थस्यान्यत उपस्थितावपि कारकानन्वयात् । असामर्थ्यं तु स्वभावात् । (१०) अनासन्नमप्यासन्नतादशायामासन्नत्वभ्रमेण वा ऽन्वयबोधसमर्थमेव । वह्निना सिञ्चतीत्यत्र क्रियाकारकपदयोरन्वयबोधसामर्थ्ये ऽप्ययोग्यताज्ञानं प्रतिबन्धकम् । दाहे समर्थस्याप्यग्नेर्मणिरिव । अत एव योग्यताभ्रमात् प्रतिबन्धकाभावे ततो ऽप्यन्वयबोधः । नहि स्वभावतो ऽसमर्थमारोपितसामर्थ्यं वा दहति पचति चेति । (११) प्रकृते तु पदार्थस्वरूपज्ञानं, न त्वन्वयभ्रमोऽपि । पुरुषपदं विनापि राज्ञ इत्यस्य पुत्रेण समं स्वार्थानुभावकत्वमिति न तदाकाङ्क्षा । (१२) यद्वा त्रयाणां स्मरणे ऽजनितान्वयबोधदशायां पुरुषान्वयतात्पर्याभावान्नान्वयबोध इत्यर्थेऽपि तथा । न च पुत्रस्यो (१३) त्थिताकाङ्क्षत्वात्तेनैवान्वयबोध इति वाच्यम् । तात्पर्यवशात्कचित्पुरुषेणैव प्रथममन्वयबोधात् । (१४) अत एवान्वयबोधसमर्थत्वे सत्यजनिततात्पर्यविषयबोधत्वमाकाङ्क्षेति केचित् । (१५) प्रकृतिप्रत्ययाभ्यामन्वयबोधे जनितेऽपि (१६) वाक्यैकवाक्यतावत् क्रियाकारकपदयोरजनितान्वयबोधत्वमाकाङ्क्षा ॥

नव्यास्तु पदविशेषजन्यपदार्थोपस्थितिः (१७) घटः कर्मत्वमानयनं कृतिरित्येवंविधपदाजन्यपदार्थोपस्थितिर्वा ऽऽसत्तिरन्वयबोधाङ्गमित्यासत्त्यभावादेवंविधशब्दान्नान्वयबोधः, तवाप्येवंविधपदार्थोपस्थितेः (१८) आकाङ्क्षाहेतुत्वेनावश्योपेयत्वात् । जनितान्वयबोधा(१९)न्नान्वयान्तरबोधस्तात्पर्याभावादित्याकाङ्क्षायाः कारणत्वमेव नास्ति (२०) किं तु स्वजनकोपस्थितेः परिचायकत्वमात्रमिति ॥

---

सामर्थ्यमाकाङ्क्षानियतमिति तत्सत्त्वे तदवश्यंभावः । तत्राकाङ्क्षाभ्युपगमे पदान्तराभावप्रयुक्तेत्यस्य व्यर्थत्वापत्तिश्चेति भावः । ननु ततोऽपि कदाचिदन्वयबोधो भवत्येव, तथा च पदान्तराभावप्रयुक्तमेवाननुभावकत्वमित्यतिव्याप्तिरेवेत्यत आह । (८) घटमिति । तथा च स्वरूपायोग्यत्वप्रयुक्तमेव तत्र तदिति भावः । (९) वाक्यमिति । तत्र च भिन्नैव व्युत्पत्तिरिति ततो ऽन्वयधीरित्यर्थः । नन्वेवमासत्तिर्हेतुर्न स्यात् । असामर्थ्यादेव तत्रान्वयाबोधोपपत्तेरित्यत आह । (१०) अनासन्नमपीति । तथा च तत्रासामर्थ्यमसिद्धमिति भावः । (११) प्रकृते त्विति । घटः कर्मत्वमित्यादावित्यर्थः । यस्तथैव बाल्याद् व्युत्पन्नस्तस्य ततोऽप्यन्वयधीर्भवत्येवेति नासामर्थ्यमिति वदन्ति । तन्न । असिद्धेरित्येके । तं प्रति घटमानयेत्यादिकमेवासमर्थं, तथा च पुरुषविशेषं प्रति असामर्थ्यमुक्तमित्यन्ये । नन्वेवमजनितान्वयबोधदशायामुभयसाकाङ्क्षत्वात्तदैव कुतो न राजपुरुषयोरन्वयधीरित्यनुशयादाह । (१२) यद्वेति । तात्पर्यघटिताकाङ्क्षाविरहादिति भाव इत्याहुः । तद्भ्रमे च तदन्वयधीरिष्टैवेति ध्येयम् । वस्तुतस्त्वाकाङ्क्षापि शब्दसहकारिणी न तु तज्ज्ञानमात्रमिति व्यवस्थापितम् । तथा च तात्पर्यघटिताकाङ्क्षापक्षे तद्भ्रमेऽपि तां विना राजपुरुषान्वयबोधो न स्यात् । तथा च तात्पर्याघटितैवाकाङ्क्षा । तात्पर्यधीश्च पृथक्कारणमित्येव पक्षः साधुः । एवं च राजपुरुषयोरपि साकाङ्क्षत्वमेव । तात्पर्याभावान्नान्वयधीस्तद्भ्रमे च तद्धीरिष्टैव । तदिदमुक्तं पुरुषान्वयतात्पर्याभावादिति । एवं चाकाङ्क्षाज्ञानकारणत्वे सर्वथा मानाभावः । नहि तात्पर्याघटिताया उक्ताकाङ्क्षायाः स्वरूपयोग्यतापर्यवसन्नाया व्यतिरेकज्ञाने ऽप्यन्वयसामग्रीसत्त्वे ऽन्वयबोधप्रतिबन्धो येन तथा स्यात् । नहि दण्डे चक्रव्यतिरेकप्रयुक्तं न घटाजनकत्वमिति निश्चये चक्रादिसमवहितादपि दण्डाद्व घटोत्पत्तिः । न च तस्य स्वरूपसत एव हेतुत्वात्तथा, प्रकृतेऽपि पदोपस्थितेस्तथात्वात् । नहि पदान्तरव्यतिरेकप्रयुक्तमननुभावकत्वमपि तु तदुपस्थितिव्यतिरेकप्रयुक्तमित्युक्तमिति चिन्त्यम् । (१३) उत्थिताकाङ्क्षत्वादिति । ससंबन्धिकविषयत्वादित्यर्थः । तात्पर्यघटितैवाकाङ्क्षा, तेन राज्ञ इति न पुरुषसाकाङ्क्षमित्यत्रान्यसंमतिमाह । (१४) अत एवेति । अत्रास्वरसः । अजनितान्वयबोधदशायां पुरुषसाकाङ्क्षत्वं स्यादेवेति । तात्पर्यविषयव्यावर्त्त्यमाह । (१५) प्रकृतीति । (१६) वाक्येति । यथा कुलकादावप्यवान्तरवाक्यार्थबोधपूर्वं एवापरवाक्यार्थबोध इत्यर्थः । अर्थाध्याहारानुरोधेनाह । (१७) घटः कर्मत्वमिति । (१८) आकाङ्क्षाहेतुत्वेनेति । तथा च तद्धेतोरेवेति न्यायात्सैव हेतुरिति भावः । (१९) नान्वयेति । नान्वयबोधान्तरम् । तत्र तात्पर्याभावादित्यर्थस्तत्सत्त्वे तदिष्टमेवेति भावः । (२०) किं त्विति । अन्वयबोधजनकोप-

स्थितेरासत्तिरूपायाः परिचायकत्वमित्यर्थः । अत्रेदमनभिमतिबीजम् । पदविशेषाणामननुगमेन तज्जन्योपस्थितित्वेनहेतुत्वाग्रहः । न च द्वितीयकल्पो, विकल्पासहत्वात्, तादृशयत्किंचित्पदजन्यत्वस्यातिप्रसक्तत्वात्, तादृशयावत्पदजन्यत्वस्य ग्रहीतुमशक्यत्वात् । यच्चोक्तमाकाङ्क्षाहेतुत्वेनावश्योपजीव्यत्वादिति । तन्न । उक्ताकाङ्क्षाया अननुभावकत्वरूपायास्तदजन्यत्वात् । नहि जिज्ञासाकाङ्क्षामते तदभिधानमिति वाच्यम् । तस्य ग्रन्थकृतैव दूषितत्वात् । तद्धेतुत्वस्य तेनाप्यनभ्युपगमादित्याहुः ।

वयं तु ब्रूमः । अजनिततादृशान्वयबोधत्वमाकाङ्क्षा । न तु पदान्तरव्यतिरेकप्रयुक्तत्वगर्भा । न चैवं घटः कर्मत्वमित्यादौ तत्सत्त्वेनान्वयबोधापत्तिः । क्रियाकर्मान्वयबोधविशेषे तादृशपदस्य स्वरूपायोग्यत्वात् । अत एव तान्येव पदानि समर्थानि न तु तदर्थकानि पदान्तराणि, सामर्थ्यं तु स्वभावादित्युक्तं, नहि स्वरूपायोग्यस्यापि सहकारिविरहप्रयुक्तं कार्याजनकत्वं, तथा सति स्वरूपायोग्यतैव न स्यात् । ननु तत्राकाङ्क्षासत्त्वे तस्य स्वरूपयोग्यत्वमपि स्यादेव । साकाङ्क्षपदत्वेन स्वरूपयोग्यत्वादिति चेत्, न । स्वतन्त्रान्वयाद्यनुविधायितया सहकारित्वेन तस्याः स्वरूपयोग्यतानवच्छेदकत्वात् । अन्यथा पक्षतादेरप्यनुमितिहेतुत्वं न स्यात् । किं चाभेदान्वये तस्यापि साकाङ्क्षत्वात्स्वरूपयोग्यत्वापत्तिः । अथान्वयबोधविशेषे तत्पदव्यतिरेकप्रयुक्ततदन्वयाननुभावकत्वस्वरूपाकाङ्क्षाविशेषविशिष्टपदत्वेन स्वरूपयोग्यत्वमिति चेत् । हन्तैवं तदन्वयबोधविशेषे तत्पदविशेषत्वेनैव स्वरूपयोग्यत्वमस्तु, लाघवात्पदविशेषस्याननुगमाच्चैवमिति यदि, तदाकाङ्क्षाविशेषेपि तुल्यम् । यदि चान्वयबोधसामान्ये आकाङ्क्षामात्रं प्रयोजकं तद्विशेषे आकाङ्क्षाविशेषो विशेषसामग्रीति नाननुगमो दोषावह इति तदा तत्सामान्ये पदसामान्यं तद्विशेषे पदविशेषस्तथेति तुल्यम् । अन्यथा तत्राकाङ्क्षाविरहे स्वरूपायोग्यत्वं तस्मिन्सत्याकाङ्क्षाविरहः स्वरूपायोग्यत्वे तद्व्यतिरेकप्रयुक्ताननुभावकत्वस्याप्यावश्यकत्वादिति अन्योन्याश्रयापत्तिः । अत एवेतरव्यतिरेकप्रयुक्तसिद्ध्यभावो न पक्षता । तस्माद्यथा वह्निव्याप्यवत्त्वपरामर्शत्वेन वह्न्यनुमितिस्वरूपयोग्यता तदन्यपरामर्शस्य स्वरूपायोग्यत्वाच्च ततो वह्न्यनुमितिर्न तु पक्षताविरहात् तथा स्वरूपायोग्यत्वादेव न तत्रान्वयबोधो न त्वाकाङ्क्षाविरहात् । यदि च सिसाधयिषावत्तत्रान्वयबोधान्तरतात्पर्यज्ञाने ऽन्वयबोधान्तरं भवति तदा तात्पर्यज्ञानविरहसहकृताऽन्वयबोधाभाव एवाकाङ्क्षास्तु, सा च पक्षतावत् स्वरूपसत्येव हेतुः ।

ननु का योग्यता । न ताव(२
दर्शनं, यथाकथंचित्साजात्यस्याव्यावर्तक
तावच्छेदकेन साजात्यस्याद्य जातः पयः पिबेत्214
वभावाद् वाक्यार्थस्यापूर्वत्वाच्च । नापि समभिव्याहृत(२२) पदार्थसंसर्गव्याप्यधर्मवत्त्वं, (२३) वाक्यार्थस्या(२४)नुमेयतापत्तेः । न च वस्तुगत्या संसर्गव्याप्यो यो धर्मस्तद्वत्त्वं, तच्च न ज्ञातमुपयुज्यतइति नानुमेयः संसर्ग इति वाच्यम् । योग्यताभ्रमाच्छाब्दभ्रमानुपपत्तेः । अत एवानन्वयनिश्चयविरह एव (२५) योग्यता स्वरूपसती हेतु(२६)स्तच्च तद्धर्माभावनिश्चये तत्प्रकारकशाब्दज्ञानानुदयादित्य(२७)पास्तम् । नापि समभिव्याहृतपदार्थसंसर्गाभावव्याप्यधर्मशून्यत्वं, प्रमेयमभिधेयमित्यादौ (२८) संसर्गाभावस्याप्रसिद्ध्या तदनिरूपणाद् गेहनिष्ठघटाभावे प्रमिते गेहे घटो ऽस्तीति वाक्या(२९)त्तन्निश्चये ऽप्यन्वयज्ञानानुदयाच्च । नापि बाधकप्रमाणाभावः । अन्यच्च यद्बाधकं तदभावस्यायोग्येपि सत्त्वात् । नापि

---

अन्वयबोधान्तरे तात्पर्यज्ञानं विशेषसामग्रीति तदभावादेव तदभाव इत्याकाङ्क्षाया हेतुतैव वा मास्तु । अत एव नव्यमतेपि पदविशेषजन्यपदार्थोपस्थितित्वेन हेतुत्वे ऽननुगमो न दोष इति दिक् । (२१) सजातीयेति । दृष्टान्वयकजातीयत्वमित्यर्थः । (२२) पदार्थेति । न चाद्यजातत्वं न पदार्थतावच्छेदकमिति वाच्यम् । अन्वयितावच्छेदकपरत्वादित्यन्ये । वस्तुतः पयस्त्वं पदार्थतावच्छेदकमेव तदवच्छेदेनाद्यजातसंसर्गादर्शनादिति यथाश्रुतमेव सम्यगित्यपरे । ननु प्रकृतपदार्थयोः परस्परमन्वययोग्यत्वमित्यत आह । (२३) वाक्येति । (२४) अनुमेयतेति । तथा च जितं वैशेषिकैरिति भावः । न च संशयसाधारणज्ञानहेतुत्वे नायं दोष इति वाच्यम् । यत्र योग्यतानिश्चयादन्वयबोधस्तत्रैव तदापत्तेरिति भावः । (२५) योग्यतेति । स्वरूपसद् योग्यतायास्तत्रासत्त्वादिति भावः । ज्ञानमात्रस्याकारणत्वे हेतुमाह । (२६) तच्चेति । (२७) अपास्तमिति । योग्यताभ्रमाच्छाब्दभ्रम इत्यवश्यम् । तथा चास्य योग्यतात्वे तद्धीः कारणमेव न स्यात् । किं च स्वीयानन्वयनिश्चयविरहो ऽयोग्यसाधारणः स्वपरसाधारणतद्विरहो ऽव्यापक इति भावः । (२८) संसर्गाभावस्येति । प्रमेयत्वादिसंसर्गस्य केवलान्वयित्वादिति भावः । (२९) तन्निश्चयेपीति । उक्तयोग्यतानिश्चयेपीत्यर्थः । ग्राह्याभावानवगाहित्वेन तन्निष्ठघटाभावप्रतीतेस्तन्निश्चयाप्रतिब-

ान्तरं विनैव । (८ ावः, प्रतियोगिसिद्ध्यसिद्धिव्याघातात्पर्यैपि क्षि) न च प्रकृतसंसर्गे ऽन्यत्र प्रसिद्धस्य त्वाद्य्प्रमाणस्याभावः, प्रकृतसंसर्गस्य प्रथममप्रतीते(३१)रयोग्ये ऽपि तत्सत्त्वाच्च । तत्र बाधकमप्यस्तीति चेत् । (३२)तर्हि प्रकृतसंसर्गबाधकस्याभावः, (३३) तच्चा(३४)प्रसिद्धम् । (३५) अत एव तत्र (३६) बाधकस्याप्यनिरूपणम् । नापी(३७)तरपदार्थसंसर्गाभावप्रमाविषयत्वाभावः, अपरपदार्थे केवलान्वयिन्यप्रसिद्धेः । एतेन यत्रासंबन्धग्राहकं (३८) प्रमाणं नास्ति तद्योग्यमिति निरस्तम् । नापि बोधनीयसंसर्गाभावप्रमाविरहः, प्रतियोग्यप्रसिद्धेः । (३९) बोधनीयसंसर्गस्य पूर्वमप्रतीतेः, योग्यता च न स्वरूपसत्युपयुज्यतइत्युक्तम् । अयोग्ये (४०) तत्सत्त्वस्यानिरूपणाच्च । अपि च स्वीयबाधकप्रमाविरहस्यायोग्येपि सत्त्वाद् बाधकप्रमामात्रविरहस्य ज्ञातुमशक्यत्वात् (४१) परप्रमाया अयोग्यत्वात् । न च स्वरूपसन्नेवायं हेतुः, स्वीयबाधकप्रमाविरहदशायां योग्यताभ्रमेण शाब्दभ्रमानुपपत्तेः । अन्वयप्रयोजकरूपवत्त्वेन बाधकप्रमामात्रविरहो ऽनुमेय इति चेत्, न । सेकानन्वितत्तोये द्रवद्रव्यत्वे सत्यपि बाधकसत्त्वेन व्यभिचारादुपजीव्यत्वेन तस्यैव योग्यतात्वापत्तेश्च । न चैवमेवेति वाच्यम् । आकाङ्क्षासत्यन्वयप्रयोजकरूपवत्त्वे सत्यप्यनाप्तवाक्ये बाधकप्रमायामन्वयाबोधात् । बाधकप्रमाविरहो ऽपि हेतुरिति चेत् । तर्ह्यावश्यकत्वात् (४२) सैव योग्यता ।

उच्यते । बाधकप्रमाविरहो योग्यता, सा (४३) चेतरपदार्थसंसर्गे ऽपरपदार्थनिष्ठात्यन्ताभावप्रतियोगित्वप्र-

---

न्धकत्वादिति भावः । (३०) न चेति । पूर्वं सामान्यतो ऽन्यत्र यद्बाधकं तदभाव उक्तः, इह तु प्रकृतसंसर्गइति भेदः । नन्वेकपदार्थे ऽपरपदार्थसंसर्गबाधकस्यान्यत्र सिद्धस्याभाव उक्तः,तथा च नोक्तदोष इत्यत आह । (३१) अयोग्येपीति । (३२) तर्हीति । अन्याभावसत्त्वेपि यदभावात्कार्याभावः स एव हेतुरिति प्रकृतसंसर्गबाधकप्रमाविरहो वाच्य इति भावः । (३३) तच्चेति । संसर्गस्वरूपम् । (३४) अप्रसिद्धमिति । प्रथममज्ञातमिति भावः । केवलान्वयिनीत्यन्ये । (३५) अत एवेति । संसर्गस्य प्रथममज्ञानादेवेत्यर्थः । (३६) बाधकस्यापीति । तथा च प्रतियोग्यप्रसिद्ध्यापि न तद्ग्रह इति भावः । (३७) इतरेति । प्रतियोगिव्यधिकरणेत्यत्यन्ताभावविशेषणमिति बोध्यम् । (३८) प्रमाणमिति । पूर्वं प्रमा ऽत्र प्रमाणमिति भेदः । एतदेव कुत इत्यत आह । (३९) बोधनीयेति । नह्यननुसंहितोपाधेरुपहितप्रत्यय इति भावः । केवलान्वयिनि संसर्गाभावाप्रसिद्धिरपि बोध्या । (४०) तत्सत्त्वस्येति । तादृशप्रमासत्त्वस्येत्यर्थः । बोधनीयसंसर्गस्य तत्राप्रसिद्धेरिति भावः । (४१) परप्रमाया इति । निश्चय एव हेतुरित्याशयः । विरहदशायामिति तद्भ्रमार्थमुक्तम् । (४२) सैवेति । सा च दूषितैवेति भावः । (४३) इतरपदार्थेति । नन्वितरेत्यादि पदविशेषणं, पदार्थविशेषणं, वा । नाद्यः । एकपदोपस्थाप्यकृतीष्टसाधनत्वयोरन्वयाबोधे योग्यताविलम्बादेव प्राप्ते तन्निरासाय युक्त्यन्तरानुसरणप्रयासानुपपत्तेः । नान्त्यः, प्रमेयत्वे प्रमेयत्वमित्यादावव्याप्तेरिति चेद्, न । एकपदार्थसंसर्गे तदाश्रयत्वाभिमतनिष्ठत्वस्य विवक्षितत्वात् । शब्दवदाकाशमित्यत्राव्याप्तिराकाशस्य शब्दनिष्ठात्यन्ताभावप्रतियोगित्वादित्यत उक्तं संसर्गपदम् । अत्यन्ताभावपदं विरोधिपरं, तेन गन्धप्रागभावावच्छिन्नो घटो गन्धवानित्यादौ विशिष्टवैशिष्ट्यसंसर्गप्रागभावादेरपि विरोधित्वाच्चातिव्याप्तिः । सामानाधिकरण्यमात्रेणान्वययोग्यत्वमेवेति ध्येयम् । अत एवाभावे प्रमेयत्वमित्यादावपि नाव्याप्तिः । अभावेप्याकाशाद्यभावो वर्त्ततएवेति यथाश्रुतेपि न दोष इत्यप्याहुः । अत एव दण्डी पुरुष इत्यादावपि नाव्याप्तिः । संयोगाभावस्य संयोगविरोधित्वाभावात् । प्रतियोगिव्यधिकरणत्वमपि वा प्रवेश्यम् । यदंशे समभिव्याहृतपदार्थसंसर्गत्वमभिमतं तदंशे तादृशप्रमाविशेष्यत्वाभावो विवक्षितस्तेन सेकसंसर्गे आकाशश्च जलनिष्ठात्यन्ताभावप्रतियोगीति प्रमाविशेष्यत्वसत्त्वान्न दोषः । एवं चांशभेदप्राप्तये विशेष्यतोक्तिर्विषयत्वमात्रे तात्पर्यम् । यत्तु घटसंसर्गत्वं गेहनिष्ठात्यन्ताभावप्रतियोगीति प्रमाविषयत्वं संसर्गेपीत्यव्याप्तिवारणाय विशेष्यत्वपर्यन्तम् । न च घटसंसर्गो गेहनिष्ठाभावप्रतियोगिधर्मवानिति प्रमाविशेष्यतया तथाप्यसंभव इति वाच्यम् । तत्प्रतियोगित्वमात्रप्रकारकप्रमाविशेष्यत्वाभावस्य विवक्षितत्वादिति, तच्चिन्त्यम् । अंशभेदविवक्षायामुक्ताव्याप्त्यसंभवात्तदविवक्षायामुक्तसमूहालम्बनविशेष्यत्वमादाय जलेन सिञ्चतीत्यादावव्याप्त्यापत्तेः । न चोक्ताभावप्रतियोगित्वाभाव इत्येवास्त्विति वाच्यम् । यन्मते प्रमात्वग्रहः प्रतिबन्धकस्तन्मते ऽस्योक्तत्वात् । यन्मते त्वप्रामाण्यशङ्काशून्यत्वेन विपरीतनिश्चयस्य प्रतिबन्धकत्वं तन्मते ऽयिमलक्षणमित्याहुः । यत्तु तथा सति योग्यताया वाक्यार्थमात्रपर्यवसानं स्यात् प्रतियो-

गित्वमभावविरहरूपत्वमतो जलेन सिञ्चतीत्यत्र सेकसंसर्गे जलनिष्ठात्यन्ताभावविरहरूपताविरहपर्यवसानादिति, तद्धीः प्राङ् न संभवति । अत एवाश्रेयवच्छेदकधर्मपदमिति । तन्न बुध्यामहे । कथमस्य वाक्यार्थरूपत्वं, तद्रूपत्वे वा कथं संशयसाधारणा धीर्न संभवतीति । ननु यत्रैकपदार्थसंसर्गे ऽपरपदार्थनिष्ठात्यन्ताभावप्रतियोगित्वप्रमाविशेष्यत्वाभावसंदेहस्तन्निश्चयो वा, ऽपरपदार्थसंसर्गे च एकपदार्थनिष्ठात्यन्ताभावप्रतियोगित्वप्रकारकप्रमाविशेष्यत्वनिश्चयस्तत्रोक्तयोग्यताज्ञानसत्त्वादन्वयबोधः स्यात् । न च तादृशनिश्चये संदेहादिर्न भवत्येवेति वाच्यम् । नहि तदुभयविषययोः परस्परविरहरूपत्वम्, किं तु परस्परविरहव्याप्यत्व, तथा च यदा न तादृशव्याप्तिप्रतिसंधानं तदा तादृशसंशयोदयात् । उभयोभयपदार्थससर्गयोरुभयपदार्थनिष्ठात्यन्ताभावप्रतियोगित्वप्रमाविशेष्यत्वाभावौ समुदितौ योग्यता । तथा चोदाहृतस्थले एकस्याभावनिर्णयान्न योग्यतासंदेहः संभवतीति नान्वयबोध इति चेत् । तर्हि यत्रैकाभावस्य संदेहो ऽपराभावस्य न संदेहो न वा व्यतिरेकनिर्णयस्तत्रान्वयबोधो न स्यात् । योग्यतासंदेहाद्यभावात्समुदिताभावयोर्योग्यतात्वेन तत्संदेहएव योग्यतासंदेहात् । न चेष्टापत्तिः । अनुभवविरोधात् । किं चैकपदार्थसंसर्गे ऽपरपदार्थनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वप्रमाविशेष्यत्वाभाव इत्यादिक्रमेण व्याप्तिवदन्योन्यात्यन्ताभावगर्भयोग्यताया नानात्वेन तज्ज्ञानानामननुगतत्वेन न हेतुत्वम् । न च लाघवादन्योन्याभावगर्भयोग्यताज्ञानमेव हेतुरिति वाच्यम् । तथा सत्येकपदार्थसंसर्गो ऽपरपदार्थनिष्ठात्यन्ताभावप्रतियोगीति प्रमायामपि तज्ज्ञानसंभवे शाब्दधीप्रसङ्गात् । यत्तु प्रत्येकज्ञानादेव शाब्दान्वयबोधात्सर्वयोग्यताज्ञानमन्वयधीहेतुः । न चाननुगमः । ग्राह्यसंसर्गविरोधिविरहज्ञानत्वेनानुगमात् । ग्राह्यसंसर्गविरोधित्वं च तज्ज्ञानप्रतिबन्धकज्ञानविषयत्वमिति, तन्न । अन्योन्याभावगर्भयोग्यताज्ञानसत्त्वे ऽत्यन्ताभावगर्भयोग्यताज्ञानादन्वयबोधापत्तेः । कारणतावच्छेदकावच्छिन्नयत्किंचित्सत्त्वएव कार्योत्पत्तेः । न चेष्टापत्तिः । ग्राह्यसंसर्गविरोध्यवगाहित्वेन तस्यावश्यं तत्प्रतिबन्धकत्वात् । अन्यथा तद्विरहज्ञानस्य ग्राह्यसंसर्गविरोधिविरहज्ञानत्वेन हेतुतानापत्तेः । न च तावदयोग्यताज्ञानानां प्रतिबन्धकतया तत्र तदभावकूटस्यापि शाब्दान्वयबोधहेतुत्वमिति वाच्यम् । आवश्यकत्वेन तदभावकूटस्यैव हेतुत्वापत्तौ योग्यताज्ञानस्य हेतुत्वे मानाभावात् । तस्माद्यदि स्वरूपसती योग्यता गुणत्वेनान्वयबोधहेतुत्वेनाङ्गीक्रियते परं तदा नोक्तदोषावकाशः । युक्तं च तथा । योग्यताज्ञानस्य हेतुत्वे मानाभावात् । न चायोग्ये योग्यताभ्रमेणान्वयबोध

एव मानमिति वाच्यम् [illegible] तत्रान्वयबोधः । आकाङ्क्षा[illegible]संसर्गारस्याहेतुत्वात्, कथं तर्हि बाधावतारस्तत्रापि तत्सत्त्वे ऽन्वय[illegible]त् । तर्हि यत्र तत्र बाधस्यैव प्रतिबन्धकत्वात् । ननु बा[illegible]ति चेत्, न । तु योग्यताज्ञानमित्यत्र किं विनिगमक, प्रत्युताभा[illegible] न चेत्, न । बाधस्यासंसर्गग्रहरूपतया तदभावस्य विशि[illegible] प्रतीतिमात्रहेतुत्वेनावश्यकत्वात् । अन्यथा यत्र स्वरूपसत् बाधावतार उक्तरूपयोग्यतासंशयश्च तत्रान्वयबोधप्रसङ्गात् । न च तदुभयमेकत्र न भवतीति वाच्यम् । नहि ग्राह्य एवा[illegible] निरुक्तयोग्यता येन ग्राह्यविरहनिश्चये सति तत्संदेह एव न स्यात्, किं तु ग्राह्यार्थेन व्याप्ता, तथा च व्याप्तिनिश्चयदशायां तदुभयमप्रत्यूहमेव । एतेन प्रमाभ्रमयोर्विचित्रकारणान्तरालाभात् योग्यताप्रमाभ्रमयोस्तुल्यत्वमिति निरस्तम् । स्वरूपसद्योग्यतातदभावाभ्यामेवोपपत्तेः । किं च यदि योग्यताज्ञानं कारणं तदा संशयसाधारणमेव तथा वाच्यम् । तथा च यस्य गेहे न घटसंसर्गज्ञानं किं तु अज्ञानमात्रं तं प्रति गेहे घटोस्तीति वाक्यमप्रयोजकं स्यात् । तत्रेष्टापत्तावनुभवविरोधः । अपि च यदि प्रमाविशेष्यत्वघटिता योग्यता तदा ग्राह्याभावनिश्चयमात्रं न शाब्दबोधप्रतिबन्धकं तथा च न तत्संशयो ऽपि प्रतिबन्धिका स्यात् । तथा च यत्रैको वदति गेहे घटोस्तीत्यपरो वदति नास्तीति तत्रोभयत्र योग्यतासंशयसत्त्वादुभयान्वयबोधः स्यादिति महद्वैषम्यं स्यादिति वदन्ति । वयं तु ब्रूमः । विषयाबाधो योग्यता, सा चैकान्वयप्रतियोगिन्यपरान्वयप्रतियोगिसंसर्गो येन संबन्धेन यत्र यद्ग्राह्यत्वं तेन तद्वत्त्वमिति यावत् । तज्ज्ञानं संशयसाधारणं, पर्वतो वह्निमान्नवेति संशयवत् अयं पदार्थो ऽपरपदार्थसंस्पृष्टो न वेति संशयस्य सुलभत्वात् । तत्प्रमा च गुणः । संशयेप्येककोटौ तथात्वमस्त्येव । तदभावश्चायोग्यता, तन्निश्चयश्चाप्रामाण्यशङ्काशून्यः प्रतिबन्धको, यथा च प्रमात्वग्रहो न प्रतिबन्धकस्तथोक्तमनुमानप्रकाशे । नन्वेवमप्ययोग्यतानिश्चयाभाव एवासंसर्गाग्रहत्वेन प्रत्यक्षस्थले क्लृप्तत्वाद्धेतुरस्तु, न तूक्तयोग्यताज्ञानं, मानाभावादिति चेत्, न । प्रत्यक्षासंसर्गग्रहमात्रस्यैव प्रतिबन्धकतया तदभावस्य प्रत्यक्षं प्रति कारणत्वकल्पने ऽप्यसंसर्गग्रहसामान्याभावस्य शाब्दादिबोधहेतुत्वमक्लृप्तमेव कल्पनीयम् । एवं चाभावस्य कारणत्वापेक्षया लाघवेन भावकारणत्वस्योचितत्वात् । भावग्रहे ग्राह्याभावग्रहत्वेनात्यन्ताभावग्रहत्वेन च तदत्यन्ताभावतदन्योन्याभावग्रहयोः प्रतिबन्धकतया तदभावस्य नानात्वेन गुरुत्वाच्च । अत एवानिष्टसाधनत्वज्ञानाभावादीनां न हेतुत्वम् । न चैवं प्रत्यक्षेपि ग्राह्यज्ञानस्यैव हेतुत्वापत्तिरिति वाच्यम् । अनवस्थानात् । तथा च व्यभि-

न्तरं विनैव । (८ ावः, यासिद्दतया यथा नानु- भावस्यापि योग्यताज्ञानेना- यतात्पर्येपि क्वि) न च धहेतुत्वम् । नन्वेवं यत्र पदार्थ त्वाव्युप्रमाणस्याभावांशे संशयात्मकमासत्त्यादिज्ञानं तदनन्त- योग्ये ऽपि निश्चयस्तत्रान्वयबोधः स्यादिति चेत्, न । अत्र (निश्चयकाले ऽन्वयनिश्चय आपाद्यते तदुत्तरक्षणे वा । नाद्यः । विरोधिनिश्चयसामग्र्याः साक्षात्प्रतिबन्धकत्वस्योभय- सिद्धत्वात् । अत एव प्रतिशब्दस्थले प्रतिबन्धः । इयानेव विशेषो यत्सामग्र्योस्तुल्यत्वात्तत्रोभयप्रतिबन्धो ऽत्र तु न तथेति फल- बलेन ग्राह्याभावनिश्चयसामग्र्या बलवत्त्वात् । नान्त्यः । पदा- र्थस्मरणस्य नाशात् । एतेन यस्य गेहे न घटसंसर्गज्ञानं किं त्वज्ञानमात्रमित्यादि निरस्तम् । लाघवेन योग्यताज्ञानहेतु- त्वे सिद्धे यत्रान्वयबोधस्तत्रावश्यं तत्कल्पनात् । अत एव विसंवादिस्थले विशिष्टज्ञानं कल्प्यते । ननु यदि ग्राह्य- संशयेपि शब्दान्निर्णयस्तदा संदिग्धाप्रभावस्य कस्य चिद् गेहे घटोस्तीति वाक्यात्तन्निर्णये संशयोच्छेदः स्यादिति चेत्, न । भवत्येव निश्चयः । प्रामाण्यसंशयाहितः पुनः संशय इत्येतद् अन्यत् । न चैवं पुनस्तस्यैव वाक्यान्तरान्निर्णयेन तदुच्छेदः स्यादिति वाच्यम् । पूर्ववदुक्तोत्तरत्वात् । अत एवार्थ- संशयेपि आप्तवाक्यात्तन्निर्णये निष्कम्पप्रवृत्तिः सर्वसिद्धा । न च तर्कसहकृतत्वाद् ग्राह्यसंशयस्य तत्र न प्रतिबन्धकत्वं, तद्विरहसहकृतस्यैव तस्य तथात्वादितिवाच्यम् । एवं हि ग्राह्याभावनिश्चयाभावतर्कसहकृतग्राह्यसंशयाभावश्च कार- णमिति महद्गौरवम् । अत एव ग्राह्याभावनिश्चयत्वापेक्षया तज्ज्ञानत्वस्य लघुत्वात् तथैव प्रतिबन्धकत्वमिति निरस्तम् । ग्राह्यसंदेहेपि तन्निश्चयसत्त्वेन गौरवस्य प्रामाणिकत्वात् । अस्तु वा ग्राह्याभावनिश्चयाभावस्यापि हेतुत्वं, तथापि गुणा- नुरोधेनैव योग्यताज्ञानस्य हेतुत्वम् । न च स्वरूपसत्येव सा गुणोस्त्विति वाच्यम् । सा हि न ग्राह्यार्थरूपा, ऽतीतादौ व्यभिचारात् । नापि तादृशप्रमाविशेष्यत्वाभावादिरूपा, तस्या ग्राह्यार्थरूपयोग्यताप्रमापेक्षया बहुपदार्थघटिततया ऽभावरू- पतया च गुरुत्वात् । अत एवानुमितावपि अबाधितत्वं प्रमा- गुण इत्युक्तम् । अन्यथा ऽनुमितावपि तस्यैव गुणत्वापत्तेः । तदपेक्षया च वक्तृवाक्यार्थप्रमाया एव लघुत्वाच्च । न च वक्तृवाक्यार्थयथार्थज्ञानमेव गुणोस्तु, शुकादिवाक्येपीश्वर- वाक्यार्थज्ञानसत्त्वादिति वाच्यम् । तद्धेतुत्वस्य ग्रन्थकृतैव पूर्वं दूषितत्वात् । वाक्यार्थप्रमारूपफलोपपादकगुणस्य लाघ- वेन फलाश्रयएव कल्पनाच्च । एवं दोषोपि योग्यताभ्रम एव । न च वक्तृभ्रमादिः, व्यधिकरणत्वाद्विसंवादिशुकवाक्ये तदभा- वाच्च । अत एव स्वरूपसद्योग्यता गुणस्तदभाव एव दोष

माविशेष्यत्वाभावः । (४४) प्रमेयं वाच्यमित्यत्र प्रमेयनिष्ठा- त्यन्ताभावप्रतियोगित्वप्रमाविशेष्यत्वं गोत्वे प्रसिद्धं, वाच्य- त्वसंसर्गे तदभावः ॥ (४५) वस्तुतस्त्वितरपदार्थसंसर्गे ऽपरपदार्थनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकधर्मशून्य - त्वं योग्यता,लाघवाच्छक्यज्ञानत्वाच्च । न च नरशि-

---

इत्यपास्तम् । फलव्यधिकरणत्वात्, अत एव वक्ष्यति स्वर्गो- पपादकं ह्यपूर्वं स्वाश्रये कल्प्यतइति । अस्तु वा स्वपरसाधा- रणैकयोग्यताज्ञानस्यैव हेतुत्वम् । यथाश्रुतयोग्यताज्ञानं तु न कारणमिति सत्यमिति संक्षेपः ॥ पूर्वोक्तामव्याप्तिं निरस्यति । (४४) प्रमेयमिति । यद्यप्यपरपदार्थतावच्छेदकावच्छिन्नानि- ष्ठात्यन्ताभावप्रतियोगित्वप्रमाविशेष्यत्वमाकाशादौ प्रसिद्धं, तथापि सोर्थो न विवक्षितः, गौरवात्, किं तु यत्पदार्थव्यक्ति- संसर्गे यद्व्यक्तिनिष्ठात्यन्ताभावप्रतियोगित्वप्रमाविशेष्यत्वा- भावः तयोर्योग्यतेत्येतदर्थो विवक्षित इति सूचनाय गोत्वे प्रसिद्धिरुक्ता । एवं पयसा सिञ्चतीत्यादौ तत्तत्पयःसेकव्य- क्त्योरेव योग्यता न तु सर्वेषां सर्वस्य, यथा समानाधिकरण- धूमवह्न्योरेव व्याप्तिः । अत एवावच्छेदकपदानुपादानं, तथा च वाच्यत्वस्य घटादिना प्रमेयेण योग्यतानिरूपणे गोत्वे प्र- सिद्धिः गवा च तन्निरूपणे घटपटत्वादौ प्रसिद्धिरिति ध्येयम् । नन्विदमशक्यज्ञानं प्रमागर्भत्वेन गुरु चेत्यरुचेराह । (४५) वस्तुतस्त्विति । अत्र संसर्ग इति भावप्रधानो निर्देशः । अ- वच्छेदकधर्मपदेनावच्छेदकस्य धर्मो ऽवच्छेदकत्वं विवक्षितम् । तथा चेतरपदार्थसंसर्गत्वे ऽपरपदार्थनिष्ठात्यन्ताभावप्रतियो- गितावच्छेदकत्वशून्यत्वमित्यर्थः । तथा चात्र मते सर्वसेकव्यक्तेः सामान्यतः पयसा समं योग्यता, धूमवह्न्योः सामान्यव्याप्तिवत् । अत एवावच्छेदकपदोपादानम् । सेकानन्वितं च जलमयोग्य- मेव, सेकसंसर्गत्वस्य तन्निष्ठात्यन्ताभावप्रतियोगित्वावच्छेद- कत्वात् । नन्वेवं पयसा सिञ्चतीत्यत्र सर्वसेकव्यक्तिः सर्वपय- सान्वीयेत, योग्यतायास्तज्ज्ञानस्य वा ऽविशेषादिति चेत्, न । बाधेन प्रतिबन्धात् । असंसर्गाग्रहस्य विशिष्टज्ञानमात्रएव हेतु- त्वाद्, यथा गोष्ठीयवह्नेः पर्वते न भानं, सामान्यव्याप्तेः पक्षधर्म- तायाश्च तत्राप्यविकलत्वात् । ननु यदि बाधाभावस्यापि शब्द- सहकारित्वं, तदा योग्यताज्ञानहेतुत्वएव मानाभाव इति चेत्, न । गुणानुरोधेन तद्धेतुत्वस्य तथापि व्यवस्थापितत्वात् । अन्य- च्च सर्वं पूर्वलक्षणवद्बोध्यम् । अत्रेदं चिन्त्यम् । गुणाद्यनुरोधे- नापि नैतद्योग्यताज्ञानं हेतुः, किं तु ग्राह्यार्थरूपोक्तयोग्यताज्ञा- नमेव हेतुः, लाघवाद, न्यथा ग्राह्यार्थसंदेहे सति तादृशसंसर्गत्वे तादृशात्यन्ताभावप्रतियोगितावच्छेदकत्वशून्यत्वास्फुरणे ऽन्व- यबोधो न स्यात् । न चेष्टापत्ति,रनुभवविरोधात् । किंच बाधा-

र:शौचानुमानबाधितात्तदशौचबोधकशब्दा (४६) दन्वयाबोध इति वाच्यम् । (४७) उपजीव्यजातीयत्वेन शब्दस्य बलवत्त्वात् । तेनैव तदनुमानबाधात् । नन्वाकाङ्क्षासत्तिमत्त्वेन शब्दस्य प्रमाणता, न तु योग्यतापि तन्निवेशिनी । (४८) बाधाभावस्य प्रमामात्रहेतुत्वादिति चेत्, न । (४९) बाधे हि प्रमाणदोषो ऽवश्यं वक्तव्यो ऽन्यथा प्रमाणविषये बाधासंभवाद्, यथानुमाने बाधा-(५०)दुपाधिकल्पनद्वारा व्याप्तिविघातः, निरुपाधौ बाधानवकाशात् । सेयं न स्वरूपसती प्रयोजिका । (५१) शाब्दाभासोच्छेदप्रसङ्गात् । तन्निश्चयश्च न भव,त्युपायाभावादिति चेत्, न । संशयविपर्ययप्रमासाधारणस्य योग्यताज्ञानमात्रस्य कारणत्वात् । (५२) अयोग्यताज्ञानस्य प्रतिबन्धकस्य सर्वत्राभावात् (५३) क्व चित्तन्निश्चयो ऽपि योग्यानुपलब्ध्या, यथेह घटो नास्तीति ॥

---

नश्वतारदशायामन्यनिष्ठसेकव्यक्तेरन्यत्रान्वयबोधः स्यात् । प्रमा च स्या,दुक्तयोग्यतायाः प्रमारूपगुणजन्यत्वात् । ननु तत्सेकसंसर्गत्वे तत्पयोनिष्ठात्यन्ताभावप्रतियोगि ावच्छेदकत्वसत्त्वाद् योग्यतैव तत्र नास्तीति चेत् । तर्हि तत्तद्व्यक्तेरेव योग्यता न सामान्यतः । एवं च तत्तत्पदार्थसंसर्गे तत्तत्पदार्थनिष्ठात्यन्ताभावप्रतियोगित्वाभाव एव योग्यता नत्ववच्छेदकगर्भा । गौरवादिति । (४६) अन्वयाबोधः, अन्वयाबोधप्रसङ्गः । (४७) उपजीव्येति । साध्यप्रसिद्ध्यर्थं वेदस्योपजीव्यत्वात् तज्जातीयत्वेनाशौचबोधकागमस्योपजीव्यत्वादित्यर्थः । (४८) बाधाभावस्येति । तथा चासाधारण्येन न प्रयोजकत्वमिति भावः । (४९) बाधे हीति । स च दोष आकाङ्क्षासत्तिमतियः सैवायोग्यतेति तदभावो योग्यताशब्दाङ्कमित्यर्थः । (५०) उपाधिकल्पनेति । पक्षेतरोपाधिनेत्यर्थः । एतच्च साधनवति पक्षे बोध्यम् । साधनरहिते त्वपक्षधर्मतैव दोषः । तदुक्तं बाधायाम् । अपक्षधर्मा हेतुरनैकान्तिको वेति । यद्यपि गन्धप्रागभावावच्छिन्ने घटे गन्धानुमानबाधेपि न करणदोषः । यदि च बाध एव तत्र दोषस्तदा प्रकृतेपि तुल्यम् । तथा च पूर्वोक्तयुक्त्या योग्यताज्ञानस्य शब्दसहकारित्वमित्यत्र तात्पर्यम् (५१) शाब्दाभासेति । यद्यपि स्वरूपसती सा प्रमाहेतुस्तदभावश्च भ्रमेपि हेतुरिति न शाब्दाभासोच्छेदः । तथापि पुर्वोक्तयुक्त्या न स्वरूपसती हेतुरिति भावः । मात्रपदविवरणं संशयेत्यादि व्यवच्छेद्याभावभ्रमनिरासाय । (५२) अयोग्यतेति । अयोग्यतानिश्चयस्येत्यर्थः । ननु साधारणेन रूपेण तदा हेतुता स्यात्, यदि तन्निश्चयोपि क्व चिद्धेतुः स्यान्न चैवमित्यत आह । (५३) क्व चिदिति ॥

## ॥ अथ गोपाललीलाख्यकाव्यस्य ॥

॥ द्वादशतमसर्गारम्भः ॥

इति स्त्रीरनुच्छन्दयन् नन्दसूनु-
श्चिरं सुन्दरीवृन्दमानन्दयिष्यन् ।
दधाविन्दुमन्दानिलस्पन्दशीघ्र-
श्रितामन्दकन्दर्पकं दिव्यरूपम् ॥ १ ॥
हताशेषहृत्तापकः सुन्दरीणां
सुरग्रामणीस्ता मणीकृत्य रूपैः ।
नयन् नृत्यगीतादिषु स्तुत्यभावं
व्यधाद्वासुदेवः स्वयं तासु केलिम् ॥ २ ॥
दिवि द्योजुषामद्भुतद्योतनाय
स्फुरद्योगमायाबलद्योतमानः ।
समुल्लासयामास रासोत्सवं स
श्रितव्यासवाल्मीकिवाग्व्यासपारम् ॥ ३ ॥
मिलद्वालुकाचन्द्रचूर्णातिपूर्णे
कलिन्दात्मजासैकते सौरभाढ्ये ।
हरिः कल्पितानल्पकाकल्पकायो
बभौ गोपिकामण्डले सोऽपि कामम् ॥ ४ ॥
चयो यस्य मायागुणा विश्वमेत-
च्चिरं कल्पयन्ति स्थिरं लीलयैव ।
अहो का कथा तस्य रासप्रपञ्चे
तदाभूत् कुतो वा कथं संविधेति ॥ ५ ॥
अथो माधवस्ता मिथो बद्धबाहूः
स्फुरत्कुण्डला मण्डलीकृत्य नारीः ।
हसन् विद्युदावेष्टितं वारिवाहं
स्वयं तद्भूमध्यगः शोभते स्म ॥ ६ ॥
विधा कीदृशी पामरस्त्रीदृशोशोऽ-
प्यभूत् कामवाही स्वयं यामवाप्य ।
इति प्रायशो विस्मिताः सस्मितास्या
दिदृक्षावशादाययुर्देववध्वः ॥ ७ ॥
समीहोचितं सौरभं दुर्लभं तत्
समन्तादनन्तेच्छयाविर्बभूव ।
यदाघ्राय देवास्तदैवास्तसेवा-
श्चिरं नन्दने मन्दनेत्रा बभूवुः ॥ ८ ॥

अचिन्त्येन योगेश्वराकर्षणेन
स्रजः सौमनस्यः कुतश्चिन्निपेतुः ।
हरद्ध्यानदर्पं दिवो दुन्दुभीनां
ध्वनत्युत्करं वाद्यमासीद्घातम् ॥ ९ ॥

स्वयंकल्पितालेपनैश्चर्चिताङ्ग-
स्तदुच्चैःकुचोरःस्थलं चर्चयित्वा ।
हरिः खर्वयन्नप्सरोरूपगर्वं
स्त्रियो रञ्जयन् प्राविशद्रासरङ्गम् ॥ १० ॥

तदा किंनरा भिन्नराजीकृतस्वा
दिवि श्रीपतिप्रीतियोगादगायन् ।
स्वयं शारदा नारदाद्या महत्या
सहं प्राप्नमेनं पुनर्मेनकाद्याः ॥ ११ ॥

मध्यं प्रविश्याबलयोर्द्वयोर्द्वयोः
कृष्णो विहर्तुं प्रगृहीतकन्धरः ।
रेजे विचित्रैकचम्पकस्रजि
प्रोतं यथैवोत्पलमन्तरान्तरा ॥ १२ ॥

पदर्पणनिकुञ्चनस्फुरदुदञ्चनन्यञ्चन-
क्वणक्वणितकिङ्किणीरणितकङ्कणक्काणजः ।
सह व्रजवधूशतैः सृजति रासखेलां विभा-
वभूज्झणझणध्वनिर्झटिति झर्झरध्वानवत् ॥ १३ ॥

करवर्तनानुगतहस्तकाध्वश्रित-
क्षणवीक्षणानुगविवर्तमानचिकाः ।
व्रजयोषितः प्रगलदुत्तरीयोरसो
रसतः परं बुबुधिरे न रासोत्सवे ॥ १४ ॥

वपुरतिनतिषु स्मरधनु-
र्हृदयं प्रति चरणपातमुपकल्प्य ।
व्यदधत मुनिमनुजगुरु-
प्रहरणकलिकामिव स्मितं वनिताः ॥ १५ ॥

तरुणिमकुसुमायुधप्रियाप्ति-
श्रितमदसंमदघूर्णितेक्षणानाम् ।
अजनि रजनिवीक्षितेषु तासां
न समरसा हरिणी लघुर्गुरुश्च ॥ १६ ॥

नवनवगतिभेदश्लाघ्यलास्यक्रमःणां
शिथिलचिकुरबन्धस्रस्तमञ्जुस्रजां या ।
स्तनगलितपटानां कापि गोपाङ्गनाना-
मजनि रुचिरसंख्या सैव हृद्यस्य तासु ॥ १७ ॥

मधुकरनिवहे व्रजाङ्गनानां
व्रजति शरीरजसौरभं ग्रहीतुम् ।
अणुरजनि गुणः श्रुतिप्रदाना-
च्झटिति सझंकृतिभिः स लास्यविघ्नः ॥ १८ ॥

लोकास्त्रयो यस्य वसन्ति कुक्षौ
तस्मिन् समं नृत्यति वल्लवीभिः ।
कम्पः सुराणामुचितस्तदाभू-
च्छ्वेदीयं खलु सात्त्विकत्वम् ॥ १९ ॥

श्वासाधूतोद्धूतनासाग्रमणिश्री-
दन्तज्योतिःस्फीतगीतप्रयोगाः ।
काश्चिद्विद्युद्विभ्रमं दर्शयन्त्यो
मेघश्यामं प्राप्य जाताः कृतार्थाः ॥ २० ॥

द्रुतविलम्बितगत्युदयन्नभः-
स्थलभरं न विराममितं क्वचित् ।
श्रुतिमितं समवृत्ततया जग-
त्यतिविशिष्टमचेष्टत यौवतम् ॥ २१ ॥

स्वरगणगुरुगीतिश्रीरलक्ष्याङ्घ्रिभेदा
नियतसमजवृत्तिर्गोपिकाराजिरार्या ।
स्वजनलघुविकल्पासङ्गपूर्वाङ्गदेशै-
कतरलरसभूमिश्छान्दसातिप्रियाभूत् ॥ २२ ॥

देशीविधाभिर्विधिशुद्धभेदै-
र्नानाविशेषैः करणैः सशब्दैः ।
चारीक्रमैश्चालयचर्चरीभि-
र्नृत्यप्रपञ्चैर्वनिता विजह्रुः ॥ २३ ॥

वनितयोः स्तनमुन्नयतान्तरे
तदुरुबाहुलताकलितात्मना ।
उभयतः सह चुंकृतिचुम्बनै-
र्भगवताकलि रासमहोत्सवः ॥ २४ ॥

रासखेलनमसेवत देव-
स्ताभिरात्तनमनोन्नमनाभिः ।
हस्तयुग्मधृतहेङ्गुलदण्डो-
द्घट्टनभ्रमिपरिक्रमभूमिः ॥ २५ ॥

गोपीः सर्वा गाढमश्लिषदीशः
प्रेम्णोत्क्षिप्य श्रान्तिशान्तिच्छलेन ।
स्वर्वासिस्त्रीरूपगर्वेण सार्धं
तासामास्यस्वेदबिन्दूनभाङ्क्षीत् ॥ २६ ॥
जगद्वयव्ययमुपनेतुमागतं
सुपर्वणा सह हरिमप्सरोगणैः ।
निरीक्षितुं सपदि समीयुषः क्षणा-
द्ध्रियोऽविशन् कुसुमशरासनादहो ॥ २७ ॥
गोप्याः स्फुटत्कनककेतकमध्यवर्णे-
द्रोणीतृणीकरणचारुणि बाहुमूले ।
कृष्णोऽदिताभ्रकशशाङ्कनिभं नखाङ्कं
निक्षिप्रागवसुभाजमिवाङ्कमुद्राम् ॥ २८ ॥
हरिविलोकनतोऽप्सरसां तदा
स्मृतिरपि व्यगलद्वसनैः सह ।
द्रुतमभूद्रशनामणिदीप्तिभिः
सपदि चित्रितमम्बरमम्बरम् ॥ २९ ॥
तरुणिमदपूर्णघूर्णमान-
स्मितमधुरेक्षणसंशुकान्तमास्यम् ।
हरिरिह परितश्चुचुम्ब गोप्या
ददिव मन्मथमुद्रिकार्द्रमुद्राम् ॥ ३० ॥
कापि बाहुयुगलं परिश्रमा-
दंसयोर्न्यधित कंसवैरिणः ।
किं पुनस्तदपयानशङ्कया
काञ्चनीमकृत कामशृङ्खलाम् ॥ ३१ ॥
नर्तनगानगुणप्रभुरूपे-
यौवतमैन्द्रमभूदतिरिक्तम् ।
केलिकलाकलिताधिककान्त्या
स्त्रैणममुष्य ततोऽप्यतिरिक्तम् ॥ ३२ ॥
दुर्वहपीनकुचद्वयखिन्ना
कापि हरेरवलम्ब्य भुजांसम् ।
बाहुमचुम्बदिहाधिकरागो-
द्रेकविलिप्तमिवाहितचिह्नम् ॥ ३३ ॥
प्रशिथिलकबरीकमाप्रवत्ये
स्फुरितकपोलविलोलकुण्डलायै
हरिरदित निजानुरागपूर्गं
निजमुखवासमिषेण गोपिकायै ॥ ३४ ॥
निखिलनटनभेदप्रौढिपट्टाभिषेके
मुखरितकटकाङ्घ्रिः कापि रासोत्सवेषु ।
पृथुनिजकुचकुम्भे शातकुम्भेप्रवर्णे
न्यधित करममुष्य प्रागिवाम्रप्रवालम् ॥ ३५ ॥
पुरतः परतश्च समेत्य हरिं
युवतिद्वितयं परिरभ्य दृढम् ।
मिलदुच्चकुचादिचतुष्कभरैः
श्रमशान्तिमिव व्यदधात् सुहृदः ॥ ३६ ॥
हरिविविधविहारवीक्षाभवन्मोहसंदोहमन्दाः पराः
प्रविगलितविकल्पनानल्पसंकल्पशिल्पाश्चिरस्यासत ।
कतिचिदतिचिरेक्षणक्षुभ्यदुग्रेषुधन्वक्षुरप्रक्षताः
सपदि सहचरैः सह क्रीडितुं निर्गताः स्वर्गवाराङ्गनाः॥३७॥
कुचप्रचलदञ्चनस्खलनवञ्चनोदञ्चन-
स्मितप्लुतनिरीक्षणप्रचुरचुम्बनालिङ्गनैः ।
हरिः प्रमुदितश्चिरादरमताङ्गनाभिः समं
परोऽपि पृथुको यथातिवितथानुबिम्बैर्निजैः॥३८॥
उपनिषत्परिषत्परिलक्षिते
परिचिते परमात्मनि योगिभिः ।
अकलि यः प्रमदः प्रमदाजनैः
सपदि रासरसे सरसेङ्गितैः ॥ ३९ ॥
सरसहरिविहारप्रोद्यदानन्दमन्दी-
कृतकरणनिजार्थग्राहितास्ता हिताप्त्या ।
वसनचिकुरमाल्याकल्पकर्णोत्पलादि-
प्रतिपदगलनानि व्यस्मरन् सस्मराक्षाः ॥ ४० ॥
नवगोपिकान्वितमनोरथोद्धुता
प्रथमाक्षरद्वयविनाकृतेरिता ।
इह विश्रुता जगति मञ्जुभाषिणी
हरिवल्लभा सहजसद्गया जगौ ॥ ४१ ॥
अथ श्रमं कमलदृशा विनेष्यता
मधुद्विषा सुखमुपविश्य कौतुकात् ।
व्रजस्त्रियो निज उपवेश्य संनिधौ
विधौ दृशं विनिदधता न्यगद्यत ॥ ४२ ॥

कम्बुकण्ठि कलयेदयम्बरे
चन्द्रबिम्बमनवद्यमुद्यतम् ।
त्वन्मुखद्युतिविशेषलिप्सया
सर्वतः कृतकरप्रसारणम् ॥ ४३ ॥

यदि कुलमवदातमाविलं वा
निजगुणदोषनिबन्धनाप्रसिद्धिः ।
प्रकृतिधवलदुग्धसिन्धुबन्धुः
स्वकृतिवशाद्विधुरेष यत् कलङ्की ॥ ४४ ॥

निशि तिमिरभुजंगेनाङ्कमेतस्य दष्टं
प्रसरति विषमन्तर्लाञ्छनच्छद्मना यत् ।
अहह विधिनियोगादोषधीनामधीशः
पिपतिषति पयोधौ पश्चिमे घूर्णमानः ॥ ४५ ॥

प्रियतम वयमपि कवयः
सद्वृत्ता गा यतो निबध्नीमः ।
इति काश्चित् प्रश्नोत्तर-
विधया शब्दच्छलेन चिक्रीडुः ॥ ४६ ॥

मम रमण मनः कथंचनेह
स्पृहयति रासमहार्णवं तरीतुम् ।
सखि समुचितमेव सम्यगेतत्
तृणमुडुपं विदधासि यन्मुखेन ॥ ४७ ॥

कच्चेशोऽयं वीक्ष्यतां व्योम्नि सख्यो
भल्लूकः क्वालीमशो वल्लभः स्यात् ।
कृत्वा लोम्नां लुञ्चनं ध्वान्तदम्भा-
ज्जैनं धर्मं जाम्बवानाश्रितः किम् ॥ ४८ ॥

तारेश्वरोऽयं तरलायताक्ष्यः
सुग्रीव एषोऽतितरां प्रियस्ते ।
वियोगिरामाहितमाशु हन्ता
प्राचीकटद्यः कपिलास्यलीलाम् ॥ ४९ ॥

सोमोऽयं किमुमाऽगजा किमतसीस्निहस्तु नेह द्वयोः
साहित्यं क्व नु किंच विश्वविदितोऽसावन्धकारातिहृत् ।
चन्द्रोऽसौ बत सौरभारिमपि के कर्पूरमाचक्षते
सख्यो वित्त कलानिधिं वद सखे कृष्णाधमर्णोऽस्य कः ॥५०॥

अयं नक्षत्रेशः कुमुदसुहृदेष द्विजपतिः
कुमुच्चेत् किं न स्यादसुहृदपि नूनं प्रियतमाः ।
विभावर्यात्मासौ विशदरुचिरास्तां यदि विभो-
र्विरोधी तत् कस्मादरुचिरिह सख्यो न विशतु ॥५१॥

कस्त्वं पीताम्बरोऽहं किमु वदसि मृषैवाम्बरं केन पीतं
भद्रे कंसस्य शत्रुः शिव शिव सलिलं शस्यवैरि क्व दृष्टम् ।
मल्लास्यध्वंसनोऽहं किमिति निजमहो लास्यमध्वंसि गोपि
श्रीवत्साङ्कोऽहमङ्के जनदृगविषयः क्वच वत्सः प्रियस्ते ॥५२॥

अये कृष्ण श्रीमन्मुखमधुरताप्त्यै विधुरसा-
वपाद्भुमं ध्वान्तच्छलमुदयभूभृत्तटभुवि ।
ततः कुर्वाणस्य स्फुरति शिखिकेतुर्न तु शशो
गले शंभोर्यद्वत्स्थिरकवलितं कालगरलम् ॥ ५३ ॥

जाग्रज्जगद्विजयकौतुकिनः स्मरस्य
नामाक्षरव्रज इवात्र सितातपत्रे ।
आभाति कुण्डलितकुण्डलिराजभोग-
शायीव शार्ङ्गधनुरेष विधोः कलङ्कः ॥ ५४ ॥

अङ्कं जनाः कतिचिदम्बुधिपङ्कमेके
शङ्कन्तु रङ्कुमपरे तु भुवोऽनुबिम्बम् ।
श्रीपद्मनाभ परमार्थत एव विद्मः
स्वर्भानुदन्तदलनक्षतचिह्नमेतम् ॥ ५५ ॥

अकाण्डं कूष्माण्डं वियति शशभृन्मण्डलमिदं
जनैरङ्गुल्योच्चैरियदवधि निर्दिष्टमसकृत्
यदन्तर्नाशायोन्मुखमिदमभूत् तन्मलिनिमा
कलङ्कव्याजेन स्फुरति जनतोक्तं नहि मृषा ॥ ५६॥

नीचैर्गन्धवहा धिनोति रजनी चेन्नासिका नोन्नता
किं वः किं नु पतिं विधुं च धिनुयादेषा सदोषाकरा ।
मन्दोऽसावुपयाति कृष्ण विदितः किं मातरिश्वा न ते
श्वा चेन्मातरि मन्दता तदुचिता सख्यो यथाख्यायते ॥५७॥

मुक्ता दिशामुडुदिवस्पतिभावभाति
सद्यः सरासरसहर्षवशो हलीव ।
शर्वाचलेशहृचमञ्जनधूमभान-
स्वर्भानुनिःस्वतनुवत् कुरुते वरोरु ॥ ५८ ॥

हारबन्धः ।

सहारव्याहारप्रतिफलितहारव्यतिकरं
हृदन्तः संजातं बहिरिव समुक्तास्रगिह नः ।
शयानो यत्राभूर्भुजगरमणीयाङ्क इव
प्रिय प्रायस्त्वं हृच्छयविहितमालार्चन इव ॥ ५९ ॥

इत्थं जातमिथःकथः स भगवानाभीरदारैः समं
विश्रम्याथ मुहूर्तमाचमनु च प्रारब्धरासः पुनः ।
नासावंशविषक्तमौक्तिकमणिश्वासावधूतिस्फुट-
भ्रान्तिश्रीवनितासहस्रमिलितोऽविशत् पयोऽधोऽव्रजः॥ ६० ॥

इति श्रीमल्लक्ष्मणभट्टात्मजश्रीरामचन्द्रभट्टविरचिते गोपाललीलाख्ये महाकाव्ये द्वादशः सर्गः ॥ १२ ॥ :: :: ॥

## ॥ अथ गोपाललीलाख्यकाव्यस्य ॥

॥ त्रयोदशतमसर्गारम्भः ॥

तमन्वयुर्व्रजवनितास्तरङ्गिणी-
विहारजश्रमरुचिराङ्गयष्टयः ।
समुच्चिता उरसि धवेन ता भृशं
निजं वपुः प्रवितरतेव जीवनैः ॥ १ ॥

प्रयत्नतः करपुटयन्त्रणैर्मुदा
मुहुःस्फुरद्घनपुलकस्तनद्वयम् ।
व्रजाङ्गनाः प्रभुमभि चिक्षिपुः पय-
स्तनुं निजामिव वितरन्त्य एकदा ॥ २ ॥

व्रजस्त्रियस्तपनसुताजले हरिः
स खेलयन्नतिबृहदूर्मिनिर्मितौ ।
दिदेव च स्वयमुरुपुष्पवर्षिभि-
र्विमानगैर्दिवि दिविषद्भिरीडितः ॥ ३ ॥

करेण स प्रतियुवति प्रभुः पुरो
विधाय ता जलमपहन्त्य नादयन्[^a] ।
गृहीतदोः पृथुतदुरोजपार्श्वयो-
रशिक्षयत् सुकरमशिक्षिता मुहुः ॥ ४ ॥

भुजौ निजौ पयसि निधाय तारको
न्यधाद्वधूस्तदुपरि शिक्षयन्निव ।
सगैरिकोन्नमदिभकुम्भसंभ्रमं
चिके नयन् घृतसकुसुम्भवाससौ ॥ ५ ॥

नतभ्रुवां रणति तदा स्म खेलने
न किङ्किणीपदकटकादिभूषणम् ।
जलाशयव्यतिकरमीयुषां सतां
यतः शुभान्यमुखरतैव यच्छति ॥ ६ ॥

जहार काचन निजहारमौक्तिकै-
र्विहारभृत् पयसि समुत्त्रुटद्गुणैः ।
तरङ्गभूप्रविततरङ्गमङ्गल-
प्रसङ्गकृद्घनसुमनःशतश्रियम् ॥ ७ ॥

न्यधान्मुधा तपनभुवस्तरङ्गिते
जलेऽञ्जनद्युतिनि निजं कराम्बुजम् ।
विजानती भुजमजितस्य गोपिका
हसन् हरिर्यददित दोषमात्मनः ॥ ८ ॥

ननन्द काचन नखकोटिमुद्रणं
कुचद्वये मनसिजसारसंग्रहम् ।
विलेपनक्षरणवशप्रकाशितं
निरीक्ष्य तत् किल निधिमेव जानती ॥ ९ ॥

समुच्छलद्व्रजवनितेरिताम्बुभि-
र्वधूजनाञ्जनमधुराक्षिवीक्षितैः ।
रराज खं कुवलयराजिराजितां
समुद्वहद् दिनकरजामिवापराम् ॥ १० ॥

अलिव्रजासितजलदाञ्जनद्युतिः
कलचट्कुवलयदामपूजितः ।
कलिन्दजासलिलसलीलशीलनात्
परः पुमानुरुपरभागभागभात् ॥ ११ ॥

इहास्व हे सुमुखि रमस्व यादसो
विमुक्तभीरिति हरिणेरितापरा ।
तदोच्छलच्छफरजवाप्तजङ्घया
तया चलन्नकितदृशा स सस्वजे ॥ १२ ॥

प्रभुः प्रतिव्रजयुवति स्वमायया
प्रकल्पितप्रतिनवविग्रहग्रहः ।
अतीतरत् तितरिषुमङ्गनागणं
भवाम्बुधेः किमिव हि तारकेऽद्भुतम् ॥ १३ ॥

तिरस्कृता शफरगतिस्त्वया विभो
बिभेषि यन्नहि विहरन् महाम्भसि ।
वधूक्तितोऽहंसदिति स स्मरन् हरि-
र्लयाम्बुधौ शफरतनोः कृतिक्रमम् ॥ १४ ॥

भुजौ निजौ व्रजवसदङ्गनांसयो-[1]
र्निधाय स स्वतनुमतीतरद्विभुः ।
इमा उरःस्फुरदुरुकुम्भविभ्रमा
इवाभवन् भगवदतिप्रभावतः ॥ १५ ॥

१—जनुर—इति पा० ।

व्रजस्त्रियः श्रितकमलाकरश्रियः
शिरोधरावधि जलमग्नविग्रहाः ।
मधुद्रुहा मधुकरबन्धुरात्मना
मुहुश्चिरं लघु चरता चुचुम्बिरे ॥ १६ ॥

मघो रिपुर्मनसिजशास्त्रविन्मतं
जलान्तरे प्रणयवशेन शिक्षयन् ।
लिलेख सन्मुखनखलेखनीकरो
निजप्रियोरुजघनकक्षवक्षसि ॥ १७ ॥

कुचेक्षणाधरमुदकोक्षणाक्षर-
त्सकुङ्कुमाञ्जनघनयावकादिकम् ।
विशेषतो रुचिरमभून्मृगीदृशां
स्वभावजा भवति विभा हि भासिका ॥ १८ ॥

तिरोहितोऽभवदुदके हरिश्चिरं
प्रसेचनादिव युवतीजनैर्जितः ।
विचिन्वती पयसि समेत्य सत्वरं
तदूरुषु श्रि[illegible]श्रय उन्ममज्ज च ॥ १६ ॥

स निर्ययावथ सरितः प्रभुः प्रिया-
नुरागतस्तरणिसुतेव मूर्तिभृत् ।
अवस्त च प्रियमतिशस्तमंशुकं
सहाङ्गनोऽधित च शुभानुलेपनम् ॥ २० ॥

अखण्डयत् स मदनरूपजस्मयं
सविस्मयं विबुधवधूभिरीक्षितः ।
बभौ स्फुरत्पुरटपटः कषोपलः
सुवर्णसंचय इव लेखयान्वितः ॥ २१ ॥

वने चिरं कुसुमचयं विचिन्वता
वधूजनैः सहचरणादितस्ततः ।
विचिचिताभरणविशेषमङ्गना-
गणाय स व्यरचयदच्युतोऽददात् ॥ २२ ॥

अनुव्रजद्व्रजयुवतीशतावृतः
सहचपस्मितवनितेक्षितानन: ।
अनीचकैर्मधुकरगायनैर्नुतो
वने वनेऽरमत रमेश्वरश्चिरम् ॥ २३ ॥

ततश्चिरं विहृतिनिरीक्षणोदित-
स्मरत्वरा हरिकरुणाप्रशान्तयः ।
सकिंनरा हृदि मुदिता दिवौकसो
वितेनिरे विभुसकलाङ्गवर्णनम् ॥ २४ ॥

भवन्त्वमी बलिकुसुमत्विषो हरेः
पदाम्बुजद्वितयनखाः सुखाय नः ।
स्फुरन्ति सज्जनहृदि पङ्क्तिपङ्क्ति ये
स्वतत्त्वविद्धृतगुणनाङ्कविन्दवः ॥ २५ ॥

कृपाजुषः प्रणतजनेषु शार्ङ्गिणः
पदाम्बुजद्वितयमिदं मुदेऽस्तु नः ।
यदन्वहं मुनिहृदयान्तरस्थितं
नखोपधेस्तदमलसत्त्वभागिव ॥ २६ ॥

तनोतु शं मुररिपुजानु नोऽनुगी-
भवल्लसत्करसरसीरुहारुणम् ।
नवातपारुणतरुगञ्जनक्षमा-
धरस्फुरच्छिखरबिडम्बिडम्बरम् ॥ २७ ॥

पुनातु नो मधुरिपुजङ्घयोर्युगं
यदाश्रिता बहिरिव मान्तरुर्वशी ।
विभाति यज्जठरवसज्जगत्त्रयी-
भरक्षमप्रबलमणिप्रकाण्डवत् ॥ २८ ॥

करोतु शं मुररिपुसक्थियुग्मकं
समुन्नतं सुभगमनङ्गवर्धनम् ।
यदन्वयात् स्वरुचिनिधानमुद्रणा-
पिधानतां मणिफलकद्वयं गतम् ॥ २९ ॥

अभीप्सितं वितरतु कैटभद्विषः
कटिस्थलं पुरटजसूत्रवेष्टितम् ।
यदास्यभप्रभुपरिधिं चिरच्युतं
विराजते दधदिव मेघमेचकम् ॥ ३० ॥

जगत्प्रभोः प्रभवतु नाभिपङ्कजं
शुभाय नश्चिरमुदयच्छुभायनम् ।
यदन्तरे सततमुपांशु सामगः
सगुञ्जितभ्रमरविधामधाद् विधिः ॥ ३१ ॥

मनोरथद्रुमफलमर्थसंपदं
ददातु नश्छलितबलेर्बलिचयम् ।
विभाति यद्धधदिव दामलक्ष्मतां
जगत्त्रयीपरिगणनेव कुक्षिगा ॥ ३२

ननूदरं परिचितरोमराजिकं
प्रयच्छतु प्रतिपदमीप्सितानि नः ।
विभाति यत् क्वचन विभागरेखया
युतं जगत्त्रयमिव सूचयद्वसत् ॥ ३३ ॥
महोन्नतं हृदयमहिद्विषोऽस्तु नः
पुनः पुनः सकलसमीहिताप्तये ।
श्रियः पुरा स्तनयुगकन्दुकस्थलं
यदार्चिचन्नरसिरुहैर्व्रजस्त्रियः ॥ ३४ ॥
करद्वयं प्रखरनखाङ्कितं हरेः
परंपरां प्रदिशतु संमदस्य नः ।
यदग्रभूद्व्रवकुलिशाङ्कुरोद्गल-
द्दितीसुतस्रवदसृजेव लोहितम् ॥ ३५ ॥
विभोः शयः शुभमनिशं तनोतु न-
स्तलस्थलप्रमिलदलक्तकद्युतिः ।
सरागहृद्युवतिदृढोन्नतस्तन-
प्रमर्दनप्रभवपरिक्रमादिव ॥ ३६ ॥
भुजः प्रभोर्भवभयभञ्जनाय नः
सदा भवत्वचलरमादृगञ्चितः ।
व्रजावने य इह धरातपत्रभा-
गभाद्दृधद्गुरिमगिरेकदण्डताम् ॥ ३७ ॥
हरेर्दधद्रुचिरसुवर्णकुण्डल-
प्रभां मुदे भवतु तदंसयोर्युगम् ।
वधूशताधिकपरिरम्भणाभज-
द्भुजारुचा ध्रुवमधुनाप्यनुज्झितम् ॥ ३८ ॥
मनोहरत्रिगुणितरेखयाङ्किता
मनोरथान् दिशतु मुरारिकन्धरा ।
व्रजाङ्गनाभुजयुगहेमशृङ्खला-
मवाप्य या जनमिव शिक्षयत्यलम् ॥ ३९ ॥
अवस्तिरश्चरमणिशोणिमाङ्कितं
गदाभृतोऽवतु गुरुगण्डयोर्युगम् ।
वधूजनप्रणयभृतोऽधुनापि यत्
प्रतिक्षणाधररसलब्धभागिव ॥ ४० ॥
भवोद्भवां सपदि भियं भिनत्तु नः
सहारुणाधररदमैश्वरं मुखम् ।
चकास्ति यत् कतिपयमौक्तिकान्वित-
प्रबालजाहितमणिहीरपात्रवत् ॥ ४१ ॥
समुन्नमन्मधुरिम नासिकापुट-
द्वयं विभोर्भवतु शुभोदयाय नः ।
प्रवर्तनं प्रथममथो निवर्तनं
व्यनक्ति यच्छ्वसितगतागतच्छलात् ॥ ४२ ॥
भवभ्रमं शमयतु शार्ङ्गिणः शुभं
विलोचनद्वितयमयत्नसुन्दरम् ।
यदुन्मिषन्निमिषदिदं चराचरं
स्वलीलया रचयति नाशयत्यपि ॥ ४३ ॥
श्रुतिद्वयं प्रभवतु भूतये प्रभो-
र्विभूषणप्रभवमणिप्रभार्चितम् ।
विभाति यज्जठरमिलन्त्रिलोकिका-
क्रमोदयद्विशिकान्तिभागिव ॥ ४४ ॥
भ्रुवोर्युगं भवतु शुभाय नो विभो-
र्दृगब्जयोर्मिलदलिमालिकानिभम् ।
उदञ्चितं सपदि निकुञ्चितं च यत्
सुरद्विषां भवति भयाय भीषणम् ॥ ४५ ॥
चिरोत्त्वघान्यघरिपुभालपट्टिका
निकामतः प्रकटितकामनीयका ।
विभाति या नियतिकृतायतिस्थिति-
क्रमाक्षरावलिरहितेन्द्रनीलवत् ॥ ४६ ॥
चिराय नश्चिकुरकदम्बकं बला-
नुजस्य तत् कुटिलमवत्वलिप्रभम् ।
तरङ्गितं परिहसतीव फेनिलं
कलिन्दजासलिलमुरुप्रगालि यत् ॥ ४७ ॥
कुलकम् ।
इति द्यवि त्रिदशगणेन वर्णितः
प्रसन्नहृद्विभुरभगवानदादृशम् ।
समागतं द्रुहिणमुहूर्तमन्तिके
विचिन्त्य तां गृहमथ गन्तुमादिशत् ॥ ४८ ॥
मधुद्विषः पशुपतयोऽपि मायया
परिग्रहान्निकटगतानमंसत ।
न तत्कृते चुकुपुरघोऽव्जजं विना
समञ्जसं क इह विधातुमीश्वरः ॥ ४९ ॥

दृगिङ्गितं विदितमपि प्रभोरथो
न यौवतं तदवगतं व्यबोभवत् ।
प्रिया कृशाजनि रजनी निशान्तगा
भवत्विति प्रियतममन्ववीवदत् ॥ ५० ॥
निःसारतारकमसान्द्रमरीचिचान्द्र-
बिम्बाविदूरचरमाचलशृङ्गसङ्गम् ।
तदासरङ्गसदनङ्गमहोत्सवाभिः
सुभ्रूभिरभ्रमसकृत् सविलक्षमैक्षि ॥ ५१ ॥

इति श्रीमल्लक्ष्मणभट्टात्मजश्रीरामचन्द्रभट्टविरचिते गोपाललीलाख्ये महाकाव्ये त्रयोदशः सर्गः ॥ १३ ॥ :: :: ॥

## ॥ अथ गोपाललीलाख्यकाव्यस्य ॥

॥ चतुर्दशतमसर्गारम्भः ॥

अबलाः स्वकुचांसगण्डयुग्मे
करदोर्वक्त्रमथो हरेर्निधाय ।
परिरभ्य पुनः प्रचुम्ब्य काश्चित्
प्रणयादेत्य पुनः पुनर्निरीयुः ॥ १ ॥
कृपणा इव रायमुज्झितुं ता
उरुगायं रभसादशक्नुवत्यः ।
प्रियतावशतश्चिराय मृष्ट्वा
मुहुरेत्यावसथानथाभिजग्मुः ॥ २ ॥
उपलभ्य मधुव्रता व्रजन्तो
व्रजयोषित्तनुसौरभं सहाभिः ।
हरिणा विरहासहेन रेजु-
र्निजरूपाण्यजयेव कल्पितानि ॥ ३ ॥
कथयन्त इवापराधमुग्रं
जनताग्रे हरिणीदृशां ध्वनन्तः ।
अलयः कलहप्रियस्य शिष्या
इव जग्मुः प्रतिमन्दिरं कियन्तः ॥ ४ ॥
न मुहूर्तमुपान्त्यमेत्य निद्रां
भजता किं निशि कुक्कुटद्विजेन ।
स्मृतकृष्णपदाम्बुजेन जातिं
स्मरतेवातिचिरान्मुहुर्व्यरावि ॥ ५ ॥
रजनीपरिशेषमाप्य शेते
भगवानल्पमनेहसं ततः स्म ।
अरुणेन कृतारुणेन्द्रकाष्ठा
क्व नु नापातरुचिर्भवत्युपाधेः ॥ ६ ॥
परिभूततमोरजा विबुद्धा-
खिलसत्त्वाविरभूदथादिसंध्या ।
निकटे कलयन् पतिर्द्विजाना-
मिव यां वन्दितुमापदस्तसिन्धुम् ॥ ७ ॥
सरसीरुहचक्रवाकचक्रं
परमामोदभरं तदा तदाप ।
निकटादिव साक्षिणः परेशा-
मलयो यं जगदुः पुरो जनानाम् ॥ ८ ॥
रतिखिन्नयुवाप्तसौख्यनिद्रा-
सहजद्रोहिणि तत्र कल्यकाले ।
रहितास्यतयैव कैरविण्या
निजमामीलितमक्षि कैरवं किम् ॥ ९ ॥
जपतो निजमन्त्रमत्र शिष्टा-
ननुगृह्णन्नहिमांशुराविरासीत् ।
अविशेषमदीदृशद्य उच्चै-
रनुरागं बहिरन्तरम्बुजिन्याम् ॥ १० ॥
शकटैः किल नन्दगोपमुख्याः
प्रययुः प्रातरथाम्बिकावनं ते ।
इतरेऽपि सह स्वकैरनोभिः
सपदि प्रास्थिषत प्रहृष्टचित्ताः ॥ ११ ॥
तदुपेत्य सरस्वतीजले ते
सह सद्भिर्दयिताभिरादृताभिः ।
अथ सत्वरमम्बिकां शिवं च
स्पृहयानर्चुरिहार्चनोपचारैः ॥ १२ ॥
बहु हेम तथान्नमग्रजेभ्यः
प्रवितीर्याथ निपीय चाम्बुमात्रम् ।
व्रतिनोऽभिमताय नन्दमुख्या
रजनीं तामवसन् रसेन तत्र ॥ १३ ॥
विहसन्नतिरूपवान् विरूपै-
र्मुनिभिः शप्त इहाहिदेहमाप्तः ।
किल किंनरराट् सुदर्शनाख्यो
गहनेऽस्मिन् ग्रसते स्म नन्दमुग्रः ॥ १४ ॥

पृतुकर्मपथं जडानिहास्मान्
गमयन् पाहि सदा विभो विपन्नः ।
तदवाहिमुखान्मुकुन्द मन्दा-
निति नन्दं प्रवदन्तमीयुराप्ताः ॥ १५ ॥
ज्वलदुल्मुकदह्यमानदेहोऽ-
प्यहिरेनं न मुमोच शापमुक्त्यै ।
स पदामुचदच्युतेन मृष्टः
सपदि व्यञ्जयति स्म दिव्यरूपम् ॥ १६ ॥
विनिवर्तितविप्रशापतापः
स पदस्पर्शमवाप्य माधवस्य ।
पशुभृत्पुरतोऽच्युतेन पृष्टः
प्रणतो वृत्तमुदीर्य निर्जगाम ॥ १७ ॥
विनिमज्ज्य सरित्यथ व्रतस्था
विधिनाभ्यर्च्य शिवौ धनानि दत्त्वा ।
व्रजमभ्ययुरत्र भुक्तवन्तः
पशुपाला मुरजित्प्रभावमुग्धाः ॥ १८ ॥
व्रजमेत्य कदापि रामकृष्णा-
वथ वृन्दावनगौ ससुन्दरीकौ ।
अतिमन्मथरूपवेपभाजौ
निशि चिक्रीडतुरीड्यचन्द्रिकायाम् ॥ १९ ॥
मुरलीस्वरमूर्च्छनाविशेषै-
र्विहितान्योन्यजिगीषयोर्जुषाणाः ।
प्रिययोरणुवेणुनादतानं
वनिता न स्म तदा स्मरन्ति वासः ॥ २० ॥
परिकल्पयतोः स्वराननल्पान्
निशि पूर्णे रममाणयोर्मृगाङ्के ।
अथ कश्चन शङ्खचूडनामा
धनदस्यानुचरोऽभ्यगात् तरस्वी ॥ २१ ॥
स जहार हरौ सह प्रलम्ब-
द्रुहि पश्यत्यबलागणं वियातः ।
विवशं दिशमुत्तरां नयन्तं
सबलस्तं हरिरेनमन्वधावत् ॥ २२ ॥
समुदीक्ष्य स तौ धवौ वधूनां
द्रुतमाप्तौ निजकालकर्मरूपौ ।
स जिजीविषुरद्रवद्रमेशोऽ-
वति ताः सीरकरोऽन्वदुद्रुवत् तम् ॥ २३ ॥
हरिरस्य शिरो जहार चूडा-
मणिमप्येककमुष्टिपातघातात् ।
अददात् तदुपेत्य बल्लवीनां
पुरतो रत्नमयो निजाग्रजाय ॥ २४ ॥
व्रजति व्रजयोषितोऽपि वृन्दा-
वनमिन्दीवरसुन्दरे मुकुन्दे ।
कृतिमन्वहमस्य संस्मरन्त्यो
दिवसानित्यमनैषुरुत्थकामाः ॥ २५ ॥
अधराधरतो निधाय वेणुं
स्वकपोलश्रितवामपाणिपद्मः ।
चलदङ्गुलिभिर्विमुद्य रोकान्
रणयन् रामसखो वसत्यरण्ये ॥ २६ ॥
श्रवणामृतमस्य वेणुनादं
परमं प्राप्य विमानयानवध्वः ।
पुलकोल्लसिताङ्गिका विमुक्तां
किल मोहेन नहि स्मरन्ति नीवीम् ॥ २७ ॥
निवसन्ति यदीयवेणुनाद-
श्रवणोदीर्णमुदर्णवाप्तकर्णाः ।
कवलाञ्चितचञ्चलेतरास्याः
पशवश्चित्रगता इवातिधन्याः ॥ २८ ॥
अतिमात्रविचित्रबर्हदामा
तटिनीरोधसि नादितोरुवेणुः ।
पतगैरपि हंससारसाद्यैः
श्रितमौनैः समुपास्यते मुकुन्दः ॥ २९ ॥
अनिलैः पदपद्मपांशुलेशा-
नुपनीतान् सरितोऽप्यवाप्य शौरेः ।
स्थगितस्यदनिश्चलाम्बुपूराः
सुकृतिन्यः स्पृहयन्ति हन्त तस्मै ॥ ३० ॥
विपिनेषु विहारमह्नि रागा-
दिति दैनंदिनमस्य कीर्तयन्त्यः ।
विविदुर्विरहं तदेकचित्ता
न चिरात् तन्मयतामवाप्य गोप्यः ॥ ३१ ॥

खुरशृङ्गजितक्षुरक्षुरप्रः
प्रबलोदग्रमहोग्रविग्रहाग्रः ।
ककुदुद्गटकज्जलाद्रिकूटः
सहसागादसुरस्ततो वृषाङ्कः ॥ ३२ ॥
स्वविषाणविभिन्नसिन्धुरोधा
भ्रमयन् वालधिमुन्नदन् मदोग्रः ।
अतिभीमखुराग्रखातभूमिः
क्वचिदुच्चारशकृन्ति किंचिदुज्झन् ॥ ३३ ॥
युग्मम् ।

ककुदि भ्रमताभ्रमण्डलेन
भ्रमतोऽद्रेः स्वमहत्त्वमेधयन्तम् ।
निजगर्जनतो निपातयन्तं
तमकालेऽपि वधूगवादिगर्भान् ॥ ३४ ।
व्रजमागतमर्थतोऽपि नाम्ना
ग्रसितुं मूर्तमरिष्टमेव दृष्ट्वा ।
अखिलं भयविद्रुतं द्रुतं त-
च्छरणं गोकुलमाप शार्ङ्गपाणिम् ॥ ३५ ॥
युग्मम् ।

वृषभं तमदान्तमन्तकाभं
निहनिष्यन् व्रजरक्षणाय जिष्णुः ।
अदिदीपदमुष्य रोषमारात्
तलशब्दैर्मिषतां पुरः स्वकानाम् ॥ ३६ ॥
वृषभः स खलो विलोक्य विष्णुं
खुरपाताहितभूरिखातभूमिः ।
भ्रमिताभ्रकपुच्छवेगदम्भा-
दधिपच्छत्र इवाख्यतापवृत्तिम् ॥ ३७ ॥
स वृषः परुषं रुषातिगर्ज-
न्नभिदुद्राव हरिं करीव दर्पात् ।
हरिणात्तविषाणपाणिनासौ
गमितोऽष्टादश तत्पदानि पश्चात् ॥ ३८ ॥
सहसोत्थितमापतन्तमेनं
प्रबलस्वेदजुषं रुषा श्वसन्तम् ।
विनिपात्य विषाणभृद्वरण्यां
स पदाक्रम्य तदा मुदापिपीडत् ॥ ३९ ॥

वृषभस्य विषाणमेकमुग्रं
तरसोत्पाट्य स तेन तं जघान ।
असृगेष वमन्नुदश्रुनेत्रो
विसृजन् मूत्रशकृन्त्यथ व्यरंसीत् ॥ ४० ॥
मुरजित् सुरपुष्पवृष्टिहृष्टः
परितुष्टः स्वजनस्तवैस्तदानीम् ।
व्रजमाशु विवेश कंसमेत्य
प्रियवन्नारद इत्युवाच गां च ॥ ४१ ॥
तनयामसविष्ट नन्दपत्नी
मथुराधीश्वर देवकी च कृष्णम् ।
हलिनं नृप रोहिणी च पित्रा
गमितौ मित्रमिमौ हतस्त्वदीयान् ॥ ४२ ॥
स मुनेर्गिरमित्थमुत्थितो द्रा-
गथ तथ्यामवगत्य मृत्युलीढः ।
अजिघांसदसिं विकृष्य शौरिं
तरसा वारयति स्म नारदस्तम् ॥ ४३ ॥
स बबन्ध मुनौ गते मुरारेः
पितरौ द्राक् प्रजिघाय केशिनं च ।
विनिहन्तुममू न्ययुङ्क्त मल्ला-
नपि चाणूरमुखान् व्रजादुपेतौ ॥ ४४ ॥
जनता समुपैतु मल्लरङ्गं
धनुषश्चापि निरीक्षितुं मखं मे ।
रचयन्तु विचित्रमञ्चवीथीं
वसतु द्वारपथे च हस्तिराजः ॥ ४५ ॥
नगरी क्रियतां द्रुतं विचित्रा
विपणिद्वारचतुष्पथालयेषु ।
इह शौरिसुतावुपेतमात्रौ
मम मृत्यू द्विरदादिभिर्निपात्यौ ॥ ४६ ॥
इति मल्लमुखान् नियुज्य राजा
हितमक्रूरमथानुनेतुकामः ।
विनयादवदद्गृहीतपाणि-
र्नहि कार्यार्थिनमेति नाशु दैन्यम् ॥ ४७ ॥
त्रिभिर्विशेषकम् ।

मम दानपते त्वमर्थसिद्धा-
वनुरागादनुकूल एव शश्वत् ।

द्रुतमानयथा हि नन्दगोष्ठा-
दहितौ मे यदुवर्य रामकृष्णौ ॥ ४८ ॥

निधनं तु तयोर्महेभमल्लै-
र्जनतायाश्च पितुर्मयैव भावि ।
द्विविदो मगधेश्वरश्च मित्रं
मम बाणः क्व नु राज्यकण्टको मे ॥ ४९ ॥

इति कंसमतं निशम्य बुद्धा
चिरमाह स्म मुदा श्वफल्कसूनुः ।
करवाणि निदेशमीश तेऽहं
नहि दैवं कृतिसिद्ध्यसिद्धिमूलम् ॥ ५० ॥

कुलकम् ।

गृहमीयतुरित्युदीर्य कार्ये
तितरीषू यदुनन्दनश्च कंसः ।
व्रजमाशु ववाज वाजिरूपः
किल केशी रणदुर्जयोऽपि तावत् ॥ ५१ ॥

खुरखातधरोद्धुते रजोभि-
र्भुवि धावन् दिवमन्धयन् दिशश्च ।
जनयन् भ्रममम्भसां द्युनद्यां
धुतपुच्छभ्रमदभ्रधूलिदम्भात् ॥ ५२ ॥

निजकेसरसञ्जनेन कुर्वन्
नभसः पुष्करनाम चार्थयुक्तम् ।
भृशहेषितभीषितस्वरीशो
हरिणादर्शि सकाशतः स केशी ॥ ५३ ॥

युग्मम् ।

अथ वाजिनमाजिनर्म कर्तुं
हरिरुच्चैरजुहावदाहवज्ञः ।
ग्रसमान इवान्तरिक्षमस्या-
भिमुखं व्यात्तमुखः स धावति स्म ॥ ५४ ॥

स जघान हरिं पदद्वयेन
स्वहरिस्त्वस्य परिप्लुतिक्रुधेव ।
विफलीकृतपत्पविप्रहारः
स निगृह्यास्यदनास्थयाश्वमीशः ॥ ५५ ॥

गमितः स हयो धनुःशतान्तं
पुनरुत्थाय चिरात् कथंचनाथ ।
अतितुष्टतया समेत्य चेष्टां
विवृतास्यो मधुशत्रुमभ्यधावत् ॥ ५६ ॥

हरिरस्य मुखे भुजं भुजंगं
विवरे वेशयति स्म विस्मयाय ।
स किलैधत तत्र येन रुद्ध-
श्वसितो वज्रहतादिवत् पपात ॥ ५७ ॥

हरिगारुडिकोऽस्य बाहुसर्पं
मुखवल्मीकविलादपाचकर्ष ।
तुरगः खुरगञ्जितावनीको
व्यरमत् स्विन्नतनुर्विवृत्तनेत्रः ॥ ५८ ॥

भगवन्तमनन्तमन्तवन्तोऽ-
प्यचिरेणैव विदन्ति हन्त सन्तः ।
न विवेद भृशं नृशंसचित्त-
स्तरसा केशिनि पातितेऽपि कंसः ॥ ५९ ॥

अथ बन्धुतया निरैक्षि चित्रा-
दिव केशिव्यथनाद्धरिस्तदानीम् ।
त्वमसि व्रजवासिनां गतिर्नः
किमु नाप्तं भवता सतेत्यभाणि ॥ ६० ॥

इत्थं विश्वविरुद्धमश्वमचिरात् तं केशवं केशिनं
हत्वांहो जगतामिवात्तरभसं कंसस्य पेष्टुं क्रुधा ।
गायन्ति स्म दिवीव दिव्यवनिता दाम क्षिपन्त्यः क्षितौ
गोप्योऽपि प्रमदात् तदेव गदितुं किंचिद्ययौ नारदः ॥६१॥

इति श्रीमल्लक्ष्मणभट्टात्मजश्रीरामचन्द्रभट्टविरचिते गोपाललीलाख्ये महाकाव्येऽक्रूरगमने चतुर्दशः सर्गः ॥१४॥

---

## ॥ अथ विद्धशालभञ्जिकानाटिकायाः ॥

॥ तृतीयाङ्कस्य शेषः ॥

ततः प्रविशति मृगाङ्कावली विचक्षणा च ।

मृगाङ्कावली । अनुध्याननाटितकेन तदेव * पठति । चन्द्रं चन्दनकर्दमेत्यादि ।

राजा । सखेदम् । अहो मदनमन्त्राक्षराणि सुभाषितवचनान्यस्याः ।

विदूषकः । अहं उण जाणे निसिदाओ हदमअणस्स हत्थभल्लीओ † ।

---

* द्वितीयाङ्कशेषस्थं चन्द्रं चन्दनकर्दमेत्यादि ।

† अहं पुनर्जाने निशिता हतमदनस्य हस्तभल्यः ।

राजा ।

कण्ठे मौक्तिकमालिकाः स्तनतटे कार्पूरमच्छं रजः
सान्द्रं चन्दनमङ्गके वलयिताः पाणौ मृणालीलताः ।
तन्वी नक्तमियं चकास्ति तनुनी नीचांशुके बिभ्रती
शीतांशोरधिदेवतेव गलिता व्योमाग्रमारोहतः ॥ १६ ॥

विदूषकः । भो सच्चकं ज्जेव्व, चंदाधिदेवता ज्जेव्व एसा गलिदा । तदो लंच्छणच्छलेण मिअलंच्छणस्स इमीअ अइरपरिचत्तं मिलाणमलिणं व मंडलमज्झं निज्झाअदो दीसदि * ।

राजा । सखे मांसलतां दधत्यपि चन्द्रिकोद्योतने । व्यतिरिच्यत इवास्याः स्मरजन्मा पाण्डिमा । विभाव्यत एव वा शङ्खशुक्तियुक्ताऽपि मुक्तावली । तथा हि

दरदलितहरिद्राग्रन्थिगौरे शरीरे
स्फुरति विरहजन्मा कोऽप्ययं पाण्डुभावः ।
वलवति सति यस्मिन् सार्थमावर्त्य हेम्ना
रजतमिव मृगाक्ष्याः कल्पितान्यङ्गकानि ॥ १७ ॥

विदूषकः । पारअरसचुंबिअं व सुवण्णं से लावण्णं । कमक्कंतगोरत्तणेण पडिवण्णिदं पंडुभावेण † ।

मृगाङ्कावली । हंहो हिअअ णअणेहिं दिट्ठो तुमं उत्तमसित्ति अहो अच्छरिअं । अह वा मूले बउललट्ठीए सुरागंडूससेओ कुसुमेसु मइरागंधुग्गारो त्ति ‡ ।

विदूषकः । किं कारणम् ।

राजा । इदं हि कारणान्तरजरागं हृदयमस्याः स्वेनैव हृदयेन कलहायते ।

मृगाङ्कावली । अइ कप्पूरसलाआसिसिर विज्जाहरमल्ल तुमं पि तमसि त्ति कधं मे णिव्वुदि । चंदमणी हुअवहं णीसंददि त्ति को वा पडीआरो § ।

राजा । नमो मह्यं मृगाङ्कावलीचतुरोपालम्भपात्रीकृताय ।

मृगाङ्कावली । सहि सामण्णकुसुमबाणो भविअ कध एआरिसदसं जणं करेदि मअणो ता णूणं से विसकुसुममआ बाणा ‖ ।

* भो सत्यकमेव चन्द्राधिदेवतैवेषा गलिता । ततो लाञ्छनच्छलेन मृगलाञ्छनस्यानया अचिरपरित्यक्तं म्लानमलिनमिव मण्डलमध्यं निर्ध्यायतो दृश्यते ।

† पारदरसचुम्बितमिव सुवर्णमस्या लावण्यं क्रमाक्रान्ता गौरत्वेन परिवारिता पाण्डुभावेन ।

‡ हंहो हृदय नयनाभ्यां दृष्टस्त्वमु ताम्यसीत्याश्चर्यम् । अथवा मूले बकुलयष्ट्याः सुरागण्डूषसेकः कुसुमेषु मदिरागन्धोद्गार इति ।

§ अयि कर्पूरशलाकाशिशिर विद्याधरमल्ल त्वमपि ताम्यसीति कथं मे निर्वृतिः । चन्द्रमणिर्हुतवहं निष्यन्दत इति को वा प्रतीकारः ।

‖ सखि सामान्यकुसुमबाणो भूत्वा कथमेतादृशदशं जनं करोति मदनस्तन्नूनमस्य विषकुसुममया बाणाः ।

राजा । सलिलरूपा दहति हिमानी । कुसुममय्यपि स्वभावचण्डा मदनपञ्चशरी ।

विदूषकः । भो वअस्स वस्सारिदुसक्करपुत्तलिअ व्व खणेखणे झिज्जंती एसा कं ण दुनेति । किं उण मिलाणा वि मरुवअकन्दली सुअंधा विरहपरिक्खामा वि अइरमणिज्जा । किं च । कोरंडकुसुममाल व्व मिलाअमाणा वि सुट्ठु क्खु रत्तत्तणं दंसेदि * ।

मृगाङ्कावली । सहि अह वा किं करीअदु दुच्छेज्जा प्पेमदुद्दोणी । सखेदम् । सहि णिरणुक्कोसो क्खु सो, विरलो वा परदुक्खदुक्खदो जणो, त्थोआ णवपंचमझंकारा मुक्ककुसुमुप्पीडविडंबिणो । सप्रश्रयम् । अइ तिहुअणेक्कधाणुक्क मम्मह मिअंकचूडामणिं परिक्खित्त तिक्खणेहिं सरेहिं महिलाअणं विग्गहअंतो ण लज्जसि जाणामि जत् तस्सिं पि जणे इमे अ आरभडीचंडो होसि † ।

विदूषकः । अणंगस्स पि आरभडि त्ति महाहासो मे ‡ ।

राजा । किमिदमुच्चैर्हसितेन त्रासयसे माम् ।

मृगाङ्कावली । सहि विअक्खणे जणसचारो विअ § ।

विचक्षणा । ता कदलीगुम्मंतरिदे जाणीमो किं णु एदंति ‖ ।

तथा कुरुतः ।

विदूषकः । एहि पविसह्न ¶ इत्ति परिक्रामितकेन ।

राजा । शिशिरोपचारसामग्रीमालोक्य नाट्येनादाय च ।

मृणालमेतद्वलयीकृतं तया
तदीय एवैष वसन्तपल्लवः ।
इदं च तस्याः कदलीदलांशुकं
स पक्षसंजात इव स्मरज्वरः ॥ १८ ॥

तदनया तदुपभुक्तपरित्यक्तया शीतसामग्र्या आत्मानं निर्वापयामि । तथा करोत्युपविशति च । विदूषकोऽपि यथोचितमुपविशति ।

राजा । अह हापर्यालोचितमाचरितं यतः ।

* भो वयस्य वर्षाऋतुशर्करापुत्तलिकेव क्षणेक्षणे क्षीयमाणैषा कं न दुनोति किं पुनर्म्लानाऽपि मरुबककन्दली सुगन्धा विरहपरिक्षामाऽपि अतिरमणीया । कुरण्टककुसुममालेव म्लायमानाऽपि सुष्ठु खलु रक्तत्वं दर्शयति ।

† सखि अथवा किं क्रियतां दुश्छेद्या प्रेमदुर्द्रोणी । सखि निरनुक्रोशः खलु सः । विरलो वा परदुःखदुःखितो जनः । स्तोका नवपञ्चमझङ्कारा मुक्तकुसुमोत्पीडविडम्बिनः । अयि त्रिभुवनैकधानुष्कमन्मथ मृगाङ्कचूडामणिं परिचित्य तीक्ष्णैः शरैर्महिलाजनं विग्रहयतो न लज्जसे । जानामि यदि तस्मिन्नपि जने एवमेवारभटीचण्डो भवसि । "आरभटी आडम्बरस्तत्र चण्डस्तद्बाहुल्यात् । अथ वा आरभटी नाम मायादिरर्थवृत्तिविशेषस्तेन चण्ड उद्धत इति"

‡ अनङ्गस्याप्यारभटीति महाहासो मे ।

§ सखि विचक्षणे जनसंचार इव ।

‖ तत्कदलीगुल्मान्तरिते जानीवः किं नु एतदिति ।

¶ एहि प्रविशावः ।

शीतांशुर्विषसोदरः फणभृतां लीलास्पदं चन्दनं
हारः क्षारपयोभुवः प्रियसुहृत्पङ्केरुहं भास्वतः ।
इत्येषां किमिवास्तु वस्तु मदनज्वालाविघाताय य-
द्बाह्याकारपरिभ्रमेण तु वयं तत्त्वत्यजो वञ्चिताः ॥ १९ ॥

विचक्षणा । सहि मिअंकावलि फलिदं मे दूदत्तणेण, महाराओ वि एआरिसवत्थन्तरं उव्वहदि * ।

राजा । संतापमभिनीय ।

व्यजनमरुतः श्वासश्रेणीमिमामुपबिभ्रते
मलयजरसो धाराबाष्पं प्रपञ्चयितुं प्रभुः ।
कुसुमशयनं कामास्त्राणां करोति सहायतां
द्विगुणगरिमा कामोन्माथः कथं नु विरंस्यति ॥ २० ॥

विदूषकः । अहो मुद्दासणाहो लेहो विअ † ।

राजा । न केवलं लेखः स्मरसंग्रन्थिसंधिविग्रहसवन्धश्च । तथाहि । पश्य ।

तालीदलं यदकठोरतरं यदच
मुद्रा स्तनाङ्कघनचन्दनपङ्कमूर्त्तिः ।
यद्बन्धनं बिसलतातनुतान्तवं च
कस्याश्चिदेष गलितस्तदनङ्गलेखः ॥ २१ ॥

विदूषकः । तीए ज्जेव एसो सण्णिधिपरिच्चाअकारणं भणिदव्वं ‡ ।

राजा । विदूषकं करे विधृत्य । विदूरवसुधेव रत्नशलाका-भूभवद्गुचोवृत्तिरेव रसनिष्यन्दभूमिः । तदुपरि नाम दर्शय ।

विदूषकः । तथा करोति ।

राजा । वाचयति । निष्कपवराक्याः ।

विदूषकः । उम्मुद्दिअ दंसइस्सं । तथा कृत्वा । भो अर-अणं रअणकरंडअं मणक्खरो लेहो § ।

राजा । कामं करुणगम्भीरः प्रयोगः कन्दलयति मानसम् । विचिन्त्य । अपि तालीदलसंपुटम् । विमृश्य । तत्सधिबन्धन-वेषया किंचिन्मन्त्रगुप्तया कामतन्त्रमासूचितं स्यात् ।

विदूषकः । तथा कृत्वा अवलोक्य सहर्षम् । अहो दे बुद्धिविहवो । किं वा वण्णणं मिअलंछणस्स रोहिणीवल्ल-हस्सत्ति || ।

* सखि मृगाङ्कावलि फलितं मे दूतीत्वेन महाराजोऽप्येतादृशमवस्था-न्तरमुद्वहति ।

† अहो मुद्रासनाथो लेख इव ।

‡ तस्या एवैष संनिधिपरित्यागकारणं भणितव्यम् ।

§ उन्मुद्र्य दर्शयिष्ये । भो अरत्नं रत्नकरण्डकमनक्षरो लेखः ।

|| अहो ते बुद्धिविभवः किं वा वर्णनं मृगलाञ्छनस्य रोहिणीवल्ल-भस्येति ।

राजा । सविसंकुलं वाचयति ।

विधत्ते सोल्लेखं कतरदिह नाङ्गं तरुणिमा
तथापि प्रागल्भ्यं किमपि चतुरं लोचनयुगे ।
यदादत्ते दृश्यादखिलमपि भावव्यतिकरम् ।

सवितर्कं विचिन्त्य ।

पाणिप्रेङ्खणतो विशीर्णशिरसः स्वेदावलुप्तस्थिर-
स्ताद्दत्याकृतितो मनाङ् मनस्विनः किं चित्रलीलिं गताः ।
वैचित्र्यात्पुनरक्षिलाञ्छनभृतः खण्डेन वाक्येन च
व्याक्षेपं कथयन्ति पक्ष्मलदृशो लेखाक्षरश्रेणयः ॥ २२ ॥

विदूषकः । किं उवेक्खीअदि केलिकदलीकंदलीए करिसुं-डादंडावेढो ता एहि आणुसरम्ह * ।

राजा । इदमुपायमनन्यगामि यन्मृगाङ्कानुवर्त्तनं रत्नाकरस्य मम हृदयानुवर्त्तनं च भवतः ।

विदूषकः । अङ्गुल्या निर्दिशन् । इदो माधवीलदामंडवं गदा, जं दाणीं मअरद्धअपअसरणि व्व पअपंक्ती दीसदि, ता णिहुअं संगदो भविअ णिरूवम्ह † । तथा कुरुतः ।

मृगाङ्कावली । लतान्तरे चन्द्रिकास्पर्शमभिनीय । संस्कृत-माश्रित्य ।

प्रियविरहदहोऽस्मि मुर्मराभाङ्गलेखा-
मपि हतकहिमांशो मा स्पृश क्रीडयाऽपि ।
इह हि तव लुठन्तः प्लोषपीडां भजन्ते
दरदलितमृणाली काण्डमुग्धा मयूखाः ॥ २३ ॥

इति द्विस्त्रिरभिधाय रोदिति ।

राजा । विदूषकं प्रति । कारय चक्षुषीपारणम् ।

अन्तस्तारं तरलतरलाः स्तोकमुत्पीडभाजः
पक्ष्माग्रेषु ग्रथितपृषतः कीर्णधाराः क्रमेण ।
चिन्तातङ्कं निजगरिमतः सम्यगासूचयन्तो
निर्यान्त्यस्याः कुवलयदृशो बाष्पवारां प्रवाहाः ॥ २४ ॥

अपि च ।

मुक्तानङ्गः कुसुमविशिखान्पञ्चकुण्ठीकृताग्रान्
मन्ये मुग्धां प्रहरति हठात्पश्चिमा वारुणेन ।
वारां पूरः कथमपरथा स्फारनेत्रप्रणाली-
वक्त्रोद्भ्रान्तस्त्रिवलिविपिने सारतीसाम्यमेति ॥ २५ ॥

* किमुपेक्ष्यते केलिकदलीकन्दल्यां करिशुण्डादण्डावेष्टः तदेहि अनुस-रावः ।

† इतो माधवीलतामण्डपं गता यदिदानीं मकरध्वजपदसरणिरिव पदपङ्क्तिर्दृश्यते । तन्निभृतमप्रत्तौ भूत्वा निरूपयावः ।

विदूषकं हस्ते गृहीत्वोपसृत्य सानुरागप्रश्रयम् ।

यस्य कृते वहति जनो
मृदितमृणालोपमानि गात्राणि ।
तस्य कृते यदि सोऽ-
पिहि तदखण्डशासनो मदनः ॥ २६ ॥

तदयं समदुःखसुखो जनस्त्वां विरचिताञ्जलिः प्रसारयति ।

मृगाङ्कावली । स्वगतम् । सस्पृहं ससाध्वसं च तमवलोक्य । किं एस अणब्भो वरिसो, असिप्पिसंपुडागमा वा मोत्तिअउप्पत्ति, कंचणलट्ठिअ व्व सहआरीभूदा रीदि व्व कणअत्तणमहग्घदा, जस्स दंसणमहग्घदा तणू मे पलिभदि । अपवार्य विचक्षणां प्रति । एसो सो सहि राआ विज्जाहरमल्लो जो सिरीसरस्सईणं वल्लहो मअणसुंदरी अ जस्स वल्लहा सिरी सरस्सई मअणसुंदरी अ * ।

विचक्षणा । अँ । राजा ।

राजा । क्षणेन त्वेवं वक्तव्यं भवति । यो मृगाङ्कावली वल्लभो यस्य मृगाङ्कावली वल्लभेति । तां प्रत्यञ्जलिं बध्वा ।

तरङ्गय दृशोऽङ्गने पततु चित्रमिन्दीवरं
स्फुटीकुरु रदच्छदं व्रजतु विद्रुमः श्वेतताम् ।
क्षणं वपुरपावृणु स्पृशतु काञ्चनं कालिमा
व्युदञ्चय मुखं मनाग्भवतु च द्विचन्द्रं नभः ॥ २७ ॥

मृगाङ्कावली । स्वगतम् । भअवदि मिअंकमंडणे जामिणि सदजामा होहि चित्तसिखंडिदाम सत्तरिसिमंडलं † ।

राजा । सखे न हारलताविरहमर्हत्येषा । न चित्रशिखण्डिदामविना चकास्त्युदीचीति कण्ठादवतार्य नायिकाकण्ठे हारं विधत्ते ।

विदूषकः । उचिदसमागमो एस कं ण रंजेदि जं दाणीं णित्तलमोत्ताहलमालालंकरणो सुंदरीअणो वंकुत्तिविभूसणो अ सुकइवाणी बंधो ‡ ।

नेपथ्ये । छालिज्जंतु लदामंडवपहुदीणि विलासट्ठाणाइं दिज्जंतु खलक्किआदुआराइं, णिचलंतु अग्गलाओ, चिट्ठंतु जहाणिअट्ठाणं, बाहिरदो जामल्लिआ सोविदल्ला, एसा वारविलासिणी जणगहिदहत्थदीविउज्जोअजणिददिवसव्व देवी सिद्धणरिंददिण्णोसधसंठिदमंजिट्ठत्थबअसहस्सालंकिदं माहवीलदामंडवं दट्ठुमाअच्छदित्ति * ।

विचक्षणा । सत्रासम् । भट्टा विसज्जीअदु पिअसही † ।

राजा । अभ्यर्थये ते दयां यदि प्रार्थनाभङ्गं न करोषि ।

विदूषकः । वअस्स तुरिदं विसज्जीअदु, अण्णधा पारावदसउंद व्व पंजरणिरुद्धा चिट्ठिस्सामो ‡ इति यथायथं परिक्रम्य निष्क्रान्ताः सर्वे ॥

॥ इति श्रीकविराजराजशेखरविरचितायां विद्धशालभञ्जिकाख्यनाटिकायां तृतीयोऽङ्कः समाप्तिमगात् ॥

* किमेषोऽनभ्रो वर्षः । अशुक्तिसंपुटागमा वा मौक्तिकोत्पत्तिः काञ्चनयष्टिरिव सहकारीभूता, रीतिरिव कनकत्वमुपगता "रीतिः पित्तलम्" यस्य दर्शनमहार्घता तनुर्मे प्रतिभाति । एष स सखि राजा विद्याधरमल्लो यः श्रीसरस्वत्योर्वल्लभो मदनसुन्दरी च यस्य वल्लभा श्रीः सरस्वती मदनसुन्दरी च ।

† भगवति मृगाङ्कमण्डने यामिनि शतयामा भव । चित्रशिखण्डिदाम सप्तर्षिमण्डलम् ।

‡ उचित समागम एष कं न रञ्जयति । यदिदानीं निस्तलमुक्ताफलमालालंकरणः सुन्दरीजनो वक्रोक्तिविभूषणश्च सुकविवाणीबन्धः ।

* मुच्यन्तां लतामण्डपप्रभतीनि विलासस्थानानि, दीयन्तां खलक्किआद्वाराणि "आगमानागमद्वाराणि गवाक्षसदृशानि भाषायां खिडकीति प्रसिद्धानि" नियतन्त्वर्गलाः, तिष्ठन्तु यथा निजस्थानं बाहिरदो "बहिःप्रदेशे" जामल्लिकाः "यामिकाः" सौविदल्लाः "कञ्चुकिनः" । एषा वारविलासिनी जनगृहीतहस्तदीपिकोद्योतजनितदिवसेव देवी सिद्धनरेन्द्रदत्तौषधसंस्थितमाञ्जिष्ठस्तबकसहस्रालंकृतं माधवीलतामण्डपं द्रष्टुमागतेति ।

† भट्टा विसृज्यतां प्रियसखी ।

‡ वयस्य त्वरितं विसृज्यताम् । अन्यथा पारावतशकुन्ता इव पञ्जरनिरुद्धाः स्थास्यामः ।

THE

# VAIŚESHIKA APHORISMS

OF

# KAṆÁDA.

## TENTH BOOK, FIRST DAILY LESSON.

*(Concluded from page 208.)*

सति च कार्यादर्शनात् ॥ ५ ॥

Aph. 5 Also [pleasure and pain are not forms of cognition] inasmuch as the effect is not [always] observed, where [the antecedents] are.

[1] Another difference is added Pleasure and pain are not merely perception or merely inference, since the effect, pleasure or pain, is not always observed where the antecedent, contiguity of organ and object of sense, or attention to the universal concomitance and the attribution respecting the subject of the question, exists. The meaning, therefore, is as follows. Pleasure and pain are not cognition in general; while particular cog-

[1] भेदकान्तरं समुच्चिनोति । सति इन्द्रियार्थसन्निकर्षे सति च न प्रत्यक्षपक्षधर्मतादिप्रतिसन्धाने कार्यस्य सुखस्य दुःखस्य वाऽदर्शनात् न प्रत्यक्षमात्रं सुखं दुःखं वा न लैङ्गिकमात्रं वा तदयमर्थः ज्ञानसामान्यं तावत् सुखदुःखे न भवत इत्युक्तं ज्ञानविशेषः प्रत्यक्षज्ञानं वा भवेदनुमितिरूपं वा इन्द्रियार्थसन्निकर्षे स्रक्चन्दनादिप्रत्यक्षे सुखत्वानुभवाभावात् न द्वितीयः चन्दनाद्यनुमितौ वह्न्याद्यनुमितौ वा सुखत्वदुःखत्वान्यतरानुभवात् एवं प्रत्यक्षविशेषेऽनुमितिविशेषे वा सुखदुःखयोरननुभवाच्च तद्विशेषोऽपीति ॥

mition is either perceptive knowledge, or knowledge, in the from of inference [Pleasure and pain are not the former] inasmuch as there is sometimes no experience of the pleasurable, where there is contiguity of the object and organ of sense, as where there is perception of garlands, sandal-wood &c.; nor are they the latter, since there is sometimes no experience of either the pleasurable or the painful, where there exists an inference respecting sandal-wood &c. or an inference respecting fire &c. Since, therefore, pleasure and pain are not always experienced in the particular perception or in the particular inference, they are not those particular perceptions and inferences U

एकार्थसमवायिकारणान्तरेषु दृष्टत्वात् ॥ ६ ॥

Aph. 6 Because [pleasure and pain] are observed in other causes co-inherent with the same object

[1] Another differentiating character is described The words pleasure and pain are to be supplied. In relation to pleasure particular causes co-inherent with the same object, are merit, desire of pleasure, wish for the cause of pleasure, volition directed upon the material cause of pleasure, and cognition of garlands, sandal-wood &c In relation to pain [particular causes] are demerit, cognition of the undesirable, as thorns &c. The meaning is that [pleasure and pain differ from inferential cognition] inasmuch as they are observed in causes co-inherent with the same object. But non-discrimnative cognition does not require a cause co-inherent with the same object, and a particular cause, while discriminative cognition supposes a cognition of attribution [or judgment], but this is not another cause, that is, is not a cause of its own peculiar kind. Conjunction with the internal organ, as being a cause common [to pleasure and pain with cognition] does not require mention. Though reminiscence requires mental reproduction, yet the difference therefrom is obvious, inasmuch as on referring to consciousness, the difference is recognised Although there are required in inference a recollection of pervasion [or invariable concomitance], and knowledge of the nature of the characters of the subject of the question, yet these are excluded by the word other The probative sense [of the aphorism] is, therefore, that pleasure and pain differ from cognition, inasmuch as they are derived from a peculiar cause of its own kind, having its own common substratum, as is the case with reminiscence, with the first sound [in a series of sounds], and the like U.

एकदेशे इत्येकस्मिन् शिरः पृष्ठमुदरं मर्माणि तद्विशेषस्तद्विशेषेभ्यः ॥ ७ ॥

Aph 7 The head, the back, the stomach, and the vitals are in one part, in one [body], their difference results from the difference thereof [that is, from the difference of their causes]

[1] It may be urged that if the difference between pleasure and pain and cognition depend on a difference in the causes, and if the difference between pleasure and pain, be like that between a post and a water-pot, and the like, there can be no mutual difference between the body and its parts, as the head, feet, back, stomach, &c, there being in regard to these no difference in the ultimate particles, binary atomic aggregates &c, or the causes of blood and semen Accordingly the statement of the aphorism In one part means in one constituent portion, in one, in one body. The head is one part; the stomach, the back, and the vitals, are the veins &c The difference of these, that is, their variety in kind, results from the difference thereof, that is, from the difference of their causes For the co-inherent cause of the stomach, the back &c., is not of the same kind as that of the head; just as the heterogeneity of a piece of cloth, a water-pot, &c. results from heterogeneity in the threads, the half-jars &c, which are their co-inherent causes; the heterogeneity of which threads, half-jars, &c., results again from heterogeneity in the fibres, lime &c [of which they are composed] Heterogeneity is thus to be sought in the successive material causes, for while the atoms may be common, the heterogeneity of the respective material causes invariably gives rise to heterogeneity in the [material effects]; but homogeneity in respect of substance in the material causes does not cause such heterogeneity. U.

[1] भेदकान्तरमाह । सुखदुःखयोरिति शेषः सुखं प्रति एकार्थसमवेतानि असाधारणकारणानि धर्मः सुखे रागः सुखकारणेच्छा तदुपादानयत्नः स्रक्चन्दनादिज्ञानम् दुःखं प्रति तु अधर्मो ऽनिष्टकण्टकादिज्ञानम् एषु एकार्थसमवायिषु कारणेषु दृष्टत्वादित्यर्थः ज्ञानन्तु निर्विकल्पकमेकार्थसमवेतसाधारणकारणं नापेक्षत एव सविकल्पकन्त्वपेक्षते विशेषणज्ञानं तच्च कारणान्तरं स्वविजातीयं कारणं न भवति मनःसंयोगस्तु साधारणत्वादविवक्षितः । यद्यपि स्मृतिः संस्कारमसाधारणमपेक्षते तथापि तद्भेदः स्फुटसिद्धः एवेत्यनुभवमादायभेदचिन्तनात् । लैङ्गिके यद्यपि व्याप्तिस्मृतिपक्षधर्मतादिज्ञानापेक्षा तथाप्यन्तरशब्देनैव तद्व्युदासः । तदयं प्रयोगार्थः सुखदुःखे अनुभवभिन्ने स्वसमानाधिकरणस्वजातीयासाधारणकारणजन्यत्वात् स्मृतिवदाद्यशब्दवच्च ॥

[1] ननु यदि कारणभेदाधीनोज्ञानात् सुखदुःखयोः सुखाच्च दुःखस्य स्तम्भकुम्भादिवदेव परस्परं भेदः तदा शरीरस्य तदवयवानाञ्च शिरःपादपृष्ठोदरादीनां न परस्परं भेदः स्यात् तत्र हि परमाणुद्व्यणुकादीनां लोहितरेतसोबीजकारणानामविशेषादित्यत आह । एकदेशइति अवयवे इत्यर्थः एकस्मिन्निति शरीरे इत्यर्थः शिर इत्येकदेशः उदरं पृष्ठं मर्माणि च स्नायुप्रभृतीनि तेषां विशेषोवैजात्यम् [illegible] तत्रापि कारणवैजात्यादेव वैजात्यं नहि [illegible] तज्जातीयमेवोदरपृष्ठादेरपि तन्तुकपालाद्युपादानवैजात्यात् पटघटादौ वैजात्यवत् तत्रापि वैजात्यसम्भवात् तन्तुकपालादेरपि अंशुशर्करादिवैजात्यात् एवं तत्र तत्राप्यन्वेष्टव्यं परमाणूनां साधारण्ये [illegible] वैजात्यस्य सर्वत्र वैजात्यप्रयोजकत्वात् द्रव्यत्वेन तूपादानसाजात्यं न वैजात्यप्रयोजकमितिदिक् ॥

SECOND DAILY LESSON

कारणमिति द्रव्ये कार्यसमवायात् ॥ १ ॥

Aph. 1. The position, with regard to a substance, that it is a cause, results from the co-inherence of its effects.

[1] The discrimination of the three kinds of cause is here collaterally instituted. The cognition and expression, as applicable to a substance, that it is a cause, that is, that it is a co-inherent cause,—whence, it may be asked, are these derived? It is therefore stated that they are derived from the co-inhesion of the effect, inasmuch as there co-inhere therein substances, qualities and actions U.

संयोगाद्वा ॥ २ ॥

Aph 2 Or from conjunction.

[2] It might be asked whether only co-inherent causality pertains to substances The reply is furnished in the aphorism. As co-inherent causality, so also operative causality, belongs to the threads, in the production of a piece of cloth Inasmuch as conjunction of the shuttle and the thread is also a cause of the cloth, the shuttle and the thread, are mediately through the conjunction, operatively causative of the piece of cloth The particle *or* is used conjunctively. Though the thread be the co-inherent cause of the conjunction of the shuttle and the thread, it is an operative cause of the piece of cloth, mediately through such conjunction. U.

कारणे समवायात् कर्माणि ॥ ३ ॥

Aph 3 Through co-inherence in the cause actions [are non-coinherent causes.]

[3] It is explained what causality resides in action. The words Are non-coinherent causes are to be supplied. Non-coinherent causality is causality co-inherent in one object connected with the relation of cause and effect. Such causality results either from co-inherence in the same object with the effect, or from co-inherence in the same object with the cause Of these the former is called in the terminology of the Vaiśeshikas the slighter, the latter the greater. If it be asked how the non-coinherent causality of action in regard to conjunction, disjunction and reproduction is recognised; it is here replied that it is through co-inherence in the cause, that is, through co-inherence in the co-inherent cause of conjunction &c. Non-coinherent causality, therefore, resides in action, with respect to conjunction &c, by the slight relation characterised as co-inherence in the same object with the effect U

तथा रूपे कारणैकार्थसमवायाच्च ॥ ४ ॥

Aph 4. Also, likewise, through co-inherence in the same object with the cause in regard to colour

[1] This aphorism is stated in anticipation of the question as to what causality pertains to colour and other qualities residing in the parts, in relation to the qualities &c, of the wholes By the words *In regard to colour*, taste, smell, touch, number, extent, separateness, gravity, fluidity, viscidity, and the like, are also indicated. The word *likewise* extends the application of non-co-inherent causality. Colour and the rest in the whole commence by the greater relation, by co-inherence in one object together with that whole which is the coinherent cause of the colour &c, of the whole; as, for instance, the colour &c, of the half-jar originates the colour &c in the jar, and similarly in all other cases The word *also* adds to these occasionally operative causality. U

कारणसमवायस्य संयोगः पटस्य ॥ ५ ॥

Aph 5 Conjunction through co-inherence in the cause [is the non-coinherent cause] of a piece of cloth.

[2] It is stated that the light relation belongs to conjunction which is the non-coinherent cause in the origination of a substance. Conjunction, through co-inherence in the cause, that is, in the co-inherent cause, is the non-coinherent cause of the effect [or product] by the relation characterised as co-inherence in a same object with the effect. By the term piece of cloth product

---

[1] इदानीं प्रसङ्गतस्त्रयाणां कारणानां विशेषविवेचनमारभते । कारणं समवायिकारणमिदमिति प्रतीतिप्रयोगौ द्रव्ये द्रष्टव्यौ कुत एवमत आह कार्यसमवायात् कार्याणि द्रव्यगुणकर्माणि तत्रैव समवयन्ति यतः ॥

[2] तत् किं समवायिकारणत्वमात्रं द्रव्याणामत आह । पटोत्पत्तौ तन्तूनां समवायिकारणत्ववत् निमित्तकारणत्वमपि तुरीतन्तुसंयोगस्यापि पटकारणत्वात् तत्संयोगद्वारा तुर्यास्तन्तोश्च पटनिमित्तकारणत्वमपि वाकारः समुच्चये तुरीतन्तुसंयोगं प्रति तन्तोः समवायिकारणत्वेऽपि पटं प्रति तद्द्वारा निमित्तकारणत्वात् ॥

[3] कर्मणि यादृशकारणत्वं तदाह । असमवायिकारणानीतिशेषः असमवायिकारणत्वञ्च कार्यकारणभावसम्बन्ध्येकार्थसमवेतकारणत्वं तच्च कार्यैकार्थसमवायात् कारणैकार्थसमवायाद्वा तत्राद्या लघ्वी द्वितीया महतीति वैशेषिकपरिभाषा तत्र कयाप्रत्यासत्त्या संयोगविभागसंस्कारान् प्रति कर्मणामसमवायिकारणत्वमित्यत आह । कारणे समवायात् कारणे संयोगादिसमवायिकारणे समवायात् तथाच कार्यैकार्थसमवायलक्षणया लघ्व्या प्रत्यासत्त्या संयोगादौ कर्मणोऽसमवायिकारणत्वमित्यर्थः ॥

[1] रूपादीनां गुणानामवयववर्त्तिनामवयविगुणादिषु कीदृशी कारणतेत्यपेक्षायामाह । रूप इति रूपरसगन्धस्पर्शसङ्ख्यापरिमाणपृथक्त्वगुरुत्वद्रव्यत्वस्नेहाद्युपलक्षयति तथेत्यसमवायिकारणत्वमतिदिशति कारणैकार्थसमवायादिति अवयविरूपादीनां समवायिकारणं यदवयवि तेन सहैकार्थसमवायेन महत्या प्रत्यासत्त्याऽवयविरूपादिकमारभते तद्यथा कपालरूपादि घटे रूपादिकमारभते इति सर्वत्र द्रष्टव्यम् चकारादमीषां क्वचिन्निमित्तत्वमपि समुच्चिनोति ॥

[2] द्रव्यारम्भे संयोगस्यासमवायिकारणस्य लघ्वीं प्रत्यासत्तिमाह । कारणेसमवायिकारणे समवायात् संयोगोऽपि पटादौ कार्ये कार्यैकार्थसमवायलक्षणया प्रत्यासत्त्याऽसमवायिकारणमित्यर्थः पटपदेन कार्यद्रव्यमात्रमुपलक्षयति यदित्ववयवावयविसंयोगोऽपि पटादेरसमवायिकारणं तदा कारणैकार्थसमवायोऽपीति कश्चित् ॥

substance generally is indicated. A certain author maintains that if conjunction of part with part be a non-coinherent cause of the cloth &c, then co-inherence in the same object with the cause is also [a non-coinherent cause]. U.

कारणकारणसमवायाच्च ॥ ६ ॥

Aph 6 Also through co-inherence with the cause of the cause.

[1] It is stated that causality by the greater relation sometimes pertains to conjunction The conjunction technically termed coalition, and residing in the consittuent portions of a ball of cotton, originates magnitude in the ball of cotton; and there is therein the relation of co-inherence in the same object at the cause. U.

संयुक्तसमवायादग्नेर्वैशेषिकम् ॥ ७ ॥

Aph. 7. The differentiating character of fire [is an operative or efficient cause] through co-inherence with the conjunct.

[2] Operative causality is described. The differentiating character or fire, that is heat which is its peculiar attribute, is through co-inherence with the conjunct, the efficient cause of colour &c. produced by baking Hot touch, then, is the operative cause of qualities produced by baking, by the relation of conjunction with its own substratum. The general definition of an efficient cause is to be understood to be a cause other than the coinherent and non-coinherent causes. V.

दृष्टानां दृष्टप्रयोजनानां दृष्टाभावे प्रयोगोऽभ्युदयाय ॥ ८ ॥

Aph 8. The employment of visible observances, the uses whereof are visible, in the absence of visible [results] tends to exaltation.

[3] The employment, or performance, of observances, such as sacrifice, almsgiving, penance &c, which are visible, that is, which are duly celebrated, and the uses whereof are visible, that is, the utility of which is known by imperative precepts, in the absence of visible results of these respective observances, where such results are impossible in consequence of absence of desire for such and such consequences, tends to exaltation, that is, to a resultant desire of knowledge induced by purity of intellect Observances, therefore, whose utility is determined as elysian bliss &c, enjoined by such precepts as Let him who desires paradise offer the sacrifice of horses, when performed disinterestedly, do not produce elysian bliss &c as their fruit, but produce as their result purity of intellect and the like, according to the text They desire knowledge, and the traditional revelation, When worldly attachment has by observances borne its fruits, knowledge is afterwards produced V

तद्वचनादाम्नायस्य प्रामाण्यमिति ॥ ९ ॥

Aph 9. [It has been stated that] authoritativeness pertains to revelation because declared by Him.

[1] The word *iti* indicates the conclusion of the system. Authoritativeness pertains to revelation, that is, to the Veda, because declared, that is promulgated, by Him, the divine being. For it is proved that the Vedas have a personal author, inasmuch as they are an enouncement Nor can beings like us be the enunciators of these, appropriated to a thousand branches. Moreover their objects transcend the senses, and beings of our nature cannot behold objects that transcend the senses. The Vedas, again, are rightly affirmed, inasmuch as they are received by the highest authorities. That which is not rightly affirmed is not received by the highest authorities, but these being received by such, are rightly affirmed. To be rightly affirmed is to be promulgated by an independent personal author; and to be received by the highest authorities is to be an object in course of performance by persons attached to all the systems. It has been stated that non-existence of result sometimes accrues from the disparity of the action, the agent, and the means If it be denied that this is so, the agent not being remem-

---

[1] संयोगस्य क्वचित् महत्या प्रत्यासत्या कारणत्वमित्याह । तूलपिण्डावयवे वर्तमानः प्रचयाख्यः संयोगस्तूलकपिण्डे महत्त्वमारभते तत्र कारणैकार्थसमवायः प्रत्यासत्तिरित्यर्थः ॥

[2] निमित्तकारणतां निरूपयति । अग्नेर्वैशेषिकं विशेषगुणात्मकमौष्ण्यं संयुक्तसमवायात् पाकजरूपादौ निमित्तकारणम् तथाच पाकजं प्रति स्वाश्रयसंयोगसम्बन्धेन उष्णस्पर्शो निमित्तकारणम् समवायिकारणासमवायिकारणभिन्नं कारणं निमित्तकारणमिति सामान्यलक्षणं बोध्यम् ॥

[3] दृष्टानां विधिदृष्टानां दृष्टप्रयोजनानां दृष्टं विध्यर्थवादादिना ज्ञातं प्रयोजनं येषां तथाविधानां कर्मणां यज्ञदानतपःप्रभृतीनां प्रयोगोऽनुष्ठानं दृष्टानां तत्तत्कर्मफलानामभावे तत्तत् फलकामनाविरहादसम्भवे अभ्युदयाय चित्तशुद्धिप्रयुक्तविविदिषात्मकफलाय भवति तथाच स्वर्गकामोऽश्वमेधेन यजेत इत्यादिविधिविहितानां स्वर्गाद्यात्मकप्रतिनियतप्रयोजनानां कर्मणां निष्कामेण कृतानां न स्वर्गादिफलजनकत्वं किन्तु चित्तशुद्ध्याद्यात्मकफलजनकत्वमेव विविदिषन्ति इत्यादिश्रुतेः कषाये कर्मभिः पक्वे ततो ज्ञानं प्रजायते इत्यादिस्मृतेश्चेतिभावः ॥

[1] इति शास्त्रपरिसमाप्तौ तद्वचनात्तेनेश्वरेण वचनात् प्रणयनादाम्नायस्य वेदस्य प्रामाण्यं तथाहि वेदास्तावत् पौरुषेया वाक्यत्वादितिसाधितं नचास्मदादयस्तेषां सहस्रशाखावच्छिन्नानां वक्तारः सम्भाव्यन्ते अतीन्द्रियार्थत्वात् नचातीन्द्रियार्थदर्शिनोऽस्मदादयः किञ्चाप्तोक्ता वेदा महाजनपरिगृहीतत्वात् यन्नाप्तोक्तं न तन्महाजनपरिगृहीतं महाजनपरिगृहीतञ्चेदं तस्मादाप्तोक्तम् स्वतन्त्रपुरुषप्रणीतत्वञ्चाप्तोक्तत्वम् महाजनपरिगृहीतत्वञ्च सर्वदर्शनान्तःपातिपुरुषानुष्ठीयमानार्थत्वम् क्वचित् फलाभावः कर्मकर्तृसाधनवैगुण्यादित्युक्तम् कर्तृस्मरणाभावान्नैवमिति चेन्न कर्तृस्मरणस्य पूर्वमेव साधितत्वात् तत्प्रणीतत्वञ्च स्वतन्त्रपुरुषप्रणीतत्वादेव सिद्धम् न त्वस्मादादीनां सहस्रशाखवेदप्रणयने स्वातन्त्र्यं संभवतीत्युक्तत्वात् । किञ्च प्रमाया गुणजन्यत्वेन वैदिकप्रमाया अपि गुणजन्यत्वमावश्यकं तत्र च गुणो वक्तृयथार्थवाक्यार्थज्ञानमेव वाच्यस्तथाच तादृश एव वेदे वक्ता यः स्वर्गापूर्वादिविषयकसाक्षात्कारवान् तादृशश्च नेश्वरादन्य इति सुष्ठु ॥

bered; we reply that this not so, it having been already proved that the agent is remembered. The promulgation thereof by him is proved inasmuch as it could be promulgated only by an intelligent personal author, while such independent power to promulgate the Vedas in their thousand branches, is, as has been said, impossible for beings of our nature. Inasmuch, moreover, as certitude has excellence for its condition, the certitude of the Veda must have excellence for its condition, and the excellence must in this case be pronounced to be the enunciator's right knowledge of the matter of the enouncement. The enunciator of the Veda must be one who has an intuition of elysium, requitative efficacy, and the like, and there is none such but God alone. U.

FINIS

# THE
# VIDVAN-MANO-RANJINI'

OR

## REJOICER OF THE MIND OF THE LEARNED,

A COMMENTARY ON SAD-ÁNANDA'S VEDÁNTA-SÁRA, BY RÁMA-TÍRTHA

I glorify Ráma, truth, knowledge, infinite, absolute bliss essentially, conscious, immortal; the creation, sustentation, resolution, of the universe. Saluting with voice, body, mind, my holy preceptor and my scientific teacher, I compose a commentary on the Vedánta-sára, in pursuance of my desire, and to the best of my understanding.

The author [of the Vedánta-sára] practises the auspicious proëm of the treatise to be composed, the fruit of which exordium is unimpeded consummation of the work, its attaining to publication, and the observation of approved usage; the duty of such practice being understood from a revelation presumed from traditional precept inferred from accepted custom, and the proem consisting of the commemoration of the principle of deity chosen as his own tutelary divinity.

*The Indivisible* &c. I take refuge with [the indivisible] spirit—such is the construction. Though persons of approved conduct, in the commencement of such a work as the composition of a treatise, commemorate some particular deity, as Gaṇeśa or Sarasvatí celebrated as vouchsafing removal of impediments and suscitation of knowledge; our author deems that there being a commemoration of spirit there results commemoration of all the deities, understanding that spirit is identical with all the deities, in accordance with the text, Verily he is all the gods. I take refuge, (such is the sense) *with spirit* in its form of pure intelligence, designated by the term *that* [in the great sentence, That art thou]; with soul in its fourth state I take refuge; that is, I commemorate that which is manifested by the grace of the institutors of the system. The author elucidates the sense of the term That, with the purpose of explaining the sense of his verse to be that this spirit is none other than the supreme spirit denoted by the word That.

*The indivisible, existent, intelligence, and bliss.* According to the aphorism Bliss &c. pertain to the supreme, the author viewing the sacred texts Brahma is truth, knowledge, infinite, and Brahma truth is intelligence and bliss, as being reciprocally the same proposition, compounds the term bliss with indivisible &c. The word indivisible is a term convertible with infinite, and through its composition with the privative particle excludes the limitation of supreme spirit by things, time, and place erroneously imputed by ignorance. Therefore it has been maintained that Infinite is the predicate, excluding Brahma from that which is not infinite, while the remaining terms without losing their own meaning, indicate Brahma as excluded from their own contradictory meaning; and by means of transferring each its own sense, are predicates in relation to the rest of the sentence, that is the remaining terms truth and knowledge. The infinite also, some one may say, might be unreal or a void. The author, therefore, adds —

*Existent.* Existent, means excluded from unreality and a void, whose essence is further characterised by absence of impossibility, in fine identical with being. For were the absolute unreal it would follow that we should have falsely to ascribe unsubstantiality [to the world, that is to deny that it has any substratum]. And as to a void if it have a conscious subject, the doctrine of a total void, is unestablised; again if it have no conscious subject, there is no proof that there is such a void. If the void be self-illuminant, it will be only another name for Brahma. Therefore Brahma is neither unreal nor a void. Granted that Brahma is indivisible and existent, yet it may be maintained that like darkness it is unsentient. He, therefore, adds :—

सत्यं ज्ञानमनन्तं परिपूर्णानन्दविग्रहं रामं । प्रत्यञ्चममृतं विश्वसृष्टिस्थित्यप्ययं वन्दे ॥

वाणीकायमनोभिः श्रीगुरुविद्यागुरून्नमस्कृत्य । वेदान्तसारटीकां कुर्व्वे श्रद्धा वशाद्यथाबुद्धि ॥

चिकीर्षितस्य ग्रन्थस्याविघ्नपरिसमाप्तिप्रचयगमनशिष्टाचारपरिपालनफलं विशिष्टाचारानुमितस्मृतिपरिकल्पितश्रुतिबोधितकर्त्तव्यताकं स्वाभिमतदेवतातत्त्वानुसन्धानात्मकं मङ्गलमाचरति ॥

अखण्डेत्यादिश्लोकेन । आत्मानमाश्रय इत्यन्वयः यद्यपि ग्रन्थकरणादिकार्य्यारम्भे गणेशसरस्वत्यादिदेवताभेदं विघ्नविघातविद्यास्फूर्त्तिप्रदत्वेन प्रसिद्धमनुसन्दधति शिष्टास्तथाप्येष उ ह्येव सर्व्वे देवा इति श्रुतेरात्मन एव सर्व्वदेवात्मकत्वावगमादात्मानुसन्धाने सति सर्व्वदेवतानुसन्धानं भवतीति मन्यते ग्रन्थकारः । आत्मानं विशुद्धचिद्रूपं तत्पदलक्ष्यं तुरीयमाश्रये शास्त्राचार्य्यप्रसादाभिव्यक्तमनुसन्दधे । अस्यात्मनस्तत्पदलक्ष्यपरमात्मानन्यत्वरूपं बोध्यार्थं कथयितुं तत्पदार्थं शोधयति ॥

[4] *Intelligence.* Intelligence, knowledge, cognition, are synonyms. Since knowledge and Brahma have a common substratum [i. e are in juxta-position] in the sacred text Knowledge, Brahma ; if it [knowledge] were an attribute, this [juxta-position] would be impossible. Nor can it be maintained that This [juxta-position] may be as in the case A white water-pot, inasmuch as there would be a contradiction to the text Neither gross &c. [i. e. Neither gross nor subtile, neither long nor short], assertory of unpropertiedness Moreover if knowledge be eternal [essential], then, like the heat of fire, and the light of the sun, it cannot be other than the essence of Brahma ; for there is no evidence that a property that neither accedes nor secedes, is truly different from the thing propertied. Again if knowledge be uneternal, there will be an infinite regress of cognitions, for every cognition which is a product and existent, must like other products, be produced by immediate knowledge conversant about its material cause. If the knowledge conversant about Brahma, the material cause of knowledge, be a product, then why should there not be an infinite regress of that knowledge also, there being equal applicability to it of the preceding rule [viz that it must be produced by knowledge of its material cause] ? If a subsequent cognition be not produced why object to the first ? Thus it is proved that Brahma in its essence is knowledge By this also it is to be understood as explained that the personal soul has cognition for its essence. This Brahma must be admitted as self-illuminant, according to the power of the statement of its distinctness from the non-illuminate and the unsentient, according to sacred texts such as That is the light of lights, by the light thereof all this universe is illuminated It may be objected that Brahma, though thus indivisible, existent, and intelligence, is no object of the certitude of the wise, being neither pleasure nor absence of pain to itself, inasmuch as there is in itself an eternal absence of pleasure and pain, according to the sacred text, The pleasant and the unpleasant touch not him existing bodiless Nor is Brahma a means of future pleasure &c. ; inasmuch as the attainment and avoidance of visible and invisible pleasure and pain by others, is established by means temporal and scriptural. Brahma, therefore, is neither a means of pleasure &c. ; nor is it identical with absence of pain, an entity being repugnant to a non-entity. Nor is it identical with happiness ; there being no evidence of its being so. He therefore, proceeds.

[5] *Bliss.* Bliss is identical with happiness Nor is there absence of evidence that Brahma is bliss ; there being the evidence of the sacred texts Brahma is bliss— this he knew, That which appears in the form of bliss, eternal,—who could move, who could breathe, if this heaven, the bliss, were not? Nor does the objection find place that bliss and Brahma have the relation of attribute and subject, since this would violate the spirit of the text Nor is it to be urged that others also [the Naiyáyikas &c.] hold that Brahma, God, is possessed of pleasure, therefore bliss means one in whom there is bliss. This explanation of the text, made by our opponents, is simply ridiculous Nor can it be maintained that the term bliss, in connection with Brahma, designates non-existence therein of pain, since there would be a contradiction to the positive enunciation of bliss in juxta-position with Brahma, in the text Bliss, Brahma, this he knew. Nor is there a contradiction of the text that he is untouched by the pleasant, for the text means only a negation of sensuous pleasure. Though the word spirit be here the subsequent term, yet in conformity with the text, and by elucidation of the fact, it is the word Brahma which is to be supplied and to be understood. In this case, by the words I take refuge with the indivisible, intelligence, existent, and bliss, Brahma, soul, the meaning of the sentence, the unity of That and Thou, would have been fully described by the cessation of the intervention of non-Brahmahood, and by means of the juxta-position of the terms Brahma and soul ; and in no other case. And the subsequent mutual relation of these terms, which are in the first place each connected with the word Brahma, is established : just as in the sentence, He buys soma for a ruddy, tawny-eyed heifer one year old, there is a mutual connection [or interdependence] between the words tawny &c, which again are connected with the term which expresses purchase. Nor can it be objected, that if there be but one meaning in the words truth &c, they must be synonyms, and non-simultaneous [that is they cannot all be employed at once] ; for there is a difference in the occasion of the application, identity in the exclusion, and

---

अखण्डसच्चिदानन्दमिति । आनन्दादयः प्रधानस्येति न्यायेन सत्यं ज्ञानमनन्तं ब्रह्म सत्यं विज्ञानमानन्दं ब्रह्मेति श्रुत्योः परस्परैकवाक्यतामभिप्रेत्याखण्डेत्यादिभिरानन्दपदस्य समासः । अखण्डशब्दोऽनन्तपर्य्यायः सजातीयविजातीयस्वगतभेदशून्यवस्तुभ्यः परमात्मनः परिच्छेदं व्यावर्त्तयत्येव नञ्पदयोगात् । तदुक्तं तत्रानन्तोऽतद्वस्तुव्यावृत्त्यैव विशेषणमिति इतराणितु पदानि स्वार्थापरित्यागेनैव स्वविरोध्यर्थव्यावृत्तं ब्रह्मलक्षयन्ति स्वार्थार्पणप्रणाल्या च परिशिष्टौ विशेषणमिति परिशिष्टौ सत्यज्ञानशब्दावित्यर्थः। अखण्डमपि तदनृतं शून्यं वास्यादित्यत आह ॥

सदिति । सत् अनृतशून्यव्यावृत्तं बाधाभावोपलक्षितस्वरूपं सत्तात्मकमिति यावत् ब्रह्मणोऽप्यनृतत्वे निरधिष्ठानारोपप्रसङ्गात् । शून्यस्य च ससाक्षिकत्वे सर्व्वशून्यवादानुपपत्तेरसाक्षिकत्वे तु तदसिद्धेः स्वप्रकाशत्वे च ब्रह्मणएव नामान्तरत्वापत्तेर्न ब्रह्मानृतं शून्यं वेत्यर्थः । अखण्डं सदपि तत्तमोवज्जडं किं न स्यादित्यत आह ॥

therefore the said objection does not apply. In like manner another aphorism also, useful in the consideration of the sentence [That art thou], may be understood, but for fear of prolixity is not here recorded. Therefore, after describing positively Brahma as distinct from non-soul which is limited, unreal, unsentient, and pain, and from the attributes of non-soul, commencing the text Nor this nor that, not gross &c., and resting on the text From which words turn back not reaching it, with the mind,—the author negatively sets forth that Brahma, the limit of all negation [that of which all may be denied] is truth of truth.

---

चिदिति । चित् ज्ञानं ज्ञप्तिरिति पर्य्यायः । श्रुतौ ज्ञानं ब्रह्मेति सामानाधिकरण्यात् गुणत्वे तस्य तदनुपपत्तेः । नच शुक्लो घट इतिवत् तत्स्यादिति वाच्यं निर्धर्म्मकत्वप्रतिपादकाऽस्थूलादिश्रुतिविरोधात् किञ्च ज्ञानस्य नित्यत्वेऽभ्युपगम्यमाने सवितृप्रकाशवच्च ब्रह्मस्वभावानतिरेकात् अनागमापायिधर्म्मस्य धर्म्मिणः परमार्थतोऽभिन्नत्वे प्रमाणाभावात् । अनित्यत्वे ज्ञानानवस्थाप्रसङ्गात् कार्य्यस्य सतो ज्ञानस्यापि कार्य्यान्तरवत् स्वोपादानगोचरापरोक्षज्ञानजन्यत्वात् ज्ञानोपादानब्रह्मगोचरस्यापि ज्ञानस्य कार्य्यत्वे तस्यापि पूर्व्वसमानयोगक्षेमतया कथं नानवस्था अजन्यत्वे प्रथमे कः प्रद्वेषः तथासिद्धा ब्रह्मणो ज्ञानस्वभावता एतेन जीवात्मनोऽपि ज्ञानस्वभावता व्याख्याता वेदितव्या स्वप्रकाशं चैतत् ब्रह्मेष्टव्यं अप्रकाशजडविलक्षणत्वनिर्द्देशसामर्थ्यात् तदेव ज्योतिषां ज्योतिः तस्य भासा सर्व्वमिदं विभातीत्यादिश्रुतेः नन्वेवमखण्डसच्चिद्रूपमपि ब्रह्म न प्रेक्षावत्प्रमागोचरः सुखदुःखाभावतत्साधनानामन्यतमत्वाभावात् न तावत्स्वसुखदुःखाभावसाधनं ब्रह्म स्वस्मिन् सुखदुःखयोर्नित्यनिवृत्तत्वात् अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत इति श्रुतेः । नाप्यनागतसुखादिसाधनं ब्रह्म अन्येषां दृष्टादृष्टसुखदुःखप्राप्तिपरिहारयोर्लौकिकवैदिकसाधनेभ्य एव सिद्धेः । तस्मान्न सुखादिसाधनं ब्रह्म नापि दुःखाभावरूपं भावस्य स्वभावतो विरोधात् । नापि सुखात्मकं तथात्वे प्रमाणाभावादित्यत आह ॥

आनन्दमिति । आनन्दं सुखरूपं न च ब्रह्मण आनन्दत्वे प्रमाणाभावः आनन्दो ब्रह्मेति व्यजानात् आनन्दरूपममृतं यद्विभाति । कोह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यादिति श्रुतेः प्रमाणत्वात् । न चानन्दब्रह्मणोर्धर्म्मधर्म्मिताशङ्काऽप्यवकाशं लभते श्रुतिस्वारस्यभङ्गात् । न च ब्रह्मण ईश्वरस्य सुखित्वं परैरपीष्यते अतआनन्दो विद्यतेऽस्मिन्नित्यानन्दं ब्रह्मेति परेषां श्रुतिव्याख्यानमुपहासास्पदमेव । न च ब्रह्मण्यानन्दशब्दो दुःखाभावपरः आनन्दो ब्रह्मेति व्यजानात् इति भावरूपब्रह्मसामानाधिकरण्यनिर्द्देशविरोधात् । न च प्रियास्पर्शित्वश्रुतिविरोधः तस्याः श्रुतेर्वैषयिकप्रीतिनिषेधपरत्वादिति भावः । यद्यप्यात्मपदमेवेह शेषिपदं तथापि श्रुत्युपरोधात् पदार्थशोधनतया च ब्रह्मपदमध्याहृत्य विशेष्यं बोद्धव्यं । एवं सत्यखण्डसच्चिदानन्दं ब्रह्मात्मानमाश्रय इति ब्रह्मात्मपदयोः सामानाधिकरण्येन तत्त्वं पदार्थयोरैक्यं वाक्यार्थोऽब्रह्मत्वपारोक्ष्यनिवृत्त्या परिपूर्णतया निरूपितः स्याच्चान्यथा एतेषाञ्च पदानां ब्रह्मपदेन प्रत्येकं प्रथममन्वितानां पश्चात् सामानाधिकरण्येन परस्परमपि सम्बन्धसिद्धिः । अरुणया पिङ्गाक्ष्या गवैकहायन्या सोमं क्रीणातीत्यत्र क्रयवाचिपदान्वितानामरुणादिपदानामिव परस्परान्वयः न चैकार्थत्वे सत्यादिपदानां पर्य्यायत्वापत्तिरयौगपद्यञ्चेति वाच्यं प्रवृत्तिनिमित्तभेदाद्व्यावृत्त्यभेदाच्चोक्तदोषानवतारात् । एवमन्योऽपि वाक्यविचारोपयोगीन्याय ऊहनीय एवं विधिमुखेन परिच्छिन्नानृतजडदुःखरूपानात्मतद्धर्म्मविलक्षणं ब्रह्मेति निरूप्येदानीं नेति नेत्यस्थूलमित्यादि वाक्यमारभ्य यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सहेत्यादिश्रुतिमाश्रित्य निषेधमुखेन सकलनिषेधावधिभूतं सत्यस्य सत्यं ब्रह्मेति दर्शयति ॥

*No object of voice or of internal sense;* that is, about which neither the vocal nor the internal organ is conversant. So the Kâṭhaka text [in the Kaṭhopanishad], neither by voice nor by inner sense to be reached, nor by sight, to be known only in that it exist. Having thus stated affirmatively and negatively the definition of Brahma, the author enforces the essence defined, by a collateral definition.

A. E. G. and G. D.

---

अवाङ्मनसगोचरमिति । वाक् च मनश्च वाङ्मनसे तयोर्गोचरो वाङ्मनसगोचरः न वाङ्मनसगोचरो ऽवाङ्मनसगोचरः तदिति विग्रहः । नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा । अस्तीत्येव उपलब्धव्य इति च काठकश्रुतेः । एवं विधिनिषेधाभ्यां ब्रह्मणः स्वरूपलक्षणमभिधाय लक्षितं स्वरूपं तटस्थलक्षणेन सम्भावयति ॥

---



PRINTED AND PUBLISHED BY THE PROPRIETORS, E. J. LAZARUS AND CO., AT THE MEDICAL HALL PRESS, BENARES.

# काशीविद्यासुधानिधिः

श्रीगणेशाय नमः

श्रीमद्विजयिनीदेवीपाठशालोदयोदितः । प्राच्यप्रतीच्यवाक्पूर्वापरपचद्वयान्वितः ॥ १ ॥
अङ्करश्मिः स्फुटयतु काशीविद्यासुधानिधिः । प्राचीनार्यजनप्रज्ञाविलासकुमुदोत्करान् ॥ २ ॥

# THE PANDIT.

A Monthly Journal, of the Benares College, devoted to Sanskrit Literature.

No. 70. Benares, March 1st, 1872. Vol. VI.


## ॥ चिन्तामणेः शब्दखण्डम् ॥

(१) आसत्तिश्चाव्यवधानेनान्वयप्रतियोग्युपस्थितिः ।

## ॥ शब्दचिन्तामणिव्याख्या रुचिदत्तीया ॥

(१) आसत्तिश्चेति । अव्यवधानमन्वयविरोधिव्यवधानाभावः ।

नन्वेवमनासन्नमासत्तिभ्रमेणान्वयबोधविषयो न स्यात् । भ्रमस्यैवासत्तितापत्तेः । अन्यथा ऽव्यवहितविशेषणज्ञानाभावे विशिष्टबोधस्याप्यभावात् । न च प्रथमं या पदेभ्यः पदार्थानां प्रत्येकं स्मृतिः सैव तथा, नत्वन्वयबोधाव्यवहितप्राक्कालीनसमूहालम्बनरूपा, तस्या ह्यासत्तित्वे सर्वत्र समूहालम्बनस्मृतिसंभवे क्वाप्यनासत्तिर्न स्यात्। प्रथमायास्त्वासत्तित्वे गिरिर्भुक्तमग्निमानित्यादौ सा नास्तीत्यनासन्नासन्नविवेको भवतीति वाच्यम् । यत्र लिप्यादिनैकदैव पदजातमनुमितं ततः पदार्थानां समूहालम्बनमेकं स्मरणं तत्राव्याप्तेः । यत्र मध्यपदं न श्रुतमन्वयप्रतियोगिपदं श्रुतं तत्रातिव्याप्तेश्च । पदार्थस्मरणज्ञानस्यापि हेतुत्वे मानाभावेनासत्तिज्ञानं हेतुरिति सिद्धान्तक्षतेश्च । न च तदुपस्थापकपदस्याव्यवहितोपस्थितिः सा स्यादिति वाच्यम् । व्यवहितोक्तपदाव्यवहितत्वभ्रमस्यैवासत्तितया ऽऽसत्तिभ्रमस्थलस्याभावात् । तस्या अपि स्वरूपसत्या हेतुत्वात् । न च प्रत्येकं प्राथमिकपदोपस्थितिस्तथेति वाच्यम् । पूर्वोक्तदोषात् । न च तदुपस्थापकपदस्याव्यवधानेनोच्चारणमासत्तिः, अत एव व्यवहितोच्चारितमप्यव्यवहितोच्चारितत्वेन ज्ञात्वा विपर्यस्यतीति वाच्यम् । एवं हि योजनादिना ऽपि श्लोकादन्वयबोधो न स्यात्, व्यवहितोच्चारितत्वनिश्चये विशेषदर्शनेनासत्तिभ्रमस्याप्यभावात् । मौनिश्लोकादावुच्चारणाभावेनासत्त्यभावापत्तेश्च । न च तदुपस्थापकपदस्य तदर्थस्य वा ऽव्यवहितोपस्थित्यनुकूलो व्यापारः सा, स च क्वचिदुच्चारणं क्वचिल्लिप्यादिरिति वाच्यम् । एवमपि व्यवहितोच्चारिते योजनया ऽन्वयबोधानापत्तेः । न च येन शब्देन यत्र योजना क्रियते तदुच्चारणमादायैव तत्रासत्तित्वे तस्यैवानुभावकत्वे व्यवहितोच्चारितस्यानासन्नत्वे ऽप्यदोष इति वाच्यम् । यत्र शब्देन न योजना, किं तु व्यवहितोच्चारितपदार्थयोः परस्परमन्वये तात्पर्यधी,स्तत्रापि तदन्वयबोधात् ।

अत्र वदन्ति । अव्यवहितार्थोपस्थित्यनुकूलो व्यापारः सा । स च एकपदानन्तरमपरपदे तात्पर्यमुच्चारणं वा, तेन शुकादिवाक्ये नाव्याप्तिः । न चैवमननुगमः । सामान्यतो ऽव्यवहितार्थोपस्थित्यनुकूलव्यापारत्वेन जनकत्वादिति । तच्चिन्त्यम् । एवमप्यासत्तिभ्रमस्थलाभावात्, तत्रापि समूहालम्बनीभूताव्यवहितार्थोपस्थितिसंभवे तदनुकूलव्यापारस्याप्यावश्यकतयासत्तिसत्त्वात् । न चैकपदानन्तरमपरपदे तात्पर्यमुच्चारणं वा गिरिर्भुक्तमग्निमानित्यादौ नास्तीति तद्भ्रमादासत्तिभ्रम इति वाच्यम् । प्रत्येकमननुगमेनोक्तरूपेणासत्तिनिर्वचने तत्रापि तदवश्यंभावात् । कुम्भकारपितृवदन्यथासिद्धत्वेनाहेतुत्वाच्च । अन्यथा ऽव्यवहितपदार्थोपस्थित्यनुकूलव्यापारत्वेनापि कारणता न स्यात् । न च तस्य न हेतुत्वं किं तु तज्ज्ञानस्येति वाच्यम् । तस्याप्यतिप्रसक्तत्वात् । तात्पर्यज्ञा-

(२) सा च स्मृतिर्नानुभवो ऽतो नान्योन्याश्रयः ।

---

नादिक्लृप्तसामग्रीसत्त्वे तेन विना ऽन्वयधीविलम्बाभावाच्चेति वक्ष्यते ।

यत्त्वव्यवहितत्वेन पदतात्पर्यमासत्तिरिति । तदपि चिन्त्यम् । तद्ध्येकपदोपस्थित्यव्यवहितोत्तरकालीनापरपदोपस्थितौ तात्पर्यं, तच्च न, एकपदोपस्थाप्यकृतीष्टसाधनतादेरासत्त्यभावेनानन्वयापत्तेः । तद्व्यतिरेकनिश्चयेन तद्भ्रमस्याप्यभावात् । अव्यवहितत्वेन पदार्थतात्पर्यस्याप्येवमासत्तितापत्तेः । न चेष्टापत्ति,रननुगमात् । किं च शुकादिवाक्ये ऽव्याप्तिः । तत्र तादृशतात्पर्याभावात् । न चेश्वरतात्पर्यं तथा । तथा सति आसत्तिभ्रमस्थले तदादायासत्तित्वे तद्भ्रमासंभवात् ।

वयं तु ब्रूमः । अन्वयप्रतियोग्युपस्थितिरासत्तिरन्वयबोधाङ्गम् । सा च स्वरूपसती, न तु ज्ञाता । मानाभावात् । अनुमितौ साध्यप्रत्ययवत् । तद्भ्रमेण शाब्दभ्रमो ऽसिद्ध एव । तात्पर्यभ्रमेण योग्यताभ्रमेण वा तदुपपत्तेः । न चैवं विशेषणज्ञानत्वेनैव तस्या हेतुत्वे शब्दासाधारणसहकारित्वं न स्यादिति वाच्यम् । पदजन्यपदार्थस्मरणत्वेन शाब्दबोधत्वावच्छिन्ने हेतुत्वात् । अत एव विशेष्यधीरपि शाब्दधीहेतुः । न चैवं गिरिर्भुक्तमग्निमान्देवदत्तेनेत्यादौ अन्वयबोधापत्तिः । गिरिपदस्याग्निमत्पदार्थसंसर्गज्ञानपरत्वज्ञाने इष्टापत्तेः । तदज्ञाने तदभावादेव तदभावोपपत्तेः । तद्धेतुत्वस्यावश्यकत्वेन व्यवस्थापितत्वात् तस्मादव्यवधानज्ञानं तात्पर्यज्ञाने उपयुज्यते न तु साक्षादत एव यत्र प्रकारान्तरेण तात्पर्यज्ञानं तत्र व्यवहितान्वयश्लोकादन्वयबोध आनुभविकः । अत एव घटं पटं चानयेत्यादौ घटानयनाद्यन्वयबोध आवृत्तिं विनापि अन्यकृतो ऽनुमतः । अन्यथाऽन्वयविरोधिपटादिपदेन व्यवधानेनासत्त्यभावे तदनुपपत्तेः । न च शुकाद्युच्चरितेपि तात्पर्यग्रहेप्यव्यवधानादन्वयाबोधदर्शनान्नैवमिति वाच्यम् । तत्रापीश्वरतात्पर्यसत्त्वे तद्ग्रहस्यैव हेतुत्वात् । अन्यथा व्यभिचारेण तस्याहेतुत्वापत्तेः । अत एव पदविशेषजन्यपदार्थोपस्थितिरासत्तिरिति नव्यैरुक्तं, न त्वव्यवधानभागोपि तत्र प्रवेशितः । अत एव तात्पर्यग्राहकत्वेन योजनाप्यर्थवती । तथा च तात्पर्यज्ञानं हेतुः, क्व चिदव्यवहितोच्चारणेन, क्व चिद्योजनया, क्व चित्प्रकारान्तरेणेति । अन्यथा गिरिपदाव्यवहितोत्तरकाले स्वयं स्मृतेनान्योक्तेन वाग्निमत्पदेन कुतो नान्वयधीः । तात्पर्यग्रहादिति यदि तदा प्रकृतेपि तुल्यमिति । (२) सा चेति । न चैवमात्माश्रयो नान्योन्याश्रय इति वाच्यम् । उक्तरूपासत्तौ सत्यां तज्ज्ञानं तज्ज्ञाने चाऽनुभवगर्भोक्तरूपासत्तिरिति भावादित्याहुः । एतच्चासत्तिज्ञानहेतुतापक्षे । तटस्थ आक्षिपति ।

(३) अथ नानाविशेषणकर्मकरणाधिकरणक्रियादिक्रमिकपदज्ञानजन्यक्रमिकपदार्थस्मृतीनां न यौगपद्यं संभवति । आशुतरविनाशिनां क्रमिकाणां मेलकानुपपत्तेरिति कथं तावत्पदार्थान्वयबोधो, विशेषणज्ञानसाध्यत्वाद्विशिष्टज्ञानस्येति चेत् । (४) श्रोत्रप्रत्येकपदानुभवजन्यसंस्कारमेलकादेकदैव तावत्पदस्मृतिः, तत एकदैव तावत्पदार्थस्मृतौ सत्यां वाक्यार्थानुभवः । न चान्यविषयसंस्कारेण नान्यत्र स्मरणमिति वाच्यम् । वाक्यार्थानुभवानुपपत्त्या फलकल्पनेन संस्काराणां (५) परस्परसहकारेण तत्तैकस्मरणकल्पनात् । प्रत्येकवर्णसंस्काराणामिवानन्यगतिकतया (६) पदस्मरणे । (७) अथ

यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते ।
तेनतेनान्वितः स्वार्थः पदैरेवावगम्यते ॥

न चैवमन्वयान्तराभिधानं न स्याद्विरम्य व्यापाराभावादिति वाच्यम् । एवमपि प्रथममनन्वये हेत्वनुपन्यासात् । (८) उत्तरस्य हीदं सामग्रीवैकल्यं न पूर्वस्येति

---

(३) अथेति । विशेषणेत्युपलक्षणं, शाब्दबोधे विशेष्यधीरपि हेतुरिति द्रष्टव्यम् । (४) श्रोत्रप्रत्येकेति । यद्यपि सकलपदस्मरणं विनापि प्राक्तनसंस्कारमेलकात्तावत्पदार्थस्मरणमेकं संभवति, तथापि शब्दोपस्थापितानामेव शाब्दान्वयबोधविषयत्वमित्यभिप्रायेण तथोक्तम् । ननु प्रत्येकमपि पदानां नानुभवो, वर्णसमुदायरूपाणामेकदा ऽभावेन श्रोत्रासन्निकर्षात् । न च पूर्वपूर्ववर्णोपनयसहितान्तिमवर्णसन्निकर्षात्स इति वाच्यम् । पूर्वं तद्गतत्वेन भानाभावेनोपनयसामग्र्यसिद्धेः । अत एवानुपदं वक्ष्यति । प्रत्येकवर्णसंस्काराणामिवेत्यादि । अत्राहुः । पदपदेन वर्णसमुदाय उक्तस्तदनुभवश्च प्रत्येकं विवक्षितः, तथा च श्रोत्रप्रत्येकवर्णसमुदायानुभवाहितसंस्कारादिति पर्यवसितार्थः । प्रत्येकं च वर्णानामनुभवोस्त्येव । एकवर्णात्मकपदाभिप्रायेणेदमुक्तमित्यन्ये । (५) परस्परसहकारेणेति । यद्यपि घटपटाविति समूहालम्बनवत् स्वस्वविषयांश एव संस्काराणां जनकत्वमिति न भिन्नविषयत्वशङ्का, तथापि स्मरणमेकमेव तावज्जन्यमित्यभिप्रायेण तथोक्तमिति ध्येयम् । (६) पदस्मरणइति । अनेकवर्णैकपदस्मरणमित्यर्थः । अवान्तरवाक्यार्थबोधो न भवत्येव, किं तूक्तप्रकारेण महावाक्यार्थबोध एवेति सिद्धान्त्याशयं बुद्ध्वादेशयति । (७) अथेति । यद्वा महावाक्यार्थबोधे न समूहालम्बनस्मरणापेक्षा, किं त्ववान्तरवाक्यार्थज्ञानस्यैवेति शङ्कते । अथेति । (८) उत्तरस्येति । नहि कार्यक्षति-

चेत् । (६) अस्तुतावदेवं, तथापि चरमं तावत्पदार्थघटितवाक्यार्थानुभवे(१०)उक्तैव गतिरनन्यगतिकत्वात् ।

अत्र वदन्ति । (११) सन्निधिर्न पदजन्यैवान्वयबोधहेतुः, द्वारमित्यादावध्याहृतेनापि पिधानादिना ऽन्वयबोधदर्शनात् । न च पिधेहीति शब्द एवाध्याह्रियते, ऽनुपयोगात् । अर्थस्यैवान्वयप्रतियोगित्वेनोपयोगित्वादावश्यकत्वाच्च । (१२) अर्थापत्तेरुपपादकविषयत्वात् । न च शब्दमात्रमुपपादकमपि तु तदर्थः, अवश्यकल्प्यार्थसाहचर्येण दैववशसंपन्नशब्दस्मृतेरन्यथासिद्धेः । (१३) अन्यथा पदबोधितस्यैवार्थस्या(१४)न्वयबोधकत्वमिति (१५) नियमशक्तिकल्पनापत्तेः । स्वार्थान्वयपरत्वाच्छब्दानां द्वारमिति न पिधानान्वयबोधकमिति तदन्वयबोधार्थमवश्यं शब्दकल्पनमिति चेत्, न । लक्षणायां व्यभिचारात् (१६) तवाप्याक्षिप्तेन कर्त्रा ऽन्वयबोधाच्च । अथ द्वारपदसहभावमात्रं (१७) पिधेहिशब्दस्य कल्प्यते । लाघवात् । न च पिधानाभिधायकानेकशब्दोपस्थितौ विनिगमकविरहः, संस्कारतारतम्यात् पदविशेषस्मृतेरितिचेत्, न । (१८) आकाङ्क्षादिमत्प्रतियोग्यन्वितस्वार्थपरत्वस्य क्लृप्तत्वा(१९)ल्लाघवेनार्थाध्याहारात् । न च श्रुतपदानि (२०)लब्धप्रयोजनानीति कथमध्याहृते तेषां तात्पर्यमिति वाच्यम् । (२१) श्रुतार्थान्वयानुपपत्त्या ऽध्याहृते तात्पर्यात् । कथं तर्ह्योदनं पचतीत्यत्र समभिव्याहृतमात्रान्वयः, कलायादेरपि स्मृतत्वादिति चेत्, न । तात्पर्य-

---

भिया सामग्री विलम्बतइति भावः । (९) अस्तु तावदेवमिति । ननु चरममपि कथं सकलपदार्थस्मरणमेकं महावाक्यार्थप्रतीत्यन्यथानुपपत्त्या कल्पनीयं, खण्डवाक्यार्थज्ञानानन्तरं तत्सहकृतचरमपदार्थोपस्थितेरेव महावाक्यार्थबोधसंभवादिति चेत् । मैवम् । तदा चरमपदार्थोपस्थितिश्चरमपदोपस्थितिजन्या न वा, आद्ये तथैव खण्डवाक्यार्थज्ञानस्य नाशितत्वात्कथं तस्य हेतुत्वम् । अन्त्ये कथं तस्याहेतुत्वम् । पदजन्यपदार्थोपस्थितेरेवान्वयबोधाङ्गत्वात् । अत एव शब्दाध्याहारः, पदज्ञानपदार्थस्मरणयोर्व्यापारिव्यापारभावापन्नयोरभावे शाब्दज्ञानानुदयाच्च । अत एव खण्डवाक्यार्थबोधस्य नष्टत्वे ऽपि तन्मूलकखण्डवाक्यार्थस्मृत्यैवोपपत्तेरिति परास्तम् । तस्याः पदज्ञानव्यापारत्वाभावाद्व्यापारं विना करणस्य क्रियानुत्पादकत्वात् । न च लक्षणीयवच्चरमपदेनैव तदन्वितस्वार्थानुभवस्तस्य गङ्गादिपदोपस्थापितत्वेन साकाङ्क्षत्वात् । खण्डवाक्यार्थस्य च तदा पदानुपस्थापितत्वेन निराकाङ्क्षत्वात् । अत एव वक्ष्यति । "क्रियापदाद्युपस्थापितं परस्परमाकाङ्क्षति, न तूपस्थितमात्रमिति" । अन्यथा किमपराद्धमर्थाध्याहारेण । यदि च पूर्वखण्डवाक्यार्थः पदोपस्थापित इत्येव तत्साकाङ्क्षस्तदापिधानादेरपि कदा चित्पूर्वपदोपस्थापनात्तथात्वमविरुद्धम् । ननु यत्र पिधेहीत्यादिशब्दमूलकं परम्परया पिधानादिस्मरणं तत्र पदाध्याहारो मास्त्विति चेत् । न । अपसिद्धान्तात् । अन्यथा यत्र कुतश्चिद्धेतोर्न खण्डवाक्यार्थधीस्तत्रापि सकलपदगोचरं समूहालम्बनं न स्वीक्रियेत तदा प्रकारान्तरोपस्थापितमपि किं चित्पदार्थमादाय पदान्तरेणान्वयबोधसंभवाल्लक्षणोच्छेदापत्तेश्च । नन्वेवं विशिष्टवैशिष्ट्येन क्वाप्यन्वयबोधो न स्यादिति चेत् । न । विशिष्टे विशेषणं तत्र च विशेषणान्तरं प्रतीयते इत्येव तदुपपत्तेरिति दिक् । के चित्तु यत्र कुतश्चिद्धेतोरवान्तरवाक्यार्थबोधो न जातस्तत्र समूहालम्बनस्मरणापेक्षत्येवमनियम इत्याहुः । न च विरम्य व्यापाराभावो दोषः । पदोपस्थित्यन्तरस्याजनितान्वयबोधत्वात् । अत एव जनितान्वयबोधादपि वाक्यात्पुरुषान्तरे वाक्यार्थधीः । (१०) उक्तैवेति । समूहालम्बनस्मृतिरित्यर्थः । (११) सन्निधिरिति । तथा च सकलपदगोचरं स्मरणमनावश्यकमिति भावः । (१२) अर्थापत्तेरिति । अत्र चकारो ऽनुषञ्जनीयः । (१३) अन्यथेति । तथा च पदजन्यपदार्थस्मृतित्वेन न हेतुत्वं गौरवादिति भावः । (१४) अन्वयबोधकत्वमिति । पदस्येति शेषः । अन्वयबोधविषयत्वमित्यर्थ इत्यन्ये । (१५) नियमेति । पदोपस्थापितान्वयबोधे एका शक्तिः, पदोपस्थितानामेव पदार्थानामन्वयबोध इत्यपरा नियमशक्तिरिति कल्पनागौरवमित्यर्थ इत्याहुः । यदि लाक्षणिकमप्यनुभावकं तदा दोषमाह । (१६) तवापीति । (१७) पिधेहिशब्दस्येति । सत एवेति शेषः । एवं सति सत एव शब्दस्य सहभावमात्रं कल्प्यते लाघवादावश्यकत्वाच्चेत्यध्याहृतार्थान्वयानुभावकत्वान्यथानुपपत्त्या मूलयुक्त्या शब्दकल्पनं पराभिप्रेतमिति तदेव दूषयति । (१८) आकाङ्क्षादिमदिति । न तु पदोपस्थापिततादृशप्रतियोग्यन्वितस्वार्थधीपरत्वं शब्दस्य, गौरवादिति भावः । (१९) लाघवेनेत्यस्य क्लृप्तत्वादित्यत्रान्वयः । (२०) लब्धेति । प्रकृतिप्रत्ययार्थयोरन्वयबोधेनेत्यर्थः । तथा चानुपपत्त्यभावान्नार्थकल्पनमिति भावः । यद्यपि शब्दकल्पनपक्षे ऽप्येतत्तथाप्येकदेश्याशङ्क्यम् । (२१) श्रुतेति । तात्पर्यविषयीभूतान्वयानुपपत्त्येति भावः ।

नियमादित्यवेहि । यत्परःशब्दःस हि शब्दार्थः, अन्यथा तवापि दैववशस्मृतकलायादिपदोपस्थापितेनान्वयबोधः स्यात् । अथैवं देवदत्त ओदनमित्यादिवाक्ये क्रियापदाध्याहारभावेन कर्तुरनभिधानात्तृतीया स्यादिति चेत्, न । अध्याहृतपचतिपदेनापि कर्तुरनभिधानात् । (२२) कर्तृसंख्याभिहितेति चेत्, न । (२३) देवदत्तस्य पाक इत्यत्रापि तृतीयापत्तेः । (२४) तात्पर्यतस्तत्र व्यवस्थेति चेत् । (२५) तुल्यम् । ननु द्वारं पिधेहीत्यादौ पिधानशाब्दानुभवे पिधानोपस्थापकपदत्वेन जनकत्वमिति चेत्, न । अन्वयप्रतियोग्युपस्थापकपदत्वेन जनकत्वात्, (२६) न तु तदुपस्थापकयावत्पदत्वेन, गौरवात् । एवं पिधानान्वयबोधे ऽपि । अन्यथा गोणलात्तणिकयोरन्वयबोधो न स्यात्, तयोरननुभावकत्वादिति । उच्यते । क्रियापदोपस्थापिता क्रिया कारकपदोपस्थापितं च कारकं परस्परमाकाङ्क्षति, न तूपस्थितिमात्रम्, (२७) अन्यथा द्वारं कर्मता पिधेहि द्वारं पिधानं कृतिरित्यत्रापि क्रियाकर्माध्याहारइवान्वयबोधप्रसङ्गः, क्रियायाः कर्मणश्चोपस्थितेस्तुल्यत्वात् । एवंविधपदोपस्थापिते परस्परमाकाङ्क्षा नास्तीति चेत्, तर्ह्याकाङ्क्षायां पदविशेषोपस्थापितत्वं तन्त्रं न तूपस्थितिमात्रम् । अर्थविशेषे ऽसाधुत्वान्नात्रान्वयबोध इति चेत्, न । पिधेहीतिपदं विना द्वारमित्यस्याप्यसाधुत्वात् तदर्थयोगे साधुत्वस्य तुल्यत्वात् साधुत्वज्ञानस्यान्वयबोधे ऽप्रयोजकत्वाच्च । गौरवादपभ्रंशादप्यन्वयबोधाच्च । न चात्रासंसर्गाग्रहो, बाधकाभावात् । तस्मात्क्रियापदस्य कारकपदेन कारकपदस्य क्रियापदेन सहान्वयबोधकत्वं न त्वेकं विना ऽपरस्य । अपि च सकर्मकक्रियापदप्रयोगं विना द्वितीयानुपपत्तिः, नहि क्रियापदार्थयोगे द्वितीया, घट आनयनं कृतिरित्यत्रापि द्वितीयापत्तेः । तथा पुष्पेभ्य इत्यत्र स्पृहयतिपदाध्याहारं विना चतुर्थ्यनुपपत्तिः । यदि स्पृहयतिपदार्थयोगे चतुर्थी, तदा पुष्पमिच्छतीत्यत्रापि स्यात्, स्पृहयतीच्छतिपदयोरेकार्थत्वात् । अथ साधुत्वार्थं द्वारं पुष्पेभ्य इत्यत्र पिधेहिस्पृहयतिपदाध्याहारो ऽनुमन्यते, न त्वन्वयबोधार्थं, तस्यान्वयप्रतियोगिविज्ञानादेवोपपत्तेरिति चेत् । तर्हि

(२२) कर्तृसंख्येति । तथा च कर्तृसख्यानभिधानमेव तृतीयापादकमित्यर्थः । (२३) देवदत्तस्येति । तिङ्कृत्तद्धितसमासैरनभिहितकर्तृसंख्याकत्वादिति भावः । नन्वत्र कर्तृकर्मणोः कृतीत्यनेन प्राप्ता षष्ठेवापवादिका, अन्यथा तृतीयाया अप्रसक्तौ तत्सूत्रप्रणयनानुपपत्तेरिति चेत्, न । कर्तृसंख्यानभिधाने तृतीयैवेति व्याप्तौ तथापि व्यभिचारात् । यदि त्वपवादकाभावे सतीति विशेषणं तदा ऽसिद्धिः । देवदत्त ओदनमित्यत्र शुद्धप्रातिपदिकार्थमात्रविवक्षायास्तृतीयापवादकत्वाद्देवदत्तस्य पाक इति वक्तव्ये देवदत्तस्येत्येव यत्र वदति तत्र तृतीया स्यात् । कृद्योगाभावेन षष्ठीप्राप्तेरभावादिति भाव इत्येके । (२४) तात्पर्यत इति । कर्तृसंख्यानभिधाने सत्यपि संबन्धविवक्षायां षष्ठी, हेतुत्वविवक्षायां तृतीयेत्यर्थः । (२५) तुल्यमिति । पचत्यर्थाध्याहारेपि कर्तृसंख्यानभिधानेपि शुद्धप्रातिपदिकार्थमात्रविवक्षायां प्राधान्यविवक्षायां च न तृतीया, किं तु प्रथमैवेत्यर्थः । (२६) न त्विति । न तु यावदन्वयप्रतियोग्युपस्थापकपदत्वेनेत्यर्थः । अन्वयप्रतियोग्युपस्थापकं द्वारादिपदमर्थाध्याहारे ऽप्यस्तीति भावः । (२७) अन्यथा द्वारमिति । ननु तादृशपदस्य स्वरूपायोग्यत्वान्न तथा । प्रकृते तु श्रूयमाणपदस्य स्वरूपयोग्यत्वादध्याहृतार्थान्वितस्वार्थबोधकत्वमविरुद्धमिति चेत्, न । एवमपि द्वारं कर्मता पिधेहीत्यत्र पिधेहिशब्दस्य द्वारान्वितस्वार्थबोधकत्वापत्तिः । तस्य स्वरूपयोग्यत्वा,दन्यथा ऽध्याहृतद्वारान्वितमपि स्वार्थं न बोधयेत् । अत एव तथैवोदाहृतम् । अथ पदविशेषोपस्थापितार्थान्वितस्वार्थबोधकत्वं पदानामिति न तथेति चेत्, हन्तैवं कुतो ऽर्थाध्याहारः । नन्वन्वयविरोधिपदाजन्यपदार्थोपस्थितिः प्रयोजिका, सा च तत्राप्यस्तीति चेत् । मैवम् । अन्वयविरोधित्वं यावदन्वयविरोधित्वं तत्तदन्वयविरोधित्वं वा । नाद्यः । घटः कर्मत्वमित्यादावतिप्रसङ्गात् । नहि तेषामभेदान्वयविरोधित्वमपि । नान्त्यः । एवं हि तत्तत्पदजन्यपदार्थोपस्थितित्वेन हेतुतास्तु लाघवात् । अननुगमस्य तुल्यत्वात् । विशेषं प्रत्येव विशेषस्य हेतुत्वमित्यस्यापि तुल्यत्वात् । किं च वृत्त्युपस्थापितार्थान्वितस्वार्थबोधकत्वं पदानामिति शब्दाध्याहार एव । अन्यथा संस्कारोपस्थिततीरादिकमादाय घोषादिपदैरेवान्वयबोधसंभवे लक्षणोच्छेदापत्तेः । अपि च वृत्त्यनुपस्थापितस्यापि यदि शाब्दबोधविषयत्वं तदा ऽऽकाशादिपदानां शक्तिर्न कल्प्येत । समवायसंबन्धेन स्वार्थोपस्थितिसंभवे पदान्तरैरेव तदन्वयबोधसंभवात् । प्रकारान्तरेण सकलपदार्थोपस्थितौ च तत्तत्पदस्य शक्तत्वबुद्धौ शक्यग्रहे वा शाब्दधीप्रसङ्गः । न च वृत्तिधीरपि हेतु,र्लाघवेन पदजन्योपस्थितित्वेन हेतुत्वे ऽतिरिक्तकारणाकल्पनात् । ननु तथा-

क्रियापदयोगं विना न कारकविभक्तिः कारकपदयोगं विना न तदन्वययोग्यं क्रियापदमिति केवलकारकपदे क्रियापदाध्याहारः केवलक्रियायां च कारकपदाध्याहारः (२८) साधुत्वार्थमावश्यक इति तज्जन्यैवोपस्थितिरन्वयबोधौपयिकी । (२६) तस्मात्क्रियाकारकपदोपस्थापितयोरेव क्रियाकारकयोः परस्परमन्वय इति शब्दाध्याहार एव । (३०) कर्त्राक्षेपे तु वक्ष्यामः । (३१) तात्पर्याधीनं शब्दप्रामाण्यं तच्च तत्परत्वं न तत्साध्यकत्वं, (३२) पदार्थतत्संसर्गयोः शब्दासाध्यत्वात् । अथ तद्गोचर(३३) प्रवृत्तिनिवृत्तिसाध्यकत्वं तत्परत्वं, तच्च (३४) भाव्यार्थस्य साक्षाद्, भूतार्थस्य तु प्रशंसानिन्दावाक्यस्य प्रशस्तनिन्दितस्वार्थप्रतिपादनद्वारा, (३५) लाक्षणिकस्य लक्षणीयविषयप्रवृत्तिनिवृत्तिजनकत्वं तत्परत्वमिति चेत्, न । (३६) तत्परत्वे तज्ज्ञानं जनयित्वा तच्च प्रवर्त्तकत्वं तत्प्रवर्त्तकत्वे च तत्परत्वमिति परस्पराश्रयात् । लाक्षणिकस्याननुभावकत्वेपि लक्षणीयपरत्वात् काव्यादेः (३७) स्वरूपाख्यानमात्रपरत्वेनापि पर्यवसानाच्च । ननु (३८) तद्बुद्धिजनकत्वं तत्परत्वं प्रशंसानिन्दावाक्यमपि प्रशस्तनिन्दितस्वार्थधीहेतुत्वेन तत्परमेव । तच्च ज्ञानं प्रशस्ते सर्वः प्रवर्त्तते निन्दिताच्च निवर्त्तत इति स्वविषये प्रवृत्तिनिवृत्ती जनयतीति तत्पर(३६)मुच्यत इति चेत्, न । गौणलाक्षणिकयोरनुनभावकत्वात् तद्बुद्धिजनने तत्परत्वमित्यन्योन्याश्रयाच्च । तज्जननयोग्यत्वमिति चेत् । तर्ह्यर्थ-

---

पि श्रूयमाणपदं नास्तीत्याभिप्रायिकमुन्नेयम् । तथा च मीमांसकेन पिधेहीति निगदिते श्रोतुर्नैयायिकादेराभिप्रायिकपदाभावनिश्चये बाधेन पदाध्याहाराभावे ऽन्वयबोधानुपपत्तिः । न च शुकादीरिते पिधेहीति वाक्ये ऽर्थाध्याहारे ऽपि न संगतिरिति वाच्यम् । आप्तोक्तत्वनिश्चयं विना ऽर्थाध्याहारलक्षणयोरकल्प्यत्वेनेष्टापत्तिरिति चेत्, मैवम् । उक्तयुक्त्या पदस्यैवान्वयबोधोपयोग्युपस्थितिहेतुत्वे ऽन्वयबोधानुकूलोपस्थापकत्वेन सामान्यतो वक्तुरभिप्रायस्य पदविषयत्वादित्याहुः । नन्वेवं पदं विना ऽप्यर्थोपस्थितिरन्वयबोधाङ्गमिति निश्चिन्वतो मीमांसकस्य पदाध्याहाराभावे पिधेहीतिपदादन्वयबोधो न स्यादिति चेत् । न । इदं पिधेहीतिपदमितरान्वितबोधानुकूलसमभिव्याहारवदित्याकारिकाया अनुमितेरेव पदगोचरत्वात् । पदादन्यस्योक्तयुक्त्या ऽतथाभावात् । पदत्वेन ज्ञानस्याकिंचित्करत्वात् । तदर्थज्ञापकत्वेनैव पदज्ञानस्य वर्णलोपाद्यनुरोधेनार्थोपस्थापकत्वात्तदर्थमेव चान्यत्र पदज्ञानानुसरणात् । न चोक्तप्रकारेण पदज्ञानेपि न शक्तिधीरिति वाच्यम् । शक्तेरपि ह्यन्वयधीप्रयोजकसंबन्धत्वेन ज्ञानं तन्त्रं, न त्वीश्वरेच्छात्वेनेति वक्ष्यते । वस्तुतः शक्तिर्यत्र ज्ञाता तत्पदमेव पदार्थस्मरणव्यापारकमनुभावकं, न तु शक्तिधीरपि तदानीं पदार्थोपस्थापिकेत्यपि वक्ष्यत इत्येव रमणीयमिति वदन्ति । तच्चिन्त्यम् । इदं पदं तादृशपदसमभिव्याहारवदित्यनुमितावपि तदर्थज्ञापकत्वस्याभानात् । तस्मादध्याहृतार्थान्वयतात्पर्यज्ञाने सति स्मृतपदात्पदार्थस्मरणे सत्यन्वयबोधः, उक्तयुक्त्या पदजन्यपदार्थोपस्थितेरेवाङ्गत्वात् । तदभावे तदसिद्धे,स्तदिदमुक्तं "संस्कारतारतम्यात् पदविशेषस्मृते"रिति । नहि पदं विना पदार्थोपस्थितिरङ्गमिति निश्चयस्य पदस्मृतावपि तत्प्रतिबन्धकत्वम् । अत एव मीमांसकोक्ते ऽप्याभिप्रायिकपदाभावनिश्चये स्मृतपदादेवान्वयबोध इति युक्तमुत्पश्यामः । (२८) साधुत्वार्थमावश्यक इति । यद्यप्येवं साधुत्वार्थं पदाध्याहारे ऽपि न पदजन्यपदार्थोपस्थितित्वेन हेतुत्वं, साधुत्वज्ञानस्याहेतुत्वमित्युक्तत्वात् । तदर्थमपि न तन्नियमः । अपभ्रंशात्मकपदघटितवाक्ये पदकल्पनाभावप्रसङ्गः, अध्याहृतपदे शक्त्यग्रहे ऽप्यन्वयबोधप्रसङ्गः, यत्र गेहादिपदं विना घटोस्तीत्यभिधत्ते तत्र गेह इति पदं विनापि साधुत्वात्तत्र तात्पर्यग्रहेपि तदर्थकपदकल्पनानापत्तिश्च तथापि पूर्वोक्ते तात्पर्यम् । अत एव तदेवोपसंहरति । (२९) तस्मादिति । यद्यप्येवमपभ्रंशाच्चान्वयबोधः स्यात्तथापि वृत्तिमत्त्वेन ज्ञातशब्दविशेषोपस्थापितयोरेवान्वय इत्यत्र तात्पर्यम् । तत्राप्याक्षिप्तत्वेनेत्यत्राह । (३०) कर्त्राक्षेपे त्विति । प्रथमान्तपदोपस्थाप्यत्वमेव तस्याक्षेपलभ्यत्वमित्यग्रे स्फुटमित्यर्थः । वेदे पौरुषेयत्वसाधनाय परपक्षनिराकरणाय च तात्पर्यं साधयति । (३१) तात्पर्येति । यथार्थतात्पर्याधीनमित्यर्थः । एतच्च संप्रदायमते । मणिकृन्मते यथार्थयोग्यताज्ञानाधीनं तत्, लाघवादिति ध्येयम् । (३२) पदार्थेति । तथा च तत्परत्वं शब्दस्य न स्यादिति भावः । (३३) प्रवृत्तीति । अन्यतरत्वघटितमिदं बोध्यम् । (३४) भाव्यार्थस्य, साध्यार्थस्य, विधेरिति यावत् । (३५) लाक्षणिकस्येति । 'लक्षणीयानुभवद्वारा' इति शेषः । फलोपधानाभिप्रायेण दूषयति । (३६) तत्परत्व इति । (३७) स्वरूपेति । मात्रपदेन प्रवृत्त्यादिनिरासः । (३८) तद्बुद्धीति । अत्र बुद्धिपदमनुभवपरम् । अग्रे तत्प्रतिपादकत्वं प्रतिपत्तिसामान्यगर्भमित्यपौनरुक्त्यमित्येके । तद्बुद्धिपदं प्रवृत्तिनिवृत्त्यादिजनकबुद्धिपरमित्यन्ये । (३९)

कचोच्चारणे नानार्थपरत्वं लक्षणायां वा मुख्यार्थपरत्वं स्याद् योग्यतासत्त्वात् । नापि तत्प्रतिपाद्यकत्वं, तात्पर्यं विना न तथेत्यन्योन्याश्रयात् । प्रशंसादिवाक्यस्य (४०) प्रवृत्त्याद्यप्रतिपादकत्वात् । लाक्षणिकस्याप्रतिपादकत्वाच्च । (४१) अथ गङ्गापदं स्वार्थाविनाभावितीरं प्रतिपाद्य तत्परमिति चेत्, न,मञ्चाः क्रोशन्तीत्यत्र तेन विनापि पुरुषे तात्पर्याद्(४२)गङ्गादिपदं मत्स्यादिपरं मुख्ये तीरपरं च स्यात् । (४३) अविनाभावस्य तादवस्थ्यात् । मुख्ये बाधके सतीति चेत्, (४४) तर्हि मुख्यार्थपरतैव न स्यात्, (४५) न स्याच्च गच्छ गच्छसीत्यत्र गमनाभावपरत्वम् । उच्यते । तत्प्रयोजनकत्वं तत्परत्वं (४६) तदर्थः प्रतीतिः प्रवृत्तिनिवृत्ती च । प्रयोजनत्वं च न साध्यत्व,मन्योन्याश्रयात् । नापि प्रतिपाद्येच्छाविषयत्वं, यस्य यदिच्छाविषयस्तं प्रति तत्परत्वापत्तेः । तदर्थसाध्यत्वेनेच्छानियम इति चेत्, न, इह धूम इत्यत्र (४७) जन्यज्ञाप्यभेदेन साध्यस्य बहुविधतया वाक्यभेदप्रसङ्गात् ॥ (४८) पुमिच्छाया नियन्तुमशक्यत्वात् । (४९) किं तु प्रतिपादकेच्छाविषयत्वं तत्परत्वं, यः शब्दो वक्त्रा यदिच्छया (५०) प्रयुक्तः स तत्परः, (५१) सा चेच्छा प्रतिपाद्यधीप्रवृत्तिनिवृत्तिविषयेति तत्परत्वम्, (५२) नानार्थात् श्लिष्टादनेकपदान्वितैकक्रियापदान्मुख्यलाक्षणिकपराच्चावृत्त्या क्रमेणानेकार्थज्ञानं न त्वेकदैव, सकृदुच्चरितस्य सकृदर्थपरत्वनियमेनैकचोच्चारणे (५३) ऽनेकपरत्वाभावादिति सकलतान्त्रिकैकवाक्यतया वदन्ति ॥

अत्र ब्रूमः । (५४) अनेकार्थप्रतीतीच्छयैकोच्चारणं भवत्येव, (५५) पुमिच्छाया नियन्तुमशक्यत्वात् । यदि च तदुच्चारणं नानेकार्थपरं तदा ऽऽवृत्तिरपि न स्यात्, तात्पर्यनिर्वाहार्थमावृत्तिकल्पनात् । (५६) अन्यथैकपरेऽपि तदापत्तेः । (५७) अत एव तदुच्चारणस्योभयपरतायां नावृत्तिकल्पनं, (५८) तस्मात्तुल्यवदनेकार्थोपस्थितौ तात्प-

---

उच्यतइति । भाक्तं तत्परत्वमित्यर्थः । (४०) प्रवृत्त्यादीति । तथा च प्रवृत्तिपरं वाक्यमिति व्यवहारविरोध इति भावः । ननु प्रतिपत्तिसामान्यगर्भमस्तीत्युक्तं तथा च स्वार्थाविनाभावसंबन्धेन गङ्गादिपदं तीरादिप्रतिपादकम्, अन्यथा विभक्त्यर्थान्वयानुपपत्तिः, अतस्तत्परमित्याशङ्कते । (४१) अथेति । ननु तत्समयावच्छिन्नपुरुषस्तद्व्याप्य एवेत्यरुचेर्दोषान्तरमाह । (४२) गङ्गेति । (४३) अविनाभावस्येति । तेन संबन्धेन तदापि तत्स्मरणसंभवादिति भावः । स्वरूपयोग्यताभिप्रायेणातिप्रसङ्ग इत्यन्ये । सत्यन्तं लक्षणे विशेषणमविनाभूतार्थप्रतिपादने वा । आद्ये दोषमाह । (४४) तर्हीति । मत्स्यादिपरं स्यादित्यपि बोध्यम् । अन्त्ये त्वाह । (४५) न स्याच्चेति । तस्य गमनाभावप्रतिपादकत्वाभावादित्यर्थः । (४६) तदर्थ इति । तच्छब्दार्थ इत्यर्थः । न चाननुगमो, लक्ष्याणामप्यननुगतत्वादिति भावः । एवं चैतत्तत्परत्वं व्यवहारप्रयोजकं शाब्दबोधनियामकं च, तदर्थसंसर्गप्रतीतीच्छयोच्चरितत्वमात्रं, न तु प्रवृत्तीच्छयोच्चरितत्वादिकं, व्यभिचारादिति बोध्यम् । (४७) जन्येति । धूमजन्यो मशकादिनिवृत्त्यादिर्ज्ञाप्यो वह्न्यादिः । नानार्थे प्रतिपाद्येच्छैव नेत्याशङ्क्य निराकरोति । (४८) पुमिति । प्रतिपादकेच्छाविषयत्वं प्रयोजकत्वमिति तदादायैव लक्षणं, फलितमाह । (४९) किं त्विति । तत्प्रतिपादकेत्यर्थ. । (५०) प्रयुक्त इति । परप्रतिपत्तिविषयीकृत इत्यर्थः । न तु जनित इत्यर्थः । मौनिश्लोकानुरोधादित्याहुः । (५१) सा चेति । एवं च तादृशप्रवृत्त्यादिविषयत्वेन तीरादिपरत्वमप्युच्यतइति भावः । प्रसङ्गादाह । (५२) नानार्थादिति । यत्रैकावच्छेदेन भिन्नार्थशक्तिस्तन्नानार्थं, श्लिष्टं च न तथेति तयोर्भेदः । (५३) अनेकपरत्वाभावादिति । सकृदुच्चरितस्य सकृत्प्रत्यायकत्वव्युत्पत्तिनियमनिश्चये विशेषदर्शनादेकदा ऽनेकार्थप्रत्यये वक्तुर्नेच्छा उभयानुभवे इच्छामात्रस्य क्रमिकानुभवाभ्यामेव निर्वाह इत्यावृत्तिरेव कल्प्यते, एकमात्रोच्चारणे एकमात्रानुभवजनकत्वव्युत्पत्तिकल्पनात् । अत एव यत्रैकोच्चारणे नानार्थानुभवजनकत्वनिश्चयस्तत्रैकदैव नानार्थानुभवो नावृत्तिः, पुष्पवन्तादिपदे व्युत्पत्तिवैचित्र्येणानुभववैचित्र्यादिति भावः ।

अनेकपरत्वाभावादिति दूषयति । (५४) अनेकार्थेति । न चोक्तविशेषदर्शनान्न तथेति वाच्यम् । बाधिते ऽपीच्छादर्शनेन तत्र तस्याप्रतिबन्धकत्वात् । तदिदमुक्तं (५५) पुमिच्छाया नियन्तुमशक्यत्वादिति । विशेषदर्शनस्यासार्वत्रिकत्वाच्च । वस्तुतो विशेषदर्शनमेव न, गौरवेण मात्रार्थान्तर्भावेन व्युत्पत्तेरकल्पनात् । मा ऽस्तु वा तथा वक्त्रिच्छा, तथा ऽपि यत्र भ्रमेण श्रोतुर्युगपत्तात्पर्यज्ञानं तत्र युगपत्तदुभयानुभवो दुर्वारः, सामग्रीसाम्यादिति भावः । (५६) अन्यथेति । अनेकार्थपरत्वं विनापि यद्यावृत्तिरित्यर्थः । ननु भवतूभयपरता तथाप्यावृत्तौ किमायातमित्यत आह । (५७) अत एवेति । अनेकार्थप्रतीतीच्छयैकमुच्चारणं यत इत्यर्थः । यदि नावृत्तिकल्पनं तदा कथमन्वयबोध इत्यत आह । (५८) तस्मादिति । तस्मात्पदादित्येके । उपसंहारे तस्मा-

र्यादिज्ञाने युगपदनेकान्वयबोधो भवति, सामग्य्रास्तुल्यत्वात् (५६) प्रथममेकस्यान्वयबोधो न तदन्यस्येति नियन्तुमशक्यत्वाच्च । (६०) अथ (६१) विवादाध्यासितमक्षपदोच्चारणमेकपदैक (६२) शक्तिविषयमेकमेवा (६३) नुभावयति, (६४) एकपदोच्चारणत्वाद्, घटपदोच्चारणवत् । (६५) यद्वा (६६) एकत्रोच्चारणं नानाशक्त्या नानार्थाननुभावकं, नानार्थत्वाद्, एकपरनानार्थपदवदिति चेत्, न । अनेकार्थानुभवसामग्रीसत्त्वेन बाधितत्वात् (६७) सामग्रीविरहस्योपाधित्वाच्च । अत एवाक्षमानयेत्युक्ते भिन्नप्रकरणादिना तात्पर्यप्रमायां भ्रमे वा प्रतिपाद्ययोरेकदैवावृत्तिं विनानेकार्थप्रतीतिर्न तु तत्रैका विलम्बते । एवं घटं पटं चानयेत्यत्रायनपदस्योभयपरत्वे एकदैवान्वयबोधो न त्वावृत्तिः, (६८) वाक्यभेदस्त्वर्थभेदाद् न ज्ञानभेदात् । गङ्गायां जलं घोषश्च तिष्ठतीत्यत्र गङ्गापदस्य (६९) युगपत्प्रवाहतीरयोस्तात्पर्यग्रहे तयोर्द्वयोरप्येकदोपस्थितौ जलघोषयोरेकदैवान्वयबोधः । न च युगपद्वृत्तिद्वयापत्तिरिष्टत्वात् । (७०) तात्पर्याद्धि वृत्तिर्न तु वृत्त्यनुरोधात्तात्पर्यं, गौणलाक्षणिकयोरुच्छेदापत्तेः, तात्पर्यनिर्वाहार्थं वृत्तित्वेन तयोः कल्पनात् । (७१) मुख्यलाक्षणिकयोरेकैकमात्रपरत्वे युगपद्वृत्तिद्वयविरोधः । अनेकान्वयबोधपरत्वे वृत्तिद्वयविरोधस्य दोषत्वे परिभाषापत्तेः । यत्र मुख्यार्थे शीघ्रत्वेन प्रथममन्वयबोधे ऽनन्तरं लाक्षणिकान्वयबोधस्तत्रा (७२) वृत्तिरेव, तस्माद्युगपत्ता-

---

दित्यन्ये । ननु शब्दस्वभावादेकस्यैवैकदान्वयबोधो नान्यस्येति न सामग्रीतौल्यमित्यत आह । (५९) प्रथममिति । तथा च विनिगमकाभावादुभयज्ञानमज्ञानं वा स्यान्न त्वावृत्तिरिति तादृशशब्दस्वभाव एवासिद्ध इति भावः । (६०) अथेति । पक्षतावच्छेदकैक्ये ऽप्यंशतः सिद्धसाधनाभ्युपगमादाह । (६१) विवादेति । अनेकार्थपरत्वेन ज्ञातमित्यर्थः । एकमेवानुभावयतीति कृते बाधः, जात्यादेरप्यनुभवादत आह । (६२) एकशक्तिविषयमिति । एका या शक्तिस्तद्विषयमित्यर्थः । यद्यपीन्द्रियादेरिन्द्रियादिशब्दशक्तिविषयत्वादेवमपि बाधस्तथापि स्वनिरूपितैकशक्तिविषयमेवेत्यत्र तात्पर्यम् । नानार्थस्मरणाद्बाध इत्यत उक्तम् । (६३) अनुभावयतीति । प्रकारतयेति शेषः । तेन संसर्गबोधकत्वे ऽपि न बाध इत्येके । अन्वये ऽपि शक्तिरिति मते नेदमुक्तमित्यन्ये । यद्यप्युच्चारणस्य नानुभावकत्वं तथापि प्रयोजकत्वे तात्पर्यम् । एकस्मिन् पुरुष इति साध्यविशेषणं, तेन नानापुरुषे नानार्थानुभवेपि न व्यभिचारः । एवमग्रेपि । (६४) एकपदेति । एकोच्चारणान्तर्भावेन यत्र न नानार्थे शक्तिग्रहस्तादृशपदोच्चारणत्वादित्यर्थः । तेन करणैकत्वादिबोधकतृतीयादिपदे न व्यभिचार इत्याहुः । तत्र प्रवृत्तिनिमित्तभेदेप्येकत्रोच्चारणइति वक्ष्यमाणरीत्यैकशक्तेरेवाभ्युपगम इत्यन्ये । नन्वेवमपि केवलान्वयिपदोच्चारणे व्यभिचारः, तत्र स्वनिरूपितैकशक्तिविषयभिन्नस्यैवकारव्यवच्छेद्यस्याप्रसिद्धेः । स्वपदानन्तर्भावे तु पूर्वदोषानुवृत्तेरित्यनुशयेनाह । (६५) यद्वेति । अत्राक्षपदमेव पक्षत्वेन बोध्यम् । बाधवारणायाह । (६६) एकत्रोच्चारणइति । एतच्चाभावान्वयीति न प्रतियोग्यप्रसिद्धिरिति वदन्ति । तच्चिन्त्यम् । प्रतियोगिविशेषणं विनोक्तबाधानिवारणात् । वस्तुतः पुष्पवन्तादितृतीयादिपदे नानाशक्त्यभ्युपगमपक्षे तत्र प्रतियोगिप्रसिद्धिः स्वीयनानाशक्त्येति ध्येयम् । यथा श्रुते ऽपरपदार्थान्वितस्वार्थानुभावकत्वाद्बाधापत्तेः । अत एव पदत्वादित्यत्र घटादिपदे व्यभिचारान्नानार्थत्वादिति हेतुरुक्तः । तदर्थापि पुष्पवन्तादिपदभिन्ननानार्थत्वादिति । वस्तुतस्त्विदमक्षपदप्रतिसंधानं स्वविषयशक्त्यन्तरविषयाननुभावकं तादृशनानार्थप्रतिसंधानत्वादित्यत्र तात्पर्यम् । यद्वेकत्रोच्चारणमिति पाठस्तदैकत्र स्थले ऽक्षपदोच्चारणमिति यावत्, तथा च तदेव पक्षत्वेन बोध्यम् । एवं च नानार्थोच्चारणत्वादित्यादिक्रमेण बोध्यम् । साधनवति पक्षे निरुपाधौ बाधानवकाश इति यदि परो ब्रूयात्तत्राह । (६७) सामग्रीति । नन्वेकत्रैकदैवान्वयबोधे क्रमिकान्वयबोधद्वयाधीनो वाक्यभेदो न स्यादित्यत आह । (६८) वाक्येति । अर्थैक्यादेकं वाक्यमित्यभिधानादिति भावः । विधेयभेदाद्वाक्यभेद इत्यन्ये । (६९) युगपदिति । एतच्च शक्योपस्थित्यनन्तरं लक्ष्यतात्पर्यग्रहकाले शक्येपि यत्र द्वैवात्तात्पर्यग्रहस्तत्र बोध्यं, यत्र मुख्यार्थस्य शीघ्रोपस्थितिकत्वेन तत्र प्रथमं तात्पर्यधीस्तत्रावृत्तिरेवेत्यग्रे स्फुटम् । ननु वृत्तिविरोधाद्युगपत्तात्पर्यमेव नास्तीत्यत आह । (७०) तात्पर्यादिति । नन्वेवं युगपदुभयान्वयबोधसामग्रीसत्त्वे युगपद्वृत्तिद्वयमिष्टमेव, यत्र तु सामग्रीक्रमस्तत्र युगपद्वृत्तिद्वयप्रसङ्ग एव नेति कुत्र युगपद्वृत्तिद्वयविरोध इत्यत आह । (७१) मुख्येति । न क्वचित्तद्विरोधः । प्रवादस्त्वेतदभिप्रायः । यत्रैकमात्रपरत्वनिश्चयस्तत्र नावृत्त्याप्यन्यान्वयबोधसामग्रीति । (७२) आवृत्तिरेवेति । न च जनितान्वयबोधत्वेन निराकाङ्क्षत्वेन कथमावृत्त्या ऽप्यन्वयधीरिति वाच्यम् । पदोपस्थित्यन्तरस्याज-

त्पर्यग्रहे सति नावृत्तिः, किं त्वनेकार्थपरत्वे सत्येव यत्र तात्पर्यग्रहक्रमादन्वयबोधक्रमस्तत्रावृत्तिः, (७२) प्रथमोच्चारणस्य पर्यवसितत्वादिति । (७४) एवं च लोके क्लृप्तत्वाद्वेदेपीदं तात्पर्यमिति तस्य पौरुषेयत्वम् ॥

---

नितान्वयबोधकत्वात्तात्पर्यविषयानुभावकत्वाभावगर्भाया आकाङ्क्षायास्तत्रापि सत्त्वादित्यन्ये । श्रुतपदस्य पुनरुपस्थितिस्तज्जातीयपदान्तरकल्पनं वा आवृत्तिः, अश्रुतपदकल्पनमध्याहार इति वदन्ति । (७३) प्रथमेति । प्रथमोपस्थितेरतीतत्वादित्यर्थः । निराकाङ्क्षत्वादित्यर्थ इत्यन्ये । तात्पर्यनिरूपणस्य प्रयोजनमाह । (७४) एवं चेति ।

---

## ॥ अथ गोपाललीलाख्यकाव्यस्य ॥

॥ पञ्चदशसर्गारम्भः ॥

अथेशमभ्येत्य मुनिस्तदेति
रहस्यमागामि रहस्युवाच ।
प्रदक्षिणीकृत्य नुनाव नृत्य-
न्नत्यन्तमन्तःप्रमदेन पूर्णः ॥ १ ॥

त्वमन्तरात्मा जगतोऽद्वितीयो
गुप्तः शिखावानिव दारुणोऽन्तः ।
भूभारभूतक्षितिभृद्वधाय
जातोऽसि धर्मस्य च रक्षणाय ॥ २ ॥

कृष्ण त्वया वृष्णिकुलावतंस
कंसस्य दैत्यो दलितोऽश्वरूपः ।
यदुद्भटह्रेषितभीषितानि
वसन्ति नद्यां किल दैवतानि ॥ ३ ॥

परे द्यवि द्रागविनिहत्य रङ्गे
मातङ्गमत्यङ्गमथाशु मल्लान् ।
त्वामीक्षिताहे गुरुमङ्ग्रगं च
कंसं विकर्षन्तमनन्तभूमिम् ॥ ४ ॥

कृष्ण त्वया देयमथोग्रसेन-
राज्यं वधं पञ्चजनस्य सिन्धौ ।
आचार्यबालाहृतिमुद्धवस्य
गतिं व्रजे ते गरुडाभियानम् ॥ ५ ॥

श्वफल्कपुत्राभिगमं पुरस्य
रोधं जराभूयवनादिसैन्यैः ।
सिन्धौ पुरीकल्पनमत्र बन्धु-
नीतिं शकान्तं मुचुकुन्ददृष्ट्या ॥ ६ ॥

रुक्मिण्यवाप्तिं तव राजमध्यात्
सुतेन ते शम्बरनाशनं च ।
स्यमन्तकस्यानयनं तवाथ
जातेऽपवादे सह जाम्बवत्या ॥ ७ ॥

त्वत्सत्यभामोपयमं पुरे च
यानं ततो वारणसाह्वये ते ।
पश्चान्निपातं शतधन्वनश्च
मणेरथाक्रूरकरेऽर्पणं च ॥ ८ ॥

तवैन्द्रिणा पाण्डुपुरे विहारं
कालिन्द्यवाप्तेरनु लक्ष्मणाप्तिम् ।
मुरस्य भौमस्य वधं च राज-
कन्योपलब्धिं हरणं सुरद्रोः ॥ ९ ॥

भैम्या ततश्चामरहस्तयापि
रहस्तवालापविनोदमीश ।
तथानिरुद्धस्य विवाहचित्र-
लेखाहृती ते प्रधनं ज्वरेण ॥ १० ॥

बाणस्य रक्षां भुजकर्तनाद् द्रा-
गुषाहृतिं चापि नृगस्य मोक्षम् ।
बलव्रजाप्तिं त्वदुदन्तदानं
कान्ताजनायेनसुताविभेदम् ॥ ११ ॥

रणाङ्गणे पौण्ड्रकपीडनं च
काश्याः प्रदाहं च सुदर्शनेन ।
वधं ततश्च द्विविदस्य शाम्ब-
युद्धं त्वदन्तःपुररिङ्गणं मे ॥ १२ ॥

जरासुतान्तं प्रभुदूतयानं
पार्थाभियानं तव राजसूये ।
ततो जरासंधवधं च बद्ध-
क्ष्माभृद्विमुक्तिं शिशुपालघातम् ॥ १३ ॥

ससौभशाल्वक्षितिपालपातं
मृधे वधं तत्र च दान्तवक्रम् ।
विदूरथस्यापि हतिं बलस्य
तीर्थाभियानेऽपि च सूतघातम् ॥ १४ ॥

सचे तथा बल्वलपातनं च
पार्थस्य सूतस्य तव प्रपञ्चम् ।
ततो महाभारतयुद्धदम्भाद्
भूभारशान्तिं च सुदामयानम् ॥ १५ ॥
स्यमन्तपूर्वेऽपि च पञ्चके ते
तीर्थेऽभिषेकं मिहिरोपरागे ।
तत्रैव मित्रैः सह योगमाप्रे-
रष्टाबलोद्वाहकथाप्रबन्धम् ॥ १६ ॥
भवद्विदृक्षाजनितां मुनीनां
गतिं ततस्तैर्वसुदेवदीक्षाम् ।
देवक्यपत्यार्पणमर्जुनस्य
कार्यार्थिनो द्वारवतीनिवासम् ॥ १७ ॥
गत्वा ततस्ते मिथिलां तदैव
समं तदीशश्रुतदेवयानम् ।
पश्चात् तव द्वारवतीप्रवेशं
बकासुरस्यापि वधं पुनश्च ॥ १८ ॥
पुत्रार्पणं विप्रसुताभिरचि-
पार्थप्रतिज्ञाविहतो त्वयैव ।
जनस्तवायं चरितं प्रभास-
यात्रावधि श्रीश दिदृक्षते ते ॥ १९ ॥
जहातु भूर्भूपतिभारपीडां
स्वकार्यसिद्धै त्वरयादिदेव ।
विशुद्धनित्याद्वयचिन्मयात्म-
न्नमोघकामो न भवान् न वेद ॥ २० ॥
आदिकुलकम् ।

इत्यच्युतं भव्यमुदीर्य नत्वा
लब्ध्वा तदाज्ञामथ नारदोऽगात् ।
कृष्णोऽपि वाहं विनिहत्य गोष्ठं
विवेश गोपैरुपगीयमानः ॥ २१ ॥
वृन्दावनस्थो विदधद्विहारैः
पुरंदरं नन्दनगं निजाधः ।
स मेषपालव्यपदेशभाग्भिः
समेत्य रेमे परमेश्वरोऽपि ॥ २२ ॥
द्रुमेषु सानुष्वथ मेषपाल-
चौरा भवन्तो गणशश्चरन्तः ।
अभीतिभाजो भगवत्प्रभावात्
प्रमोदपूर्णाः पशुपा विजह्रुः ॥ २३ ॥
विहारसक्तान् पशुपान् विहन्तु
मयात्मजः कल्पितगोपरूपः ।
व्योमाह्वयोऽगादसुरोऽथ तत्र
चिराय जानन्नपि कृष्णवार्ताम् ॥ २४ ॥
शनैरनैषीन्मुहुरेष मेष-
वेषान् यथा यान् पशुपानमुष्णात् ।
निधाय दर्यां पिदधेऽश्मना ता-
नथावशिष्टाः किल पञ्चषास्ते ॥ २५ ॥
द्विषत्तृणोषर्बुध एष देवो
भयात्तयादःकरुणासरस्वान् ।
विवेद तं किं नु विचित्रमत्र
मायाप्यनादिर्वशगास्ति यस्य ॥ २६ ॥
अथाग्रहीदेनमसौ यथास्वं
रूपं महीध्रोपममास्थितोऽपि ।
पदं स गन्तुं न शशाक जन्तुः
क्व नु क्षमः कालवशो विमोक्तुम् ॥ २७ ॥
ललाटविन्दूकृतभानुबिम्बं
महोग्रकेशं सदृशीकृताभ्रम् ।
अङ्गं गुणीभूतसमस्तशब्दं
दधद् व्यधाद् व्योमपदं स सार्थम् ॥ २८ ॥
निगृह्य दोर्भ्यां निहताङ्गसारं
भूमौ निपात्याशु स सत्यसंधः ।
अमीमरत् तं पशुवत् सलीलं
दिवि व्रजे पश्यति देवतानाम् ॥ २९ ॥
निरस्तदैत्योरुसमस्तमायः
शीघ्रं दरीद्वारशिलामपास्य ।
बिलाद्विभुस्तान् निरकासयत् ते
तुष्टा हरेर्भाषणतो निरीयुः ॥ ३० ॥
हरिस्ततः कालमुखादिव स्वान्
विनिर्गतान् कन्दरतो दयालुः ।
आश्वास्य चालिङ्ग्य सुरैरिव स्वैः
प्रस्तूयमानः प्रविवेश गोष्ठम् ॥ ३१ ॥

कथंचनाथ क्षपितातिदीर्घ-
क्षपः पदं द्रष्टुमधोऽक्षजस्य ।
रथं समास्थाय पथीत्थमुद्य-
न्मनोरथः प्रास्थित गान्दिनेयः ॥ ३२ ॥

हृदुत्सुकं मे हरिणा चिरेण
कृतार्थतामेष्यति लब्धकामम् ।
व्रजेश्वरस्याशु पदाम्बुजे यद्
भजेयमुद्वीक्ष्य मुदेक्षणाभ्याम् ॥ ३३ ॥

स्तवं वितन्वन् भवनन्दनस्य
दैत्यारिनिर्विघ्ननिरीक्षणाय ।
अगारतोऽहं निरगां यदद्य
निरन्तरायः फलमाप्नुयां तत् ॥ ३४ ॥

अक्षासतापि क्षसता रमेशा-
क्षतोऽहमेवागमिषीह राज्ञा ।
तपस्ततोऽवैमि पुरा कृतं मे-
ऽधिकं महद् दत्तमभूदपीष्टम् ॥ ३५ ॥

कथं ममेत्थं विषयात्मनोऽपि
भवेत् प्रसङ्गो हरिदर्शनस्य ।
निधेरिवाप्तावधमस्य भाग्य-
मिहापि तत् प्राक्तनपुण्यपुञ्जैः ॥ ३६ ॥

स्मृतेऽपि यस्मिन् किल कर्म साङ्गं
सन्मङ्गलं जन्म कुलं गरिष्ठम् ।
अधोऽक्षजं वीक्षितुमेनमाप्ते
मयीह संभावितमस्ति सर्वम् ॥ ३७ ॥

रूप्यभ्रमोऽयं मम शुक्तिकायां
मरुस्थले मे जलविभ्रमोऽसौ ।
स्वं याचयैवाच यदन्तरात्मा
महाधमं पूर्णमवैति तूर्णम् ॥ ३८ ॥

यथाञ्जनाप्तिस्तिमिरान्धदृष्टे-
स्तथैष योगो विषयात्मनो मे ।
क्व ब्रह्मरुद्राद्यमुनीन्द्रवन्द्यं
पदं मुकुन्दस्य नरः क्व चाहम् ॥ ३९ ॥

विचारणीयं किमिहास्ति हृष्टा
यान्त्यत्र यद्दक्षिणतां ममैणाः ।
स्फुरत् तथा दक्षिणमक्षि साक्षी-
भवत्यवश्यं मृगसूचितार्थे ॥ ४० ॥

मुखं मुरारेरतितुङ्गनासं
मिलत्कपोलस्मितमञ्जुनेत्रम् ।
आराग्निरीक्ष्यालमरालकेशं
मुदा चरिष्यामि पदे ग्रहीतुम् ॥ ४१ ॥

कराम्बुजेन प्रणतं पदब्जे
मुग्धं मुहुः स्प्रक्ष्यति मां मुकुन्दः ।
यत् कालसर्पग्रसनातिभीत-
भवाब्धिमग्नाभयदानदक्षम् ॥ ४२ ॥

स सर्वसाक्षी न मयीश्वरोऽरि-
दूतेऽपि कर्तान्यधियं कदापि ।
दयार्द्रयापि प्रणतं पदब्जे
स्मितस्पृशेक्षेत दृशेन्दिरेशः ॥ ४३ ॥

स्वबन्धुभावं स्मरयन्नुदस्य
पदम्बुजस्थं परिरभ्य दासम् ।
अपीश्वरो वक्ष्यति मां शुभानि
क्षेमं सदाक्रूर तवेति वाचम् ॥ ४४ ॥

हृष्टाग्रलोमानमुदस्य दोर्भ्यां
नतं गृहीताञ्जलिरञ्जसा माम् ।
बालोऽपि नामालयमाप्य भीतं
कंसान्निजं प्रक्ष्यति बन्धुवर्गम् ॥ ४५ ॥

भुवि द्यवि क्षोणितलेऽन्यतो वा
किमस्ति यत् तिष्ठति नन्दगेहे ।
तद्वीक्ष्य सर्वात्मविदां रहस्यं
पूर्णं परं ब्रह्म कृती भवेयम् ॥ ४६ ॥

एष ध्वनिः कोऽपि विशेषतो मे
श्रवःसुखः प्रापयति प्रमोदम् ।
तद्गेहमीशो विपिनादुपेष्यन्
प्रायेण वेणुं मुखरीकरोति ॥ ४७ ॥

दात्यूह एष स्फुटतारनादो
वदत्यशेषां मम कार्यसिद्धिम् ।
वामोऽपि दैवे ह्यनुकूलवर्ति-
न्याख्याति सख्यादिव सौख्यमेव ॥ ४८ ॥

इत्थं चराचरतनुग्रहनश्वरैत-
द्विश्वस्थितिप्रतिभुवि प्रविमग्नचेता: ।
मार्गे मनोरथमनेकविधं वितन्वन्
नैव श्वफल्कतनय: स्मरति स्म किंचित् ॥ ४६ ॥

इति श्रीमल्लक्ष्मणभट्टात्मजश्रीरामचन्द्रभट्टविरचिते गोपाललीलाख्ये महाकाव्ये पञ्चदश: सर्ग: ॥ १५ ॥ :: :: ॥

## ॥ अथ गोपाललीलाख्यकाव्यस्य ॥

॥ षोडशसर्गारम्भ: ॥

रथतोऽथ नतोऽवतीर्य स
व्यलुठत् पांशुषु लक्षिते हरे: ।
कुलिशाङ्कुशकेतुभि: पदे
तरसा जातरसान्तरश्चिरम् ॥ १ ॥

पदपांशुनिषेवणाद्विभो-
रघसंघं सुविलङ्घ्य जाङ्घिक: ।
स निरैक्षत शौरिसंभवौ
तनयौ नूतनयौवनस्थितौ ॥ २ ॥

वरचेलविलेपनस्रजौ
सुरभीदोहनसीमनि स्थितौ ।
निजसस्मितवीक्षितानम-
द्वनिताभावनितान्तमोदितौ ॥ ३ ॥

मदनाधिकरूपधारिणौ
सितनीलाब्जरुचौ शुभाननौ ।
युवतीभिरतीव वश्यतां
गमितौ रागमितौ तदुक्तिषु ॥ ४ ॥

रिपुभीषणपीनदोर्युगा-
वुरुवक्ष:स्थलशोभिनायकौ ।
गणनाचरणादिदम्भतौ
रमणीहारमणीगणस्पृशौ ॥ ५ ॥

नरविग्रहलक्षणान्वितौ
चलरूप्याञ्जनपर्वतोपमौ ।
स्वविलाससर:समुद्भव-
ज्जगदम्भोजगदन्तिविक्रमौ ॥ ६ ॥

रविचन्द्रमसाविवापरौ
बहिरन्तस्तिमिरापहौ सताम् ।
रिपुकंसहतावग्रजौ हठा-
दनुजौ तौ दनुजौघवैरिणौ ॥ ७ ॥

आदिकुलकम् ।

हलिना सह वीक्ष्य शार्ङ्गिणं
रथहीनोऽपि मनोरथे स्थित: ।
अनमद्भुवि दण्डवत् पतन्
सहसायं सह सात्त्विकश्रिया ॥ ८ ॥

मुरभिच्चरणेक्षणक्षण-
प्रमदप्राप्तजलप्लुतेक्षण: ।
किमपि स्मरति स्म नापरं
मनसा वामनसोदर: स्वयम् ॥ ९ ॥

मधुजिन्निजपाणिना तत:
प्रणतं मङ्क्षु विकृष्य यादवम् ।
हृषिताग्रतनूरुहव्रजं
भुजयोर्गं भुजयोदपीपदत् ॥ १० ॥

परिरभ्य बलोऽपि तं तत:
प्रबलप्रेमगृहीततच्छय: ।
हरिणानुगतोऽनयन्मुदा
भवनं स्वं भवनन्द्यविक्रम: ॥ ११ ॥

कुशलं खलु सर्वतस्तवे-
त्यनुपृच्छन्नुपकल्पितासन: ।
स जितोऽपि यदूत्तमाग्रहै-
रकरोन्नीरकरोऽङ्घ्रिसेचनम् ॥ १२ ॥

अथ गां स निवेद्य सादरं
प्रगुणं चान्नमुपाहरन्मृदु ।
प्रददौ मुखवासमेधयन्
मनसो वामनसोदरो मुदम् ॥ १३ ॥

अथ नन्द उपेत्य सुस्थितं
वचनं किंचिदुवाच पूजयन् ।
कुशलं क्व नृप: खलो न गां
सदयं शासदयं भुनक्ति चेत् ॥ १४ ॥

किमुतत्पुरवासिनां भवे-
च्छुभमक्रूर कदापि किंचन ।
सुतषट्कमिव स्वसु: करात्
तनया यातनया यतोऽवधि ॥ १५ ॥

युग्मम् ।

इति नन्दगिरं यदूत्तमः
प्रतिनन्द्य स्वयमप्युदीरयन् ।
पथि पूर्वकृतैर्मनोरथैः
सकलां दासकलामवाप सः ॥ १६ ॥

गृहवित्तसुतादि नश्वरं
न जनः प्राप्य हरौ प्रतुष्यति ।
तदयं मुदमाप शार्ङ्गिणो
वपुषा जीवपुषा व्रजस्पृशाम् ॥ १७ ॥

अथ तं मृदुतल्पगं हरिः
स्वयमेवेत्थमपृच्छदच्छवाक् ।
तव तात शिवं हि सर्वतः
कथयालं कथयाथवैतया ॥ १८ ॥

निजवंशहुताशने नृपे
कुशलं कुत्र कदापि बन्धुषु ।
अहमाप्तनिरीक्षणोत्सुकः
समये कंसमयेय शासितुम् ॥ १९ ॥

निहता बहवः सुताः कृते
मम बद्धौ पितरौ च शृङ्खलैः ।
अजनिष्ट तदिष्टमेव मे
भवता चोभवता यदागमम् ॥ २० ॥

कुलकम् ।

इति सोऽस्य गिराभयोऽगदत्
सकलं नन्दमिमाववोचताम् ।
व्रजमादिशदेष तेन त-
ज्जगृहे राजगृहे यदीप्सितम् ॥ २१ ॥

पशुपैर्मथुरेक्षणोत्सुकैः
कृतनानाविधगव्यसंग्रहैः ।
चकमे शकटोत्कटादरै-
श्चलितुं चाचलि तुन्दसुन्दरैः ॥ २२ ॥

तदनु व्रजवासियौवतं
प्रचलद्वल्लवघोषभीषितम् ।
बलकृष्णगतिं विचिन्तय-
द्वृते दाववृतेरिव चसत् ॥ २३ ॥

चलदञ्चलमाकुलालकं
विगलन्नीवि पतिष्णुकङ्कणम् ।
गुरुनिश्वसितक्षतक्षमं
प्रमदा दीप्रमदा हरिं ययुः ॥ २४ ॥

हरिबद्धहृदेकिकाङ्गना
सपदि प्रस्मृतसंस्मृतिस्थितिः ।
न परं मुनिवद्विजानती
हरये स्नेहरयेरिता स्थिता ॥ २५ ॥

स्मिततत्प्रणयस्मितेक्षण-
क्रमणाभाषणसंस्मृतिक्रमाः ।
अगदन्निति गोपिकाः प्रिये
नगरं पन्नगरन्ध्रमीप्सति ॥ २६ ॥

वनजोद्भव किं त्वया कृतं
वनजं यद्विरुणत्सि हा जनम् ।
वनजाक्षवियोजनादये
जनिता ते जनतापकारिता ॥ २७ ॥

कमलाक्षवियोजनाद्वधू-
र्यदि धाता विनिहन्ति हन्तु तत् ।
बत गोपकुलस्य जीवनं
भवितास्तं भविता न संनिभम् ॥ २८ ॥

निशि रासमहोत्सवे बत
प्रमदानामतिलालितात्मनाम् ।
इह तद्विरहे जिजीविषा
विषमायाविषमाच दुर्जया ॥ २९ ॥

हरिमस्य निनीषतोऽन्यतो
बत नामापि गतादिमाक्षरम् ।
कृपयेव कृशं ननु स्वयं
नियतेयं नियतेरलङ्घ्यता ॥ ३० ॥

कुलकम् ।

परिदेवनमिन्दुरित्यलं
कलयन् कान्तदृशां कृशद्युतिः ।
चरमाचलशृङ्गमभ्यगात्
चसतां कोऽत्र सतां समः शुचः ॥ ३१ ॥

रविमभ्युदितं हरेर्दृश-
स्तिलकं वीक्ष्य समापितक्रिये ।

रथमीयुषि गान्दिनीसुते
रमिता दूरमिताः स्त्रियोऽन्वयुः ॥ ३२ ॥
प्रणयामृतदिग्धया दृशा
प्रभुराश्वासयति स्म गोपिकाः ।
व्रजतालयमाशु दर्शनं
भविता मे भवितापहन्त्विति ॥ ३३ ॥
तदनुग्रहदृग्वचःक्रमै-
र्मुदितास्ता न्यवृतन् सह स्वकैः ।
शकटैरथ नन्दमुख्यका-
श्चलिताश्चाचलितारघोषणैः ॥ ३४ ॥
निजमानवजीवने हरौ
चलितेऽचेष्टत न व्रजश्चिरम् ।
स विचार्य तदात्ममायया-
स्तृत तं विस्तृततन्तुदीर्घया ॥ ३५ ॥
हृदयं विनिरुध्य माधवं
रथपांशावथ दर्शनातिगे ।
तदुदारकथा मुहुः स्त्रियो
जगुरुत्काजगुरुक्रमं व्रजे ॥ ३६ ॥
पथिरेणुभिरुत्थिते रथा-
द्गुणसंख्यामिव सूचयन्निजाम् ।
हृदि हस्तिवधादि चिन्तयन्
न गरीयो नगरीमगाद्विभुः ॥ ३७ ॥
उपमन्त्र्य रथस्थितं प्रभु-
द्वितयं द्रागिनजां गतस्ततः ।
स समारभताह्निकं जले
शुचिरप्याशु चिराप्तकामनः ॥ ३८ ॥
स निमज्ज्य जलेऽघमर्षणं
प्रणवान्तर्गतमीश्वरं जपन् ।
वसुदेवसुतद्वयं ततो-
ऽकलयत् पङ्कलयप्रसन्नदृक् ॥ ३९ ॥
क्व शितीदमिहेति विस्मयात्
स रथेऽदर्शदुदस्तमस्तकः ।
स पुनः स्म निमज्ज्य वीक्षते
भुवने तद्भुवनेश्वरद्वयम् ॥ ४० ॥

स निरैक्षत शेषमुज्ज्वलं
श्रितवन्मायमिवासितांशुकम् ।
ससहस्रशिरोविभूषणं
तपदर्कातपदर्पहृद्रुचिम् ॥ ४१ ॥
मधुसूदनमस्य चाङ्कगं
कनकाभाम्बरमभ्रसंनिभम् ।
रचयन्तमितं विवस्वतो
सहसा व्योम हसास्यदं रुचा ॥ ४२ ॥
दलदब्जमुखं वरभ्रुवं
रुचिरश्रोत्रकपोलभालकम् ।
नलिनाक्षमुदारवक्षसं
करशोभाकरशोणिमान्वितम् ॥ ४३ ॥
रदकोरकिताधरच्छदं
शुभनासाचिबुकांसकन्धरम् ।
वलिशालिदलोदरं महा-
भुजया शंभुजयार्हया युतम् ॥ ४४ ॥
उरुसक्थिकटीतटं बृह-
त्तरजङ्घाजघनोरुजानुकम् ।
शुभगुल्फमुदंशुभिर्नखैः
सहितं दासहितं पदश्रिया ॥ ४५ ॥
उपवीतकिरीटकुण्डला-
ङ्गदमुक्ताकटिसूत्रकङ्कणैः ।
अपरैरपि कौस्तुभादिभी
रुचिरं श्रीरुचिरञ्जिताश्रितम् ॥ ४६ ॥
मुनिभक्तसुरासुरस्तुतं
धृतशङ्खाब्जगदारिमीश्वरम् ।
स वृतं सकलात्मशक्तिभिः
कलयन्नेकलयं मनो दधे ॥ ४७ ॥
अथ सोऽद्भुतवीक्षणोद्भव-
त्प्रमदस्तम्भितहृन्नतश्चिरम् ।
भयगद्गदगीः कृताञ्जलिः
स्तुतवान् प्रस्तुतवाग्विधिक्रमैः ॥ ४८ ॥
प्रणमामि पदं तवेशितु-
र्भजमानाभजमानरक्षिणः ।

हृदि हन्त दुरात्मना भवान्
न मया ध्यानमयापि कर्हिचित् ॥ ४६ ॥
प्रतिभासि न योगिनां हृदि
स्फुरसि श्रीश यथा दृशीह मे ।
तदहं चरितार्थजीवनः
शुभया प्रांशुभयापहृद्दृशा ॥ ५० ॥
अभिदर्शनदृग्वचःपरं
त्वयि मीयेत जगत् कथं न्विति ।
किमु नानिलमेति दीपकः
प्रकृतिं विप्रकृतिं कराहतः ॥ ५१ ॥
तव तत्त्वमजादयोऽप्यहो
न विदुर्बुद्धिपिधानकारिणः ।
त्वदजात्मज ईश लोहितः
स ततोऽजः सततोदितो जनैः ॥ ५२ ॥
क्वचिदस्ति न ते भिदात्मनो
भवतूपाधिकृता रवेरिव ।
जगदाप्रलयं त्वयीश्वरे
परिशेषोपरि शेमुषीं नयेत् ॥ ५३ ॥
निजवृत्तिमजानतो मम
भ्रम एष प्रबलो गृहादिषु ।
असति श्रितसन्मतिः कथं
लभते दुर्लभ ते पदाम्बुजम् ॥ ५४ ॥
तदतद्विदतोऽतदेव त-
न्मम चेतो निपतद्विपर्यये ।
परमार्थसति त्वयीश्वरे
वसति श्रीवसतिश्रिते नहि ॥ ५५ ॥
कुलकम् ।

स्तुवतीति यदूत्तमे हरिः
समहार्षीन्निजरूपमेष च ।
उदमज्जदमुं विभू रथा-
दवदद्वेदवदर्थवद्वचः ॥ ५६ ॥
स्थिरदृक्चलमौलिरद्भुतं
क्व नु दृष्ट्वा भवसीति शुश्रुवान् ।
त्वयि सर्वमितीरयन् ययौ
सह ताभ्यां स हतायुधः पुरीम् ॥ ५७ ॥
नगरोपवनं पुरोगतान्
समुपेत्य स्वजनान् प्रतीच्छतः ।
पुरमार्य विश त्वमग्र इ-
त्यवदत् सत्यवदच्युतो वचः ॥ ५८ ॥
व्रजतं सह वल्लवैर्गृहान्
नयतं मे गृहमेधिनां फलम् ।
कुरुतं पुरमङ्घ्रिपद्मयो
रजसादूरजसात्त्विकश्रियम् ॥ ५९ ॥
युवयोः सुहृदां च गोदुहां
निकटं निष्ठुरहृज्जहातु कः ।
इति तावनुनीय सोऽब्रवी-
द्रमते भद्रमते हि सज्जनः ॥ ६० ॥
युग्मम् ।
यदुद्वह द्विषमपहत्य सत्वरं
विमोच्य तावथ पितरौ च बन्धनात् ।
त्वदालयं सह सुहृदागतोऽहमि-
त्युदीरितोऽप्यघरिपुणा स नाचलत् ॥ ६१ ॥
इति श्रीमल्लक्ष्मणभट्टात्मजश्रीरामचन्द्रभट्टविरचिते गोपाललीलाख्ये महाकाव्ये कंसवधे षोडशः सर्गः ॥ १६ ॥

---

## ॥ अथ गोपाललीलाख्यकाव्यस्य ॥

॥ सप्तदशसर्गारम्भः ॥

कथंचनागादथ गान्दिनीसुतो
गृहान् प्रहृष्यन् मथुरेशमानितः ।
सुहृद्वृतः श्रीरमणः पुरं द्विषः
सति प्रयातः स दिने कियत्यपि ॥ १ ॥
सहाग्रजोऽदर्शदजोऽसुहृत्पुरीं
परिस्फुरद्रुक्मकपाटतोरणाम् ।
अविस्फुटस्फाटिकतुङ्गगोपुरां
दुरासदान्तःपरिखापरिष्कृताम् ॥ २ ॥
सुधानिभश्रीशुभसौधसंहति-
ध्वजव्रजव्याजभुजाप्रहूतिकाम् ।
हरिन्मणीमौक्तिकविद्रुमावलि-
प्रशस्तसंपद्वलभीशुभप्रभाम् ॥ ३ ॥

बहुस्फुरत्तारकवैरिवाहन-
प्रतर्किताऽनेककुमारवर्तनाम् ।
सहस्रसंख्यैः कविभिर्बुधैर्युतां
दिवं हसन्तीमलकापुरीमिव ॥ ४ ॥

दुराग्रहक्ष्मापतिवारणध्वनि-
प्रतिश्रुदुच्चैःकथितस्वशुद्धताम् ।
कृतोद्यमाभां वरणस्य कैतवात्
सदानुरागाद्वरणे गदाभृतः ॥ ५ ॥

रुचिं विधेरन्यपुरस्य निर्मितौ
निवारयन्तीं चपलध्वजाम्बरैः ।
समुल्लसत्पुष्पसबालपल्लव-
स्फुरत्फलक्ष्मारुहवृक्षवाटिकाम् ॥ ६ ॥

द्वितीयतामप्यसहिष्णु नो दिवः
प्रवर्तने या वरचित्रनिर्मितिः ।
इतस्ततो गन्धजलोक्षितक्षमा
प्रकीर्णयावाङ्कुरलाजसर्षपा ॥ ७ ॥

गृहाङ्गणद्वारचतुष्पथापण-
प्रसर्पिकृष्णागुरुधूपवासनाम् ।
प्रबालपुष्पाक्षतदीपपल्लवै-
रलंकृतां पूर्णघटैः सलेपनैः ॥ ८ ॥

कुलकम् ।

क्षमां हरिः स्वाङ्घ्रियुगार्पणक्षमां
ततोऽविशद्रामसुहृद्वृतोऽध्वना ।
स्त्रियस्तयोर्नेत्रफले विलोकने
समुत्सुका निर्ययुराशु यूथशः ॥ ९ ॥

महोन्नतं काश्चन हर्म्यमास्थिता
निनिन्दुरैन्नन्यमिहेक्षितुं हरिम् ।
तदन्तिके दृष्टसमग्रसौष्ठवाः
प्रतुष्टुवुः पामरयोषितः पथि ॥ १० ॥

कथाङ्गनार्चापरिवेषणाशनैः
कुचाङ्घ्रिवक्त्राधरकेशमण्डनैः ।
विलेपनस्नानसतैलमज्जनै-
रनापितैरन्तमथाङ्गना ययुः ॥ ११ ॥

हरावयुः काश्चन सादरा रसा-
द्व्यतिक्रमप्रापितभूषणाङ्गिकाः ।
यतीष्टबन्धुस्थविरार्भकातिथि-
स्ववल्लभादावतिनिष्ठुराशयाः ॥ १२ ॥

तदा द्वयं चित्रभूद्यदीक्षणै-
र्द्युनिम्नगामातत पुण्डरीकदृक् ।
स्त्रियस्तथेन्दीवरदामकोमलै-
र्वितेनिरे यच्च कलिन्दजां दिवि ॥ १३ ॥

पुरं विशत्याशु हरौ पुरन्ध्रिभिः
ससंभ्रमोद्यद्गतिभिस्तदाकलि ।
निरञ्चलैः सत्पुलकाङ्कुरैः कुचैः
सचन्दनैः शाकुनकुम्भसंभृतिः ॥ १४ ॥

प्रतिक्षणं प्रत्यबलं प्रवर्तितैः
प्रसादकृत् प्रीतिफलैः स्मितेक्षितैः ।
पुराङ्गनानामहरन्मनो हरि-
र्मनोहरैः स्वक्रमणक्रमैरपि ॥ १५ ॥

व्यलोकयन् कोऽपि कदाप्यधोऽक्षजं
तपःसमाधिक्रतुभिः कथंचन ।
पुरस्त्रियस्तु त्रिजगत्पतिं सुखात्
तदीक्षणप्राप्तसुधोक्षणप्लुताः ॥ १६ ॥

अनन्तचिन्मोदमयं मधुद्रुहं
दुरापमीशादिभिरन्वभूज्जनः ।
समुद्भवत्कण्टकदम्भसंभृत-
स्वधर्मदोर्वीरुहकण्टकावृतिः ॥ १७ ॥

पुरौकसो याति पुरः पुरो हरौ
निवृत्तसर्वार्थविशेषचेतनाः ।
निरन्तरस्मृत्युदयोर्मिभिः परं
चिरंतनं पूरुषमापुरुत्सुकाः ॥ १८ ॥

पुरस्त्रियस्तस्य पुरस्तथोपरि
प्रकीर्य कर्पूररजांसि लाजवत् ।
तमार्चिचन् वेदविदोऽप्युपायनैः
सहाग्रजं स्रग्दधिचन्दनाक्षतैः ॥ १९ ॥

कृशं न मूलं सुकृतं निरीक्षणे
महोत्सवस्यास्य दृशामिति स्तुतः ।
पदे पदे पौरजनैः सहाग्रजो
ददर्श निर्णेजकमीश्वरो व्रजन् ॥ २० ॥

ममाग्रजो वाञ्छति धौतमम्बरं
प्रयच्छ तन्नावुचितं शुभांशुकम् ।
ध्रुवं शिवं ते ददतो महद्भवे-
दिति स्म तं प्राह वचः प्रियं हरिः ॥ २१ ॥
भवद्विधानामिदमीदृगम्बरं
कथं न योग्यं व्रजकुञ्जवासिनाम् ।
जिजीविषुर्वाञ्छति राजवस्तु क-
स्ततः शुभं क्वेति जगाद स स्मयात् ॥ २२ ॥
चपेटयाघानि ततः स विष्णुना
यथा शिरस्तस्य पपात भूतले ।
हरिस्तदा स्वाग्रिमकार्यसिद्धये
दिशन्निवाभात् पुरदेवताबलिम् ॥ २३ ॥
प्रदुद्रुवुस्तस्य जना हताधिपा
विसृज्य वासांसि भियाखिलान्यपि ।
अवस्त शस्ते स्वयमाशु वाससी
सहाग्रजेनाथ स वल्लवैरपि ॥ २४ ॥
महीयसासौ महसा तिरोदधत्
पुरं व्रजन्नाकलि वेषशिल्पिना ।
विभूषितस्तेन च साग्रजः श्रियं
वरं ददौ दैत्यजिदात्मरूपताम् ॥ २५ ॥
प्रजग्मतुर्मालिकमन्दिरं ततः
स तौ विलोक्याशु सुदामनामकः ।
ननाम भूमीविलुठच्छिराश्चिरं
न्यधात् तयोरासनमुत्तमं पृथक् ॥ २६ ॥
गिरिद्वयं राजतमाञ्जनं चर-
द्विहिंसितुं कंसमिवेन्द्रमुद्यतम् ।
सहानुगैरासनितावपूपुजत्
सुखोपविष्टौ मुखवासचन्दनैः ॥ २७ ॥
ततोऽस्तुतासौ जगदीश्वरौ युवा-
मिहागतौ भञ्जयितुं भुवो भरम् ।
न वां दृशि क्वापि भिदा प्रवर्तते
हितेऽहिते सर्वजनान्तरात्मनोः ॥ २८ ॥
विभू युवां क्व क्व च नीचजन्मनो
ममागतौ गेहमहो महाद्भुतम् ।
चकास्ति वामप्यथवा गतिः समा
गृहाद्रिभासोरिव पुष्पवन्तयोः ॥ २९ ॥
गणाः पितॄणां त्रिदशा महर्षयः
प्रसादिताश्चेद्गृहमागतौ युवाम् ।
कुलद्वयं जन्म कृतार्थतामगात्
कृपां पुनर्मे कुरुतं निजाज्ञया ॥ ३० ॥
त्रिभिर्विशेषकम् ।
इति स्तुवन् पुष्पविशेषनिर्मिताः
स्रजः सुदामादित दिव्यसौरभाः ।
अलंकृतौ ताभिरथो वरानिमा-
वयच्छतां स्वच्छतरान्तरात्मने ॥ ३१ ॥
नितान्तभक्तिं भगवत्यनुत्तमा-
मिदंजनैश्चापि सदैव संगतिम् ।
भृशं तथा भूतदयां सुधीरिदं
मुदावरीष्ट त्रितयं सुदुर्लभम् ॥ ३२ ॥
अनापदं संपदमच्युतां कुले
बलं यशः संततिमायुरुन्नतिम् ।
समं ददत् पूर्ववरत्रयेण स
त्रिविक्रमः प्रास्थित मालिकालयात् ॥ ३३ ॥
विभूषितौ तौ वसनस्रगादिभि-
र्निरीक्षमाणाः पथि पौरयोषितः ।
उरःस्थलप्रस्खलदञ्चलच्छला-
न्यवेदयन् हृद्गतवेदनामिव ॥ ३४ ॥
अथ व्रजन् राजपथे क्वचिन्मुनि-
श्चिरंतनोऽचीकलदुत्तमां स्त्रियम् ।
करस्थितालेपनभाजनां यतीं
हसन्निति द्रागडुलामवोचत ॥ ३५ ॥
वरोरु का त्वं वद कस्य वा रया-
दये नयस्यङ्गविलेपभाजनम् ।
प्रयच्छ नावप्युचितं विलेपनं
ततः प्रियं स्यादचिरेण सुभ्रु ते ॥ ३६ ॥
युग्मम् ।
विलम्ब्य सेति प्रतिवाचमब्रवी-
न्नृपस्य दासी प्रियदर्शनास्म्यहम् ।

विलेपनापेषणघर्षणक्रिया
तनुस्त्रिवक्रेति तदाह्वयं गता ॥ ३७ ॥
इदं नृपस्येप्सितमङ्गलेपनं
विना युवामर्हति कः समीहितुम् ।
इतीरयन्ती हरिसस्मितेक्षण-
प्रहर्षितादाद्बहु तद्विलेपनम् ॥ ३८ ॥
युग्मम् ।

मधुव्रतानां ततिमागतां विद-
न्निदं दृगिन्दीवरदामनन्दितः ।
समं बलेनाङ्गविलेपनं दध-
द्विभुर्बभासे परभागमागथ ॥ ३९ ॥
ततस्तदङ्घ्रिं परिपीड्य सोऽङ्घ्रिणा
निजाङ्गुलिभ्यां चिबुकं विधृत्य च ।
अभि स्वमेनामुदनीनमत् क्षणा-
दभूदृजुः साथ मतिः सतामिव ॥ ४० ॥
परिध्वनन्नूपुरपत्पयोरुह-
स्फुटोदितापीडनसंभवाद्भुता ।
ऋजुर्गुरुश्रोणिकुचा प्रसादतो
हरेरभूदुत्तमयोषिदङ्गना ॥ ४१ ॥
स्वरूपसंपद्गुणतो ननन्द सा-
वदत् तमित्थं च धृतोत्तरीयकम् ।
समेहि मे त्वं पुरुषोत्तमालयं
विलोकनोद्यन्मदनार्दितात्मनः ॥ ४२ ॥
जनार्दनस्तद्वचसा हसन् निजान्
विलोकयन् किंचिदुवाच तामिति ।
विधेयमत्रास्ति कियद्विधाय त-
द्गृहानहं गन्तुमथोत्सहे तव ॥ ४३ ॥
यथातथं गामिति माधवो वदन्
विसृज्य तामाश्वगमद्वणिक्पथे ।
उपायनैः पुष्पफलस्रगक्षतै-
स्तमार्चिचन् कुङ्कुमचन्दनैर्जनाः ॥ ४४ ॥
तिरस्कृतानङ्गसहस्रतद्वपु-
र्विलोकनोद्यन्मदनोद्भटव्यथाः ।
नितम्बवत्योऽम्बरविस्मृतिस्थिराः
स्त्रियस्तदा चित्रगता इवासत ॥ ४५ ॥

सखीभवद्भ्रान्तमिवोज्ज्वलत्विषः
शरीरधारी तमसो विधुर्यथा ।
व्यभात् तयोर्युग्ममुदग्ररोचिषं
रिपुं निजं हन्तुमिवोद्यतं पुरे ॥ ४६ ॥
दिदृक्षयाथो जनतां समागता-
मपृच्छदीशोऽज्ञ इवेति विश्वदृक् ।
पुरोकसः कुत्र धनुस्तदुच्यतां
मखो महान् कस्य पुरि प्रवर्तते ॥ ४७ ॥
रसाद्रसाधीशधनुर्मखोत्सवं
दिदृक्षवो मल्लसुहृत्तमा वयम् ।
इहापरे केचन राजपूजिता
वसन्ति कार्यं सह तैः कुतूहलम् ॥ ४८ ॥
युग्मम् ।

इति ब्रुवन् राजपथेऽच्युतो ययौ
प्रतर्क्य गेहं धनुषः स्फुरद्ध्वजम् ।
प्रतिध्वनद्दुन्दुभिनिस्वनच्छल-
प्रतिक्षणोदीरितकार्मुकक्षयम् ॥ ४९ ॥
स्तुवन् मुहुस्तद्बहुमानमच्युतो
नभश्च्युतेन्द्रायुधसंनिभं धनुः ।
प्रपूजितं लोहितपीतपुष्पभृ-
द्ददर्श जीर्णाजगराङ्गभीषणम् ॥ ५० ॥
तमालयं याति तमालरोचिषि
न्यवारयन् केचन बाह्यरक्षकाः ।
अभीरिहाभीर नृपाज्ञया विना
विशस्यकस्मात् कथमित्युदीरणैः ॥ ५१ ॥
इदं प्रभोर्धाम धनुर्महोत्सवः
प्रवर्ततेऽत्रेति जनश्रुतीरितान् ।
दिदृक्षया दूरपथादिहागतान्
निवारयन्त्येतदहो महाद्भुतम् ॥ ५२ ॥
किमीक्ष्यतां कस्य महोत्सवोऽपि चे-
न्निवार्यते धन्वगृहे गतिर्नृणाम् ।
निवेदनीयं च किमद्भुतं गृहे
जनाग्रतश्चेति वदन्नजोऽविशत् ॥ ५३ ॥
युग्मम् ।

ध्वानं घनध्वानगभीरमैश्वरं
निशम्य राजालयरक्षकास्तत: ।
समुद्यतासिप्रमुखास्त्रपाणय:
प्रधावितास्तानवधीद् द्रुतं बल: ॥ ५४ ॥

व्यनीनशत् तद्बलमग्रजो हरे-
र्निरायुधस्तत्करशस्त्रमाहरन् ।
स्वकीयमेवाजनि तत् स्वशान्तये
निजं विधौ किं प्रतिकूलवर्तिनि ॥ ५५ ॥

अथागते पूर्वकथावशेषता-
मतिक्रुधायोधनलब्धविक्रमे ।
द्विषद्बले मङ्क्षु बलस्तलस्खल-
च्छिर:शतास्तृक्तटिनामजीघटत् ॥ ५६ ॥

महीतले व्यस्तपदातिमस्तकान्
निपात्य राहूनिव चन्द्रमा बभौ ।
बल: कुमारप्रतिमो महाबल-
स्ततश्चकाशे शमितोग्रतारक: ॥ ५७ ॥

क्षयाम्बुधेरुद्धृतवत्यधीश्वरे
समागते यक्षवराहरूपिणि ।
क्षिति: प्रसर्पत्यसृजि द्विषां बभौ
विवृण्वती रागमिवान्तरं बहि: ॥ ५८ ॥

स्थलेऽम्बरे विस्तृतमुण्डमण्डलं
बलिं बले यच्छति दिक्पतीष्टये ।
प्रतुष्टुवुस्तत्र सुरा: प्रहर्षिता:
महर्षिभिर्युद्धविलोकनागता: ॥ ५९ ॥

निरीक्षितुं चापमविक्षदालयं
द्रुतं बलस्तत्र तदैक्षत क्षितौ ।
महर्षिशापात् त्रिदिवादिव च्युतं
महाहिरूपं नहुषं महीं गतम् ॥ ६० ॥

हरिं निरीक्ष्याधिपधन्वरक्षका
बलेन सार्धं पशुपै: समागतम् ।
न्यवारयन् केऽपि रुषा तम:पुषा
समुत्थिता: केचन शस्त्रपाणय: ॥ ६१ ॥

क्षितिप्रतिष्ठा दिवि दीव्यति स्वयं
बले बलद्रोहिणि पश्यतीश्वर: ।
अदक्षिणेनैव करेण तत् क्षणात्
करीव सूक्ष्मेक्षुमुदक्षिपद्धनु: ॥ ६२ ॥

नृपं नयद्रोहिणमत्र शिक्षितुं
समागत: काल इवोग्रदण्डभृत् ।
निजाहितायुर्दिनशेषमुच्चकै-
र्गृहीतशङ्कु: परिमापयन्निव ॥ ६३ ॥

द्रुतस्वनाथक्षयभीतिनिश्वस-
द्धरोत्थितं दण्डवदम्बरे रज: ।
भुजाहिफूत्कृत्युदयद्विषानल-
ध्वजप्रभं धन्व दधद्विभुर्बभौ ॥ ६४ ।
युग्मम् ।

अनीनमत् कार्मुकमीश्वरो मह-
न्निजां स शंसन् गुणगृह्यतामिव ।
तदा बभौ संमुखमानमद्विभो-
रतीव शोभा हि गुणाधिके नति: ॥ ६५ ॥

निजप्रभो: कालगृहस्थितिस्पृहां
निवारयत् तद्गुणटङ्कृतिच्छलात् ।
निपीडनज्ञातनिजक्षयं धनु-
र्व्यभाच्चिरं कुर्वदिवेश्वरस्तुतिम् ॥ ६६ ॥

अतिं तदीयं गुणमापयन् धनु-
श्चकर्ष हर्षादिव कंसकर्षण: ।
बभञ्ज चेदं प्रसभं भुव: प्रभो-
र्मनोरथैरेष समं चिरार्जितै: ॥ ६७ ॥

तिरोदधन्माद्यदुदग्रदिग्गज-
व्रजाक्रमप्रक्रमबृंहितग्रहम् ।
प्रतिक्षिपद्दैत्यसुपर्वपर्वत-
प्रकर्षणक्षोभितसिन्धुघोषणम् ॥ ६८ ॥

कंसारातिकरीन्द्रकोमलकरव्यापारलब्धक्षति
प्रत्यग्राशनिपातगर्जितबृहत्पर्जन्यघोरध्वनि ।
व्योमोदित्वरसत्वरप्रतिरवप्रोढिच्छलप्रस्तुत-
स्वक्षोणीरमणाचिरक्षयकथं द्रागध्वनत् तद्धनु: ॥६९॥

इति श्रीमल्लक्ष्मणभट्टात्मजश्रीरामचन्द्रभट्टविरचिते गोपाललीलाख्ये महाकाव्ये कंसवधे सप्तदश: सर्ग: ॥ १७ ॥ :: :: ॥

# THE VIDVAN-MANO-RANJINI'

OR

## REJOICER OF THE MIND OF THE LEARNED,

A COMMENTARY ON SAD-ÁNANDA'S VEDÁNTA-SÁRA, BY RÁMA-TIRTHA

(*Continued from page* 234.)

*The substratum of the universe,* that is, the support or receptacle of ether and the rest which are the whole world. The term receptacle has the force also of implicating creation and re-absorption. So, also, From which these elements are born, by which produced they live, which departing they re-enter, that desire thou to know, that is called Brahma. Therefore it has been stated that Brahma is the cause of the production, sustentation, and resolution, of the world. Hence it results that Brahma, truth, knowledge, infinite, one in essence, is denoted by the word that By the term soul is elucidated the sense of the word Thou ; it being determined in the sacred texts, The soul only—that he served, Herein all these beings become one, that the word soul applies only to reflex consciousness without discrimination. It has, therefore, been declared that the sense of the text declaratory of unity [That art thou] is established by the juxta-position of the terms Brahma and soul. Thus, then, *I take refuge with soul,* the object of the text. Why? For the attainment of the desired object. The desired object is the attainment of the matter of the system, and the rejection of mis-statements and contradictions, or the power of attaining the matter according to the system. For the attainment, or acquirement hereof—such is the sense. Having thus composed an auspicious prelude in commemoration of the principle of supreme deity to be set forth in the system ; he now proposes his design, after an expression of adoration towards his [spiritual and scientific] teachers, it being ascertained from such precepts as Whose highest devotion is towards his god, and As towards his god, so towards his teacher, that as devotion to the deity, so devotion to the teacher, is a constituent of knowledge ; and according to the traditional revelation, Let him worship his teacher in like manner as his god.

*Significantly* &c. I am about to declare the cream, the curdled or concreted sense, *of the Vedánta* to be hereafter defined, and this *to the best of my knowledge,* according to my understanding, for the Vedánta, distributed in countless branches [or schools], and profound in sense, cannot be limited [or determined] by modern minds. So it has been stated by competent authority, Fishes though immersed in the vast ocean take but little water. This statement in obviation of the charge of pride, is not occasioned by fear of opponents, inasmuch as the matter has been collected according to the system Having done what? Having adored his preceptor, having worshipped him with abundant devotion and faith, and with praise, salutation &c., as a god. The plural of preceptor, to be understood in the singular, expresses reverence. In anticipation of the question who that preceptor is, and to shew that he himself is in the regular succession [of religious teachers], he indicates him by name.

*Advayánanda.* The author excludes the supposition that this name is, like Dittha &c., a mere [meaningless] appellative.

*Significantly.* The word *also* implies the combination of word and meaning ; that is [he is] not only verbally, but also significantly [Advayánanda, or incomparable bliss]. The reason hereof is stated.

*Because of the knowledge of that which transcends duality,* means because of the knowledge, or presentation of the principle of self-conscious spirit from which duality has passed away. According to the reading *Because the condition of duality has past away,* the sense would be, because he is identical with Brahma, all his differences being destroyed by knowledge of the truth. By considering the ordinary and common use of the term Vedánta in the Vedic aphorisms and in the works composed by philosophers, conversant about Brahma and spirit, and preventing its being everywhere accepted in its primary meaning, he proceeds to explain the term Vedánta according to its primary and secondary significations.

---

अखिलाधारमिति । अखिलस्य आकाशादि प्रपञ्चस्याधारआश्रयः तमिति विग्रहः । आश्रयशब्दः सृष्टिप्रलययोरप्युपलक्षणार्थः तथाच श्रुतिः यतोवा इमानि भूतानि जायन्ते येनजातानि जीवन्ति यत्प्रयन्त्यभिसम्विशन्तितद्विजिज्ञासस्व तद्ब्रह्मेतीति। ततश्च जगदुत्पत्तिस्थितिलयकारणं ब्रह्मेत्युक्तं भवति । अतइदं फलितं सत्यज्ञानानन्तानन्दैकरसं ब्रह्म तत्पदलक्ष्यमिति । आत्मपदादेव त्वंपदार्थशुद्धिः आत्मेत्येवोपासीतात्रह्येते सर्व्वएकं भवन्तीति श्रुतावात्मशब्दस्य निर्व्विशेषप्रत्यक्चैतन्यमात्रनिष्ठतायानिर्द्धारितत्वात् तथाच ब्रह्मात्मपदयोः सामानाधिकरण्यादैक्यवाक्यार्थसिद्धिरित्युक्तं तदेवं वाक्यार्थभूतमात्मानमाश्रये । किमर्थमभीष्टसिद्धये अभीष्टं शास्त्रार्थप्रतिपत्त्यन्यथाप्रतिपत्तिविप्रतिपत्तिनिरासलक्षणं यथाशास्त्रमर्थसंग्रहसामर्थ्यलक्षणञ्च तस्य सिद्धिः सम्पत्तिः तस्यै तदर्थमित्यर्थः । एवं शास्त्रप्रतिपाद्यपरदेवतातत्त्वानुस्मरणलक्षणं मङ्गलं विधायेदानीं यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ । इत्यादि शास्त्राद्देवताभक्तिवद्गुरुभक्तेरपि विद्याङ्गत्वप्रतीतेर्देवमिवाचार्य्यमुपासीतेत्यादिस्मृतेश्च गुर्व्वाराधनोक्तिपूर्व्वकं स्वचिकीर्षितं प्रतिजानीते ॥

---

अर्थतइतिश्लोकेन । वेदान्तोवक्ष्यमाणलक्षणस्तस्य सारो मथितार्थस्तं वक्ष्ये तच्च यथामति स्वमत्यनुसारेण अनन्तशाखाप्रविततस्यातिगम्भीरार्थस्य वेदान्तस्यार्व्वाक्बुद्धिभिरपरिच्छेद्यात् । तदुक्तमभियुक्तैः अपि महति जलार्णवे निमग्नाः सलिलमुपाददतेमितं हि मीनाइति । एतच्च गर्व्वपरिहारोक्तिवचनं न पुनर्व्वादिभयनिमित्तं यथाशास्त्रमर्थसंग्रहादित्यर्थः किं कृत्वा गुरूनाराध्य भक्तिश्रद्धातिशयस्तुतिनमस्कारादिना देवमिव पूजयित्वा गुरूनित्येकस्मिन् बहुवचनं पूजार्थं । किंनामानोगुरव इत्यपेक्षायां स्वस्य सांप्रदायिकत्वज्ञापनाय तान्नामतोनिर्द्दिशति ॥

*By the Vedánta is* &c. The term Upanishad has for its object the presentation of the unity of Brahma and spirit. The form Upanishad is derived from the root *shad-lṛi*, to dissolve, move, and waste away, with the prefixes *upa* and *ni*, and terminating with the affix *kvip*. Here the word *upa* denotes proximity, and there being nothing to restrict its meaning, it terminates in self-conscious soul proximate to all. The particle *ni* indicates assurance; and this also determines or ascertains the truth, as being in justa-position with the particle *upa* expressive of unity. By the term Upanishad, then, is denoted knowledge of Brahma, which destroys, annihilates, or relaxes in those that practise it the conceit of the reality of the world, or which leads them to, or causes them to reach, self-conscious soul, the highest good; or which destroys, or eradicates, ignorance the root of pain, birth, activity &c. This Upanishad is the means of certitude A multitude of treatises attached to the latter portion of all the branches of the Veda, as being the instrument of this certitude are styled secondarily a means of certitude. The Upanishads, then, are the authority or instrument, and the Vedánta is *the instrument of the certitude* of the Upanishads. *Ancillary thereto* means subservient to estimation of the latter part of the Veda [or Vedánta.] Subservience thereto is by means of removal of improbability in the objects of certitude in the text of the Vedánta; whereas the system of reflection [or the Sáríraka aphorisms] is not itself immediately subsidiary either to production of certitude or to the result thereof, for were it so, the affirmations of the latter part of the Veda would imply a correlate. It has therefore been stated by authority that in production of knowledge of supreme spirit, reflection [or the Sáríraka aphorisms] is not an instrument like Vedic study, or subsidiary to the Veda; for were it so, necessity of a correlate would fall upon the words of the Veda in production of certitude regarding absolute spirit. Such direct subserviency is not acceptable. *The Sáríraka Aphorisms* are those wherein spirit or that which resides in the body [*saríra*] is treated of in aphorisms, that is, accurately described, viz. Desire of knowledge of the absolute, and the rest. Or these are the aphorisms of the spirit, that is, the sentences comprising the meaning of the Vedánta expounding spirit to be real soul [or the absolute] The words *et cætera* are intended to include the Vedánta-bháshya, &c. The particle *and* implies the connection with the term Vedánta. The term Vedánta, therefore, according to its etymological formation the end or concluding portion of the Veda, is applied in its primary sense to the particular parts of the Veda, and is transferred secondarily to the Śáríraka Aphorisms, &c If it be asked what occasion there is for commencing this treatise, seeing that wise men act not without occasion; we cannot reply that an objection merely to the occasion is worthless; but we may describe as the occasion the compassion excited in the author on viewing men in their misery condemned to sink and rise incessantly up and down, and to and fro, in the ocean of transmigratory existence, wherein the water is knowledge and discrimination tossed by the agitation produced by multitudes of curling waves of hunger and other wants, which ocean is broken by chains of lofty mountains of developed desire, irascibility &c, full of a multitude of divers monsters, crocodiles, &c. in the forms of sons and daughters, wives and kinsmen &c., bubbling and foaming with the fruitions and the states of men, beasts, cattle, birds, gods and the like, such men being unable to cling to the vast tree of reflection on the manifold Vedánta, prolix and recondite in its sense In anticipation of an objection to the special occasion the following statement is made.

*Of this* &c The definition of a topic [or section] is stated thus, The learned call a particular treatise connected with a particular portion of a system, and conversant about a special end of the system, a topic. Thus whatever topic is connected with a particular portion of any system, that topic is characterised by the same motives as belong to the system. Otherwise, if the system and the topic had different object-matter, it would follow that the topic was unconnected with the science; and it would ensue that it was a vain discourse without connection [with any system.] Hence, this treatise being a topic of the Vedánta, and thus possessing the motives established in the Vedánta system, and being shown to have motives, the motives thereof are not to be sought elsewhere. It may be urged that, inasmuch as only the main object and other motives pertain to the system, the subordinate object &c., should be considered separately; else no prudent man would abandon the system [or the original authorities] and apply himself to this treatise. This we allow; for we may easily admit a subordinate motive [in this work] as a topic [or particular treatise], since a separate enunciation is not required.

अद्वयानन्दानिति । नाम्नोऽडित्थादिवत् संज्ञामात्रत्वं व्यावर्त्तयति ॥

अर्थतइति । अपिशब्दः शब्दार्थयोः समुच्चयार्थः न केवलं शब्दतः किन्त्वर्थतोऽपीति तत्र हेतुः ॥

अतीतद्वैतभानतइति । अतीतं द्वैतं यस्मात्तदतीतद्वैतं प्रत्यगात्मतत्त्वं तस्य भानं साक्षात्कारस्तस्मादतीतद्वैतभानतः अतीतद्वैतभावतइति पाठे तत्त्वज्ञानविध्वस्तनिखिलभेदब्रह्मात्मत्वादित्यर्थः । ब्रह्मात्मप्रतिपत्तिपरेषु श्रुतिसूत्रेषु विद्वद्भिर्निर्मितनिबन्धेषु चाविशेषेण वेदान्तशब्दस्य लोके प्रयोगदर्शनात् सर्व्वत्र मुख्यवृत्तितः प्रतीतिं वारयन् मुख्यगौणभेदेन वेदान्तशब्दं व्युत्पादयति ॥

Thus for the apprehension of the essence, there is a subordinate *authorised student.* The *object* in this treatise is merely the essence of the unpropertied, to the omission of the distinction of objects propertied and unpropertied. Its *purpose* is the attention to this alone; and the *relation* is in conformity with the object. It may be objected that they only who already know the system can know the motives [or requisites], not those who wish to acquire it: how then should they, ignorant of the object &c., of the system, apply themselves to this treatise? In anticipation of such an objection the author proceeds succinctly to point out the motives of the system itself.

*In this the moving considerations, &c* In this, means in the Vedánta system. Inasmuch as without reference to a recipient of its meaning a system would not proceed, in the first place there is required the motive characterised as the *authorised student.* Next thereto ensues the *object* Next after the *object* follows the *relation,* to establish that what is to be set forth is possible. That the *purpose* is final is well known. There the order of treatment of the enunciated [requisites] is necessary Thus also the Śáríraka aphorisms, Dresei to know the absolute [which distinguishes the authorised student] Of these, according to the order of enunciation, the author describes the authorised student.

*But the authorised student* The word *but* is intended to indicate the distinction of this authorised student from the authorised student in the investigation of duty [or merit]

*The authorised student is the subject of right knowledge*—such is the construction. In this system, as the subject of right knowledge, is intended individualised spirit, free from error in secular and spiritual [or Vedic] observances For all individualised spirits being liable to error, they cannot receive the meaning of the system The author next states the characteristic of this authorised student, alluded to by the word *but.*

*Who is possessed of the quaternion of instruments [or means] &c* That is, who is determined by the four instruments to be stated in the sequel The sense is as follows. Mere study of the Veda is not the condition of competence for the investigation of the absolute; since it is common [as a pre-requisite] to the investigation of duty as well as to that of the absolute Hence on this sole condition engagement [in the study of this system] would be impossible. Nor is reflection upon duty the sole condition, since investigation of the absolute is possible to one who has studied the Vedánta, even antecedently to reflection upon duty. Nor is performance of duty the condition of such investigation, since we observe desire to know the absolute in one who through continence alone is detached from sensual objects, even without performing duties [that is in a religious student who remains in the first order, not entering upon the duties of a householder &c] Moreover there is scripture authorising one who desires knowledge to become an ascetic [that is, to enter immediately upon the fourth order], such as [Let him

---

वेदान्तोनामेत्यादिना । उपनिषच्छब्दो ब्रह्मात्मैक्यसाक्षात्कारविषयः उप नि पूर्व्वस्य क्विप्प्रत्ययान्तस्य षद्लृविशरणगत्यवसादनेष्वित्यस्यधातोरुपनिषदिति रूपं । तत्रोपशब्दः सामीप्यमाचष्टे तच्चसङ्कोचकाभावात् सर्व्वान्तरे प्रत्यगात्मनि पर्य्यवस्यति । निशब्दोनिश्चयवचनः सोऽपि तत्वमेवनिश्चिनोति तत्त्रैकत्ववाच्युपशब्दसामानाधिकरण्यात् । तस्मात् ब्रह्मविद्यास्वसंशीलिनां संसारसारतामतिं सादयति विषादयति शिथिलयतीति वा परमश्रेयोरूपं प्रत्यगात्मानं सादयतीति गमयतीति वा दुःखजन्मप्रवृत्त्यादिमूलाज्ञानं सादयत्युन्मूलयतीतिवोपनिषत्पदवाच्या सैव प्रमाणं तस्याः प्रमारूपायाः करणभूतः सर्व्वशाखासूत्तरभागेषूत्पद्यमानोग्रन्थराशिरप्युपचारात् प्रमाणमित्युच्यते । तथा चोपनिषदः प्रमाणं करणमुपनिषत्प्रमाणं वेदान्तइत्यर्थः तदुपकारीणि वेदान्तार्थविचारानुकूलानीति यावत् । तदनुकूलत्वं वेदान्तवाक्यप्रमेयासम्भावनापोहद्वारा न तु प्रमित्युत्पत्तौ तत्फले वा साक्षाद्विचारशास्त्रस्याङ्गभावः तथासति वेदान्तवाक्यानां सापेक्षताप्रसङ्गात् तदुक्तमभियुक्तैः स्वाध्यायवन्नकरणं घटते विचारोनाप्यङ्गमस्य परमात्मधियः प्रसूतौ सापेक्षता पतति वेदगिरस्तथात्वे ब्रह्मात्मनः प्रमितिजन्मनि तन्न युक्तमिति । शरीरमेव शरीरकं तत्र भावोजीवः शारीरकः स सूत्र्यते याथातथ्येन निरूप्यते यैस्तानि शारीरकसूत्राणि अथातोब्रह्मजिज्ञासेत्यादीनि । यद्वा शारीरकस्य सूत्राणि तद्याथात्म्यवादिवेदान्तार्थसंग्रहवाक्यानि आदिशब्दोभाष्यादिसंग्रहार्थः च शब्दोवेदान्तशब्दाऽनुषङ्गार्थः तथा च वेदानामन्तोऽवसानभागो वेदान्तइति व्युत्पत्तियोगात् मुख्योऽवेदान्तशब्दो वेदभागभेदेषु शारीरकादौ तूपचरित इति । ननु किं पुनरस्यग्रन्थस्यारम्भे निमित्त न खलु निर्निमित्ता प्रेक्षावत्प्रवृत्तिरिति चेत् कोभावः निमित्तमात्राक्षेपइति चेन्न अशनायाद्यनेकोर्म्मिमालाकुलसमुद्भूतक्षोभहतविवेकविज्ञानपाथसि दृढतरकामक्रोधाद्युत्तुङ्गशैलजालविषमे सुतदुहितृकलत्रबान्धवाद्यनेकमकरनक्रचक्राकुले नरमृगपशुपक्षिदेवादिस्थानभोगफेनबुद्बुदे संसारसागरेऽनवरतमधऊर्द्ध्वं तिर्य्यग्वा मज्जनोन्मज्जनादिविवशानतिततगम्भीरार्थानेकवेदान्तविचारमहाद्रुमावलम्बनासमर्थान् दुःखिनोलोकानालोक्य संजातकरुणायानिमित्तत्वोपपत्तेः । अथ निमित्तविशेषाकाङ्क्षेत्तत्राह ॥

---

अस्येति । शास्त्रैकदेशसम्बद्धं शास्त्रकार्य्यान्तरे स्थितं । आहुः प्रकरणं नाम ग्रन्थभेदं विपश्चितइति हि प्रकरणलक्षणं वदन्ति तथाच यच्छास्त्रैकदेशसम्बद्धं यत्प्रकरणं तत्तच्छास्त्रीयैरेवानुबन्धैरनुबन्धयुक्तं । अन्यथा शास्त्रप्रकरणयोर्भिन्नविषयादिमत्त्वेन शास्त्रासम्बद्धत्वप्रसङ्गादसम्बन्धप्रलपितमिदमापद्येत अतोऽस्य ग्रन्थस्य वेदान्तशास्त्रीयप्रकरणत्वाद्वेदान्तशास्त्रसिद्धैरेवानुबन्धैस्तद्वत्त्वसिद्धेरनुबन्धवत्त्वसिद्धेर्न तेऽनुबन्धाः पृथगालोचनीयाइत्यर्थः । ननु महाविषयादेरिह शास्त्रीयत्वेनैवावान्तरविषयादेः पृथगालोचनं सूचितं । इतरथा शास्त्रं परित्यज्य प्रेक्षावतोऽत्र प्रवृत्त्ययोगादिति चेत् बाढं प्रकरणत्वेनैवावान्तरसङ्गतेः सुलभालोचनत्वात् पृथगिह निर्देशानपेक्षणात् । तथाहि सारग्रहणे चावान्तराधिकारी । सगुणनिर्गुणरूपविषयभेदं परित्यज्य निर्गुणसारमात्रमिह विषयः । तन्मात्रावधारणं प्रयोजनं सम्बन्धोऽपि विषयानुरूपइति भावः । ननु शास्त्रीयएवानुबन्धः शास्त्रविद्भिरेव विज्ञायते न व्युत्पित्सुभिस्तत्कथमिहतेषां शास्त्रीयविषयाद्यनभिज्ञानां प्रवृत्तिरित्याशङ्क्य शास्त्रीयमेवानुबन्धं संक्षेपतोव्युत्पादयितुमुपक्रमते ॥

तत्रानुबन्धोनामेत्यादिना । तत्र वेदान्तशास्त्रे स्वार्थप्रतिपत्तारमनाश्रित्य शास्त्रस्य प्रवृत्त्ययोगादादावधिकार्य्यनुबन्धोपेक्षा तस्य च विषयबोधमन्तरेणाप्रवृत्तेर्विषयस्य तदानन्तर्य्यं विषयस्य च शक्यप्रतिपाद्यत्वसिद्धयेसम्बन्धस्य विषयानन्तर्य्यं प्रयोजनस्य चरमत्वं प्रसिद्धमित्युक्तेश पाठक्रमो विवक्षितः तथाच शारीरकसूत्रं अथातोब्रह्मजिज्ञासेति तत्र यथोद्देशक्रममधिकारिणं निरूपयति ॥

go forth an ascetic from the house or from the forest,] or else let him proceed immediately from studentship to mendicancy. It might be objected :—Merely being born, a Bráhman becomes indebted in three things ; in studentship to the inspired sages; in sacrifice to the gods; in progeny to the progenitors ; or He alone is freed from debt who has a son, who is a sacrificer, or who has been a religious student ; also, according to the traditional revelation [smṛiti], After paying the three debts let him apply his mind to emancipation ; but one who, without paying them, seeks emancipation, falls downward, it being inferred that without paying these three debts engagement in reflection on the system of emancipation is improper ; how, can there be engagement in reflection upon the absolute through emancipation? To this we reply : The sacred text, He cuts from the front of the breast, then of the tongue, next of the chest, proceeding from this injunction of the three cuttings of the victim, an dterminating with the explanation of what a cutting is, in the text, By those cuttings he cuts, these cuttings alone being called cuttings :—this text inasmuch as it alludes to the meaning of the injunction of three cuttings, has not its meaning complete in itself. But this text respecting the three debts is renegated by the sacred text, From studentship immediately, which alludes to no other [or has its meaning complete in itself] If the three debts were to be discharged by studentship &c, as in the text He cuts with the cuttings, [taken as complete in itself] then the statement that to studentship belongs causality in removing the three debts might be acknowledged to be complete in itself. Even in this case, there being no proof that all that are born are subject to the three debts, it is proper to explain that the competent person being born, or the householder being born [is bound by the three debts]; while the traditional text should be explained as referring to those who have not renounced the world. Accordingly the sacred texts They whose life is spent in sacrifice, they sacrificing, even through decrepitude should not cease therefrom ; He is a slayer of a Bráhman, who neglects the sacred fire of the gods; and the traditional texts such as those relating to one order [*ekáśramya*], the religious teachers, and the manifest injunction to the householder should be considered as explained [to relate only to secular persons] For thus there will be no contradiction in the Vedic and traditional texts, From mere studentship let him go forth a mendicant ; Whatever day he wills to renounce the world let him set forth ; or He may become free again from his vow ; With what object should we study the Veda, why sacrifice, what have we to do with offspring, we whose world is spirit ? thus thinking Yájňavalkya became an ascetic They who desired offspring, partook of the burning-places, and they who desired not offspring partook of immortality Performance, therefore, of duty, is not a requisite of investigation of spirit, which existing there exists invariably the arising desire to know the absolute ; and which not existing, such desire does not exist. This is the quaternion of instruments to be described in the sequel. How, again is the authorised student, supplied with means ? It is stated

*Eminently &c* He is [the authorised student] whose heart or internal organ is eminently or exceedingly, undefiled or pure. Whence undefiledness of heart ? It is stated that it follows from eradication of impressions of affections which are the impediments thereto

*Departed &c* Cessation of the defilement of impressions of affections &c —whence is this ? It is stated

*Constant &c* The constant duty &c of one attached to interested action, though regularly performed, is not directly a cause of cessation of defilement ; since im-

अधिकारीत्विति । धर्म्मजिज्ञासाधिकारिणोऽस्य वैलक्षण्यसूचनार्थस्तुशब्दः प्रमाताधिकारीत्यन्वयः । लौकिकवैदिकव्यवहारेष्वभ्रान्तोजीवः प्रमातेह विवक्षितः जीवमात्रस्य भ्रमसम्भवेन शास्त्रार्थप्रतिपत्त्ययोगात् । तस्य तुशब्दसूचितं विशेषमाह ॥

साधनचतुष्टयसम्पन्नइति । वक्ष्यमाणसाधनचतुष्टयविशिष्टइत्यर्थः । अयं भावः न तावद्वेदाध्ययनं ब्रह्मजिज्ञासाधिकारहेतुस्तस्य धर्म्मब्रह्मजिज्ञासयोः साधारणत्वात्तन्मात्रेणेह नियमेन प्रवृत्त्यनुपपत्तेः नापि धर्म्मविचारः प्रागपिधर्म्मविचारादधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेः नापि धर्म्मानुष्ठानमिह जिज्ञासाहेतुः विनापि धर्म्मानुष्ठानं ब्रह्मचर्य्यादेव विरक्तस्य ब्रह्मजिज्ञासादर्शनात् श्रुतिश्च भवति विविदिषोः सन्यासविधायिनी यदि वेतरथा ब्रह्मचर्य्यादेव प्रव्रजेदित्यादिका । ननु जायमानोवैब्राह्मणस्त्रिभिः ऋणवान् जायते ब्रह्मचर्य्येण ऋषिभ्योयज्ञेन देवेभ्यः प्रजया पितृभ्यएव वा अनृणोयः पुत्री यज्वा ब्रह्मचारी वासीदिति श्रुतेः । ऋणानि त्रीण्यपाकृत्यमनोमोक्षे निवेशयेत् । अनपाकृत्य मोक्षन्तु सेवमानोव्रजत्यधइति स्मृतेश्च ऋणत्रयापाकरणमन्तरेण मोक्षशास्त्रे विचारप्रवृत्त्ययुक्ततायागम्यमानत्वात् कथं धर्म्ममननुष्ठाय संन्यासपूर्व्वकं ब्रह्मविचारप्रवृत्तिरिति चेत् उच्यते श्रुतिस्तावत् हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षसइति पशववदानत्रयविधिमुपक्रम्य तदवदानैरेवावदयते तदवदानानामवदानत्वमित्यवदाननिर्व्वचनेनोपसंहारादवदानत्रयविध्यर्थवादत्वात् न स्वार्थपरा अतः सा ब्रह्मचर्य्यादेवेति श्रुत्यानन्यपरयाबाध्यते यदि ब्रह्मचर्य्यादिभिरपाकरणीयर्णत्रयेऽवदानैरवदयतइत्यत्रदानश्रुतौ अवदानवचनं ब्रह्मचर्य्यादेर्ऋणत्रयापाकरणहेतुत्ववचनं च स्वार्थपरमेव मतं । तथापि जातमात्रस्यर्णत्रयसम्बन्धप्रमाणाभावादधिकारी जायमानोगृहस्थोजायमानइति वा व्याख्यानमुचितं स्मृतिस्त्वविरक्तविषयतया व्याख्येया एतेन यज्ञायुषो यजमानाः जरयावास्मान्नमुच्येरन् वीरहावा एष देवानां योऽग्निमुद्वासयत इत्यादिश्रुतयः । एकाश्रम्यन्तु आचार्य्याः प्रत्यक्षविधानाद्गार्हस्थ्यस्येत्याद्याः स्मृतयश्च व्याख्याताबोधितव्याः । ब्रह्मचर्य्यादेव प्रव्रजेत् यदहरेव विरजेत्तदहरेव प्रव्रजेत् अथ पुनरव्रती वा किमर्थावयमध्येष्यामहे किमर्थं वयं यक्ष्यामहे किंप्रजया करिष्यामोयेषां नोऽयमात्मेति याज्ञवल्क्यः प्रवव्राज ये प्रजामीशिरे ते श्मशानानिभेजिरे ये प्रजां नेशिरे तेऽमृतत्व हि भेजिरे इत्यादिश्रुतिस्मृत्यविरोधात् तस्मान्न धर्म्मानुष्ठानं ब्रह्मजिज्ञासाहेतुः अतोब्रह्मजिज्ञासा जायमाना यस्मिन् सत्येव नियमेन जायते यस्मिन्नसति नैव जायते तदेत्र तस्याः साधनमेषितव्यं तच्च वक्ष्यमाणं साधनचतुष्टयमेवेति कस्मात्पुनः साधनसम्पन्नस्तत्राह ॥

pression of desire may be an impediment to purity, and there may be an obstacle by means of sin in not avoiding what is prohibited With this in view the author characterises the performance of constant and other duties.

*Preceded by avoidance of interested and prohibited actions* The author thus excludes the necessity of the performance of constant and other duties, and of purity, being produced in one and the same being

*Either in this, or in another birth* The meaning is that works performed in one state of being may be subsidiary in another, according to such traditional texts as, Perfected by many births he goes to the highest state [emancipation], for none that works righteousness goes to a bad estate, my son. Thus the author ascribes causality in obtaining the quaternion of instruments such as discrimination &c., to one whose defilement has been elimminated by performances in this or in other births, through avoidance of interested and prohibited actions

*Cursorily, &c* Cursorily, that is without determining by reflection what it is, he by whom the whole meaning of the Veda has been acquired, [is the authorised student] The word Veda refers to the latter portion of the Veda. The means of hearing the sense of the Veda is next stated

*According to rule &c* The sense is [that he is the authorised student] by whom in accordance with the statement that a Bráhman should study and know disinterestedly the Veda with its six subsidiaries [or Vedángas], the whole meaning of the latter portion of the Veda has been acquired, by means of the propositions of the Vedánta obtained in the rite of constant study, the marks of the purport of which propositions have been mastered by means of the glossary, grammar, and other subsidiary sciences. What is stated is this :—that spirit, though in reality identical with intelligence, existence, bliss, and the absolute, having, through connection with ignorance, unbeginning, inexplicable, entered upon the state of individuated soul, and being reduced to the thraldom of ignorance, desire, and works and constantly practising interested and prohibited actions, and tasting paradise and hell the fruits thereof, and stamped with the impression of such fruition ; experiencing now conformable action and now fruit, and thus ceaselessly, experiencing revolutions up and down and to and fro, like a horologue or a potter's wheel ; falsely thinks himself happy, successful, infatuated, or in pain. This word of individuated spirit, again, is in some instances interested in others constant, in others occasional. "The fruit in special of interested action is purity, in the object ; and the real fruit in special of constant action is purity of the internal organ ; while the fruit of occasional observances is merely removal of sin" He is the authorised student of the Vedánta who has come to know the imperfection of the fruits of interested action in consequence of the sum of the merits incidental to his good deeds in many births coming to maturity, from this and other verses of the legendaries [Purána] ; and who accounting the three kinds of pain, spiritual &c, to be the fruit of prohibited practises ; and avoiding actions interested and prohibited ; is pre-eminently undefiled in heart, his defilement having been destroyed by constant and other duties performed with the intention of consecrating them to God , possessed of discernment and the other instruments, by means of a cursory view of the sense of the latter portion of the Vedas and of the sciences subsidiary to the Veda, which he has studied , and desiring to know the real nature of his own soul The author enumerates objects of interest, &c.

A. E. G and G. D

---

नितान्तेति । नितान्तमत्यन्तं निर्म्मलं शुद्धं स्वान्तमन्तःकरणं यस्य स तथा कुतः स्वान्तस्य नैर्म्मल्यं प्रतिबन्धकरागादिवासनानिवृत्त्येत्याह ॥

निर्गतेति । रागादिवासनारूपकल्मषनिवृत्तिरपि कुतस्तत्राह ॥

नित्येति । काम्यकर्म्माभिरतस्यानुष्ठीयमानमपि नित्यादि न साक्षात्कल्मषनिवृत्तिहेतुः कामवासनया शुद्धिप्रतिबन्धसम्भवात्तथा निषिद्धावर्ज्जने पापेन प्रतिबन्धादित्यभिप्रेत्यनित्याद्यनुष्ठानं विशिनष्टि ॥

काम्यनिषिद्धवर्जनपुरःसरमिति । एवं नित्याद्यनुष्ठानस्य शुद्धेश्चैकभविकत्वनियमं व्यावर्त्तयति ॥

अस्मिन् जन्मनि जन्मान्तरेवेति । अनेकजन्मसंसिद्धस्ततो याति परां गतिं । नहि कल्याणकृत्कश्चिद्दुर्गतिं तातगच्छतीत्यादिस्मृतेर्जन्मान्तरानुष्ठितस्यापि जन्मान्तरोपकारकत्वसम्भवादितिभावः एवं काम्यनिषिद्धवर्ज्जनपुरस्सरमिहजन्मनि जन्मान्तरे वानुष्ठितं विवेकादिसाधनचतुष्टयसम्पत्तौ कारणतामाह ॥ नित्यादिक्षपितकल्मषस्य

आपाततइति । आपाततो विचारेणेदं मित्थमेवेति पर्य्यवधारणमन्तरेणाधिगतो ऽखिलो वेदार्थो येन स तथा वेदशब्दो वेदान्तविषयः । वेदार्थज्ञाने हेतुमाह ॥

विधिवदिति । ब्राह्मणेन षडङ्गो वेदो निष्कारणोऽध्येयो ज्ञेयश्चेति वचनान्नित्याध्ययनविधावापादितवेदान्तवचोभिर्निरुक्तव्याकरणाद्यङ्गोपकरणैरन्ववबुद्धतात्पर्य्यलिङ्गैरधिगताखिलवेदान्तार्थइत्यर्थः एतदुक्तं भवति वस्तुतश्चित्सदानन्दब्रह्मस्वभावोऽप्यात्माऽनाद्यनिर्व्वाच्याविद्यासम्बन्धलब्धजीवभावोऽविद्याकामकर्म्मवशगतः काम्यनिषिद्धाद्यनवरतमाचरंस्तत्फलभूतस्वर्गनरकौ भुञ्जानस्तद्भोगवासनावासितस्तदनुरूपं पुनः कर्म्म पुनः फलमित्येवं घटीयन्त्रवत्कुलालचक्रवच्चोर्द्ध्वाधस्तिर्य्यग्भ्रमणमविश्रममनुभवन् हृष्टः कृतार्थो मूढो दुःखी वेत्यात्मानं मृषैव मन्यते तत्पुनरेकं काम्यमपरं नित्यं तथा नैमित्तिकम्परम् । प्राधान्येन फलं शुद्धिरार्थिकी काम्यकर्म्मणः प्राधान्येन मनः शुद्धिर्नित्यस्य फलमार्थिकं । केवलं प्रत्यवायस्य निवृत्तिरितरस्य तु इत्यादिपुराणवचनादतीतानेकजन्मसुकृतयादृच्छिकपुण्यपुञ्जपरिपाकोदयवशात् काम्यफलेषु जातदोषबुद्धिराध्यात्मिकादिदुःखत्रयञ्च निषिद्धाचरणफलमाकलयन् काम्यनिषिद्धे परित्यजन्नीश्वरार्पणबुद्ध्यानुष्ठितनित्यादिक्षपितकल्मषतया नितान्तनिर्म्मलस्वान्तोऽधीतसाङ्गवेदान्तार्थापातालोचनया लब्धविवेकादिसाधनसम्पन्नः स्वात्मयाथात्म्यजिज्ञासुर्वेदान्ताधिकारीति । काम्यादिपदार्थान् कथयति ॥

# RÁMÁYAN.

## BOOK III.

### CANTO XVI.

*WINTER.*

The time is come, to thee more dear
han all the months that mark the year:
'he gracious seasons' joy and pride,
y which the rest are glorified
robe of hoary rime is spread
'er earth, with corn engarlanded.
'he streams we loved no longer please,
ut near the fire we take our ease
Now pious men to God and shade
ffer young corn's fresh sprouted blade,
nd purge away their sins with rice
estowed in humble sacrifice
ich stores of milk delight the swain,
nd hearts are cheered that longed for gain.
Proud kings whose breasts for conquests glow
ead bannered troops to smite the foe
ark is the north: the Lord of Day
'o Yama's south[1] has turned away.
nd she—sad widow—shines no more,
eft of the bridal mark[2] she wore.
imálaya's hill, ordained of old
he treasure-house of frost and cold,
carce conscious of the feebler glow,
truly now the Lord of Snow.
Varmed by the noontide's genial rays
elightful are the glorious days:
ut how we shudder at the chill
f evening shadows and the rill!
Iow weak the sun, how cold the breeze!
Iow white the rime on grass and trees!
'he leaves are sere, the woods have lost
heir blossoms killed by nipping frost.
eath open skies we sleep no more:
'ecember's nights with rime are hoar:
heir triple watch[3] in length extends
Vith hours the shortened daylight lends
o more the moon's sun-borrowed rays
re bright, involved in misty haze,
s when upon the mirror's sheen
'ie breath's obscuring cloud is seen.
'en at the full the faint beams fail
struggle through the darksome veil.
Changed like her hue, they want the grace
That parts not yet from Sítá's face.
Cold is the western wind, but how
Its piercing chill is heightened now,
Blowing at early morning twice
As furious with its breath of ice!
See how the dewy tears they weep
The barley, wheat, and woodland steep,
Where, as the sun goes up the sky.
The curlew and the sáras cry.
See where the rice-plants scarce uphold
Their full ears tinged with paly gold,
Bending their ripe heads slowly down
Fair as the date tree's flowery crown.
Though now the sun has mounted high
Seeking the forehead of the sky,
Such mist obscures his struggling beams,
No bigger than the moon he seems
Though weak at first, his rays at length
Grow pleasant in their noonday strength,
And where a while they chance to fall
Fling a faint splendour over all.
See, o'er the woods where grass is wet
With hoary drops that cling there yet,
With soft light clothing earth and bough
There steals a tender glory now.
Yon elephant who longs to drink,
Still standing on the river's brink,
Plucks back his trunk in shivering haste
From the cold wave he fain would taste.
The very fowl that haunt the mere
Stand doubtful on the bank, and fear
To dip them in the wintry wave,
As cowards dread to meet the brave
The frost of night, the rime of dawn
Bind flowerless trees and glades of lawn:
Benumbed in apathetic chill
Of icy chains they slumber still
You hear the hidden sáras cry
From floods that wrapped in vapour lie,
And frosty-shining sands reveal
Where the unnoticed rivers steal
The hoary rime of dewy night,
And suns that glow with tempered light
Lend fresh cool flavours to the rill
That sparkles from the topmost hill.
The cold has killed the lily's pride:
Leaf, filament, and flower have died:
Wh chilling breath rude winds have blown,
The withered stalk is left alone.

[1] The south is supposed to be the residence of the departed
[2] The sun.
[3] The night is divided into three watches of four hours each.

PRINTED AND PUBLISHED BY THE PROPRIETORS, E. J. LAZARUS AND CO., AT THE MEDICAL HALL PRESS, BENARES.

# काशीविद्यासुधानिधिः

श्रीगणेशाय नमः

श्रीमद्विजयिनीदेवीपाठशालोदयोदितः । प्राच्यप्रतीच्यवाक्पूर्वापरपक्षद्वयान्वितः ॥ १ ॥

अङ्कुरश्मिः स्फुटयतु काशीविद्यासुधानिधिः । प्राचीनार्यजनप्रज्ञाविलासकुमुदोत्करान् ॥ २ ॥

A Monthly Journal, of the Benares College, devoted to Sanskrit Literature.

No. 71. Benares, April 1st, 1872. Vol. VI.


## ॥ चिन्तामणेः शब्दखण्डम् ॥

अथ मीमांसकाः । (१) यथोच्चारणपूर्वकत्वादुच्चारणं वेदे परतन्त्रं तथा तात्पर्यमपि तात्पर्यपूर्वकमेवेति परतन्त्रं, न तु कस्यापि प्रथमं तात्पर्यम्, अनादित्वात् । पूर्वपूर्ववाक्यार्थज्ञानेच्छयोच्चारणमुपजीव्याग्रिमाग्रिमस्य (२) तदिच्छयोच्चारणात् । तदिच्छया तदुच्चारणमेव हि तत्परत्वं लोकवेदसाधारणं, सा चेच्छा स्वतन्त्रा परतन्त्रा वेति न कश्चिद्विशेषः । तदवधारणं चा(३)नादिमीमांसापरिशोधितन्यायाद्वेदइत्युभयवादिसिद्धम् । अतस्तात्पर्यानुरोधान्न वेदस्य पौरुषेयत्वम् । नन्वर्थज्ञानं विनोच्चरितवेदात् (४) कथमर्थधीः, वाक्यार्थज्ञानं विना तदिच्छयोच्चारणाभावात्, प्रतिपुरुषमुच्चारणस्य भेदादिति चेत्, (५) तर्हि पठ्यमानभारतादपि(६)तथाभूतादर्थधीर्न स्यात् । व्यासेन तत्प्रतीतीच्छयोच्चारणं कृतं, तज्जातीयत्वादर्थज्ञानं विनापि पठ्यमानभारतादर्थधीरिति चेत् । तर्हि वेदेऽपि तुल्यम् । तत्तात्पर्यकजातीयत्वस्य नियामकत्वात् । अन्यथा पठ्यमानवेदात्तवाप्यर्थधीर्न स्यात् । (७) ईश्वराप्रणीतत्वात् । (८) अथ वेदः पौरुषेयो, वाक्यत्वाद्भारतवद्,इति चेत् । को वेदः । (९) अनुगतधर्माभावेन तस्य शाखासु नानार्थत्वात् । तथाहि । न (१०) मुख्यवेदपदप्रयोगविषयो वेदः, (११) मुख्यार्थाकथनात्, नापि शाखासमुदायः, (१२) तस्य वेदनिरूप्यत्वात्, (१३) समुदायस्याप्रतिपादकत्वेन वाक्यत्वा-

## ॥ शब्दचिन्तामणिव्याख्या रुचिदत्तीया ॥

(१) यथेति । स्वमते दृष्टान्तः । (२) तदिति । न तु स्वतन्त्रतदिच्छयोच्चरितत्वं,गौरवादिति भावः । मीमांसातः पूर्वं कथं तदवधारणमित्यत आह । (३) अनादीति । (४) कथमिति । वक्तुस्तात्पर्याभावनिश्चये तद्भ्रमस्याप्यसंभव इति भावः । यद्वा स्वरूपसत्तात्पर्यस्य प्रामाण्यप्रयोजकत्वात्तदभावे कथं प्रामाण्यमिति भावः । परमुखेन समाधानमाह । (५) तर्हीति । (६) तथाभूतादिति । अर्थज्ञानं विनोच्चरितादित्यर्थः । (७) ईश्वरेति । ईश्वरानुच्चरितत्वादित्यर्थः । कण्ठताल्वादिमानुच्चारयितेत्यभिप्रायेणेदम् । वेदे तात्पर्यं न परतन्त्रमनादिनवोच्चारणं तथेत्याह । (८) अथेति । तथा चेश्वरेच्छैव तत्र तात्पर्यमिति भावः । (९) अनुगतेति । तथा च नैकपक्षतावच्छेदकलाभ इति भावः । यद्यपि किंचिद्वेदपक्षतायामपीष्टसिद्धिस्तथापि संप्रदायमते वेदान्तरे संदिग्धानैकान्तिकत्वादीश्वरानुमानवदेकपक्षतावच्छेदकायह इति ध्येयम् । "पुराणं पञ्चमो वेद" इत्यन्यत्रापि वेदपदप्रयोगादंशतः सिद्धसाधनं मा भूदित्यत आह । (१०) मुख्येति । (११) मुख्यार्थेति । अनुगतप्रवृत्तिनिमित्ताज्ञाने मुख्यामुख्यविभागानुपपत्तिरित्यर्थः । (१२) तस्येति । वेदैकदेशस्य शाखात्वादन्यान्याश्रयादिति भावः । यदि समुदायिभिन्नस्तादृशशाखासमुदायः पक्षस्तदा दोषमाह । (१३) समुदायस्येति । विशिष्टैकार्थप्रतिपादक-

सिद्धेश्च । नापि स्वर्गकामादिवाक्यं, स्मृतिभारतादेरपि तथात्वात् । नापि संदिग्धकर्तृकवाक्यं, वादिनोर्निश्चयात् । वाद्यनुमानयोस्तुल्यत्वात् । मध्यस्थस्य संशय इति चेत्, (१४) तर्ह्यनुमानाभ्यां मध्यस्थस्य संशयो मध्यस्थसंशयप्रश्नानन्तरं चानुमानमित्यन्योन्याश्रयः । नापि विवादाध्यासितं वाक्यम् । अनुगतधर्मं विना विवादस्याप्यभावाद्, भारतादावपि तत्संभवाच्च । नापि महाजनानां वेदाकारानुगतव्यवहाराद्वेदत्वं जातिः । देवदत्तीयत्वाद्यनुमापकशब्दवृत्तिजातिभिः (१५) संकरप्रसङ्गात् । (१६) किं च पौरुषेयत्वं, न तदर्थधीजन्यत्वं, तदुच्चारणधीप्रभवत्वं, वा । अध्यापकतदुभयधीजन्यत्वेन सिद्धसाधनात् । नाप्युच्चारणस्य सादित्वम् । प्रत्युच्चारणस्य सादित्वात् । (१७) नापि स्वतन्त्रपुरुषप्रणीतत्वं, (१८) पठ्यमानवेदभारतयोस्तदभावात् । (१९) तज्जातीयः स्वतन्त्रपुरुषप्रणीत इति चेत्, (२०) तर्हि पठ्यमानभारतं व्यासस्य न ममेति कथं स्यात् । (२१) स्वातन्त्र्यं च यद्युच्चारणव्यक्तौ, तदा ममापि, तदुच्चारणसामान्ये न व्यासस्यापि । (२२) किं च स्वतन्त्रपुरुषप्रणीतजातीयत्वं यदि साध्यते तदाद्यभारते (२३) स्मृतौ च वाक्यत्व(२४) मनैकान्तिकम् । नहि तज्जातीयं स्वतन्त्रपुरुषप्रणीतमस्ति । (२५) अथ स्वतन्त्रकृतवेदजातीयं स्वतन्त्रपुरुषप्रणीतमित्यनिर्द्धारितविशेषं साध्यं,जीवो क्व चिदस्तीतिवद् इति चेत् । न । (२६) पठ्यमानभारते व्यभिचारात् । अथार्थं प्रतीत्य तदर्थपरतया प्रतिसंधीयमानपदत्वं पौरुषेयत्वम् । तस्य प्रथममावश्यकत्वात् । तत एवानुच्चरितोपि मौनिश्लोकः पौरुषेय इति चेत् । न । अर्थज्ञानवताऽध्यापकेन सिद्धसाधनात् । (२७) अन्यथा पठ्यमानवेदभारताभ्यां व्यभिचारात् । अत एव वेदत्वं स्वतन्त्रपुरुषप्रणीतवृत्ति, वाक्यवृत्तिधर्मत्वाद्, भारतवदिति निरस्तम् । स्वतन्त्रप्रणीतत्वं हि वाक्यार्थगोचरयथार्थ-

---

त्वस्य वाक्यलक्षणत्वादित्यर्थः । वस्तुतस्तादृशधर्मो निर्वक्तुमशक्य एव । अन्यथा तदवच्छिन्नस्य पक्षत्वे दोषाभावादिति भावः । (१४) तर्हीति । पक्षतावच्छेदकज्ञानानन्तरमनुमानावतार इति भावः । (१५) सङ्करेति । बीजसाम्येन गुणेपि तस्य दोषत्वमिति भावः । किं च प्रत्येकवर्णपरिसमाप्ता सा न वाच्या । एकवर्णग्रहे ऽपि तद्ग्रहापत्तेः । नापि सकलवर्णेषु व्यासज्यवृत्तिः । जातित्वविरोधात् । नापि पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितेन्द्रियवेद्या चरमवर्णवृत्तिः । चरमवर्णविहीनसकलवेदग्रहेपि तद्ग्रहानापत्तेरित्यपि बोध्यम् । साध्यं विकल्प्य दूषयितुं पृच्छति । (१६) किं चेति । (१७) नापीति । साधूच्चारणविषयत्वमित्यर्थः । (१८) पठ्यमानेति । प्रयोगेण कण्ठताल्वादिमानित्यर्थः । तथा च भागे बाधो व्यभिचारश्चेति तात्पर्यम् । (१९) तज्जातीय इति । तथा च तत्प्रणीतसजातीयत्वं साध्यमिति नोक्तदोष इति भावः । (२०) तर्हीति । स्वतन्त्रप्रणीत यत्तद्वृत्तिधर्मवत्त्वं ब्रुवतेदं न स्वतन्त्रप्रणीतमित्युक्तं भवति, स्वातन्त्र्येण च व्यपदेशः प्राधान्येनेति न्यायादिति व्यासस्य न ममेति व्यपदेशो न स्यादिति भावः । तत्तुल्यपठ्यमानवेदो ममैवेत्यस्मदादिकमादायैव तत्र साध्यसत्त्वादर्थान्तरमिति तात्पर्यम् । नन्वस्मदादीनामुच्चारणे स्वातन्त्र्यमेव नास्तीत्यत आह । (२१) स्वातन्त्र्यं चेति । स्वकृतकाव्ये ममापि स्वातन्त्र्यात् परकृतकाव्यादौ व्यासस्याप्यस्वतन्त्रत्वात्, तथा च भारते व्यभिचारः स्यादिति भावः । एतच्च यदि शब्दत्वादिना तज्जातीयत्वं विवक्षितं तदा बोध्यं, यद्यानुपूर्व्या साजात्यं विवक्षितं तदा दोषान्तरमाह, (२२) किं चेत्याहुः ॥ वस्तुतो वेदसमानानुपूर्वीकं वाक्यं यत्र स्मदादीनां दैवशसंपन्नं तत्र सजातीयोच्चारणानपेक्षत्वनास्मदादीनामेव स्वातन्त्र्यतया तज्जातीयत्वेनांशतः सिद्धसाधनमिति तात्पर्यम् ॥ के चित्तु इदं न तर्हीयत व्यवहारप्रयोजकमिति प्रसङ्गाद् दूषितम्, अनुमानदूषणं तु किं चेत्यादिकमेवेत्याहुः ॥ (२३) स्मृतौ चेति । आद्यस्मृतौ चेत्यर्थः । (२४) अनैकान्तिकमिति । सजातीयत्वं भेदघटितमित्यभिप्रायेणेदमित्येके ॥ आद्यभारतादिपूर्ववर्त्तिनस्तादृशस्याभावविशिष्टार्थस्य भूतत्वस्य बाधादिति भाव इत्यन्ये । (२५) अथेति । अत्र वेदजातीयं किं चिदनिर्द्धारितविशेषं पक्षः, स्वतन्त्रकृतत्वं साध्यं, तस्यार्थः स्वतन्त्रपुरुषप्रणीतत्वमिति के चिदाहुः ॥ अन्ये तु स्वातन्त्र्यमुच्चारणे, तच्चास्मदादीनामपि क्व चित्संभवति । एवं चास्मदादिकृतवेदजातीयं पक्षः, साध्ये च प्रकृतस्वातन्त्र्यं विवक्षितमिति नार्थान्तरमित्याहुः ॥ वस्तुतो ऽस्वतन्त्रकृतवेदजातीयमिति पाठः । थकारः प्रामादिकः । अत एव महार्णवे तथैवास्तीति ॥ सुतरामतन्त्रः पराधीनो ऽस्मदादिः स्वतन्त्र इत्यप्याहुः । (२६) पठ्यमानेति । सजातीयोच्चारणानपेक्षस्य स्वातन्त्र्यस्य तत्राभावादिति भावः । ननु स्वतन्त्रतदर्थज्ञानवत्प्रणीतत्वं तदित्यत आह । (२७) अन्यथेति । वेदे पक्षेपि

ज्ञानविख्यापयिषयोच्चारणं, तथा च तथाविधाध्यापकेन सिद्धसाधनम्। एतेन (२८) वक्तृत्वानुवक्तृत्वयोर्भेदस्य लोकसिद्धत्वात् सवक्तृकत्वं साध्यमिति (२९) निरस्तम्। नापि सजातीयोच्चारणानपेक्षोच्चारणं पौरुषेयं, पठ्यमाने वेदे बाधाद्, (३०) भारते व्यभिचाराच्च।

उच्यते। (३१) शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयार्थकत्वे सति शब्दजन्यवाक्यार्थज्ञानाजन्यप्रमाणशब्दत्वं वेदत्वम्। ईश्वरप्रमाया अजन्यत्वात्।

---

व्यभिचारोद्भावनं बाधायामनैकान्त इति कृत्वा। (२८) वक्तृत्वेति। अध्यापकश्चानुवक्तेति न तेनार्थान्तरमिति भावः। (२९) निरस्तमिति। वक्तृत्वं यदि तदर्थगोचरज्ञानादिमत्त्वं तदाऽध्यापकेन सिद्धसाधनं, स्वातन्त्र्यविशेषणत्वे तु पठ्यमानभारतादौ व्यभिचार इति भावः। (३०) भारतइति। पठ्यमानभारतइत्यर्थः। पक्षतावच्छेदकमाह। (३१) शब्दे त। शब्दस्तदुपजीवि च यत्प्रमाणं तदतिरिक्तं यत्प्रमाणं तज्जन्या या प्रमितिस्तदविषयार्थकत्वे सतीत्यर्थः। अत्र वेदार्थस्य शब्दतदुपजीव्यनुमानविषयत्वादसंभववारणाय शब्दतदुपजीवीति। शब्दोपजीवित्वं च स्वसमानविषयकशब्दजन्यवाक्यार्थज्ञानसापेक्षत्वं, तेन प्रत्यक्षेण शब्दं श्रुत्वा चैत्रः शब्दायतइत्यादिप्रयुक्तवाक्ये चैत्रवाक्यादयमर्थो ज्ञात इति वाक्ये च नातिव्याप्तिरिति वदन्ति। प्रामाण्यार्थं शब्दोपजीवित्वलाभाय प्रथमं प्रमाणपदं, नहि स्वर्गो यागादिजन्योऽन्याजन्यत्वे सति जन्यत्वाद् इत्यादिलिङ्गं स्वसत्तायामेव शब्दमुपजीवत्यपि तु प्रमाजनने। अत एव शब्दजन्यप्रवृत्त्यादिमूलकादृष्टाक्षेप-चक्षुरादिविषयविषयकलौकिकवाक्ये ऽतिव्याप्तिरपि निरस्तेत्याहुः। अखण्डभावे वा न वैयर्थ्यं, मनोयोगादिभिरपि तादृशैर्वेदार्थगोचरप्रमाजननादसंभव, इत्यत उक्तं द्वितीयप्रमाणपदम्। न चैवमपि तादृशमनोजन्यप्रमितिविषयत्वेनासंभव इति वाच्यम्। तस्यापि वेदार्थगोचरप्रमाजनने शब्दोपजीवित्वात्। प्रमाणपदस्यासाधारणप्रमाणपरत्वाद्वा। प्रमितिपदं च स्वजन्यज्ञानसमानप्रकारकज्ञानपरम्। तेन प्रमेयत्वादिसामान्यप्रत्यासत्तिजन्यप्रमितिविषयतया वेदार्थस्य नासंभवः। नहि सा वेदजन्यप्रमितिसमानप्रकारिका। न चैवमप्रसिद्धिः। तादृशप्रमितेः शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्यत्वाभावादिति वाच्यम्। तादृशप्रमितिविषयार्थकलौकिकवाक्यजातं प्रसिद्धं, तदन्यत्वे सतीत्यर्थात्। अत एव मेयत्वं प्रत्यक्षत्वव्याप्यमित्याद्यनुमानैरतीन्द्रियवेदार्थस्यापि विषयीकरणादसंभव इति परास्तम्। अत एव ज्ञानलक्षणामादायापि न दोषः। तया तत्प्रकारकज्ञानजनने ऽवश्यं शब्दोपजीवनात्। न चैवमपि योगिप्रत्यक्षविषयत्वाद्वेदार्थस्यासंभवः, तस्य यागादिबोधकशब्दोपजीवित्वेपि समानविषयकशब्दानुपजीवनादिति वाच्यम्। प्रमितिपदस्योभयवादिसिद्धप्रमितिपरत्वादित्येके॥ योगजधर्मस्य प्रमाणव्यापारत्वात्, न तु प्रमाणत्वं, मनसश्च साधारणत्वादसाधारणप्रमाणपरत्वविवक्षयैव तद्वारणादित्यन्ये॥ यत्तु पक्षे उपरञ्जकस्यापि दानाद्योगजादिप्रत्यासत्त्यजन्यत्वं प्रमितेर्विशेषणं, प्रमेयो घट इतिवत्तदुपरक्तबुद्धेरुद्देश्यत्वात्। अत एव कृतौ जन्यत्व विशेषणमिति, तन्न। प्रतियोग्यप्रसिद्ध्या परस्य तदुपरक्तबुद्धेरप्यभावात्। न च वराहादिना यत्र वेदार्थगोचरं ज्ञानं तत्रागतिरिति वाच्यम्। तत्र मानाभावात्। भावे वा तदन्यत्वेनापि प्रमितेर्विशेषणीयत्वात्। सत्यन्तं वेदसमानार्थकस्मृतावतिव्याप्तिमिति शब्दजन्येत्यादि। ननु जन्यवाक्यार्थज्ञानाजन्यत्वेनैव स्मृतिव्यवच्छेदाच्छब्दपदं व्यर्थं, न चेदानीमजन्यज्ञानाप्रसिद्ध्या जन्यपदव्यावर्त्याप्रसिद्धिरिति वाच्यम्। पौरुषेयत्वानुमानेऽस्य पक्षनिर्देशत्वेन तत्रोपरञ्जकस्यापि दानात्। अत एवेश्वरानुमाने तथैव कृतम्। न च शब्दजन्यवाक्यार्थज्ञानत्वावच्छिन्नकारणताकत्वविरहो विवक्षितस्तेनेदानींतने वेदे नाव्याप्तिरित्यपि सूचितमिति वाच्यम्। शब्दजन्यवाक्यार्थज्ञानत्वेन स्मृतिहेतुत्वे मानाभावात्। तद्धेतुवाक्यार्थज्ञानं शब्दजन्यमित्यन्यदेतत्। अन्यथेदानींतनवेदापेक्षतया तस्य हेतुत्वेऽव्याप्तितादवस्थ्यादिति चेत्। अखण्डाभावे वैयर्थ्याभावात्। अत एव वाक्यार्थपदमपि। यत्तु विषयतया शब्दजन्यस्याज्ञानजन्याधुनिकवेदाव्याप्तिवारणाय वाक्यार्थपदोपादानम्। न च सा तथापीति वाच्यम्। तत्र वाक्यार्थज्ञानस्याहेतुत्वात्, तद्विनापि सजातीयवेदश्रवणात्तादृशवेदजननादिति। तन्न। उक्तान्वयेन स्मृतावपि तस्याहेतुत्वे तत्रातिव्याप्त्यापत्तेः। यदा विशेषे हेतुत्वं तदा तुल्यम्। अत एवाध्यापकवाक्यार्थधीजन्यत्वेन सिद्धसाधनमुक्तम्। अयोग्यशब्दे ऽतिव्याप्तिवारणायान्त्यप्रमाणपदम्। वेदार्थानुमापकलिङ्गपरामर्शे ऽतिव्याप्तेराह चरमशब्दपदम्। न च स्तोभे ऽव्याप्तिस्तस्य निरर्थकत्वेनाप्रमाणत्वादिति वाच्यम्। तस्य वेदबाह्यत्वेनासंग्राह्यत्वात्। स च निरर्थको ऽपि गीयमानः पुण्यायेत्याहुः॥

ननु स्मृतिवदिदानींतनवेदविशेषो ऽपि वेदजन्यधीजन्य एवेति तत्राव्याप्तिः। शुकाद्युच्चरितस्मृतावतिव्याप्तिश्च। किं च भगवत्कृतवेदव्याख्याने ऽतिव्याप्तिः। संकेतग्राहकभगवद्वाक्ये ऽप्यतिव्याप्तिः। दृष्टार्थकायुर्वेदादावव्याप्तिः। तत्र सत्यन्ताभावात्। न च तस्य परमते वेदत्वेनोभयसिद्धादृष्टार्थकवेदमात्रस्य पक्षत्वमिति वाच्यम्। तथा सति सदि-

वेदार्थस्यानुमानादिविषयत्वे ऽप्यनुमानादेर्वेदोपजीवकत्वात्। स्मृतीनां भारतादि (३२) भागस्य च वेदसमानार्थकत्वे ऽपि शब्दजन्यधीजन्यत्वात्, वेदादर्थं प्रतीत्य तत्प्रणयनात्। (३३) सजातीयोच्चारणानपेक्षोच्चरित(३४) जातीयत्वं पौरुषेयत्वम्। (३५) आद्यभारतेपि तज्जातीयत्वान्न व्यभिचारः। अथ वा (३६) वेदत्वं सजातीयोच्चारणानपेक्षोच्चरितवृत्ति, (३७) प्रमाणतावच्छेदकवाक्य-

---

ध्यानैकान्तिकतापत्तेः। यदि च हेतुसंदेहेनैव तस्य दोषत्वं तदा वेदव्यक्तिविशेषस्यैव पक्षत्वेन सामञ्जस्ये सकलवेदसंग्राहकानिरुक्त्यनुपपत्तेः। अपि च वरादिजन्यवाक्यार्थज्ञानजन्यस्मृतावतिव्याप्तिः। वेदसमानार्थके व्युत्क्रमेण शुकाद्युदीरिते ऽतिव्याप्तिश्चेति।

अत्र ब्रूमः। नञ्व्यत्यासेन शब्दाजन्यवाक्यार्थज्ञानवत्कण्ठताल्वाद्युच्चरितजातीयत्वं शब्दजन्येत्याद्यर्थः। साजात्यमानुपूर्व्या बोध्यम्। यदि वरादिजन्यमपि वाक्यार्थज्ञानं तदा तदप्रयोज्यत्वमपि वाक्यार्थज्ञाने विशेषणम्। अत्र वाक्यार्थपदं स्मृतावतिव्याप्तिवारणाय। शब्दाजन्यत्वं च स्वविजातीयशब्दाप्रयोज्यत्वं, तेन नान्यतरासिद्धिः, न वा ऽतिप्रसङ्गः। अस्मन्मते तु विजातीयपदमुपरञ्जकम्। एवं च नेदानींतनवेदाव्याप्तिः। न च शुकाद्युच्चारितस्मृत्यादावतिव्याप्तिः। ईश्वरस्य तादृशवाक्यार्थज्ञानवत्त्वे ऽपि तदीयकण्ठाद्यनुच्चरितत्वात्। शुकादेस्तादृशवाक्यार्थज्ञानवत्त्वाभावात्। अत एव व्युत्क्रमेण शुकाद्युच्चरिते ऽपि नातिप्रसङ्गः। सहस्रशाखस्यापि वेदस्यापूर्व एव तात्पर्यम्। तदुक्तं, "वेदनाजनको वेदः" इति। वेदना चापूर्वप्रमा। तथा चार्थपदस्य तात्पर्यविषयपरतया न दृष्टार्थवेदाव्याप्तिः। संकेतग्राहके च दृष्टार्थे वाक्ये सत्यन्ताभावादेव नातिप्रसङ्गः। अदृष्टार्थकं च वेदभिन्नमीश्वरेण प्रणीतमित्यत्र प्रमाणाभावः। तत्कृतस्यादृष्टार्थकस्य सर्वस्यैव वेदत्वमित्याहुः॥

वस्तुतस्तु पक्षतावच्छेदकनिर्वचने तत्रातिव्याप्तिर्न दोषः। न चैवं सत्यन्तादेरतिव्याप्तिवारकस्य वैयर्थ्यं स्यादिति वाच्यम्। तथा सति लौकिकवाक्यस्मृत्यादेरपि पक्षान्तर्भूतत्वे ऽंशतः सिद्धसाधनप्रसङ्गात्। संप्रदायमतेनैवास्याभिधानात्। अन्यथा वाक्यमात्रस्य पक्षत्वे पक्षतावच्छेदकैक्ये ऽंशतः सिद्धसाधनानवकाशे ईश्वरसिद्धेरप्रत्यूहत्वात्। ईश्वरोक्तादृष्टार्थकवेदभिन्नवाक्याभ्युपगमे तत्र पक्षतावच्छेदकस्यातिप्रसक्तावपि न कोपि दोषः। अत एव तत्कृतवेदव्याख्याने ऽप्यतिप्रसक्तिर्न दोषः॥

अन्ये तु वेदाः केन चिद्व्याख्याता, महाजनपरिगृहीतत्वादित्यादीनां शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणत्वादर्थपदस्य तात्पर्यविषयपरतया व्याख्यानस्य वेदतदर्थबोध्यबोधकभावतात्पर्यकत्वाद्वेदव्याख्याने नातिप्रसक्तिरित्याहुः॥

तच्चिन्त्यम्। तदनुमानस्य स्वसमानाकारकप्रमित्यजनकत्वेनातत्प्रमाणतादवस्थ्यात्। अन्यथा वेदार्थे ऽपि तादृशानुमानविषयतया ऽसंभव एव स्यादिति। प्रतिभादिना शूद्रादिभिरुच्चरिते वेदसमानानुपूर्वीके तादृशवाक्ये वेदत्वमस्त्येवेति तत्र तेषां प्रत्यवायो ऽपीति ध्येयमिति दिक्। (३२) भागस्य चेति। अदृष्टार्थकस्येत्यर्थः। दृष्टार्थकस्य सत्यन्तेनैव निरास इति भावः। साध्यमाह। (३३) सजातीयेति। सजातीयपदं तादृश्यसिद्धये समानजातीयानुपूर्वीकशब्दपरम्, उच्चारणमनुसंधानं, वाक्यत्वं हेतुरेव वोच्चारणघटित इति न मौनिश्लोके व्यभिचारः। ननु योगिनोपि तथा संभवन्तीत्यर्थान्तरमिति चेत्, न। प्रतिसर्गं तस्य नानात्वे गौरवा,देकत्वे च तस्यैवेश्वरत्वात्। यद्यपि सरस्वतीसंवादादिना वरादिना च तथा संभवतीत्यर्थान्तरमेव। न च सहस्रशाखवेदस्य तादृशसंवादे मानाभाव इति वाच्यम्। एवमप्यंशतः सिद्धसाधनस्य दुरुच्छेदत्वात्, तथापि तद्भिन्नत्वेन विशेषणीयम्। पठ्यमानभारतादौ संप्रदायमते हेतुनिश्चये साध्यसंदेहे संदिग्धानैकान्तिकमिति जातीयपदम्॥ के चित्तु तादृशकण्ठताल्वाद्युच्चरितत्वं विवक्षितमिति पठ्यमाने वेदे बाधो भारते च व्यभिचार इत्यत उक्तं (३४) जातीयेति। (३५) आद्येति। तथाविधानुपूर्वीकत्वमेव सजातीयत्वं, न तु भेदघटितं साजात्यं निष्ठार्थो वा विवक्षित इति भावः। (३६) वेदत्वमिति। यद्यप्यत्रापि दैववशसंपन्नप्रज्ञासंवादाद्युत्पन्नवेदवृत्तितया ऽर्थान्तरं तथापि तद्भिन्नत्वेन विशेषणीयम्। एतदस्वरसेनैवाग्रिमानुमानमित्याहुः॥ (३७) प्रमाणतेति। ननु प्रमाणतावच्छेदकत्वं यदि प्रमाणमात्रवृत्तित्वं तदेदानींतनवेदत्वे व्यभिचारः। अथ तदवच्छित्तिप्रत्ययजनकत्वम्, इदानींतनवेदत्वं च न तथा, किं तु वेदत्वमात्रं लाघवात्, तदा ऽसिद्धिः। त्वदुक्तरीत्या स्मृतिसाधारणस्यैव रूपस्य लाघवेन तथात्वे शब्दजन्यवाक्यार्थज्ञानाजन्यत्वघटितवेदत्वस्यातथात्वापत्तेः। प्रमाणशब्दत्वमेव वेदत्वमिति तस्यैव तदनवच्छेदकत्वाच्चेति चेत्, न। स्वाश्रयसजातीयानुपूर्वीव्यापकधर्मस्य विवक्षितत्वात्॥ के चित्तु प्रमाणतावच्छेदकत्वं महाजनपरिग्राह्यतावच्छेदकत्वमिति। तच्चिन्त्यम्। महाजनपरिग्राह्यतावच्छेदकत्वं यदि तत्परिग्राह्यमात्रवृत्तित्वं, तदोक्तव्यभिचारतादव-

धर्मत्वात्, स्मृतित्ववत् । यद्वा (३८) वेदाः (३९) शब्दाजन्य (४०) वाक्यार्थगोचरयथार्थज्ञानजन्याः, प्रमाणशब्दत्वात्, (४१) भारतवत् । न च पठ्यमाने वेदे बाधो (४२) भारते मन्वादिस्मृतौ च व्यभिचारः । (४३) तेषां द्विकर्तृकत्वात् । (४४) तादृशज्ञानजन्यजातीयत्वं वा साध्यम् । (४५) तवाप्येतदभावादेव वेदे ऽपौरुषेयत्वव्यवहारात् । नन्वप्रयोजकमिदं, वाक्यार्थगोचरयथार्थज्ञानपूर्वकत्वमेव शब्दप्रामाण्ये तन्त्रं, न तु तादृशज्ञानस्य शब्दाजन्यत्वमपि, गौरवात् । (४६) अन्यथा वेदे ऽपि तव द्विकर्तृकत्वेन प्रामाण्यं स्यात्, लोके तथा दर्शनात् । (४७) एवं चानादिमीमांसासिद्धन्यायेनावगततात्पर्याद्वेदादर्थं प्रतीत्य पूर्वपूर्वाध्यापकेनोच्चारिताद्वेदादुत्तरोत्तरस्याध्ययनं तदर्थप्रतीतिरित्य(४८)नादितैव । अतः किं स्वतन्त्रपुरुषेण, तत्प्रयोजनस्य परतन्त्रादेव सिद्धेः । (४९) किं च पूर्वकालो न वेदशून्यः, कालत्वाद्, वर्त्तमानकालवत् । (५०) न चांशे बाधोंऽशे चाश्रयासिद्धिः, (५१) अंशत्वेनानुपादानात् । (५२) पूर्वकालो न वेदशून्य इत्युद्देश्यप्रतीतेरसिद्धेर्नांशतः सिद्धसाधनम् । (५३) तथा पूर्वकालीनं वेदाध्ययनं (५४) गुर्वध्ययनपूर्वकम्, (५५) अध्ययनत्वाद्, इदानींतनाध्ययनवत् । न च लिप्यनुमितवेदाध्ययनेन व्यभिचारः । लिपेरप्यध्ययनपूर्वकत्वात् । (५६) न चैवं भारताध्ययनमपि तथा स्यात् । (५७) तस्य भारतादावेव व्यासादिकर्तृकत्वेन कथनादिति । उच्यते । वेदप्रामाण्याधीनं तत्प्रामाण्यमित्या(५८)त्माश्रयः । न च पूर्ववेदप्रामाण्याधीनमुत्तरवेदप्रामाण्यमिति व्यक्तिभेदमादाय नात्माश्रय इति वाच्यम् । एवं तत्पूर्वस्यापि तत्पूर्वप्रामाण्यात् प्रामाण्यमित्यनवस्थानात् । (५९) अनादित्वादयमदोष इति चेत् । न । मूलभूतप्रमाणान्तराभावादन्धपरम्परापातात् । स्वतःप्रमाणं वेद एव सर्वत्र वेदे मूलमिति चेत् । न । सर्वेषामेव परवेदापेक्षत्वेन स्वतः प्रमाणत्वाभावात् । (६०) अत एवाचारात् स्मृतिः स्मृतेराचार इत्यत्र विश्वासबीजपरानपेक्षमूलभूतप्रमाणाभावादन्धपरम्पराभयेन तत्र वेदमूलकत्वकल्पना । (६१) अनादिमहाजनपरिग्रहादनादिवेदप्रवाहप्रामाण्यावधारणेपि

---

स्थम् । यदि च तदवच्छित्तिप्रत्ययजनकत्वं, तच्च नेदानींतनवेदत्वे, गौरवा,त्तदा पूर्वन्यायेनासिद्धिरिति । (३८) वेदा इति । पूर्वन्यायेन योगिज्ञानादिकमादाय नार्थान्तरम् । अध्यापकज्ञानजन्यत्वेनांशतः सिद्धसाधनवारणायाह । (३९) शब्दाजन्येति । शब्दाप्रयोज्येत्यर्थः । व्याप्तिग्रहार्थं शब्दपदम् । अध्यापकानुपूर्व्यादिज्ञानजन्यत्वेनार्थान्तरवारणायाह । (४०) वाक्यार्थगोचरेति । ईश्वरे भ्रमसिद्धावपि नेष्टसिद्धिरिति तादृप्यसिद्धये यथार्थपदम् । (४१) भारतवदिति । प्रत्यक्षमूलकाद्यभारतवदित्यर्थः । (४२) भारते । भारतविशेषे । (४३) तेषामिति । पक्षसमत्वाच्च दोष इति भावः । एवं चैतन्मते यत्किंचिद्वेदव्यक्तिविशेषपक्षत्वे ऽपीष्टसिद्धिरिति ध्वनितम् । (४४) तादृशेति । शब्दाजन्यवाक्यार्थज्ञानेत्यर्थः । नन्वेवमपि मन्वादिस्मृतौ व्यभिचार एव । यदि चाधुनिकमतेनेदं, तत्र च पक्षसमे व्यभिचारो न दोषस्तदा जातीयत्वघटितसाध्यवैयर्थ्यमिति चेन्नैवम् । संप्रदायमतेनैवेदम् । साध्ये शब्दपदं सजातीयशब्दपरम्, अतो नोक्तव्यभिचार इति । नन्वेवमपि पौरुषेयत्वं न सिद्धमित्यत आह । (४५) तवापीति । तथा चैतदेव पौरुषेयत्वमिति भावः । नन्वन्यत्र तथा दृष्टत्वाद् वेदे ऽपि तथा स्यादित्यत आह । (४६) अन्यथेति । दर्शनमात्रपुरस्कारइत्यर्थः । एवमपि कथं नेश्वरसिद्धिरित्यत आह । (४७) एवं चेति । नन्वेवमनवस्थेत्यत आह । (४८) अनादितैवेति । नन्वनादितैवासिद्धेत्यत आह । (४९) किं चेति । ननु वेदशून्यः प्रलयादिकालो यदि पक्षत्वेनाभिमतस्तदा बाधः, यदि च वेदवानेव कालस्तदा सिद्धसाधनं, तथा च संदेहघटितपक्षत्वाभावादाश्रयासिद्धिरित्याशङ्क्य निराकरोति । (५०) न चेति । (५१) अंशत्वेनेति । अन्यथा साध्यतदभाववतः पक्षत्वइत्यादिना ऽनुमानमात्रोच्छेद इति भावः । नन्वेवमप्यंशतः सिद्धसाधनं स्यादेवेत्यत आह । (५२) पूर्वेति । पक्षातिरिक्तस्यैव दृष्टान्ततेत्यभिप्रेत्य पूर्वपदम् । वेदाध्ययनस्याप्यनादित्वं साधयति । (५३) तथेति । सर्गान्तरवेदाध्ययनपूर्वकालत्वेन सिद्धसाधनमित्यत उक्तं, (५४) गुर्विति । स्वरूपनिर्वचनं तदित्यन्ये । (५५) अध्ययनत्वाद्,वेदाध्ययनत्वादित्यर्थः । प्रातिभवेदाध्ययनाद्यन्यत्वेन विशेषणीयं, तेन न व्यभिचारः । प्रतिबन्दीमाशङ्कते । (५६) न चैवमिति । (५७) तस्येति । भारतस्येत्यर्थः । तथा च बाधाच्च तथेति भावः । (५८) आत्माश्रय इति । वेदजन्यवाक्यार्थप्रमाया एव वेदजन्यप्रमाहेतुत्वादित्यर्थः । (५९) अनादित्वादिति । बीजाङ्कुरवदिति भावः । (६०) अत एवेति । यत एव परापेक्षत्वेन न स्वतः प्रामाण्यमत एव स्मृत्यादावन्धपरम्पराभयेन मूलत्वेन वेदः कल्प्यतइत्यर्थः । नन्वन्धपरम्परायाता ऽप्रामाण्यशङ्कैव, सा च महाजनपरिग्रहादेव निरस्येत्यत आह । (६१) अनादीति । प्रामाण्यनिर्वाहकाभावे जातमपि प्रामाण्यावधारणमप्रामाण्य-

तन्निर्वाहकेतरानपेक्षमूलभूतप्रमाणाभावेनानाश्वास एव । अन्यथा स्मृत्याचारयोरप्येवं प्रामाण्यावधारणे प्रमाणान्तरमूलकल्पना न स्यात् । (६२) तस्मादाश्वासबीजपरानपेक्षेश्वरप्रत्यक्षमूलकत्वादेव वेदस्य प्रामाण्यं महाजनपरिग्रहादवधार्यते । एतेनानुमानमपि निरस्तम् । (६३) मूलभूतप्रत्यक्षं विना वेदप्रामाण्यानुपपत्त्या साध्याभावसिद्धौ बाधात् । (६४) ननु वेदो न पौरुषेयो ऽस्मर्यमाणकर्तृकत्वादिति बाधकमस्त्विति चेत् । न । (६५) कपिलकणादगौतमैस्तच्छिष्यैश्चाद्यपर्यन्तं वेदस्य सकर्तृकत्वस्मरणस्य प्रतीयमानत्वात् । न च (६६) मूलभूतानुभवाभावात्स्मरणानुपपत्तिः । पौरुषेयत्वानुमानादेवानुभवात् । अस्मरणमेव तत्र बाधकमिति चेद्, न । एवं सत्यस्मरणाननुभवयोरन्योन्याश्रयात् । अग्रे तदर्थस्मरणाभावे ऽपि प्रमाणस्यानुभावकत्वात् । नहि भाविस्मरणमपेक्ष्य प्रमाणमनुभावकम् । (६७) "तस्मात्तपस्तेपानाच्चत्वारो वेदा अजायन्त" "ऋचः सामानि जज्ञिरे" इति कर्तृश्रवणाच्च ।

"प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयते"

इत्यादिकर्तृस्मरणाच्च । पौरुषेयत्वे बाधकं विना (६८) ऽर्थवादमात्रत्वस्य वक्तुमशक्यत्वात् ।

(६९) स्वयंभूरेष भगवान्वेदो गीतस्त्वया पुरा ।
शिवाद्या ऋषिपर्यन्ताः स्मर्तारो ऽस्य न कारकाः ॥

इति महाभागवतपुराणीयवाक्यस्य (७०) श्रुतिविरोधेना(७१)न्यत्र तात्पर्यात् । न च कार्यपरमेव प्रमाणम् । कर्तृस्मरणस्य (७२) सर्वत्राविध्यर्थत्वात् । (७३) सकर्तृत्वार्थवादस्य स्वर्गनरकार्थवादस्येवेश्वरमुपासीतेति विधिशेषत्वाच्च । (७४) साधयिष्यते च सिद्धार्थस्य प्रामाण्यम् । न चै (७५) वमानन्दो ऽपीश्वरे स्यादिति वाच्यम् । (७६) तत्र मानान्तरविरोधात् । (७७) पुरुषस्य भ्रमप्रमादादिभूयिष्ठत्वेन वेदे ऽनाश्वास इति चेत्, न । धर्मिग्राहकमानेन (७८) नित्यसर्वज्ञत्वेन सिद्धे तत्र दोषाभावादिति । ननु तथा ऽप्यप्रयोजकं पौरुषेयत्वानुमानं, नित्यनिर्दोषत्वेनैव तत्प्रमाणत्वोपपत्तेरिति चेत्, न । वर्णानामनित्यत्वेन तत्समूहस्य सुतरामनित्यत्वात् । न च

---

शङ्काऽऽस्कन्दितमेवेत्यर्थः । प्रामाण्यानुमितिहेतुव्याप्तिज्ञाने ऽप्यप्रामाण्यशङ्कया तदवधारणमेव नेत्यर्थ इत्यन्ये । एवं च पूर्वोक्तानुमाने तर्को ऽयमिति भावः । (६२) तस्मादिति । ननु यदि निर्वाहकाभावे प्रामाण्यावधारणं महाजनपरिग्रहादपि नास्ति तदा प्राक् प्रमाणशब्दत्वमपि दुर्ग्रहम् । तथा च पक्षहेत्वोरसिद्धिः । तस्मादनन्यगत्या महाजनपरिग्रहादेव प्रामाण्यावधारणं स्वीकरणीयम् । तथा च कृतो ऽन्धपरम्परा । लाघवाच्च यथार्थवाक्यार्थज्ञानादेव प्रामाण्यम् । स्मृत्याचारस्थले ऽप्यविनाभावाच्चेदमनुमानमित्यग्रे स्फुटमेवेति चेत्, मैवम् । प्रलये पूर्ववेदोच्छेदादीश्वरप्रत्यक्षमूलकत्वादेव प्रामाण्यं वेदस्य प्रलयवेदानित्यत्वादिकं च साधयिष्यते, तदवष्टम्भेन चैतदुक्तमिति ध्येयम् । अत एव स्मृत्याचारयोरपि तत एवेश्वरप्रणीतवेदमूलकत्वमिति वक्ष्यति । अनुमानं पूर्वकालइत्यादि । एतेनेत्यस्यातिदेश्यमाह । (६३) मूलेति । ईश्वरप्रत्यक्षोत्तरकालीनत्वेन नानादित्वमिति भावः । सत्प्रतिपक्षं शङ्कते । (६४) नन्विति । स्वरूपासिद्धत्वेन हीनबलत्वाद् न तथात्वमित्याह । (६५) कपिलेति । (६६) मूलेति । तथा च नासिद्धिरिति भावः । इतो ऽप्यसिद्धिरित्याह । (६७) तस्मादिति । यद्वा ऽनुभवोत्पत्तौ प्रकारान्तरमाह । तस्मादिति । वेदपौरुषेयत्वपक्षे वेदमपि प्रमाणयति । तस्मादितीत्यन्ये । (६८) अर्थवादमात्रत्वस्येति । स्तुतिमात्रत्वस्येत्यर्थः । बाधकमाशङ्कते । (६९) स्वयंभूरिति । (७०) श्रुतीति । औदुम्बरीं स्पृष्ट्वोद्गायतीतिप्रत्यक्षश्रुतिविरोधेन सर्वौदुम्बरी वेष्टयितव्येति स्मृतेर्यथा यथाश्रुतार्थबाधः कल्प्यते तथेहापीत्यर्थः । (७१) अन्यत्रेति । विशिष्यास्मदाद्यनुभूयमानजन्मसमयशून्यत्वमेव स्वयंभूत्वम् । गीतः, प्रणीतः । शिवाद्यास्तत्प्रणीतवेदस्मर्तारः परं न कारकाः, न स्वतन्त्रकारका इत्याद्यावित्यर्थः । शिव ईश्वरभिन्न एव । अतद्गुणसंविज्ञानो वा बहुव्रीहिरित्याहुः । (७२) सर्वत्रेति । तथा च रघुकाव्यादेरपि अस्मर्यमाणकर्तृकत्वेनाकर्तृकत्वं स्यादिति भावः । ननु तत्र मानान्तरमप्यस्तीत्यत आह । (७३) सकर्तृकत्वेनेति । कार्यपरमेव प्रमाणमित्यसिद्धमित्यत आह । (७४) साधयिष्यते चेति । (७५) एवम् । सिद्धार्थस्यापि प्रामाण्ये । "नित्यं विज्ञानमानन्दं ब्रह्म" इतिश्रुतेरित्यर्थः । (७६) तत्रेति । आनन्दस्य धर्मजन्यत्वनियमग्राहकमानविरोधादित्यर्थः । आनन्दश्रुतिश्च संसारिपरेति भावः । विपरीतमनाश्वासमाशङ्कते । (७७) पुरुषस्येति । (७८) नित्येति । नित्यत्वे सति निर्दोषत्वं प्रामाण्यप्रयोजकं, विसंवादिशुकादिवाक्ये निर्दोषत्वेपि नित्यत्वाभावाद्विशिष्टव्यतिरेक इति वदन्ति । तन्न । एवं हि लौकिकवाक्यस्य प्रामाण्यं न स्या,दनित्यत्वात्, तस्मान्नित्यत्वं

तदसिद्धम् । (७६) तथाहि, वर्णात्मकशब्दो ऽनित्यः, समवेतत्वे सत्युत्पत्तिमत्त्वात्, घटवत् । (८०) न च हेत्वसिद्धिः । उत्पन्नो गकारो हट्टायामुत्पद्यमानोऽस्ति कोलाहल इति प्रत्ययात् । न च व्यञ्जकाभावात् प्रागनुपलब्धस्योपलब्धिमात्रं तस्य । उत्पन्नो गकार इति प्रत्ययात् । न चायं (८१) सोपाधिकः । (८२) अन्योत्पत्तावगृह्यमाणायामपि तदनुभवात् । न च स्मर्यमाणारोपो, बाधकाभावात् । (८३) अन्यथा घटोत्पत्तिरपि न सिद्ध्येत् । (८४) यत्तु श्रोत्रानुविधानात् (८५) पदं शृणोमीत्यबाधितानुव्यवसायाच्छ्रोत्रादन्येन ग्रहीतुमशक्यत्वात् श्रोत्रग्राह्यैवानुपूर्वी, (८६) सा च घसमानकालप्रागभावप्रतियोगित्वं टस्येति, प्रागभावप्रतियोगित्वमुत्पत्तिमत्त्वं वर्णस्य प्रत्यक्षमिति, तन्न । (८७) घटज्ञानानन्तरज्ञानविषयत्वं टस्यानन्तर्यं तयोरानुपूर्वी, सा च (८८) मनसैव गृह्यते, घटपटज्ञानयोरिव, (८९) तदुपनीता च श्रोत्रविषयः ॥

---

निर्दोषत्वे हेतुतयोक्तम् । अनित्यस्यैव वक्तृदोषसंभवादिति । विसंवादिशुकादिवाक्ये योग्यताभ्रमस्यापि दोषत्वान्निर्दोषत्वमेव नास्तीत्यत्र तात्पर्यम् । एतन्मते आनुपूर्वीविशिष्टवेदस्य नित्यत्वम् । अन्यथा वर्णनित्यत्वाभ्युपगमे लौकिकवाक्यमनित्यं वेदो नित्य इति विभागो न स्यादिति ध्येयम् । (७९) तथाहीति । वर्णात्मक इति संप्रदायमतेनांशतः सिद्धसाधनवारणाय वर्णपदवाच्यपक्षताभिप्रायेण रूपादिना ऽर्थान्तरं मा भूदिति शब्दपदम् । अनित्यत्वं च ध्वंसप्रतियोगित्वं, ध्वंसत्वं च ध्वंसपदवाच्यत्वं, तेन न परमते ध्वंसाप्रसिद्ध्या साध्याप्रसिद्धिः । सत्यन्तं स्वमतावष्टम्भेन, तद्व्यावर्त्यध्वंसस्य परैरनङ्गीकारात् । (८०) न चेति । उत्पत्तिमत्त्वासिद्ध्या विशिष्टहेत्वसिद्धिरित्यर्थः । (८१) सोपाधिक इति । भ्रम इत्यर्थः । अनुभूयमानारोपो नायमित्याह । (८२) अन्येति । (८३) अन्यथेति । यदि बाधकं विना ऽप्युत्पत्तिप्रत्ययो भ्रमस्तदेत्यर्थः । एकदेशिनो हेत्वसिद्ध्युद्धारमाशङ्क्य निराकरोति । (८४) यत्त्विति । (८५) पदमिति । आनुपूर्वीविशिष्टस्यैव पदत्वादिति भावः । (८६) सा चेति । नहि तत्तद्वर्णमात्रमानुपूर्वी, जराराजेत्यादावविशेषप्रसङ्गादिति भावः । एवं चोपनीतं कालादि भासते, प्रागभावश्च श्रोत्र इत्येकदेशमादाय श्रोत्रग्राह्यैवेत्युक्तमिति ध्येयम् । ज्ञानसामान्यसामग्रीमर्यादया ऽनुपनीतोऽपि कालादिर्भासतइत्यन्ये । (८७) घज्ञानेति । मौनिश्लोकानुरोधादिति भावः । नन्वीश्वरोक्तवेदे का गतिस्तज्ज्ञानस्यैकत्वेनानन्तर्याभावादिति चेत्, न । आनन्तर्यमव्यवधानं, तस्य च स्वस्मिन्नपि सत्त्वादित्येके । परमतेनोक्तत्वादित्यपरे । ननु तथापि यन्त्रोत्थिते बधिरोक्ते वाक्ये केनाप्यश्रुते कथमानुपूर्वीति चेत् । न कथं चिदित्येके । तद्योग्यत्वादित्यपरे । यद्यप्यस्याः श्रोत्रग्राह्यत्वेऽपि नानिष्टं, तथापि श्रोत्रग्राह्यैवेति परोक्तमसहमान आह । (८८) मनसैवेति । तर्हि पदं शृणोमीति कथमित्यत आह । (८९) तदुपनीता चेति । यद्यपि तदुपनयपर्यन्तं क्षणिकचरमवर्ण एव न स्थिर इति विशेष्याभावे कथं श्रोत्रविशिष्टधीस्तथापि वीचीतरङ्गन्यायेन नानावर्णोत्पत्त्या चरमवर्णे पूर्ववर्णघटितसंबन्धेन विशेषणज्ञानोत्पत्त्या स्मर्यमाणानुपूर्वीविशेषणकविशिष्टधीसामग्र्या वा तथा संभव इत्याहुः ॥

---

## ॥ अथ गोपाललीलाख्यकाव्यस्य ॥

॥ अष्टादशसर्गारम्भः ॥

संवर्तघोरघनघोषणभीषणोऽथ
ध्वानः शरासनविकर्षणभङ्गजन्मा ।
मङ्क्षु न्यविक्षत हठादिव पाटयिष्यन्
वक्षस्तटं क्षितिपतेः श्रुतियुग्ममार्गे ॥ १ ॥

बाहूत्तरङ्गमतिमङ्गलभङ्गयुग्मं
गङ्गापतङ्गतनयाजलसङ्गमेव ।
मत्वा परे नृपभटाः परमारभट्या
मङ्क्षु तमेत्य फलमापुरपूर्वमाशु ॥ २ ॥

आसाद्यतां त्वरितमाद्रियतां स सम्यगाबध्यतां दृढमपाक्रियतामुतेति ।
तान् जल्पतः सपदि तावपि धन्वखण्डावादाय जघ्नतुरतुल्यबलौ बलेशौ ॥ ३ ॥

आरुह्य हर्म्यमतितुङ्गमथारुरुक्षुः
स्वर्गस्य मार्गमिव वीक्षितुमक्षतारिः ।
कंसो बलं प्रहितवानतिभूरि तत् तौ
विघ्नं निजघ्नतुरिवेश्वरकर्मणा द्राक् ॥ ४ ॥

यद्यप्यशस्त्रनिहतं तदपि क्षणेन
त्यक्तासु मुक्तिपथमाशु विनिन्यतुस्तौ ।

कुत्रैनयोर्बत भिदा त्रिजगन्निदान-
भूतात्मनोः स्वपरतामतिमूलमत्र ॥ ५ ॥

विच्छेदनोच्छलिततच्छिरसां छलात् ता-
वुच्छालनां विदधताविव कन्दुकानाम् ।
हर्म्यान्निरीक्ष्य नुनुवुर्महदुग्रकर्म
शर्माग्र्यवाप मथुरापुरवासिवर्गः ॥ ६ ॥

रित्ताद्धनुर्मखगृहादथ निर्गतौ तौ
साकं निजैरहितहेतिभिरक्षताङ्गैः ।
दृष्ट्वा श्रुताद्भुतकथा जनतेतरापि
वीक्ष्य स्वरूपममराविति मन्यते स्म ॥ ७ ॥

रथ्यामथो समुपगत्य पथा पुरस्य
तौ चेरतुस्त्रिदिवसंपदमीक्षमाणौ ।
पुष्यैणनाभिघनसारपटीरवीथी-
सौरभ्यसंभृतिभृता मरुतातितुष्टौ ॥ ८ ॥

सायन्तनाः सुरभयः शिशिराः समीरा
मन्दं ववुः श्रममहर्जनितं क्षिपन्तः ।
प्राणानिला इव रणेऽभिमुखं व्यसूनां
प्राप्ताः प्रवेष्टुमनयोर्वदनेन्दुबिम्बम् ॥ ९ ॥

निर्णीय कंसवधमप्यचिरेण धन्व-
ध्वंसेन चापगृहरक्षिभटक्षयाच्च ।
द्वीपान्तरस्थितजनाय सहस्रभानु-
राख्यातुकाम इव वृत्तमगात् कुतश्चित् ॥ १० ॥

धाम्नां निधावपि गतेऽस्तमयं गभस्ति-
मालिन्यथाघमथनस्य रुचैव रथ्याः ।
प्राप्ताः प्रकाशमिह किंनु विचित्रमेत-
द्भासैव विश्वमखिलं खलु यद्विभाति ॥ ११ ॥

शश्वत् कृतेन विधिना श्रवणादिनापि
योगीन्द्रचक्षुरपि यं न करोति साक्षात् ।
तद् ब्रह्म वीक्ष्य मथुरापुरवासिनस्ते
मुक्ता इव प्रमदपूर्णतया बभूवुः ॥ १२ ॥

दम्भोलिदण्डनिभमुत्सवि धन्वखण्ड-
द्वन्द्वं दधद्यमलुलायविषाणभीमम् ।
कंसाभिलाषतरुभञ्जनलब्धदारु-
कल्पं स्वविक्रमकुटाङ्कुरसाम्यकाम्यम् ॥ १३ ॥

सायन्तनं सपदि ताः प्रतिकर्मणोऽपि
निर्माणमाशु परिहृत्य मिलद्गवाक्षाः ।
भूयोऽनुरथ्यमबलाः शतशः समीयु-
र्भ्रातृद्वयं पुरुषरत्नमुदीक्षितुं तत् ॥ १४ ॥

युग्मम् ।

मन्दं मिथो जगदुरित्थमथेक्षमाणा
जाताः कृतार्थजनुषो वयमेनमेत्य ।
याः शीलयन्ति वदनाम्बुजमस्य नित्यं
गोप्यस्तदीयसुकृतानि कथं वदामः ॥ १५ ॥

अस्यैव सेवकतया त्रिदिवं भुनक्ति
शक्रश्चिराय निजधाम पितामहश्च ।
जानन्नपि स्वजनतानिधनेन देवं
कृष्णं कथं भजति भोजपतिर्न मूढः ॥ १६ ॥

धृष्टो रणे भवति मेष इवैष राजा
यस्मात् सदा विमुखतामयमेति युद्धे ।
तत्रैव चित्रमयमादृतकृष्णवर्त्मा-
प्यासीच्चिराय यदनादृतकृष्णवर्त्मा ॥ १७ ॥

तद्धाम यद्धरणिमण्डलमम्बरं च
व्याप्तं दिशो दश विभासयति स्वभावात् ।
छद्मात्तविग्रहममुं पुरुषं पुराणं
विद्मस्ततः क्व नु मनुष्यजनैः प्रमेयम् ॥ १८ ॥

क्षाम्येदपि स्वचरणग्रहणेन यस्तं
पूर्वापराधमयमात्मनिवेदनेन ।
तस्येहते बत हरेर्हतधीर्नियत्या
तन्मन्महे जगति कालगतिं दुराशाम् ॥ १९ ॥

कुलकम् ।

रथ्यास्विति श्रुतिसुखा बलदेवकृष्णौ
श्रुत्वा मुहुः पुरपुरन्ध्रिगिरः प्रहृष्टौ ।
पौराङ्गनाः सकरुणं दृशमापयन्तौ
यातः स्म तौ स्वशिबिरं सहितौ सुहृद्भिः ॥ २० ॥

गोपीभिरूहितमशेषमवाप्य कृष्ण-
दृष्टिप्रसादमकथि स्वजरत्पुरस्तात् ।
प्रादर्शि कंसधनुषः शकलद्वयं तत्
ताभ्यां पुरो निजजनस्य यशोऽङ्कुराभम् ॥ २१ ॥

दृष्टं पुरे कुतुकमेतदिति ब्रुवद्भिः
साकं स्वकैः स्वचरितान्यनुवर्णयद्भिः ।
धौताङ्घ्रिरुष्णपयसाभ्यवहृत्य सार्धं
रामेण तूर्णमशयिष्ट स पूर्णबोधः ॥ २२ ॥

वज्राहतप्रभ इवासहनश्चिराय
श्रुत्वा स्वधन्वगृहरक्षिभटव्ययं च ।
कंसस्तथा स रजनीं समजागरीत् तां
दीर्घां सुषुप्सुरगमद्दिवसे यथायम् ॥ २३ ॥

स द्वित्वमैक्षत दिवि ग्रहतारकादेः
शुश्राव घोषमपि नाशु समीरणस्य ।
नालोकयन्निजपदानि महीतले च
न स्मेक्षते किल शिरो मुकुरादिकेऽपि ॥ २४ ॥

पीतप्रभामचकलच्च महीरुहेषु
स्वच्छायमाकलितरोकमलोकत द्राक् ।
प्रेतैः समागममपि स्वसुखाप्तिकाले
यानं खरेण विषभक्षणमीक्षते स्म ॥ २५ ॥

ग्रस्तः स कालफणिना किल जागरादौ
दृष्ट्वा निमित्तमपरं प्रथमोदितं च ।
कृष्णो जिघांसुरजनीति भयाद्दुरन्तां
चिन्तामवाप निजमृत्युभ्रुगेष पापः ॥ २६ ॥

जेष्यन्तमीशमहितं सहितं सपक्षै-
र्भास्वान् दिदृक्षुरिव पूर्वगिरेरुदस्थात् ।
कंसो विकर्तनमुदीतमुदीक्ष्य मल्ला-
नुल्लासिनः समजुहावदथाहवज्ञान् ॥ २७ ॥

भेर्यादितूर्यनिकरेषु नदत्सु रङ्गे
नर्दत्सु मल्लपरिषत्प्रवरेषु दोर्भिः ।
कंसानुगा वसनवर्णविचित्रकेतु-
स्रक्तोरणैरलमकार्षुरतीव मञ्चान् ॥ २८ ॥

स्तम्भच्छदादिसमवर्णपटस्फुटाङ्गै
रम्भामहीरुहमनोहरपत्त्रजालैः ।
ताम्बूलचन्द्रमृगनाभिविलेपधूपै-
र्नानाविधास्तरणशालिभिरासनैश्च ॥ २९ ॥
युग्मम् ।

कैलासशृङ्ग इव सद्रुचिनन्दितोऽथ
मञ्चे महार्हरुचिरास्तरणार्हणाढ्ये ।
गङ्गातरङ्गनिभचामरवीज्यमानः
कंसो विषादत उपाविशदुग्रमूर्तिः ॥ ३० ॥

पौरान् जनान् क्वचन जानपदान् स मञ्च-
राजौ न्यवीविशदनुक्रमतो द्विजादीन् ।
राज्ञः स्वपार्श्वयुगले परिचर्ययाप्ता-
नत्यन्तिके च हितमन्त्रिगणं निजास्त्रम् ॥ ३१ ॥

वाराङ्गनाः सनिजगायननृत्यवर्गा
मञ्चेषु सार्गलतया न्यविशन्त हृष्टाः ।
सद्वन्दिसूतगणचारणवैणिकाद्या
विद्याविशेषविदिता मुदिताः कुतश्चित् ॥ ३२ ॥

कैलासकूटसदृशाः परितः शरीर-
मुच्चावचप्रचुरचन्दनचर्चयाढ्याः ।
तत्रासते स्म सदलंकृतयः स्वरङ्गे
चाणूरमुष्टिकमुखा निकटे नृपस्य ॥ ३३ ॥

आस्फोटितोद्भटभुजस्फुटदीर्घदर्प-
स्फूर्तिस्फुरत्तरमुखाः शलतोसलाद्याः ।
सूचाभिनद्धचतुरङ्गुलिपाणयः स्वं
प्राणंसिषुर्गुरुमुदश्करा महोग्राः ॥ ३४ ॥

नन्दादयोऽपि चिरसंचितगोरसाद्यान्
कुम्भान् निवेद्य नृपतेरुपदां पुरस्तात् ।
आनम्य सम्यगवनीशमनादरेण
पश्यन्तमासत शनैः क्वचिदेकमञ्चे ॥ ३५ ॥

रम्या सभा बलरिपोरिव सा चिराय
त्रैलोक्यनाथमनवाप्य कृतप्रतीक्षा ।
दम्भेन मल्लबलदुन्दुभिघोषणस्य
स्वं नायकं हरिमिवाह्वयति स्म तूर्णम् ॥ ३६ ॥

निन्दां निजां जगति मातुलघातपापात्
संशोध्य पूर्वदितिजक्षयधन्वभङ्गैः ।
दर्पोल्लसत्प्रबलमल्लमहध्वनीनां
तुष्टः श्रुतेः सहबलो हरिराजगाम ॥ ३७ ॥

कंसापकीर्तिमिव मूर्तिमतीं स रङ्ग-
द्वारे मतङ्गजमलोकत शैलकल्पम् ।
आधोरणं स्वमभि तं प्रणुदन्तमुच्चै-
राह स्म सस्मयमिति प्रतिबद्धवाणः ॥ ३८ ॥

रे हस्तिपाल सरणिं किमु नौ रुणत्सि
दन्तावलं त्वमपसारय वर्त्मनोऽस्मात् ।
नो चेद्भवन्तमिभमप्यहमन्तकस्य
कर्तातिथिं किमु तियौः कतिचिन्न जीवेः ॥ ३९ ॥

श्रुतवानिति दैत्यवैरिणः
स गिरं द्रागगजमुग्रमभ्यमुम् ।
क्षयवात इवाञ्जनाचलं
नुदति स्माशु करीन्द्रपालकः ॥ ४० ॥

अभ्यधावदथ वेगतः करी
तं द्रुतं निजकरेण चाग्रहीत् ।
पुष्कराद्विगलितोऽलिपङ्क्तिवत्
तं पदेषु हतवान् न्यलीयत ॥ ४१ ॥

स जंगमं गिरिमिव हस्तिपुंगवं
प्रजिघ्नतं भुवमविभाव्य शार्ङ्गिणम् ।
अतिक्रुधं मृधमधि लब्धविक्रमं
करे हरिर्विनिहतवान् विनिर्गतः ॥ ४२ ॥

अदम्भनागसंभवप्रणीतकुम्भसंभृतिं
प्रवृत्तकंसयामिनीमुखस्फुरत्तमोनिभम् ।
इभं तमन्तिके हरिश्चरन्तमाशु धन्वनां
चकर्ष पञ्चविंशतिं सलीलमात्तवालधिः ॥ ४३ ॥

अमर्षणं क्षोभमवापितं गजं
गलन्मदं देहविवर्तनोद्यतम् ।
अविभ्रमन्मङ्क्षु स वामदक्षिण-
प्रकर्षणैर्बालमिवाखुमर्भकः ॥ ४४ ॥

पुनरपि हरिः पुच्छे धृत्वा तथेभमबिभ्रम-
द्बहु कुवलयापीडश्चक्राकृतिः समभूद्यथा ।
स्वयमपि बभौ मध्ये कल्पद्रुमाकृतिरीश्वरः
सकलफलदः कृष्णावालः शुभैरसिताश्मभिः ॥ ४५ ॥

नयनयुगलमस्य ब्रध्नचन्द्रौ विजेतुं
भुवि तिमिरबलानि प्रायशो वेष्टयन्ति ।
करदृढधृतपुच्छे शार्ङ्गपाणाविभेशं
भ्रमयति दिवि देवैरित्थमाशु व्यतर्कि ॥ ४६ ॥

भूरिभ्रमाद्वलयितं करनिर्यदस्र-
संसिक्तभूमिमभितस्तरसोपकृष्णम् ।
दन्तावलं कलयतां भुवि पद्मराग-
नीलाश्मनिर्मितमहीकटकभ्रमोऽभूत् ॥ ४७ ॥

धरणिमण्डले चण्डविक्रमं
भ्रमयतीश्वरे वैरिवारणम् ।
अकलि दैवतैः कापि वापिका
मणिसितेतरग्रावनिर्मिता ॥ ४८ ॥

अम्भोजकैरवसुहृन्नयने मुकुन्दे
दन्तावलं भ्रमयति प्रसभात्तपुच्छे ।
दैवैरतर्कि परिधिः स कुलालचक्र-
तुल्योऽसितारुणमणिक्षितिकुण्डलश्रीः ॥ ४९ ॥

पयसि सागरसेतुविभञ्जने
दशरथात्मजचापकृतो भ्रमः ।
अनुकृतो धृतवालधिमाधव-
भ्रमितगाचरयान्नृपहस्तिना ॥ ५० ॥

मिलिताखिललोकनन्द्यमानो
भगवान् नागमबिभ्रमत् तथाभ्रे ।
युगपत् क्षितिभारभूपहत्यै
भ्रमितोग्रस्वरथाङ्गभृद्यथाभात् ॥ ५१ ॥

ईशोऽञ्जनाद्रिजवियद्वितताग्रवात्या-
चक्राकृतिर्भ्रमितभूपतिकुम्भिराजः ।
वैरिप्रतापतपनातपतोऽवनाय
स्वानां बभौ दधदिवासितमातपत्रम् ॥ ५२ ॥

रभसोद्धृताद्रिरिव पूर्ववन्निजैः
सह शक्रधन्ववलयाभ्रवत् सुरैः ।
मुखनागसंभवमनःशिलादिभृ-
द्रिपुवारणभ्रमणतोऽकलि प्रभुः ॥ ५३ ॥

कलिन्दजेवादिविहारसाक्षिणी
प्रदक्षिणीकृत्य दिवः पथागता ।
निवेदयन्ती व्रजयोषितां गतिं
रराज कृष्णभ्रमितो मतङ्गजः ॥ ५४ ॥

व्यपोथयन्मधुमथनोऽथ भूतले
नृपद्विपं शिशुरिव बालशूकरम् ।
पुरो हरिः सपदि समुत्थितस्य यन्
प्रधावतः स्वमनु ततोऽपतन्निभात् ॥ ५५ ॥

द्विरदः स रदद्वयेन भूमिं
न गतः प्राप तमापदच्युतोऽथ ।
विनिहत्य करं निपात्य दन्तं
द्रुतमुत्पाट्य जघान साधिरोहम् ॥ ५६ ॥
यशस इव करीन्द्रद्रोहबीजाद्रुजाग्रा-
दुदितमुपरि बिभ्रद्गौरमङ्कुरमेकम् ।
इति विनिहतहस्ती स्कन्धमानीय दन्तं
बलसुहृदथ रङ्गं प्राविशत् पद्मनाभः ॥ ५७ ॥

इति श्रीमल्लक्ष्मणभट्टात्मजश्रीरामचन्द्रभट्टविरचिते गोपाललीलाख्ये महाकाव्येऽष्टादशः सर्गः ॥ १८ ॥ :: ॥

---

## ॥ अथ गोपाललीलाख्यकाव्यस्य ॥

॥ एकोनविंशसर्गारम्भः ॥

अकलयदथ नागं क्षोणिपालः स्वकीयं
महिषमिव यमस्य स्वप्रतीहारसुप्तम् ।
स्वविधिपवननीतेनेह कृष्णाम्बुदेन
प्रशमितमिव दीप्तस्वप्रतापाग्निकूटम् ॥ १ ॥
सपदि विहितरङ्गद्वारमातङ्गभङ्गं
सह निजयशसेव प्राप्तमेत्याग्रजेन ।
अमत नृपतिरात्मप्राणवातान् पिपासुं
विजहतमिव पश्चात् कञ्चुकं कृष्णसर्पम् ॥ २ ॥
मुररिपुमुखचन्द्रामन्दसौन्दर्यमुह्य-
द्दृढ उदभवदन्तर्विस्मयस्तत्सभायाः ।
मधुरिमगुणधार्ष्ट्यापूर्णतारुण्यधार्ष्ट्या
मिथ इति मुहुरासीत् सुप्रलापश्चिराय ॥ ३ ॥
परमपुरुष एष स्वेच्छया प्राप्तदेहः
कलयत बलदेवं तिग्मभासं तदंशम् ।
क्षितिभरनृपसंघं हन्तुकामः सरामः
स्वयमिह वसुदेवस्यालये प्रादुरासीत् ॥ ४ ॥
अयमजनि पुरेऽस्मिन् देवकीतः पुरा द्रा-
गमुमथ जनकोऽस्य प्रापिपन्नन्दगोष्ठम् ।
इयदवधि समागात् तत्र वृद्धिं विपक्षै-
रविदित इव साक्षादामयः क्षामयन्नः ॥ ५ ॥
अवधि सपदि बाल्ये पूतना येन गोष्ठे
व्यवृतदपि किल नः शीघ्रमस्याङ्घ्रिघातात् ।
अरुधदनु च वात्यारूपदैत्यस्य कण्ठं
य इह लघु बकस्यापाटयत् त्रोटियुग्मम् ॥ ६ ॥
अयमिह भुवि धन्योऽभञ्जयद्योऽर्जुनद्रू
झटिति महति ताले धेनुकोऽक्षेपि येन ।
सुरभिपशुपसंघं यो दवाग्नेरपाद्वि-
र्जलधिमिनसुतायाः प्रापिपत् कालियं च ॥ ७ ॥
प्रपतदशनिजम्भद्वेषिवर्षातिकष्टा-
न्निजजनमवितुं द्रागातपत्रीकृतोऽद्रिः ।
अजगरवृषदैत्यव्योमयक्षादयोऽन्ये
सपदि विनिहतास्ते येन लीलावशेन ॥ ८ ॥
कमलनयनमेनं सस्मितास्येन्दुदन्त-
स्मरमुदमुरुहार्दप्रेक्षणं वीक्षमाणाः ।
निशि किल रमयन्तं प्राप्य गोप्योऽपि कान्तं
स्वमिह जगति जन्मामंसत द्राक् कृतार्थम् ॥ ९ ॥
रिपुरमुमतिमात्रप्रौढमुग्रप्रतापं
ज्वलनमिव पतङ्गः प्राप्य नश्यत्यवश्यम् ।
यदुकुलमिदमीयच्छायया श्रीयशोभ्या-
मनुपमममतिसंतत्यप्रमेयं भुवि स्यात् ॥ १० ॥
यदशनिसममुष्टिक्षेपतो नष्टचेष्टः
सपदि निपतति स्म प्रौढसारः प्रलम्बः ।
कवलयति बलोऽयं कामिनीनां मनांसि
प्रणयभृतनिसर्गस्मेरतारेक्षणेन ॥ ११ ॥
इति निगदति लोके सर्वतस्तूर्यघोषे
प्रभवति वदति स्म प्राप्य चाणूर इत्थम् ।
अयि बल ननु कृष्ण श्रीमतोर्भीमतोऽपि
श्रुतमधिकबलत्वं दृष्टमेवेभमनक्ष्णा ॥ १२ ॥
प्रभुरयमिदमीये क्वापि देशे वसद्भि-
र्नियतमिह निदेशे वर्तितव्यं सदैव ।
न कथमितरथा स्यान्मन्तुरस्य प्रजानां
तदुचितमनुगन्तुं चित्तमात्मेश्वरस्य ॥ १३ ॥
अपरकुतुकनिन्दी जातकौतूहलोऽयं
नृपतिरिह नियुद्धे तत् प्रभुं नन्दयेम ।
वनभुवि बलकृष्णौ गा युवां चारयन्ता-
वतिकलितनियुद्धौ तन्नृपोऽजूहवद्वाम् ॥ १४ ॥
त्रिभिर्विशेषकम् ।

इति वियति गिरं द्विर्भावयन्नग्रमल्लः
प्रतिवचनमिदं द्रागच्युतेनाप्यवाचि ।
व्रजवसतय ईशस्यास्य सत्यं विधेया
वयमुचितनिदेशैः सर्वदैवानुकम्प्याः ॥ १५ ॥

अलघुमलघुवृत्तेरल्पमल्पस्य तुल्यं
प्रतिभटमिह मल्ला धर्मवृद्धेरुशन्ति ।
वयमपि समसारैर्बालका योद्धुकामा
भवतु नहि तथा सत्यार्यसंसद्यधर्मः ॥ १६ ॥

गिरमिति स निशम्य श्रीशमाह स्म मल्लः
कथमयमपलापः कृष्ण ते विक्रमस्य ।
तुलितगजसहस्रोद्दामदर्पं द्विपेन्द्रं
किरिमिव हतवान्यः सोऽपि बालः किलेति ॥ १७ ॥

क्व नु जनुरिदमीदृङ्मानुषाणां भवद्व-
न्मयि सजतु भवांस्तन्मुष्टिके चैष रामः ।
उदितमिति तदीयं कांसपालोऽवगत्य
प्रतिभटमभि तस्थौ मङ्क्षु चाणूरमीशः ॥ १८ ॥

मृधमथ जगदीशावारभेतामपूर्भ्यां
जनहृदि कृतचित्रं तत्र नानाप्रभेदम् ।
अतिरयनमदुद्यद्बाहुमूर्धाभिघात-
स्फुरदुरुपविपातव्रातनिर्घातघोरम् ॥ १९ ॥

तदनु रिपुभुजाङ्घ्रिं स्वीयबाह्वङ्घ्रिणा तौ
दृढघटितमतीवाकृष्यतां जेतुकामौ ।
त्वरितमथ मिथश्चारत्निहृन्मूर्धजानु-
प्रहतमपि पुनस्तत् तेन तुष्टौ हतः स्म ॥ २० ॥

मुहुरतिशयवेगभ्रान्तिपरिक्रान्तिपूर्वो-
त्पतननिपतनप्रोत्सर्पणापक्रमाद्यैः ।
भ्रमणनमनदूरोच्छालनापातनाद्यै-
र्द्रुतमिह युयुधाते जेतुमन्योन्यमुक्तौ ॥ २१ ॥

त्रिभुवनमपि यस्य क्वापि कुक्षौ समस्ति
व्यलुठदणुरिवाङ्गे मन्दराद्रिः समुद्रे ।
गिरिवरमपि सप्ताहानि योऽदीधरत् तं
कथमिव परिभूष्णुः कृष्णमन्यस्य भारः ॥ २२ ॥

हृदि धरणिगतस्य प्रेक्ष्य मल्लं मुरारेः
कृतमतिमभिहन्तुं क्षिप्रमाक्रम्य सम्यक् ।
सपदि सदसि तत्र प्राचुरित्थं समेताः
सभयसदयचित्ता योषितोऽन्योन्यमुत्काः ॥ २३ ॥

कुलिशसदृशसारौ कुत्र मल्लौ महीध्र-
प्रतिमवपुरुदग्रौ सर्पदुद्दामदर्पौ ।
क्व कुसुमसुकुमारावेषदुद्यद्वयस्या-
वहह महदिहेदं संसदोऽधर्मबीजम् ॥ २४ ॥

यमिह जगति धर्मं रक्षतामक्षमाणा-
मपि पथि चरतां न क्वापि विभ्रंशलेशः ।
इह किमिति समाजेऽतिक्रमं तस्य सभ्या
बलवदबलयुद्धप्रेक्षणेन स्पृशन्ति ॥ २५ ॥

भवविभवमिहाहुः स्वप्नदृष्टोपमेयं
किमिति तदनुरोधाद्धर्ममुज्झन्ति पापाः ।
सदसि निविशमानैर्वस्तुतत्त्वं प्रवाच्यं
यदि न परमलं स्यादित्यहो नाह कश्चित् ॥ २६ ॥

विधिरिह विनियन्ता हन्त धर्मद्रुहां तद्
गिरिगुरुरपि नङ्क्ष्यत्येष मल्लः करीव ।
इह यदपि न हानिर्नापि लाभोऽस्मदादे-
स्तदपि महदयुक्तं वीक्ष्य हृद्दूयते नः ॥ २७ ॥

विबुधमथितसिन्धुप्रोत्थपीयूषबिन्दु-
च्छुरितविधुविनिन्दिस्वेदिवक्त्रारविन्दौ ।
किमपि न सकलायःपर्वतप्रायकायात्
कथमपि रिपुमल्लाद्रामकृष्णौ बिभीतः ॥ २८ ॥

न खलु कथमधिश्रीरस्तु वृन्दावनक्ष्मा
सुकृतियुगतिधन्या यत्र लक्ष्मीनिवासः ।
मृदुमुखरितवेणुर्बर्हमाल्याहंमौलिः
समचरत सरामो गोभिराभीरवेषः ॥ २९ ॥

नियतिरतिमनोज्ञा वल्लवीनां नवीना
सततमतनयेद्दृग्वैभवं वागगम्यम् ।
अलय इव दृशो यत् पातुमापन् दुरापं
मधुरिमपरिपाकोद्रेकधामास्यपद्मम् ॥ ३० ॥

भवति जगति धन्यं जन्म तासां स्त्रियो या
निखिलनिगमतत्त्वं प्राप्य गायन्ति कृष्णम् ।
पचनयजनयाचापेषदोहावघात-
क्वथनमथनलेपस्वापनस्नापनादौ ॥ ३१ ॥

पुरुषममुमनादिं मर्त्यमायाप्रकाशं
सदयहृदमुदारस्मेरवक्त्रारविन्दम् ।
उषसि रचितवेणुं यान्तमायान्तमन्ते-
ह्नि कति सुकृतिन्यो वीक्ष्य जाता: कृतार्था: ॥ ३२॥
कुलकम् ।

इति पुरवनितानां वाचमाकर्ण्य कृष्ण:
प्रबलभयविषादात् पश्यतोश्च स्वपित्रो: ।
वियति चरणघातादक्षिपन्मल्लमेष
क्षितिवसतिभिरुच्चै: पक्षिवत् प्रेक्ष्य सूक्ष्म: ॥ ३३ ॥

अथ भुवि विनिपत्य क्षिप्रमुत्थाय मल्ल:
स पविपरुषमुष्टि: कृष्णवक्षो जघान ।
पदमपि न चचाल श्रीपतिस्तत्प्रहाराद्
दृढधृतभुजमभ्रेऽबिभ्रमत् तं चिराय ॥ ३४ ॥

भ्रमयति वियति श्रीवल्लभे मल्लराज:
सपदि विपरिवृत्तश्रोणिपच्छत्त्ररूप: ।
पटुमतिभिरतर्कि श्रोणिपं हन्तुमेनं
समुपगतमकस्मादन्तिकं कालचक्रम् ॥ ३५ ॥

भुवि मधुमथनोऽथापोथयत् तं यथासून्
भ्रमणजनितवात: स्वीयमिश्रीचकार ।
बलकरतलघातात् कष्टमुत्सृष्टजीवो
मुखगलदसृगेवं मुष्टिकोऽपि न्यपप्तत् ॥ ३६ ॥

झटिति तदनु कूटप्राप्तमभ्येत्य राम:
प्रहरति सपदि स्म प्रेरयन् सव्यमुष्टिम् ।
शलमथ बलदेवस्तोसलं वेणुरीत्या
शकलयुगमकार्षीत् पाटयन्नेकमेकम् ॥ ३७ ॥

जगदधिपतिरित्थं बाहुयुद्धप्रवीणान्
बलयुगतिबभासे पञ्च मल्लान् निहत्य ।
'सहजपरिकराप्त्यव्यञ्जनं कंसमाद्यं
समशितुमिव काल: प्राणपूजां वितन्वन् ॥ ३८ ॥

अथ विनिहतमुख्या: प्राद्रवन्नद्रिकूटा
इव कतिचन मल्ला: प्राणरक्षाविलक्षा: ।
हरिरपि बलगोपै: संगतो रङ्गवाटे
नदति सकटकाङ्घ्रिस्तत्र तूर्ये विजह्रे ॥ ३९ ॥

नुनुवुरभिननन्दु: कर्म चित्रं तयोस्तत्
पुरजनपदलोका: कंसमेकं विहाय ।
सह जनतनिवादैर्वाद्यघोषं निषेध-
न्निति निकटगमृत्युर्वाचमूचे स रोषात् ॥ ४० ॥

गमयत वसुदेवस्यात्मजौ मत्पुराद् द्रा-
ग्वसु हरत पशूनप्याशु बध्नीत नन्दम् ।
वृकमिव हत शौरिं क्रूरकर्माणमुग्रं
मम सततमनिष्टं हिंस्त मङ्क्षूग्रसेनम् ॥ ४१ ॥

मुहुरिति कृतमन्तावादिशत्यात्मभृत्यान्
मतिमकृत निहन्तुं तन्तमीशोऽप्यनीश: ।
हरिरिव हरिरुच्चैर्दूरमुत्पत्य कंसं
गजमिव चिकरीषुर्मञ्चमभ्यञ्चति स्म ॥ ४२ ॥

उपगतमथ मञ्चं प्रेक्ष्य कंसोऽन्तकं स्वं
त्वरितपदमुदस्थादग्रहीच्चर्म चासिम् ।
तदनु च विचचारोद्दामतद्धामरुद्ध-
प्रकृतिबलतयासौ नैव योद्धुं शशाक ॥ ४३ ॥

अजनि मधुभिदेव प्रायशस्तादृशी धी:
प्रहरणमचिरेणाजिग्रहद्येह कंसम् ।
तदजनि न मुरारेर्मातुलं हेतिहीनं
कथमहह निहन्तीत्येष लोकेऽपवाद: ॥ ४४ ॥

करपुटयुगमासीच्चर्मखड्गद्वयं तत्
प्रकटयदिव साक्षाच्छत्त्रभङ्गं नृपस्य ।
प्रहित इव विधात्रा कंसबाहुप्रताप-
प्रशमनमिह कर्तुं जह्नुमिवात्मजौघ: ॥ ४५ ॥

द्रुतगतिरथ पश्चादेत्य केशेषु गृह्णन्
गलितफलिकखड्गं साध्वसध्वस्तचेष्टम् ।
चसति सदसि रङ्गे तुङ्गमञ्चान्निपात्य
त्रिभुवनगुरुरुच्चै: कंसमभ्यापपात ॥ ४६ ॥

हरिरनु च गतासुं मङ्क्षु मातङ्गमेनं
स्वकरकलितकेश: क्षोणिदेशे चकर्ष ।
भुवि दिवि च विसर्पत्स्वप्रतिध्वानभीम:
समजनि जनतोक्तस्तत्र हाहेति शब्द: ॥ ४७ ॥

स निजनिधनशङ्की जागरस्वप्नकृत्या-
लपनगतिविहारस्नानभुक्त्यादिकेषु ।
हरिमनिशमदर्शद्यत् पुरस्तात् तदस्य
श्रितजनदुरवापं भूपति: प्राप रूपम् ॥ ४८ ॥

न्यधित चरणमात्रं जातु दम्भाच्चलभ्रू-
युवतिशतवशोऽह: स्नानभुक्त्यादिकेऽसौ ।
पतिरपि न कदापि चोणिमश्लिष्टदारा-
दिति भुवि स विकृष्यालिङ्गयत् तेन किं तम् ॥ ४६ ॥

हरिमथ परिवव्रु: सारमेया इवाष्टा-
वपि परुषरुषोऽस्य भ्रातरो वैरशुद्ध्यै ।
गुरुपरिघकरस्तान् कंसयज्ञे विनिघ्नन्
बलिमिव बलदेवोऽदत्त दिक्पालतुष्ट्यै ॥ ५० ॥

ननृतुरमरवध्व: प्रध्वनन्ति स्म भेर्य:
सुरतरुसुमनोभिर्देवता: कंसकालम् ।
विचकरुरथ सान्द्रानन्दवक्त्रारविन्द-
द्रुहिणगिरिशजम्भद्रोहिदिक्पालमुख्या: ॥ ५१ ॥

स्वपतिमतिचिरस्य प्रस्वपन्तं हतोर:-
शिरस उपगतास्तं तस्य वध्वो विलेपु: ।
कुशलमिह परत्र क्वास्ति भूतद्रुहां तत्
फलमचिरमभूत् ते नाथ हेति ब्रुवत्य: ॥ ५२ ॥

अजगरबकवात्यादैत्यडाकिन्यरिष्ट-
प्रबलतुरगनागेऽप्याशु मल्लद्वयेऽपि ।
पुरुषमजरमेतं नो विदन्नप्यवागा-
स्तदिह तव दशेत्थं नाथ दीनोचितेयम् ॥ ५३ ॥

युग्मम् ।

इति नरपतिवध्वस्तत्र विध्वस्तवास-
श्चिकुरकुसुमशोभा: साञ्जनास्रप्रवाहा: ।
चिरमुपरि विलेपुस्तस्य दत्ताभय: श्री-
पतिरथ निहतानां कारयामास कृत्यम् ॥ ५४ ॥

तदनु च पितरौ तौ बन्धनादाशु मुक्ता-
खिलजगदधिपावप्यात्मनावन्दिषाताम् ।
परिचकितहृदौ नाश्लिक्षतां तौ च पुत्रा-
वपि चरदचरैतद्विश्वनाथौ विचिन्त्य ॥ ५५ ॥

अधिगतपरमार्थौ ताववेत्य स्वमाया-
मतत सुतविमोहाधायिनीमीश्वरोऽपि ।
मुहुरथ पितरम्बेत्यादरप्रश्रयाभ्यां
कृतनतिरिति वाचं साग्रजो व्याजहार ॥ ५६ ॥

चिरमभिलषतोर्वां पुत्रबाल्यादिचेष्टा-
विहरणकुतुकानि द्रष्टुमेतावतीच्छा ।
बत समजनि पूर्णा जातु नास्माद्दृशाभ्या-
मिति जगति वृथा नौ जन्म यन्मन्दभाग्यम् ॥ ५७ ॥

शुचमपि जहितं तां बन्धरोधादिजातां
विविधमदनुरोधां दैवदग्धौ यदावाम् ।
भवनमनु न पित्रोर्लालनामन्वभूव
प्रमदमपि न दृष्ट्याप्यत्र वामापिबाव ॥ ५८ ॥

ध्रुवमिह पुरुषार्थान् येन विन्दति नन्द-
न्त्यपि बत पितरो ये तं प्रयच्छन्ति देहम् ।
प्रतिकृतिमिह कर्तुं शक्नुयु: किंनु तेषा-
मविरतसकलायु:सेवयाप्यत्र पुत्रा: ॥ ५९ ॥

जरन्तमधनं जडं पितरमार्तमम्बामपि
स्त्रियं विदितसाधुतामपि सुतं शिशुं ये गुरुम् ।
द्विजं विपदुपप्लुतं शरणमागतं च क्षमा
न बिभ्रति कथं न ते जगति निश्वसन्तो मृता: ॥ ६० ॥

मम बलस्य च जन्म वृथा गतं
विधिवदत्र न वां पदमर्चतो: ।
सततकंसभयार्दितचेतसा-
वपि युवां परिमृष्टमघानि नौ ॥ ६१ ॥

कुलकम् ।

इति वाचममू निशम्य माया-
मनुजस्य द्रुतमङ्कमापयन्तौ ।
अचिरेण ननन्दतु: स्वपुत्रौ
मुहुरालिङ्ग्य सबाष्पनेत्रपद्मौ ॥ ६२ ॥

वचनं नच किंचिदूचतु:
पितरौ मोदमयान्तरौ तदा ।
गलदश्रुतयातिहार्दतो
हृदयोद्यत्करुणारसाविति ॥ ६३ ॥

अथ कथमपि श्रुत्वा वाचं तयोर्जगदीश्वर:
प्रकटितपुरावृत्तक्लेशात् समाश्वसितात्मनो: ।
यदुकुलजुषां राज्यं दत्त्वोग्रसेनमतिष्ठिपत्
परिषदि निजान् बन्धूनाश्वासयन्निदमाख्यत ॥ ६४ ॥

उरुवसु गुरु राज्यं चाधिपत्यं यदूना-
मव निजमिदमङ्गीकृत्य मातामहास्मान् ।

कृतिषु तव निदेशे भूप वर्त्स्यन्ति शश्व-
न्मयि सति पुरतस्ते देवताः के बतान्ये ॥ ६५ ॥

कुलकम् ।

उक्त्वेति भूपमभिषिच्य दिगन्तरेभ्यो
ज्ञातीन् निजान् स मधुवृष्णियदूत्तमादीन् ।
आहूय तानुपगतान् धनधामधान्यैः
संतर्प्य तत्तदवनिं निदिदेश भोक्तुम् ॥ ६६ ॥

निधिमिव कलयन्तः श्रीनिवासं मुखाब्जं
मुदितमुदितहार्दस्मेरतारं मुरारेः ।
विगलितवयसोऽपि ज्ञातयः स्वा वयस्था
इव सपदि बभूवुः पुष्टिशोभाबलाद्यैः ॥ ६७ ॥

अनुदिनं दधतोऽभ्युदयं नवं
सपदि लब्धमनोरथपूर्तयः ।
हरिभुजापरिपालनलालिता
यदुवरा मथुरामवसन् मुदा ॥ ६८ ॥

सबलो भगवानथेत्य नन्दं
परिरभ्य प्रणतोऽभ्यधान्मुदेति ।
परिपोषकृतौ सदा युवां नौ
पितरौ केवलजन्म तावदाताम् ॥ ६९ ॥

पुष्णान्त्यवन्ति सततं परिपालयन्ति
ये बालकान् सभयबन्धुजनेन मुक्तान् ।
तेषां त एव पितरः परमेतदीयाः
प्रायः शरीरजननेन निमित्तमात्रम् ॥ ७० ॥

क्व स्तोत्रं क्व नु सहजानुरागकृत्यं
तद्भवः पितरखिलं स्वरूपमेतत् ।
ताताम्बे कथमनृणीभवेव यद्वां
पित्रोर्न प्रतिकृतयेऽलमायुषापि ॥ ७१ ॥

बाल्यादि नावनुचितं सकलं क्षमेथा-
मावां युवां पुनरपि व्रजगौ दिदृक्षू ।
यूयं व्रजं व्रजत दृष्टनिजाखिलार्था
नापत्स्यते मयि सति क्वचनाशुभं वः ॥ ७२ ॥

कुलकम् ।

व्रजपतिमिति कृष्णः सान्त्वयित्वा विधाय
प्रमुदितमतिमात्रं चादरेणार्हयित्वा ।
वसनकनकभूषाभूरिमुक्ताप्रबाल-
प्रभृति सकलगोपीगोपयोग्यं ततोऽदात् ॥ ७३ ॥

तदनु दनुजद्रोहिप्रीतिप्रियोक्तिकृतार्हणे
कथमपि गते नन्दे सास्रे मुहुः परिरभ्य तौ ।
अथ तनययोः शौरिर्विप्रैः सह स्वपुरोधसा
विधिवदधिकप्रीतः प्राचीकरद् द्विजसंस्कृतिम् ॥ ७४ ॥

कृतोपनयनान् द्विजान् सपदि गर्गमुख्यांस्तदा
यथाविभवमादरात् सुतमहोत्सवेऽपूपुजत् ।
अदाच्च मणिमौक्तिकाम्बरहिरण्यगव्यादिकं
पुरापि सुतजन्मनि स्वहृदि गाश्च संकल्पिताः ॥ ७५ ॥

विप्राद्योऽप्यजादेर्विधिवदुपनयादेत्य जन्म द्वितीयं
हृद्गायत्र्याः स्वयं तां निजहृदि निदधद्ब्रह्मविच्चित्रकृद्यः ।
साङ्गे वेदेऽप्यधीती सपदि किल ऋचो यस्य निश्वासरूपा-
स्तत्राभिव्यक्तमूर्तिर्विभुरपि स मम श्रीधरः श्रेयसेऽस्तु ॥ ७६ ॥

इति श्रीमल्लक्ष्मणभट्टात्मजश्रीरामचन्द्रभट्टविरचिते गोपाललीलाख्ये महाकाव्ये कंसवधो नामैकोनविंशः सर्गः ॥ १९ ॥ समाप्तं चेदं गोपाललीलाख्यं महाकाव्यम् ॥ :: ::

---

## ॥ अथ गोपाललीलाख्यकाव्यस्य ॥

॥ उपसंहारवर्णनम् ॥

ग्राहेणातितरां गृहीतचरणो युद्ध्वा स्वशक्त्या परं
ह्रासं प्राप्य महाह्रदेऽतिविकलो मज्जन् गजेन्द्रोऽवशः ।
शुण्डादण्डधृतैकपद्ममदित प्राप्तश्च मुक्तिं यत-
स्तं वन्दे करुणानिधानमसकृद्वृन्दारुवृन्दस्तुतम् ॥ १ ॥

अथेत्थं गोपाललीलाख्यं महाकाव्यं मञ्जुलपद्यावलीकं भूभारावताराय लब्धजनुषो मथुरानगरीवर्णनमारभ्य कंसवधादूग्रसेनाय राज्याधिकारप्रदानपर्यन्तया भगवतः श्रीकृष्णस्य लीला तत्तात्पर्यकं सुप्राचीनं पञ्चाशदधिकद्विसहस्रश्लोकसंख्यामितमेकमेव सुदुर्लभं पुस्तकं राधारमणचरणचिन्ताचञ्चरीकाच्छ्रीमद्धरिश्चन्द्रश्रेष्ठिश्रेष्ठादुपलभ्य महता प्रयत्नेन संशोध्याद्यावधि मुद्र्यमाणमिदानीं सकलपरिश्रमसाफल्यकारिणः सर्वान्तर्यामिणः परमकारुणिकस्य श्रीमतः परमेश्वरस्यानुकम्पया निष्प्रत्यूहं मुद्रणविधया समाप्तिं नीतम् ।

अस्योक्तचरनामधेयस्य काव्यस्यैकपुस्तकत्वेऽपि तट्टिप्पण्यां क्वचित् क्वचिदुपलब्धानि पाठान्तराणि समीचीनान्यवधृत्य स्थले स्थले मयापि मुद्रितान्यवसेयानि ।

अत्र च पुस्तकस्यैकत्वादस्मत्प्रमादान्मुद्रकदोषाद्वा या क्वचिच्च्युतिरुपलभ्येत सा परपरिश्रमविद्भिर्विद्वद्भिर्विभाव्य शोधनीया मदीया चागःपरम्परा क्षमणीयेति सर्वविदुषोऽभ्यर्थ्य इति ।

इदं काव्यं श्रीवल्लभाचार्यस्यानुजेन तस्यैव शिष्येण लक्ष्मणभट्टसूनुना रामचन्द्राभिधानेन निरमायि, तेनैव चैतत्काव्यप्रतिपाद्यार्थप्रतिपादकं काव्यान्तरं कृष्णकुतूहलसंज्ञं गोत्रमुनीषुचन्द्रमितसंवत्सरे १५७७ माघशुक्ले साकेते प्रणीतमस्ति, तथा च कृष्णकुतूहलकाव्यान्त्यपद्यम्,

अब्दे गोत्रमुनीषुचन्द्रगणिते माघस्य पक्षे सितेऽ-
योध्यायां निवसन् सतां परगुणप्रीतात्मनां सेवकः ।
श्रीमल्लक्ष्मणभट्टवंशतिलकः श्रीवल्लभेन्द्रानुजः
काव्यं कृष्णकुतूहलाख्यमकृत श्रीरामचन्द्रः कविः ॥ १ ॥
इति ।

अतोऽहमनुमिनोमि कृष्णकुतूहलाख्यकाव्यस्य गोपाललीलाख्यकाव्यापेक्षया सुपरिष्कृतत्वात् तत्समयात् प्राग् गोपाललीलाख्यं काव्यं निर्मितं भवेदिति, कवयितुरुत्तरोत्तरमुत्कर्षदर्शनात् । अथ युक्तिरूपमूलानङ्गीकारेऽपि कृष्णकुतूहलकाव्याद् गोपाललीलाख्यं काव्यं पश्चाद्रचितमिति चेत्, इत्थमपि सति कृष्णकुतूहलकाव्यनिर्माणसमयसमीपकालनिर्मितत्वात् ततः परत्वेऽप्यस्य गोपाललीलाकाव्यस्य प्राचीनत्वं सुसिद्धमेव ।

अयं रामचन्द्राभिधानो वशिष्ठगोत्रोद्भवो न केवलं कविः किंतु भास्करमतीयवेदान्तशास्त्रनिष्णातश्चेति कृष्णकुतूहलकाव्यसर्गान्त्यपद्येन स्वयमेव व्याजहार । तथाच तत्पद्यार्धद्वयम्,

विद्यानिष्ठवशिष्ठगोत्रजनुषा तेन प्रणीते महा-
काव्ये कृष्णकुतूहलेऽम्बरहृतिः सर्गोऽजनिष्टाष्टमः ।
इति ।
स्पष्टं भट्टमतप्रविष्टमतिना तेन प्रणीते महा-
काव्ये कृष्णकुतूहले विधिनुतिः षष्ठोऽच सर्गो गतः ।
इति च ।

इयं वशिष्ठगोत्रोद्भवत्वोक्तिर्मातामहगोत्राभिप्रायेणोहनीया, ज्येष्ठभ्रातुः श्रीवल्लभाचार्यस्याद्यापि विद्यमानानां संततीनां भारद्वाजगोत्रत्वेन प्रसिद्धत्वात् ।

इदं च कृष्णकुतूहलाख्यं काव्यमारम्भे द्वितीयपत्ररहितं मयासादीत्यस्य मुद्रणे सम्प्रति मदीया निरुत्साहताकलनीया । सति तत्पत्रलाभे समयान्तरेऽवसरमधिगम्येदमपि विदुषां नयनगोचरीभावाय मुद्रयिष्य इत्यपि बोध्यं विपश्चिद्भिः ।

अथाहमधुना करुणाम्भोनिधिं परमेश्वरमिदं भृशमर्थये, यदेतत् काव्यं पण्डितपत्रद्वारा तत्तद्देशेषु प्रचारमासाद्य सुधियां मुदमातनुतान्मदीयपरिश्रमं च सफलयतादित्यलमधिकलेखनेनेति शिवम् ॥

॥ सांख्यशास्त्रप्रधानाध्यापको वेचनरामशर्मा ॥

## ॥ अथ विद्धशालभञ्जिकाख्यनाटिकायाः ॥

॥ चतुर्थोऽङ्कः ॥

नेपथ्ये । सुप्रभातं देवस्य कर्पूरवर्षस्य । संप्रति हि ।

व्रजत्यपरवारिधिं रजतपिण्डपाण्डुः शशी
नमन्ति जलबुद्बुदप्रतिमपङ्क्तयस्तारकाः ।
कुरण्टकविपाण्डुरं दधति धाम दीपाङ्कुरा-
श्चकोरनयनारुणा भवति दिक्च सैन्द्रामणी ॥ १ ॥

ततः प्रविशतो विबुद्धो विदूषकः सुप्ता च ब्राह्मणी ।

विदूषकः । भो पुत्ताणं मादे उट्ठेहि संभं वंदिदुं एहि अतिक्कंता रअणी सुण णरेंद बंदिणो कप्पूरखंडस्स पभादभोआवलिं । विमृश्य । कधं देवीए गरिट्ठगोट्ठीजणिदजागरणाकलितसुत्ता बह्मणी अज्ज वि णिद्दं ण मुंचदि । तदो पडिवालेमि जदो ण सुहसुत्तो पडिबोधिदव्व त्ति बह्मणा मंतअंति * । ब्राह्मणी उत्स्वप्नायते ।

ब्राह्मणी । विण्णत्तो विअक्खणामुहेण देवीए भट्टा । जधा । ओल्लागदस्स मिअंकवम्मस्स पिअबहिणी मिअंकावलीणाम सिणेहेण भादुअ दट्ठुमाअदा । संदिट्ठं च मे मादुलचंदवम्मसिरिणा मादुलाणीए हारलदाए, जधा, एसा दे बहिणी मिअंकावली देवप्पिएहिं कहिदं चक्कवत्तिघरिणीभावाणसा तए उचिदं वरं लंभइदव्वा त्ति । तदो देवी देवं विण्णवेदि, ण तुम्हाहिंतो अण्णो वरो एदाए जोग्गोत्ति । जदो पेम्मराअमणी राआवलिं अलंकरेदि । तापरिणेदु अज्जउत्तो । अत्तणो सिरी अणणहत्थगआ कादव्वा ण होदि । ण एदं आसंकिदव्वं । किं तं । देवी अत्तणो सा वत्तणेण पअट्टदि । जदो महाउलप्पसूदाणं भत्तुणो पिअं पिअं ण हु अत्तणो पिअं पिअं त्ति । किं च । पुणो परिणाविदो एव्व अज्जउत्तो मए । तं जधा । मअधाहिवस्स सुदं अणंगलेहं, मालवणरेंदस्स दुहिदं रअणावलीं पिअदंसणं अ, पंचालणाहस्स तणअं

* भो पुत्राणां मातरुत्तिष्ठ संध्यां वन्दितुम् । एहि अतिक्रान्तारजनी । शृणु नरेन्द्रवन्दिनः कर्पूरखण्डस्य प्रभातभोगावलिम् । कथं देव्या गरिष्ठगोष्ठीजनितजागरणाक्रान्ता सुप्ता ब्राह्मणी अद्यापि निद्रां न मुञ्चति । ततः प्रतिपालयामि यतः न सुखसुप्तः प्रतिबोधितव्य इति ब्राह्मणा मन्त्रयन्ति

विलासवदीं, अवंतीसरसुदं केलिवदीं, जालंधरेसकुमारिअं लीलावदीं, केरलराअपुत्तिं पत्तलेहं त्ति, देवी ओ एव्व परिणीअ दिण्णवंतीओ । ता अज्ज दुदीअप्पहरे विआहलग्गो-त्ति उणो उणो भणिदेण महाराएण तह त्ति पडिण्णादं, ता मेहलावुत्तंतं पडिकदुं अलीअविवाहेण विलंबिअदु भट्टा कुविदस्स मे भादुणो अण्णविवाहमहुस्सवो उत्तरो हुविस्सदि * ।

विदूषकः । विहस्य । देवो धम्मो वा जाणिस्सदि जो एत्थविडंबिदव्वो । विचिन्त्य । ता चिरं पाअइदव्वा जुण्णमज्जरी कंजिअं दुद्धं ति । कुवलअमालाए उण महाविलंबणत्थं महिलाए परिणीदा । ऊर्ध्वमवलोक्य । महदीवेला वट्टदि विउद्धावेमि बम्हणीं । बम्हणि उट्ठेहि उट्ठेहि देवी तुमं वाहरदि † ।

ब्राह्मणी । विबोधनाटितकेनोत्थाय । अइ पच्चूसं वट्टदि । तं विलोक्य । हंहो मिअतिण्हिअजामादुअ तुमं परमेसुरपस्सवट्टी होहि । अहं उण देवी अणुसरिस्सं ‡ । इति परिक्रम्य निष्क्रान्तौ । प्रवेशकः ।

ततः प्रविशति राजा विदूषकश्च ।

राजा । मदनातपयोः पीडामभिनीय । सखे संप्रति शैशवादपक्रामति ग्रीष्मसमयः ।

रजनिचरमयामेष्वादिशन्ती रतेच्छां
किमपि कठिनयन्ती नालिकेरीफलाम्भः ।
अयि परिणमयित्री राजरम्भाफलानां
दिनपरिणतिभोग्या वर्तते ग्रीष्मलक्ष्मीः ॥ २ ॥

अपि च ।

जलार्द्राः शष्पाणां बिसकिसलयैः केलिवलयाः
शिरीषैरुत्तंसा विचकिलमयी हाररचना ।
शुचा वेणाक्षीणां प्रलयजरसार्द्राश्च तनवो
विना तन्त्रं मन्त्रं रमति रमणमृत्युञ्जयविधिः ॥३॥

विदूषकः । एवं णेदं । अम्हारिसखल्लाडस्स पुलिंगउप्पादओ धम्मो वट्टदि * ।

राजा । निःसहं विहस्य । अतिललाटंतपस्तपनो नखंपचाश्च पथि पांसवः । तदसूर्यपश्याश्च वर्त्तन्ते राजदाराः । अपि च ।

हरन्ति हृदयानि यच्छ्रवणशीतला वेणवो
यदर्दति करम्बिता शिशिरवायुना वारुणी ।
भवन्ति च हिमोपमाः स्तनभुवो यदेणीदृशो
रुचेरुपरिसंस्थितो रतिपतेः प्रसादो गुरुः ॥ ४ ॥

एवं च सखे संस्तुमः ।

यूयं बालकवीरुधां सुरभयो
जातीतरूणां त्वचः
सारश्चन्दनशाखिनां किसलया-
न्यार्द्राण्यशोकस्य च ।
शैरीषी कुसुमोन्नतिः परिणम-
न्मोचश्च सोयं गणो
ग्रीष्मेणोष्महरः पुरा किल ददे
दग्धाय पञ्चेषवे ॥ ५ ॥

निःसहतामभिनीय ।

अपि शिशिरतरोपचारयोग्यं
द्वितयमिदं युगपन्न सह्यमेव ।
जरठितरविदीधितिश्च कालो
दयितजनेन समं च विप्रयोगः ॥ ६ ॥

नेपथ्ये । दोलालिआहिं कुंचिदसरलदीहचरणाहिं कडिज्जइ वलइअकरजुअलंचिअणेउराहरणं । करजुअलणिबिडपीडिअपेरंतविणिग्गअकडप्पा । कीडिज्जइ सही पडिच्छिअकण-

* विज्ञप्तो विचक्षणामुखेन देव्या भर्ता । यथा श्रील्लागदस्य मृगाङ्कवर्मणः प्रियभगिनी मृगाङ्कावली नाम स्नेहेन भ्रातरं द्रष्टुमागता संदिष्टं च मे मातुलचन्द्रवर्मप्रिया मातुलान्या हारलतया च । यथा, एषा ते भगिनी मृगाङ्कावली दैवज्ञैः कथितं चक्रवर्तिगृहिणीभावा एवा त्वयोचितं वरं लम्भयितव्येति । ततो देवी देवं विज्ञापयति । न युष्मत्तोऽन्यो वर एतस्यायोग्योऽस्ति । यतः पद्मरागमणी राकावलीमलंकरोति । तत्परिणयत्वार्यत्पुत्रः । आत्मनः श्रीरन्यहस्तगता कर्तव्या न भवति । नैतदाशङ्कनीयम् । किं तत् । देवी आत्मनः सा यत्नेन प्रवर्तते । यतो महाकुलप्रसूतानां भर्तुः प्रियं प्रियं नत्वात्मनः प्रियं प्रियमिति । किं च । पुनः परिणायित एवार्यपुत्रो मया । तद्यथा मगधाधिपस्य सुतामनङ्गलेखां, मालवनरेन्द्रस्य दुहितरं रत्नावलीं प्रियदर्शनां च, पञ्चालनाथस्य तनयां विलासवती, मवन्तीशसुतां केलिमतीं, जालन्धरेशकुमारिकां लीलावतीं, केरलराजपुत्रीं पत्रलेखामिति देव्य एव परिणीय दत्तवत्यः । तदद्य द्वितीय प्रहरे विवाहलग्नमिति पुनः पुनर्भणितेन महाराजेन तथेति प्रतिज्ञातं तन्मेखलावृत्तान्तं प्रतिकर्तुमलीकविवाहेन विडम्ब्यतां भर्ता । कुपितस्य मे भ्रातुरन्यविवाहमहोत्सव उत्तरो भविष्यति ।

† देवो धर्मो वा ज्ञास्यति योऽत्र विडम्बयितव्यः । तत् चिरं पाययितव्या जीर्णमार्जारी काञ्जिकं दुग्धमिति । कुवलयमालायाः पुनर्मया विडम्बनार्थं महिलया परिणीता । महती वेला वर्तते विबोधयामि ब्राह्मणीम् । ब्राह्मणि उत्तिष्ठोत्तिष्ठ देवी त्वां व्याहरति ।

‡ अये प्रत्यूषं वर्तते । हंहो मृगतृष्णिकाजामातस्त्वं परमेश्वरपार्श्ववर्ती भव । अहं पुनर्देवी मनुसरामि ।

* एवमेतत् । अस्मादृशखल्वाटस्य स्फुलिङ्गोत्पादको धर्मो वर्तते ।

अकिंकिणीओ खुज्जोदरदरसिढिलिदकंचुअत्थइदथणहराहिं-तो अवणिज्जइ उड्ढकराग्गकट्टणुधेल्लंतवसणं * ।

राजा । वयस्याभिः सहदोलाविहारं विभाव्य विदूषकं प्रति । सखे

मां निधाय हृदये स्मरतप्ता
दोलिकाविहरणं स्वसखीभिः ।
स्वी करोति यदि किन्नरकण्ठी
कार्मुकं वहतु जैत्रमनङ्गः ॥ ७ ॥

विदूषकः । विअक्खणा वअणादो जाणीअदि पाणिपीड-णपुव्वं दे दाविदो अप्पा † ।

राजा । स च चतुष्पदीपर्यवसितः श्लोकः प्रभृतीकृतः ।

विदूषकः । ता पसादं कदुअ पठदु पिअवअस्सो तं सिलोअं ‡ ।

राजा । पठति ।

विधत्ते सोल्लेखं कतरदिह नाङ्गं तरुणिमा
तथापि प्रागल्भ्यं किमपि चतुरं लोचनयुगे ।
यदादत्ते दृश्यादखिलमपि भावव्यतिकरं
मनोवृत्तिर्द्रष्टुं मुखरयति दृश्यं प्रति जनम् ॥ ८ ॥

किं च ।

स्वकण्ठकाण्डात्सुदृशावतार्य
स्वप्नेऽर्पितो यो मम कन्धरायाम् ।
पुनर्मया तत्कुचसीम्नि मुक्तो
हारः स च प्राभृतमद्य जातः ॥ ९ ॥

विदूषकः । स्मरणमभिनीय । भो पिअवअस्स किं पि रहस्सं पुच्छीअसि § ।

राजा । कथ्यते ।

विदूषकः । मिअंकावलीकुवलअमाणं केत्तिअं अंतरं ‖ ।

राजा । आस्तां परकलत्र हि सा वर्तते ।

विदूषकः । णं पत्थिवव्ववहारे अणभिण्णोऽहं जाणवदो उण सालभज्जं अद्धभज्जं त्ति भणादि । ता कधेसु केत्तिअं अंतरं त्ति मिअंकावलीकुवलअमालाणं ¶ ।

* दोलालिकाभिः कुञ्चितदीर्घसरलचरणाभिः क्षणतेव वलयित-करयुगलाञ्चितनूपुराभरणम् । करयुगनिबिडपीडितपर्यन्तविनिर्गतक-लापा मुच्यन्ते सखीप्रतिच्छिन्नकनककिङ्किणीकाः कुब्जोदरदरशिथिलित-कञ्चुकस्थगितस्तनभरादपनीयते ऊर्ध्वकराग्रकर्षणोद्वेल्लद्वसनम् ।

† विचक्षणावचनात् ज्ञायते पाणिपीडनपूर्वं ते दापित आत्मा ।

‡ तत्प्रसादं कृत्वा पठतु प्रियवयस्यस्तं श्लोकम् ।

§ भो प्रियवयस्य किमपि रहस्यं पृच्छ्यसे ।

‖ मृगाङ्कावलीकुवलयमालयोः कियदन्तरम् ।

¶ ननु पार्थिवव्यवहारे अनभिज्ञोऽहं जानपदः पुनः पुनः शालभार्यामर्ध-भार्यामिति भणति । तत्कथय कियदन्तरमिति मृगाङ्कावलीकुवलयमालयोः ।

राजा । यावदन्तरं मृगाङ्कावली कुवलयमालयोः ।

विदूषकः । तं एव्व पुणो भणंतेण किं भणिदं होदि * ।

राजा । तर्हि दृष्टान्तान्तरेण कथ्यते । यावदन्तरं घनसा-रागरुसारयोः ।

विदूषकः । सुट्ठुदरं ण जाणीअदि † ।

राजा । ज्ञाप्यते ।

लाटीचम्पकपिञ्जरैरवयवै-
र्दूर्वानिभैः कुन्तलैः
पूर्वा रत्नमयीं बिभर्ति रचना-
मन्या तु मुक्तामयीम् ।
इत्थं द्वे अपि ते विलाससदने
देवस्य चेतोभुवः
प्राच्याः किं तु नितान्तनिर्जितजग-
ल्लावण्यपण्यं वपुः ॥ १० ॥

सखे किं पुनरनुपपन्नमेवेदं यदुत मां देवी परिणाययिष्य-तीति ।

विदूषकः । कुदो दिट्ठे अणुवअण्णं णाम । पुरो दर्शयन् । संबंधिणीचेडीओ आगच्छंतीओ दीसंदि ‡ ।

राजा । का पुनस्ते संबन्धिनी ।

विदूषकः । देवी ।

राजा । विहस्य । तदेहि चित्रशालिकामधितिष्ठावः । तथातिष्ठतः ।

॥ शेष उत्तराङ्के ॥

* तदेव पुनर्भणता किं भणितं भवति ।

† सुष्ठुतरं न ज्ञायते ।

‡ कुतो दृष्टेरनुपपन्नं नाम । संबन्धिनीचेट्य आगच्छन्त्यो दृश्यन्ते ।

# THE VIDVAN-MANO-RANJINI'

OR

## REJOICER OF THE MIND OF THE LEARNED,

A COMMENTARY ON SAD-ÁNANDA'S VEDÁNTA-SÁRA, BY RÁMA-TÍRTHA.

*(Continued from page 257.)*

*Interested actions &c* Actions in course of performance with purpose of result, are interested. Nor is this definition too narrow, in reference to the texts Let him offer the Viśvajit sacrifice [which is performed after the desired object has been attained] &c. For in this case also, according to the rule, Paradise should be consider-

न्यान्वेषणप्रयासेनोपार्जितमेकं पुस्तकमस्तीति वृत्तमुपलभ्य प्रयत्नतः पुनः पुनः प्रार्थ्यमानादभिहितचरनामधेयात् तत्पण्डितादपरमपि तदुपलभ्य मुद्रणविधौ सरलतामवगच्छन् प्रमुदितमना मनीषिमनोरञ्जनायैतत् पण्डितपरम्परया सर्वत्र प्रचिकाशयिषुर्महामहिम्नां सर्वदोचितसरणियोजितचेतसां काशिकाराजकीयपाठशालाप्रधानाध्यक्षाणामुद्भटविदुषां श्रीमतां ग्रिफिथसाहेबप्रभुवराणामवश्यं मुद्रणार्हमिदमस्त्यस्मिन् पण्डितपत्रे मुद्र्यतामित्येवंरूपामाज्ञामवाप्य काशीविद्यासुधानिधिनामकेऽस्मिन् पण्डितपत्रे सम्प्रति मुद्रयितुं कृतपरिकरोऽस्मीति शिवम् ॥

सांख्यशास्त्रप्रधानाध्यापक-
त्रिपाठ्युपनामको वेचनरामशर्मा ॥

॥ श्रीगणेशाय नमः ॥

## ॥ अथ ब्रह्ममीमांसाभाष्यप्रथमाध्यायस्य ॥

॥ प्रथमपादारम्भः ॥

ओं नमोऽहंपदार्थाय लोकानां सिद्धिहेतवे ।
सच्चिदानन्दरूपाय शिवाय परमात्मने ॥ १ ॥

निजशक्तिभित्तिनिर्मित-
निखिलजगज्जालचित्रनिकुरम्बः ।
स जयति शिवः परात्मा
सकलागमसारसर्वस्वम् ॥ २ ॥

भवतु स भवतां सिद्ध्यै
परमात्मा सर्वमङ्गलोपेतः ।
चिदचिन्मयः प्रपञ्चः
शेषोऽशेषोऽपि यस्येतः ॥ ३ ॥

नमः श्वेताभिधानाय नानागमविधायिने ।
कैवल्यकल्पतरवे कल्याणगुरवे नमः ॥ ४ ॥

श्रीमतां व्याससूत्राणां श्रीकण्ठीयः प्रकाश्यते[1] ।
मधुरो भाष्यसंदर्भो महार्थो नातिविस्तरः ॥ ५ ॥

व्याससूत्रमिदं नेत्रं विदुषां ब्रह्मदर्शने ।
पूर्वाचार्यैः कलुषितं श्रीकण्ठेन प्रसाद्यते ॥ ६ ॥

सर्ववेदान्तसारस्य सौरभास्वादमोदिनाम् ।
आर्याणां शिवनिष्ठानां भाष्यमेतन्महानिधिः ॥ ७ ॥

१ प्रकाशते इति पा० ।

इहौपनिषदी मीमांसा समारभ्यते । तदेतदारम्भोऽत्र किंपुरुषार्थः! पुरुषार्थो हि निरुपधिप्रेमद्वेषास्पदयोः सुखदुःखयोः प्राप्तिरत्यन्तनिवृत्तिर्वा, कश्चेहाधिकारी! यस्यार्थित्वादयो धर्माः; किमस्य विषयः! यदप्रसिद्धमनतिप्रसिद्धं च संदेहदोलामारूढं वर्तते, कस्यानन्तरमस्यारम्भः[1]! यस्य नियतप्रयोजकतया पूर्वभावित्वमवगम्यते, इति श्रोतृजनमनःसमाहितस्य शङ्काशङ्कोः[2] समुन्मूलनाय सर्वज्ञशिखामणिना भगवता व्यासेन समवतारितमिदं सूत्रम्[3] ॥

॥ अथातो ब्रह्मजिज्ञासा ॥ १ ॥

इदमेकमधिकरणम् । विषयसंशयपूर्वपक्षसिद्धान्तनिर्णयसंगतीनामाधारत्वमिहाधिकरणत्वम्, अत्राथशब्दोऽयमानन्तर्यार्थः, ननु "अथ योगानुशासनम्" इत्यादाविवाधिकारार्थः; अधिकारशब्दोऽयमारम्भार्थः,[4] न खलु ब्रह्मज्ञानेच्छा कर्तव्यत्वेन प्रारम्भयोग्या भवति, सा किल विषयरामणीयकमात्रसंभाव्या ।

ओंकारश्चाथ शब्दश्च द्वावेतौ ब्रह्मणः पुरा[5] ।
कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥

इति स्मृतेरयमथशब्दो मङ्गलार्थो न वर्णनीयः, जिज्ञासां प्रति[6] मङ्गलस्यान्वयासंभवात्; शास्त्रारम्भे शिष्टाचारपरिपालनार्थं मङ्गलाचरणं तु वर्णध्वनिमात्रेण सिध्यति;[7] नचायं पक्षान्तरपरिग्रहार्थः, पूर्वप्रकृतस्यानुक्ततया तत्प्रसङ्गाभावात्; नवा भोजनगमनादिवदनियतं यत् किंचित् पूर्ववृत्तमपेक्ष्यायमथशब्दप्रयोगः, नियतसामर्थ्यीभूतस्य कस्यचिदत्र विवक्षितत्वात्, यस्य वा संपत्तिरिहाधिकारिविशेषणतया ब्रह्मविचारस्य साधनं, तत्पूर्वभावीति विज्ञायते; अथाष्टवर्षत्वादियुक्तब्राह्मणाद्युपयुक्तोपनयनसंस्कारपूर्वकस्य "स्वाध्यायोऽध्येतव्य" इति स्वविधिप्रयुक्ततया नित्यप्राप्तस्य नियमोपासिताचार्यमुखलब्धाक्षरग्रहणरूपस्य तस्यार्थज्ञानफलस्य वेदाध्ययनस्य ब्रह्मविचारात् पूर्वभावित्वं युक्तं, धर्मब्रह्मणोऽपि वेदैकसिद्धत्वात्, अनधीतवेदस्य तद्विचारानुपपत्तेः; अतः वेदाध्ययनानन्तरं ब्रह्मविचार इति चेत्, भवतु नाम [illegible]मध्ययनं तदनन्तरं च धर्मविचारः, तस्य तदसिद्धौ सि[illegible]त्वात्; तथा चाचार्यैः प्रतिपादितम् "अथातो धर्मजिज्ञासा" इति, प्रथमत उपाध्यायादध्ययनानन्तरं धर्मविचारप्राप्तिरिति, न वयं धर्मब्रह्मवि-

१ कस्यानन्तर्यमस्यारम्भसमयः, इति पा० ।
२—मनः शङ्काशूकस्य इति पा० ।
३ प्रथमं सू—इति पा० ।
४ अधिकारो हि प्रारम्भः, इति पा० ।
५—णो मुखात् इति पा० ।
६ जिज्ञासाया इति पा० ।
७ कल्पते इति पा० ।

चारूपयोः शास्त्रयोरत्यन्तभेदवादिनः, किंत्वेकत्वाभिप्रायवादिनः; धर्मब्रह्मणोराराधनाराध्यभूतयोः प्रतिपादकम् "अथातो धर्मजिज्ञासा" इत्यारभ्य "अनावृत्तिः शब्दात्" इत्येतावत्पर्यन्तमेकमेव शास्त्रम्; तत्र "अथातः शेषलक्षणम्" इत्यादिवदवान्तरपरिच्छेदार्थोऽयम् "अथातो ब्रह्मजिज्ञासा" इत्यारम्भः। अथवा धर्मस्य ब्रह्मबोधहेतुत्वात् तद्विचारोपयुक्तानां श्रुतिलिङ्गादीनां वेदचोदनार्थवादस्मृत्यादिप्रामाण्यप्रतिपादनादीनां ब्रह्मविचारोपयुक्ततया च धर्मविचारानन्तरं ब्रह्मविचारः संभवति साधनानिश्चये साध्यानिश्चयात्;[1] ब्रह्मबोधं प्रति धर्मस्य साधनत्वे "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन" इत्यादिर्श्रुतिरेव भगवती प्रमाणम्; नच कर्मणो ब्रह्मबोधसाधनत्व एतदेव विचार्यमनुष्ठेयं च, किमनेन ब्रह्मपरवेदान्तवाक्यविचारप्रयासेनेति वाच्यं; तस्य फलाभिसंधिरहितस्य पापमलापकर्षणसंस्काररूपेणाधिकारिणा चित्तशुद्धिसंपादनद्वारा[2] बोधहेतुत्वात्; तथाभियुक्तस्मृतिः, "यस्यैते चत्वारिंशत् संस्कारा" इत्यादिना "स ब्रह्मणः सायुज्यं सालोक्यं च गच्छति" इत्यन्तेन गर्भाधानादिसकलकर्मणां पापमलापकर्षसंस्कारहेतुत्व प्रकाशयति; अथ व्रीहिप्रोक्षणवत् सर्वकर्मणां संस्कारकत्वे "सर्वे एते पुण्यलोका भवन्ति" इति श्रुत्युक्ताश्रमफलस्वातन्त्र्यं न स्यादिति चेन्न; पुण्यलोकफलाभिसंधिपूर्वककर्मणां स्वातन्त्र्येऽपि तदभिसंधिरहितेन पुंसानुष्ठितकर्मणां चित्तशुद्ध्यादिसंस्कारजनकत्वोपपत्तेः; तथा चास्य पुंसो यदेव ज्ञानफल तदेव कर्मफलं च; यथा व्रीहिप्रोक्षणं दर्शपूर्णमासोत्पत्त्यपूर्वहेतुतया स्वर्गे समुच्चीयते तथा कर्माणि ज्ञानफलप्रयोजकतया मोक्षे समुच्चीयन्ते; अतो गुणकर्मत्वादङ्गत्वमेषाम्।

ननु नित्यविधिप्राप्तस्य ज्योतिष्टोमादेरितिकर्तव्यतात्वविरोधान्न संस्कारतासिद्धिरिति चेन्न, करणतया स्वतन्त्रविहितस्य[3] सौत्रामणिबृहस्पतिसवादेरग्निचयनवाजपेयाद्यङ्गत्ववदुभयविधिबलादुभयसिद्धेः; अतो यावदुत्पद्यते ज्ञानं तावदनुष्ठेयानि कर्माणि।

ननु "विविदिषन्ति" इति श्रवणात् कर्मणां ज्ञानेच्छासमुदयपर्यन्तमनुष्ठानमिति चेत्, न सारमेतत्, इच्छाया अपुरुषार्थत्वात्; अतः कर्मणां ब्रह्मबोधसाधनानां विचारस्यानन्तरं ब्रह्मबोधकशास्त्रारम्भः समुचितः।

ननु कर्मब्रह्मविचारयोः क्रमनियमः कथमुपपद्यते, कर्त्रैक्यात्; इति चेद्; कर्त्रैक्यमिहाधारदर्शपूर्णमासवदङ्गाङ्गित्वेन वा पञ्चप्रयाजवदेकाङ्गिप्रयुक्तानेकाङ्गत्वेन वा गोदोहनादिवदधिकारान्तरप्रयुक्त्युपजीवित्वेन वा षड्गागवत् फलैक्येन वा भवति, तथात्वे विचारयोः श्रुत्यादि प्रमाणमेव न संपद्यते, अतः कर्मब्रह्मविचारयोर्न क्रमनियमो युक्त इति, यदि श्रुत्यादि प्रमाणं न संभवति तदा खलु तथात्वं स्यात्, "विद्यां चाविद्यां च यस्तद्वेदोभयं सह" "तेनैति ब्रह्मवित् पुण्यकृत्" सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण" इत्यादिका ज्ञानकर्मसमुच्चयविधायिनी श्रुतिरुपपद्यते,[1] अतः कर्मज्ञानयोर्मोक्षैकफलत्वात् तद्विचारयोरपि क्रमनियमो युक्तः, यद्यप्यक्षरग्रहणमात्रपर्यवसायित्वमध्ययनविधेस्तथापि विचारयोर्न प्रवृत्त्यसंभवः; साङ्गाध्ययनेनापाततः पदार्थमात्रप्रतीतिः, तदनु ब्रह्मणः स्थूलोपासनभूतज्योतिष्टोमादिविधायकानां सूक्ष्मोपासनभूतदहरादिविद्याविधायकानां च परस्परं विरोधाभासं पश्यंस्तद्विचारे पुरुषार्थाकाङ्क्षी पुरुषः स्वयमेव प्रवर्तते; ततश्च नानिबन्धनो विचारः।

ननु "श्रोतव्य" इति वाक्येन वेदान्तश्रवणं साक्षाद्विधीयत इति चेन्न, विधित्वप्रयोजकरूपसंपत्त्यभावात्; तथाहि, वेदान्तश्रवणं नापूर्वविधिगोचरः, प्राप्तत्वात्; प्राप्तिश्च वेदान्तश्रवणं स्वविषयोपात्तावगतिसाधनं, शास्त्रश्रवणत्वाद्वैद्यशास्त्रश्रवणवदित्यादिभिः; नचास्य नियमविधिगोचरत्वम्, अवघातादिवत् कस्यचिद्दृष्टफलस्याप्राप्तेः[2]; नच परिसंख्याविधिविषयत्वं, तथा सति पूर्वं वेदान्ताः श्रोतव्या एव नाध्येतव्या इति पर्यवस्येत्; तथा सत्यनधीतवेदान्तानां विचारायोगाद्पुरुषार्थत्वसंभवः; यदि वेदान्तश्रवणस्य परिसख्यापरत्वं कर्मकाण्डश्रवणनिषेधपरमिति विचारः, तदा विचाराभावात् कर्मानुष्ठानासंभवः; तदभावे चित्तशुद्ध्यभावाज्ज्ञानानुत्पत्तिः स्यात्; तस्मात् पूर्वोक्तमेव समीचीनम्; अतः सकलचिदचित्प्रपञ्चाकारपरमशक्तिविशिष्टाद्वितीयवैभवस्य सकलनिगमसाररहस्यनिधानस्य भवशिवशर्वपशुपतिपरमेश्वरमहादेवरुद्रशंभुप्रभृतिपर्यायवाचकशब्दसारप्रकाशितपरममहिमविलासस्य स्वशेषभूतनिखिलचेतनसमुपासनानुगुणसमुदितनिजप्रसादसमर्पितपुरुषार्थसार्थस्य परब्रह्मणः प्रतिपादकमुपनिषच्छास्त्रं विचारणीयं, तन्नियोगरूपचोदनालक्षणयागस्य तदाराधनविशेषसार्थरूपस्य तत्तदर्थवादप्रकटितप्राशस्त्यविलासस्य श्रुत्यादिसंपादितसकलाङ्गपुष्टितस्य[3] स्वप्रमाणानुगुणस्मृतीतिहासपुराणाभियुक्तसूक्तिसंदर्भकृतोपबृंहणस्य विधिनिषेधविकल्पसमुच्चयोत्सर्गापवादबाधाभ्युच्चयादिमतो निखिलपुरुषार्थरत्नाकरस्य परमप्रबोधसाधनस्य

१—विचारः, साधनं विना साध्यानिष्पत्तेः; इति पा०।
२ पापापनयनरूपचित्त—इति पा०।
३—विध्यन्तरविहितस्य इति पा०।

१—रुपलभ्यते इति- पा०।
२—फलस्योपायान्तरस्याप्राप्तेः इति पा०।
३—सहितस्य इति पा०।

भगवतो धर्मस्य विचारानन्तरमित्यथशब्दार्थो निर्णीतः; अतः शब्दोऽयं वृत्तस्य हेतुभावे वर्तते; यतोऽधीतवेदेन धर्मो विचारितोऽतस्तदनुष्ठानसंपन्नचित्तशुद्धिना तत्कालसंपन्नविवेकादिगुणसहकृतपरमभक्तिसंभावितेनानेन ब्रह्मापि निरतिशयनिःश्रेयसकरं विचारणीयमिति; ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासेति कर्मणि षष्ठी; "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात्" "नास्त्यकृतः कृतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" इत्यादि वाक्यं विषयः। ब्रह्म विचारणार्हं भवति नवेति संदेहः। पूर्वपक्षस्तु ब्रह्म न विचारयोग्यं भवति, तत्र संदेहाभावात्; कथं संदेहाभावः! "अयमात्मा ब्रह्म,, इति श्रुतिरहमिति प्रत्ययेन प्रत्यक्षसिद्धमेवात्मानं ब्रह्मेत्युपदिशति, ततः कुतोऽत्र संदेहकलङ्कप्रसङ्गः।

किंच, आत्मविचारस्य फलं हि तद्विषयज्ञानं, ज्ञानं हि ज्ञेयपरिच्छेदवेदान्तविचारजन्यज्ञानं ब्रह्म परिच्छिनत्ति नवा; यदि परिच्छिनत्ति, तदा तस्य परिच्छेदानतीतत्वप्रसङ्गः[1]; यदि न परिच्छिनत्ति, ब्रह्म तदा यथावन्न प्रकाशेत; अयमिति परिच्छिन्नो हि घटादिरवगम्यते; ततो ब्रह्मविषयं ज्ञानमपि न संभवति, तथाच प्रयोजनं न किंचित् पश्यामः; न मुक्तिप्रयोजनम्, अनादिसिद्धस्य संसारस्य दुरपह्नवत्वात्; इत्येवं प्राप्ते ब्रूमः; सर्वथा समारम्भणीयं शास्त्रं, ब्रह्मणः संदिग्धतया विषयत्वसंभवात्, तन्निर्णयस्य सप्रयोजनत्वाच्च; यद् "अयमात्मा ब्रह्म" इत्यादिश्रुतिरमुमेवाहंकारबद्धं संसारिणं ब्रह्मेत्यभिधत्ते, अत एव संदेहः; निरस्तसमस्तोपप्लवकलङ्कस्य निरतिशयज्ञानानन्दादिशक्तिमहिमातिशयवत्त्वं हि ब्रह्मत्वम्, अनाद्यज्ञानवासनावष्टम्भविजृम्भितविचित्रकर्मफलभोगानुगुणबहुशरीरप्रवेशनिर्गमव्यापारपरवशनिःसीमतापसहिष्णुत्वं हि जीवत्वं; कथमेतयोः परस्परविलक्षणयोरैकभावमाहुः श्रुतय इति संशयः किं न स्यात्।

अपिच, एवमपि संदिह्यते, "अन्नं ब्रह्म" "मनो ब्रह्म" "विज्ञानं ब्रह्म" "आदित्यो ब्रह्म" "नारायणं ब्रह्म" इत्यादयोऽन्यमन्यमर्थं ब्रह्मेत्याहुः, तत्र किंवा ब्रह्मेति! अतो बहुधा संदिग्धं ब्रह्म विचारार्हं भवति, ततः श्रवणमननादिनिश्चितस्य भक्तिज्ञानविशेषाभिमुखस्य परमकारुणिकस्य महादेशिकस्य सर्वानुग्राहकस्य शिवस्य परब्रह्मणः प्रसादातिशयेनास्याधिकारिणः प्रध्वस्तपाशपटला प्रत्यक्षीभूतनिरतिशयज्ञानानन्दस्वरूपा[2] तत्समानगुणसारा कैवल्यलक्ष्मीः प्रयोजनं च भवति, ततः सविषयं सप्रयोजनं वेदान्तश्रवणं; यदुक्तं, "ज्ञेयपरिच्छेदरूपत्वाज्ज्ञानस्य तदपरिच्छिन्नब्रह्मविषयं न संभवति" इति; तदविचारविलसितम्; ईदृगिदमिति ब्रह्मणः परिच्छेदासंभवेऽपि लक्षणमुखेनेतरव्यावृत्तिमात्रेण परिच्छेदसंभवात्; लक्षणेन परिच्छेदो हि सर्वत्र लक्ष्यविषयमितरव्यावृत्ततया ज्ञानम्, उद्दिष्टस्य ब्रह्मणो लक्षणे वेदान्तवाक्यैर्निरूपिते परीक्षिते च लक्षणशून्येभ्यः सजातीयविजातीयेभ्यस्तदितरसकलपदार्थेभ्यो व्यावृत्तिरूपं यत् तद् ब्रह्मेति विज्ञायते, ततः समीचीनोऽयं ब्रह्मविषयः शास्त्रारम्भः; यदसंदिग्धमप्रयोजनं च तत् खलु न प्रेक्षावतां विचारकक्षामधिरोहतीति वेदान्तशास्त्रविचारस्य प्रमाणयुक्त्याभासप्रतिभासवशात् संदेहास्पदं ब्रह्म विषयो भवति, "ब्रह्मविदाप्नोति परं" "ज्ञात्वा शिवं शान्तिमत्यन्तमेति" "ईशं तं ज्ञात्वा अमृता भवन्ति" "तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम्"। "आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम्। ध्याननिर्मथनादेव पाशं दहति पण्डितः" ॥ "ज्ञात्वा देवं मुच्यते सर्वपाशैः" इत्यादिश्रुत्यभिप्रायेण[1] तस्य ज्ञानोपासनयास्याधिकारिणः[2] पाशविच्छेदलक्षणा मुक्तिः प्रयोजनं च भवतीति प्रथमाधिकरणेऽत्र प्रतिपादितम् ॥ १ ॥

इहोद्दिष्टस्य ब्रह्मणो यन्निश्चायकं तल्लक्षणं किमित्याकाङ्क्षायां तल्लक्षणाभिधायि[3] द्वितीयाधिकरणमवतारयति भगवान् सूत्रकारः ॥

॥ जन्माद्यस्य यतः ॥ २ ॥

ज्ञाते लक्ष्ये लक्षणस्य वैयर्थ्यादज्ञाते तदाकाङ्क्षानुत्पत्तेः कथमत्र ब्रह्मणो लक्षणकथनप्रसङ्ग इति न शङ्कनीयम्, अध्ययनादापाततो ज्ञाते ब्रह्मणि तद्योगात्, जन्मादि अस्य, यतः, इति सूत्रपदच्छेदः; जन्मादिकं जन्मस्थितिप्रलयतिरोभावानुग्रहरूपं कृत्यमस्य चेतनाचेतनसंमेलसमरसीभूतस्य प्रपञ्चविलासस्य यतो यस्मात् तद्ब्रह्मेति शेषः; "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म" इति प्रधानक्षेत्रपतिर्गुणेशः संसारबन्धमोक्षहेतुः, "सत्यं ज्ञानमनन्तं ब्रह्म" "सदेव सोम्येदमग्र आसीत्," "एकमेवाद्वितीयम्," "ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्। ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमः" ॥ इत्यादि वाक्यं विषयः। अत्र जगतो जन्मादिकं ब्रह्मणि लक्षणतया संभवति नवेति संदेहः। जगतो जन्मादिकं ब्रह्मणो लक्षणं न संभवति[4] संबन्धाभावात्।

किंच "आनन्दो ब्रह्मेति व्यजानात्" इत्यत्रानन्दस्य जगज्जन्मादिलक्षणं पर्यवस्यतीति; अन्यत्र "सदेव सोम्येदमग्र आ-

१—तत्वं भङ्गप्रसङ्गः इति पा०।
२—नन्दमहाजनात्मस्वरूपा इति पा०।

१—त्यनुसारेण इति पा०।
२ तदुपासनयास्या इति पा०।
३—भिधायकं इति पा०।
४—इः, न संभवति इति सुष्ठु पा०।

सीत्" इति सतो जगत्कारणत्वमवगम्यते, "सत्यं ज्ञानमनन्तं ब्रह्म" इति ज्ञानमेवापरिच्छिन्नं जगत्कारणं ब्रह्मेत्येकत्र विज्ञायते; अपरत्र च "यदा तमस्तन्न दिवा न रात्रिर्न सन्नचासंश्छिव एव केवलः" इति शिवशब्दवाच्यं वस्तु कारणत्वेन सकलपूर्वभावि ब्रह्मेति विज्ञायते; अत्रानन्दादीनां ब्रह्मत्वे विकल्पो वा समुच्चयो वा; विकल्पे श्रुतहान्यादिदोषप्रसङ्गोऽव्यवस्था च, व्यवस्थितविकल्पेऽपि ब्रह्मानेकत्वप्रसङ्गः; समुच्चयपक्षेऽपि तेषां धर्मरूपत्वान्निखिलजगन्निर्माणोपायज्ञानविशिष्टब्रह्मत्वासंभवः ।

अपिच, "मायां तु प्रकृतिं विद्यात्" इति श्रुतिर्मायाया अचेतनाया जगत्कारणत्वमभिधत्ते तदेव युक्तं, ब्रह्मणो ज्ञानरूपस्य जगत्कारणत्वे तस्य विकारापत्त्या "निष्कलं निष्क्रियं शान्तम्" इत्यादिश्रुतिभङ्गप्रसङ्गात्; अतः सर्वथापि ब्रह्मणो जगत्कारणत्वादिलक्षणमभिधातुमशक्यमित्येवमादौ पूर्वपक्षे प्राप्ते ब्रूमः, यद्यपि जन्मादेर्जगन्निष्ठत्वेन ब्रह्मण्यसंबन्धः, तथापि ताटस्थ्येन लक्षणत्वं युज्यते; यत् सर्वज्ञत्वादिविशिष्टमष्टाभिधानाधिकरणं शिवतत्त्वं तदेव जगत्कारणं ब्रह्मेत्युच्यते, आनन्दादीनामत्रैव धर्माणां पर्यवसानं संभवति; सर्वज्ञत्वं नित्यतृप्तत्वमनादिबोधत्वं, स्वतन्त्रत्वमलुप्तशक्तित्वमनन्तशक्तित्वं चेत्येतानि सर्वज्ञतादीनि नित्यापरोक्षानपेक्षितबाह्यकरणनिष्कलङ्कानुभवविषयनिखिलवस्तुत्वमिह सर्वज्ञत्वम् ।

"सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः ।
अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य" ॥

"यः सर्वज्ञः सर्ववित्" "यस्य ज्ञानमयं तप" इत्यादिश्रुतिभिरिदं ब्रह्मणः सिद्धम्; अनेन सकलचेतनबहुविधकर्मफलभोगानुकूलतत्तच्छरीरनिर्माणोपायसामग्रीविशेषज्ञं ब्रह्म निमित्तं भवति; निरस्तसमस्तोपप्लवकलङ्कनिरतिशयानन्दपरिपूर्णत्वमिह नित्यतृप्तत्वम्; अत एव "आनन्दो ब्रह्म" इति श्रूयते "यः खल्वन्योऽन्तर आत्मानन्दमय" इति प्रस्तुत्य "सैषानन्दस्य मीमांसा भवति" इत्यारभ्याभ्यासाच्चिरतिशयशिरस्कत्वेन स एको ब्रह्मण आनन्द इति निरूपितः; परब्रह्मधर्मत्वेन च स एव "आनन्दो ब्रह्म" इति प्राचुर्याद् ब्रह्मत्वेनोपचर्यते; तादृशानन्दभोगरसिकं ब्रह्म नित्यतृप्तमित्युच्यते; ब्रह्मणो मनसैव महानन्दानुभवो न बाह्यकरणद्वारा; तथाहि श्रुतिः; "आकाशशरीरं ब्रह्म सत्यात्मप्राणारामं मनआनन्दं शान्तिसमृद्धममृतम्" इति; आकाशत इत्याकाशः प्रकाशश्चिदम्बरमुच्यते न भूताकाशः, विशेषाभावात्; निखिलजगदण्डखण्डबुद्बुदनिकुरम्बजलधिस्थानीया परप्रकृतिरूपा परशक्तिर्हि चिदम्बरमुच्यते, तत्स्वरूपं ब्रह्मेत्याकाशशरीरं, परप्रकृतित्वं चिदाकाशस्य, "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते" "आकाशं प्रत्यस्तं यन्ति" "आकाशो ह वै नामरूपयोर्निर्वहिता" इत्यादिश्रुतिसिद्धं सत्यात्मसत्तारूपं प्राणारामं, प्राणशब्देन सकलाधारभूता चिदम्बरशक्तिरुच्यते, स्वरूपभूतायां तस्यामेवारामो यस्य तत् प्राणारामं, मनआनन्द, मनस्यानन्दो यस्य न बाह्यकरणे तन्मनआनन्दम्; अत्राप्यानन्द इति चिदम्बरं प्रकृतिरुच्यते; तथा श्रूयते, "यदेष आकाश आनन्दो न स्यात् को ह्येवान्यात् कः प्राण्यात्", इति; शान्तिसमृद्धं, शिवतासंपन्नम्; अमृतम्, अनादिमुक्तम्; अत्र सच्चिदानन्दं परमाकाशरूपं ब्रह्म स्वरूपानन्दं मनसैवानुभवति बाह्यकरणनिरपेक्षमिति सिद्धम्, "मनआनन्दम्" इत्यनेनेदमेव ज्ञापकं ब्रह्मभावमुपपन्नानां मुक्तात्मनां निरतिशयस्वरूपानन्दानुभवसाधनं न बाह्यकरणनिरपेक्षमन्तःकरणमस्तीति, अतो बाह्यकरणनिरपेक्षेण शुद्धबोधशक्तिरूपेण मनसा स्वरूपानन्दमनन्तमनुभवसिद्धं ब्रह्म नित्यतृप्तं; न तस्य कदापि बाह्यसांसारिकसुखलवापेक्षा भवतीत्यर्थः; स्वतः सिद्धनिरतिशयज्ञानवत्त्वमनादिबोधत्वं, यत् स्वरूपानन्दानुभवसाधनमन्तःकरणं ज्ञानं तदनादिसिद्धमेव, ततोऽनादिबोधं ब्रह्म, संसारनिवर्तकस्य ज्ञानस्यानादिसिद्धत्वात्, नित्यनिवृत्तसंसारदोषं "शान्तिसमृद्धममृतम्" इति श्रूयते; अन्यप्रेष्यताकार्पण्यरहितत्वेन स्ववशीकृतस्वेतरसकलवस्तुत्वं स्वतन्त्रत्वम्; "ज्ञाज्ञौ द्वावजावीशानीशौ भोक्ता भोग्यं प्रेरितारं च मत्वा विद्याविद्ये ईशते यस्तु सोऽन्यः" इत्यादिषु ब्रह्मणो जडाजडप्रपञ्चप्रेरकत्वेन स्वतन्त्रत्व सिद्धं, सर्वविषयस्वातन्त्र्येण ब्रह्मणः सर्वकर्तृत्वसिद्धिः, स्वाभाविकशक्तिमत्त्वमलुप्तशक्तित्वं, तथाहि श्रवणं, "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इत्यादि, चिदचित्प्रपञ्चरूपशक्तिविशिष्टत्वं स्वाभाविकमेव ब्रह्मणः, कदाचिदपि न निर्विशेषमित्यनेन सिद्धम्; अपरिच्छिन्नशक्तिविशिष्टत्वमनन्तशक्तित्वम्; अनन्ताभिरेव शक्तिभिर्जगतो जनकं प्राशकं च ब्रह्म भवति; तथाहि श्रूयते, "एको रुद्रो न द्वितीयाय तस्थुर्य इमांल्लोकानीशत ईशनीभिर्जननीभिः परमशक्तिभिः" इत्यादि, अनन्तशक्तिमत्त्वाद् ब्रह्मणोऽपरिच्छिन्नप्रपञ्चसमवायिकारणत्व सिध्यति; अष्टाभिधानाधिकरणमिति भवशिवशर्वेशानपशुपतिरुद्रोग्रभीममहादेवाभिधानाष्टकस्याधिकरणं वाच्यं परं ब्रह्म; अस्य सकलशब्दवाच्यत्वेऽपि परभावबोधकत्वेन मुख्यतया भवादिशब्दाभिधेयत्वेन नान्यशब्दाभिधेयत्वाभावप्रसङ्गः; सर्वत्र सदा भवतीति भवशब्दवाच्यं ब्रह्म, भूधातोः सत्तार्थत्वात्; सर्वत्रानुवर्तमानं सद्रूपं ब्रह्मेति विज्ञायते, तथाहि श्रुतिः "सदेव

सौम्येदमग्र आसीत्" "एकमेवाद्वितीयं" "सत्यं ज्ञानमनन्तं ब्रह्म" "सत्यात्मप्राणारामं मनआनन्दं सन्मन" इत्यादि, सन् घटः सन् पट इति सर्ववस्तुष्वनुवृत्त्या सद्रूपस्य ब्रह्मणः सर्वोपादानत्वं सिध्यति; मृदुपरक्तं घटादिकं हि मृदुपादानमिष्यते, अतः सद्रूपं ब्रह्म भवशब्दवाच्यं भवति, शर्वशब्देन शॄ हिंसायामिति धात्वर्थवशात् सकलसंहर्तृ ब्रह्म प्रतिपाद्यते, "तस्मा उपसंहर्त्रे महाग्रासाय वै नमः", "यस्य ब्रह्म च क्षत्रं च उभे भवत ओदन"इत्यादिभिः सर्वसंहर्तृ ब्रह्म श्रूयते, निरुपाधिकपरमैश्वर्यविशिष्टत्वादीशानशब्दवाच्यं ब्रह्म, "य इमाँल्लोकानीशत ईशिनीभिः" इति श्रवणात्; ईश्वरस्येशितव्यापेक्षया पशुपतिशब्दवाच्यं ब्रह्म; तथाहि श्रूयते, "येषामीशः पशुपतिः पशूनां चतुष्पदामुत च द्विपदाम्" इत्यादि, पाशसंबन्धेन पशुत्वव्यवहारात्; पशुग्रहणात् पशुपाशद्वयं च गृहीतं भवति; अनेन चिदचिन्नियामकं ब्रह्मेति विज्ञायते; संसाररुजां द्रावकत्वाद्रुद्रशब्दवाच्यं ब्रह्म, "तरति शोकमात्मवित्" इति श्रवणात्, परतेजोऽभिभवनीयत्वादुग्रशब्दवाच्यत्वं ब्रह्मणः, "न तत्र सूर्यो भाति न चन्द्रमा[1]" इति श्रवणात्; नियामकतया निखिलचेतनभयहेतुतया भीमशब्दाभिधेयं ब्रह्म; "भीषास्माद्वातः पवते" इत्यादिश्रुतेः; महत्त्वेन दीव्यमानतया महादेव इत्युच्यते शिवः; तथाथर्वशिरसि, "अथ कस्मादुच्यते महादेवः, सर्वान् भावान् परित्यज्य आत्मज्ञानयोगैश्वर्ये महति महीयते तस्मादुच्यते महादेव" इति; निरस्तसमस्तसंसारकलङ्कतया निखिलमङ्गलसार[2]तया शिवतत्त्वं यदवगम्यते तदुक्तस्वभावतया सकलजगज्जन्मादिकारणं भवति, तत्र तादृशमहिमनि जगदुभयकारणत्वसंभवात्; तदेतादृशमहत्त्वाद् ब्रह्मेत्युच्यते; तदेव शिवशब्दवाच्यमानन्दादिधर्माश्रयतया सिद्धम्; अत आनन्दादीनां विकल्पादिचिन्तानिरर्थिका; "मायां तु प्रकृतिं विद्यात्" इति मायायाः प्रकृतित्वमीश्वरात्मिकाया एव, "मायिनं तु महेश्वरम्" इति वाक्यशेषात्; सूक्ष्मचिदचिद्विशिष्टं ब्रह्म कारणं, स्थूलचिदचिद्विशिष्टं तत्कार्यं भवति; अतो जगज्जन्मादिलक्षणं ब्रह्मेति सिद्धान्तः ॥ २ ॥

लक्षणप्रमाणाधीना हि वस्तुसिद्धिः, जगत्कारणं ब्रह्म किंप्रमाणमित्यत आह ॥

॥ शास्त्रयोनित्वात् ॥ ३ ॥

यतः शास्त्रं योनिः प्रमाणं तत एव जगज्जन्मादिलक्षणं ब्रह्म भवतीति शेषः; अत्र गजत्कारणं ब्रह्म शास्त्रैकगम्यमुत प्रमाणान्तरेणापि गम्यत इति संदेहः । जगदिदं सावयवं कार्यमेव, तच्च वैचित्र्यगर्भितत्वेन स्वोचितकर्तृकमिति कर्ता कश्चित् कल्पनीयः सर्वज्ञत्वादिमान्, नासौ शास्त्रैकगम्य इति नास्मिन् शास्त्रस्य प्रामाण्यं, शास्त्रस्य प्रमाणान्तराप्राप्तविषयत्वात्; अतः शास्त्रैकगम्यत्वं जगत्कारणस्य न संभवतीति पूर्वपक्षः । सिद्धान्तस्तु जगत्कारणं ब्रह्म वेदान्तशास्त्रैकगम्यं "नावेदविन्मनुते तं बृहन्तम्" इत्यादिषु वेदान्तशास्त्रमन्तरेण ब्रह्मणो बोधासंभवश्रवणात्; यदुक्तं "सावयवत्वात् कार्यत्वसिद्धौ प्रपञ्चस्य कर्ता समुचितः कल्प्य एक" इति, तदसत्, विचित्ररचनस्य रथगोपुरप्रासादादेर्बहुकर्तृकत्वदर्शनात्; तथाच नानुमानेनैककर्तृकत्वसिद्धिः, व्याप्तिबलेन तस्य कर्मपारवश्यादिप्रसङ्गश्च, हेतोः पक्षधर्मताबलादनुमानेन जगतो विलक्षणैककर्तृकत्वे सिद्धेऽपि निमित्तोपादानशक्तियुक्तैककर्तृसिद्धिर्नास्ति; ततो वेदान्तशास्त्रैकगम्यं तत्प्रमाणकं ब्रह्मेति सिद्धम् ।

अपिच, "पूर्वाधिकरणप्रतिपादितजगत्कारणत्वोपयोगिसर्वज्ञत्वं ब्रह्मणोऽस्मिन्नधिकरणे शास्त्राणां वेदान्तानां योनित्वात् कारणत्वात् सिध्यतीत्यपि प्रतिपाद्यते" इति केचिदाहुस्तदिह सूत्रस्य सूचनात्मकस्यार्थद्वयाभिधाने श्लेषकाव्यवद् वाक्यभेदादिदोषाभावात् पुनरधिकरणान्तरप्रस्तावः । अत्र "अस्य महतो भूतस्य निश्वसितमेतदृग्वेदो यजुर्वेदः सामवेद" इत्यादि श्रूयते विषयः । ब्रह्मणो वेदकर्तृत्वं युक्तं नवेति संदेहः । न युक्तमिति पूर्वपक्षः । "वाचाविरूपनित्यया" इत्यादेर्वाचो नित्यत्वप्रतिपादिकायाः श्रुतेर्विरोधात्, वेदानां ब्रह्मकार्यत्वेन पौरुषेयत्वादप्रमाण्यप्रसङ्गाच्च; तस्माद्ब्रह्मणो वेदकर्तृत्वं कथमिति प्राप्ते ब्रूमः; युक्तमेव ब्रह्मणो वेदकर्तृत्वम् "अस्य महतो भूतस्य निश्वसितमेतदृग्वेदो यजुर्वेदः सामवेद" इति श्रुतेर्निश्वसितवद्वेदराशेरप्रयत्नेन ब्रह्मणः प्रादुर्भावावगमात् ।

"अष्टादशानामेतासां विद्यानां भीमवर्त्मनाम् ।
आदिकर्ता कविः साक्षाच्छूलपाणिरिति श्रुतिः" ॥

इति परमेश्वरस्य सकलविद्याकर्तृत्वप्रतिपादनाच्च; सृष्टेः प्राक् स्वात्मनि विलीनानां वेदानां पूर्वपूर्ववर्णानुपूर्व्यनुरूपरचनया पुनः कर्ता भवति सर्वज्ञः परमेश्वरः; अत एव वेदानामपौरुषेयत्वमीश्वरकार्यत्वं च; येषां रागद्वेषादयस्तेषां वचनं न प्रमाणं; निरस्तसमस्तदोषकलङ्कस्य निरुपप्लवनिरतिशयज्ञानप्रत्यक्षानुभूयमानत्रैकालिकवस्तुविलासस्य स्वतः प्रमाणस्य परमेश्वरस्य परमाप्तस्यावाप्तसमस्तकामस्य शिवस्य ब्रह्मणो वचनं तु प्रमाणमेव; "ईशानः सर्वविद्यानां स नो देवः शुभया स्मृत्या संयुनक्ति" इति हि परमेश्वरस्य सर्वविद्या-

[1] चन्द्रतारकमि—इति पा० ।
[2]—साधार—इति पा ।

प्रवर्तकत्वं शुभस्मृतिहेतुत्वं च श्रूयते, अतः सर्ववस्त्ववभासकानां वेदानां परमेश्वरकर्तृकतया परमेश्वरस्य सर्वज्ञता निश्चीयते, अज्ञातस्य वक्तुमशक्यत्वात्; यद्यपि सर्वगतस्य परमेश्वरस्य सर्ववस्तुसंयोगेन सर्वज्ञत्वं सिध्यति, तथापि सकलवस्त्ववभासकानां वेदानां प्रणेतृताविशेषं दर्शयति, "यथा दीपः स्वप्रभासंयुक्तेष्वपि रूपादिषु रूपमेव प्रकाशयति, न रसादि, तथा न परमेश्वरः, किंतु स्वशक्तिसंयुक्तं सकलमपि प्रकाशयति" इति ।

ननु परमेश्वरस्य सर्वज्ञत्वं नाम वेदोक्तसकलपदार्थाभिज्ञत्वं, तर्हि महर्षीणामपि वेदार्थवेदिनां सर्वज्ञत्वं सिद्धं; किमत्र वैषम्यम्! इति चेन्न; तत्कर्तुरीश्वरस्याधिक ज्ञानमस्ति, व्याकरणादेरधिकार्थविदां हि पाणिनिप्रभृतीनां तत्प्रणेतृत्वं दृश्यते; वेदश्च सर्वार्थावभासकोऽपि न सर्वं मुख्यतया प्रकाशयति, किंतु किमपि लक्षणया, किमपि सामान्येन, किमपि विशेषेण, परमेश्वरः सर्वसाक्षी सर्वं प्रत्यक्षयति, वेदेश्वरयोरप्येतावद्वैषम्यमिष्यते ।

ननु परमेश्वरस्यैव वेदकर्तृत्वमिति न नियमः; "षड्ढोता वै भूत्वा प्रजापतिरिदं सर्वमसृजत्", "ऋचो यजूंषि सामानि" इत्यादिश्रवणाद्धिरण्यगर्भादेरपि तत्कर्तृत्वावगमादिति चेन्न; हिरण्यगर्भोत्पत्तेः प्रागपि वेदानां सद्भावात्; श्रूयते हि "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति; यः सर्वदेवानामादिमस्य हिरण्यगर्भस्यापि कर्ता तस्मै सर्वान् वेदानुपदिशति, स एव सर्वाधिको वेदकर्ता परमदेशिकः; तथाहि श्रुत्याभिव्यज्यते, "यो देवानां प्रथमं पुरस्ताद् विश्वाधिको रुद्रो महर्षिर्हिरण्यगर्भं पश्यति जायमानं स नो देवः शुभया स्मृत्या संयुनक्तु" इति, महर्षिर्वेदकर्ता यः सर्वज्ञत्वादिना विश्वस्माच्चिदचित्प्रपञ्चादधिको रुद्रः परब्रह्मभूतः सर्वेषां देवानामिन्द्रादीनां प्रथममादिमं हिरण्यगर्भब्रह्माणं स्वसंकल्पेन प्रकृतिरूपादात्मनो जायमानं सृष्टिकाले सर्वज्ञानोपायसकलवेदोपदेशरूपयानुग्रहदृष्ट्या पश्यन् स परमदेशिको नोऽस्मानपि सकलसंसारपाशमहानर्थनिवृत्तिहेतुभूतया परमामृतलक्ष्मीसमावेशपरानन्दप्राप्तिकारिण्याप्त एव परममङ्गलरूपया वेदान्तसारसामरस्यसिद्धया स्मृत्या बोधकलया स्वविषयया संयोजयत्विति तात्पर्यम्; ततः सकलवेदकर्तृत्वमीश्वरस्य सिद्धम् । वाचो नित्यत्वश्रुतिरीश्वरेण पूर्वसत्तानुवृत्त्या विहितत्वाद्वेदानामविरुद्धा; ततो वेदानामीश्वरप्रणीतत्वं नित्यत्वं चाविरुद्धमेव ॥ ३ ॥

प्रथमाधिकरणे जिज्ञास्यतया प्रतिज्ञातस्य[1] परब्रह्मणः शिवस्य प्रतिज्ञाने लक्षणापेक्षायां द्वितीयाधिकरणेन लक्षणं जगज्जन्मादिरूप[1]मभिहितं, तस्मिन् किं प्रमाणमित्याकाङ्क्षायां तृतीयाधिकरणेन वेदान्तशास्त्रस्य तद्विषये प्रामाण्यं तन्मूलत्वं च निरूपितं, येन यदव्यभिचारेण सिध्यति तद्धि तस्य प्रमाणमुच्यते; वेदान्तवाक्यानां केन कथं वा ब्रह्मसाधकत्वम्! इत्याकाङ्क्षायां चतुर्थाधिकरण[2]मवतार्यते ।

॥ तत् तु समन्वयात् ॥ ४ ॥

तच्छब्देन प्रकृतं ब्रह्म परामृश्यते, तुशब्देन सर्वाणि वेदान्तवाक्यानि समाह्रियन्ते, समन्वयशब्देन तात्पर्येण संबन्ध उच्यते, तद्ब्रह्म वेदान्तवाक्यानि तात्पर्यलिङ्गसंबन्धात् साधयन्ति, इति सूत्रार्थः । अस्य सर्वाणि वेदान्तवाक्यानि विषयः । वेदान्तवाक्यानां ब्रह्मबोधकत्व युक्तं न वेति संशयः । सर्वत्र संबन्धग्रहणसापेक्षं शब्दस्यार्थावबोधकत्वं, शब्दार्थयोः संबन्धज्ञानमन्तरेण पुरुषस्य शब्दार्थप्रत्ययो न भवति; संबन्धज्ञानं च वृद्धव्यवहारसापेक्षं[3], व्यवहारश्च कार्यैकगोचरः, तथाहि गामानय गां बधानेति प्रयोजकवृद्धवाक्यश्रवणसमनन्तरं प्रवर्तमानं प्रयोज्यमवगम्य पार्श्वस्थो व्युत्पित्सुरेवमवधारयति; सर्वथायं कार्यावगतिसमनन्तरमेव प्रवर्तते; सा च कार्यावगतिरेतस्मादेव वाक्यात् समुत्पन्ना; अन्यथा कथमस्यैवैतद्वाक्यश्रवणसमनन्तरं प्रवृत्तिर्भवति; तदिदं वाक्यमस्य कार्यबुद्धिमुत्पादयति; इति पुनर्गवानयनबन्धनदर्शनात् कार्यविशेषं निश्चिनोति; तदेवं कार्यार्थत्वाद् व्युत्पत्तेर्न सिद्धे ब्रह्मणि शब्दस्य प्रामाण्यम् ।

किंच, कार्यविशेषत्वाज्जगतः कर्तृविशेषस्य ब्रह्मणोऽनुमानादपि सिद्धिः; कथमस्मिन् प्राप्तविषयाणां वेदान्तवाक्यानां प्रामाण्यम्! अथवा विधिपराण्येव वेदान्तवाक्यानि न ब्रह्मपराणि; उभयपरत्वे वाक्यभेदः स्यात्; अतो वेदान्तवाक्यानां ब्रह्मसाधकत्वमयुक्तमिति पूर्वपक्षः । युक्तमिति सिद्धान्तः । वेदान्तवाक्यानां तात्पर्यलिङ्गसमन्वयेन ब्रह्मबोधनसमर्थत्वात्; यदुक्तं "कार्यार्थत्वाद् व्युत्पत्तेर्न सिद्धे ब्रह्मणि शब्दस्य प्रामाण्यम्" इति; तदसत्; "पुत्रस्ते जात"इत्यादिष्वपि सिद्धार्थेषु वाक्येषु निश्चिनोति संबन्धं, संबन्धग्रहणयोग्ये वृद्धव्यवहारेऽपि व्युत्पित्सुः स्वस्य प्रवृत्तिहेतुभूतायाः कार्यावगतेः पदार्थज्ञानपूर्वकत्वावगमात् प्रयोज्यवृद्धस्य प्रयोजकवाक्यं पदार्थज्ञानमुत्पादयति, इति निश्चिनोति; ततः सिद्धार्थेष्वपि शब्दस्याभिधाननिश्चयः; अथवा किमिह वृद्धव्यवहारेण,

१ प्रतिपादितस्य इति पा० ।

१—कारणत्वरूप—इति पा० ।
२—करणसूत्र—इति पा० ।
३—द्वारात्, इति पा० ।
४ वाक्येषु संबन्धग्रहदर्शना—इति पा० ।

व्युत्पत्तेः प्रकारान्तरेणापि सिद्धत्वात्[1]; तथाहि, बाला मात्रादिभिः शशिपशुप्रभृतीनर्थानङ्गुल्यादिना निर्दिश्य तत्तच्छब्दांस्तेषु तेष्वर्थेषु प्रयुञ्जानैर्बहुशः शिक्षितास्तेषु तेष्वर्थेषु व्युत्पद्यन्ते; काव्यनाटकाभिज्ञाः पुरुषसमीपमेत्य पदविच्छेदं कृत्वास्य शब्दस्यायमर्थ इति सर्वशब्दानामर्थमवगच्छन्ति; अतः सिद्धार्थेऽपि व्युत्पत्तिसंभवात् तत्र शब्दस्य प्रामाण्यमस्ति; ततो वेदान्तवाक्यानां ब्रह्मणि प्रामाण्यम्, यदुक्तं "जगतः कार्यविशेषत्वात् कर्तृविशेषस्य ब्रह्मणोऽनुमानादपि सिद्धिः" इति; तन्न संभवति; विचित्ररचनस्य रथगोपुरप्रासादादेरनेककर्तृत्वदर्शनादनुमानेनास्य जगत एककर्तृकत्वसाधनायोगस्य व्याप्तिबलात् कार्यावश्यत्वादीनां कर्तरि प्राप्तेश्च पूर्वोक्तत्वात्; अतो नानुमानगम्यं ब्रह्म भवति;

किंच, श्रुतानुगुण्यादनुमानमपि ब्रह्मणि प्रमाणं भवतु नाम; यत्र वाक्यानां तात्पर्यं तत्र हि तेषां प्रामाण्यं, न प्रत्यक्षादीनामिव सर्वत्र ।

ननु वेदान्तवाक्यानां ब्रह्मणि तात्पर्यनिर्णायकानि कानि लिङ्गानीति चेत् । उपक्रमादीनि तथा पठन्ति,

"उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गतात्पर्यनिर्णयः" ॥

इति, तदिहोपक्रमादिभिर्लिङ्गैर्वेदान्तवाक्यानां ब्रह्मणि तात्पर्यं निश्चीयते; य उपक्रमादिभिस्तात्पर्यनिर्णयस्तदेव वेदान्तवाक्यानां श्रवणमित्युच्यते; तथाहि,[2]

"अज्ञानप्रभवं दुःखं ज्ञानं तस्य निवर्तकम् ।
सर्ववेदान्तवाक्यानां श्रवणं तत्प्रवर्तकम् ॥
श्रवणं नाम वाक्यानां वैदिकानां परात् परे ।
उपक्रमादिभिर्लिङ्गैः शिवे तात्पर्यनिर्णयः" ॥

इति, उपक्रमोपसंहारावेकं लिङ्गं; वेदान्तवाक्यानां ब्रह्मणि शिवे तात्पर्यनिर्णये तत्र तात्पर्यं नाम स्वरूपोपासनाविषयत्वम्[4]; उपक्रमोपसहारौ, "सदेव सौम्येदमग्र आसीत्" इत्युपक्रमः। "तत् त्वमसि" इत्युपसंहारः। "धातुः प्रसादान्महिमानमाशम्" इत्युपक्रमः। "यः परः स महेश्वर" इत्युपसंहारः। एवमन्यत्रापि द्रष्टव्यम्। "तत्त्वमसि" "सर्वो वै रुद्रः," "अम्बिकापतय उमापतये," "यो वै रुद्रः स भगवान् भूर्भुवः स्वः," इत्यभ्यासः। अपूर्वता वेदेतरप्रमाणाप्राप्तत्वम्। फलं मुक्तिः पृथग्ज्ञानम्[1]। अर्थवादो जगत्सृष्टिस्थितिप्रध्वंसादयः। उपपत्तिर्विरोधाभावः। सर्वज्ञतादिसंपत्तिर्वा। एतैर्लिङ्गैर्ब्रह्मणि तात्पर्यमवगन्तव्यं वेदान्तवाक्यानाम् ।

"ननु न केवलं ब्रह्मपरा वेदान्ताः, किंतु "आत्मा वा अरे द्रष्टव्य" इत्यादिषु तज्ज्ञानविधिपरा[2] अपि विज्ञायन्ते, उभयपरत्वे वाक्यभेदप्रसङ्ग" इति यदुक्तं तन्न; रूपप्रत्यायकेन चक्षुषा यथा द्रव्यस्यापि सिद्धिस्तथा विधिपरैरपि वेदान्तैर्ब्रह्मसिद्धिरिति नोभयपरत्वे विरोधः, शाब्दं हि ब्रह्मज्ञानं तद्ब्रह्मवाचिशब्दादेव प्राप्तं भवति, तद्विधिना किं प्रयोजनमिति चेत्; प्राप्तावपि मन्त्रादिष्विव विरोधः, प्रयोजनस्यानुष्ठानादेः संभवात्; यथा द्रव्यदेवतादिप्रकाशकेषु मन्त्रेष्वधीयमानेषु द्रव्यादिज्ञाने जातेऽपि पुनरनुष्ठानकाले मन्त्रैरनुस्मर्तव्यमिति प्रयोगविधिरुपलभ्यते तथात्रापीति । नचोत्पत्तिविनियोगाधिकारिविधीनामसंभवात् प्रयोगविध्यसंभव[3] इति शङ्कनीयम्; उत्पत्तिविधेरध्याहारेणापि प्रसिद्धौ प्रकरणवशाच्छमादिकं विनियोजयन् "आत्मानं पश्येत्" इति प्रयोगविधिरुपपद्यते; ततश्च रात्रिसत्रन्यायेन "ज्ञात्वा देवं मुच्यते सर्वपाशैः" इत्याद्यर्थवादावगते मोक्षकामोऽधिकारो कल्पनीयो भवति; ततो मोक्षकामः शमादियुक्तो ब्रह्मज्ञानं संपादयेदिति प्रयोगविधिलाभः;

ननु ब्रह्मज्ञानस्य विधेयत्वमनुपपन्नम्; "आत्मा वा अरे द्रष्टव्य" इत्यादौ नित्ये ब्रह्मणि व्यापिनि निर्विकारे विशुद्धे चात्मनि न कर्मकारकभावो युज्यते, येन विधिसंभवः; उत्पत्तिप्राप्तिविकारसंस्काराणामत्रासंभवात् ।

नच स्वतन्त्रफलाय सक्तुन्यायेन कर्मकारकतां परित्यज्य करणत्वविपरिणामेनात्मना पश्येदिति विधातुं शक्यं, वैषम्यात्; तथाहि क्रियाकृतातिशयस्य भस्मीभावलक्षणस्य सक्तुष्वसंभवात् तेषु शब्दतः कर्मत्वेऽप्यर्थतः करणत्वमेव पर्यवसितं[4], तदस्यात्मनि न संभवः[5]; अतश्चापि वेदान्तानां न ब्रह्मज्ञानविधिपरत्वमिति चेन्न, आत्मनि कर्मत्वप्रयुक्तोत्पत्त्याद्यसभवेऽपि कर्तृस्थमोक्षफलाय विध्युपपत्तेः; प्राप्ते कथं विधिरिति चेन्न; प्राप्तिः पाक्षिकी नित्या वा, उभयथापि नियमादिविधिः संभवति ।

ननु तथा सति वेदान्तानां विधिपरत्वेन ब्रह्मपरत्वमनुपपन्नमेव । यदुक्तं "रूपप्रत्यायकेन चक्षुषा द्रव्यसिद्धिवद्विधिपरैरपि वेदान्तैर्ब्रह्मसिद्धिः" इति, तदयुक्तम्; चक्षुर्हि संप्रयो-

---

१ सिद्धत्वाच्छब्दार्थसंबन्धग्रहस्य इति पा० ।

२—नर्थाननूद्य, एनमवेहि, इममवगच्छ, इत्यभिप्रायेणाङ्गुल्या—इति पा० ।

३—ह्युच्यते इति पा० ।

४ तत्स्वरूपमिति शेषत्वम् इति वरपा० ।

---

१ फलं ब्रह्मज्ञानम् इति वरपा० ।

२ तद्दर्शनादिविधि—इति पा० ।

३ नचोत्पत्तिविनियोग—इति पा० ।

४ शब्दतः करणत्वेऽप्यर्थतः कर्मत्वमस्ति इति वरपा० ।

५ न तस्यात्मनि संभव इति वर पा० ।

गापेक्षमेव[1] प्रतिवस्तु प्रमाणं, न तथा शब्दः; किंतु यत्र तात्पर्यं तत्र प्रमाणं; तस्माद्वेदान्तानां ब्रह्मप्रमापकत्वं ब्रह्मज्ञानविधायकत्वं च न संभवतीति चेन्न; "समिधो यजति" इत्यादीनां वाक्यानां पञ्चप्रयाजविधायकत्वं तदनुष्ठानक्रमविधायकत्वं चेत्युभयपरत्वदर्शनाद्वेदान्तवाक्यानामपि ब्रह्मप्रमापकत्वं[2]; ब्रह्मज्ञानं मोक्षोपकारकं प्रति च विधायकत्वं युक्तमेव ।

ननु ब्रह्मणि वाक्यादेव ज्ञातेऽपि तज्ज्ञानविधिः किंप्रयोजनः! इति चेन्न[3], वाक्येन परोक्षत्वेन ज्ञातेऽपि ब्रह्मणि तत्साक्षात्काराय ज्ञानविधेरुपपत्तेः; कथं भेद इति चेत्; यच्छब्दजन्यं ज्ञानं न तत्साक्षात्कारहेतुः, किंतूपासनारूपज्ञानमेव; तथाच श्रूयते,

"ध्यात्वा मुनिर्गच्छति भूतयोनिं
समस्तसाक्षिं तमसः परस्तात्" ।
"ज्ञाननिर्मथनादेव पाशं दहति पण्डितः" ।

इत्यादिषु ।

"ज्ञात्वा देवं मुच्यते सर्वपाशैः" ।
"शिवं[4] ज्ञात्वा अमृता भवन्ति" ।

इत्यादिषु च, तथा,

"श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः ।
मत्वा च सततं ध्येय एते दर्शनहेतवः" ॥

इत्यत्र श्रवणमननसंपन्नज्ञानाविनाभूतं निदिध्यासनं ब्रह्मणः साक्षात्कारे निमित्तमिति स्मर्यते; अत उपासनरूपं ज्ञानं मोक्षफलं विधीयते; "आत्मन्येवात्मानं पश्येत्" "शंभुराकाशमध्ये ध्येय"इत्यादिषु, "तज्जलानिति शान्त उपासीत" "इति प्राचीनयोग्योपास्व" इत्यादिषु च प्रसिद्धमेव; तथा "ब्रह्मविदाप्नोति परम्," इत्यादिषु ब्रह्मस्वरूपोपासना तत्फलादिकमुपदिश्यते, अन्यथा सत्यत्वादिविशिष्टब्रह्मणा सह कथं सकलकामावाप्तिः फलं तादृशब्रह्मसाक्षात्करणं च सिध्यति; "सत्यं ज्ञानमनन्तं ब्रह्म" "आनन्दं[5] ब्रह्म" "आकाशशरीरं ब्रह्म" "सत्यात्मप्राणारामं मनआनन्दं शान्तिसमृद्धममृतं," "ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतं विरूपाक्षम्" इति सत्यज्ञानानन्दस्वरूपं स्वात्मारामं उपशान्तसर्वोपद्रवकलङ्कं सकलमङ्गलात्मकं परमशक्त्याविनाभूतया शबलरूपतया कृष्णपिङ्गलं विरूपाक्षं त्रिलोचनं परब्रह्म हि प्रसिद्धं श्रुतिभ्य उपक्रमादितात्पर्यलिङ्गैर्निर्णीयते[1]; "यो वेद निहितं गुहायाम्" "इति प्राचीनयोग्योपास्व" "विश्वरूपाय वै नम" इति ज्ञानाविनाभूतं तदुपासनं विधीयते; "सर्वान् कामान्" इत्यादिना सकलकामावाप्तिर्ब्रह्मणा सहोपासकानामवगम्यते; अतो निष्कामलिङ्गधर्मोपेतो निषिद्धकाम्यकर्मरहितो यथाश्रुतश्रुतिस्मृतिचोदितकर्मानुष्ठानसंपन्नचित्तशुद्धिः शमाद्यनुगृहीतपरमशिवभक्तिभावित एवं मुमुक्षूणां श्रुतिसारेभ्यः शिवाभिधेयं परं ब्रह्म विदित्वा "तदुपासीत" इति ज्ञानोपासनाविधिरुपपन्नः । अत्र शिवोपपदग्रहणं विरूपाक्षस्य परब्रह्मणः परमविशुद्धिमङ्गलभाजनत्वान्मुमुक्षूणामुपासनैकविषयत्वद्योतनार्थं, तथाथर्वशिखायां "शिव एको ध्येयः शिवंकरः सर्वमन्यत् परित्यज्य" इति श्रूयते शिवशब्दवाच्यवस्तुन एव ध्येयत्वमिति; अन्यथा कथं संसारनिवृत्तिः; निरस्तसमस्तदोषकलङ्कनिरतिशयमङ्गलाधारत्वं हि शिवत्वं; यज्ज्ञानान्मोक्षस्वरूपं फलमुच्यते;

"यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।
तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति" ॥

इति, "शिव एको ध्येयः शिवंकरः सर्वमन्यत् परित्यज्य" इति शिवव्यतिरिक्तस्य मुमुक्षूणां ज्ञेयत्वं ध्येयत्वं च परिसंख्यायते; अतः शिव एव परं ब्रह्म मोक्षकामैर्ज्ञातव्यो ध्यातव्य इति; अतस्तात्पर्यलिङ्गसमन्वयेन ब्रह्मपरा वेदान्तास्तदुपासनविधिपराश्चेत्यविरोधः ॥ ४ ॥

उक्तस्य ब्रह्मलक्षणस्य प्रधानेऽतिव्याप्तिमाशङ्क्याह ॥

॥ ईक्षतेर्नाशब्दम् ॥ ५ ॥

छान्दोग्ये श्रूयतेऽस्य विषयः । "सदेव सोम्येदमग्र आसीत्" "एकमेवाद्वितीयं" "तदैक्षत बहु स्यां प्रजायेय" इत्यादि । इह पूर्वभावितया सकलप्रपञ्चस्यास्य कारणतया श्रूयमाणं सदिति वस्तु ब्रह्म वा प्रधानं वेति संदेहः । प्रधानस्यैव जगत्कारणत्वं युक्तम्; "अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम्" इतिश्रुत्यन्तरे श्रवणात्; अत्र हि बहुप्रजाजनकत्वं लोहितादिवर्णानुमितरजःसत्त्वतमोरूपायाः सांख्यप्रकृतेरवगम्यते; तदानुगुण्येनात्रापि सच्छब्दवाच्यं जगत्कारणं प्रधानमेव; रजःसत्त्वयोगादस्य क्रियाज्ञानशक्तिसंबन्धोऽपि युज्यते, येन जगत्कारणत्वसिद्धिः; अचेतनस्य प्रधानस्य जगदाकारपरिणामो युक्तो न चेतनस्य परमेश्वरस्य कूटस्थस्य, कारणविकृतिरूपत्वात् परिणामस्य; ततो न्यायतः श्रुत्या च प्रधानमेव जगत्कारणं सत्पदवाच्यमिति प्राप्ते ब्रूमः । अशब्दमा-

१ संप्रयोगे सति निरपेक्षमेव इति पा० ।
२—स्वरूपप्रमा—इति पा० ।
३—विधिरप्रयोजनस्तस्य पूर्वज्ञानादेव संभवादिति चेन्न; इति पा० ।
४ ईशं इति पा० ।
५ आनन्दो इति वरपा० ।

१ ब्रह्मोपक्रमादितात्पर्यलिङ्गैर्निरूप्यते इति पा० ।

नुमानिकं प्रधानं न जगत्कारणं सत्पदवाच्यं वस्तु, अपितु ब्रह्मैव चेतनम्, ईक्षतिश्रवणात्, "तदैक्षत बहु स्यां प्रजायेय" इति ;न ह्यचेतने प्रधाने चेतनधर्म ईक्षतिः संभवति, यदुक्तं "बह्वीं प्रजां जनयन्तीं सरूपाम्" इति श्रुत्यन्तरश्रवणात् सांख्यप्रकृतेरत्र जगत्कारणत्वम्" इति, तदसंगतम् ; "चमसवदविशेषात्" इति सूत्रे हि परमेश्वरकारणिकाया एव प्रकृतेर्बहुप्रजाजनकत्वमित्युपपादयिष्यामः। "रजःसत्त्वरूपतया क्रियाज्ञानशक्तिसंबन्धः प्रधानस्य" इति यदुक्तं तदयुक्तं; त्रिगुणात्मिकायाः प्रकृतेस्तमःपार्थक्येन रजःसत्त्वयोगाभावात्[1] ; तमसि न्यग्भूते रजःसत्त्वयोरुद्रेके ज्ञानक्रियासंबन्धः प्रधानस्येति न वाच्यं, "सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः" इत्यङ्गीकारात् ; "कूटस्थस्य परमेश्वरस्य जगदाकारेण परिणामो विकारहेतुः" इति यदभाणि, तदज्ञानविलसितं ; नामरूपविभागानर्हसूक्ष्मचिदचिच्छक्तिविशिष्टस्य परमेश्वरस्य कारणत्वं नामरूपविभागार्हस्थूलचिदचिच्छक्तिविशिष्टस्य कार्यत्वमिति वदतामस्माकं तत्प्रसङ्गभयाभावात् ।

ननु ' सदेव सौम्येदमग्र आसीत्" "एकमेवाद्वितीयम्" इत्यादिना सद्रूपं वस्तु निर्विशेषमवधारणादवगम्यते ; कारणावस्थमेतत् कथं सूक्ष्मप्रपञ्चविशिष्टमित्युच्यत इति चेत्, सदेवेत्यवधारणेन न विशेषनिषेधः, किंत्वसत्कारणत्वनिषेधः ; "असद्वा इदमग्र आसीत्" "ततो वै सदजायत" इति श्रवणात्, असत्कारणत्वस्य भ्रान्तिप्रसक्तत्वात् ।

किंच, "सदेव सौम्येदमग्र आसीत्" "एकमेवाद्वितीयम्" इत्यत्र कथं निर्विशेषत्वं ब्रह्मणः, "आसीत्" इति हि क्रियाविशेषः, "अग्र" इति कालविशेषः, "एकमेव" इत्यवधारणमधिष्ठात्रन्तरनिषेधपरम् ; "अद्वितीयम्" इति जगदुपादानत्वमुच्यते ; अत एव सर्वज्ञमनन्तशक्तिविशेषं च ; कथं[2] सर्वज्ञत्वसर्वशक्तिमत्त्वविशेषमन्तरेण जगदुभयकारणत्वं ब्रह्मणो भवति, अथवा प्रकृतिप्रत्ययात्मकस्य सत्पदस्य नैकवस्तुपरत्वं युक्तं, प्रकृत्या प्रत्ययेन च सत्पदस्य नैकवस्तुद्वयप्रतिपादनपरत्वात्, तथाभियुक्तसूक्तिः,

"शक्तिः शिवश्च सच्छब्दप्रकृतिप्रत्ययोदितौ ।
तौ ब्रह्मसामरस्येन समस्तजगदात्मकौ" ॥

इति, स्थूलसूक्ष्मचिदचित्प्रपञ्चरूपशक्तिविशिष्टः परमेश्वर एव कार्यकारणरूपः सत्पदविषय इति निर्णयः ॥ ५ ॥

१—योरभावात् इति पा० ।

२ अत एवानन्तशक्तिविशेषं; कथं इति पा० ।

॥ गौणश्चेन्नात्मशब्दात् ॥ ६ ॥

ईक्षतेश्चेतनधर्मस्याचेतने प्रधाने योगाभावाच्चेतनमेव परं ब्रह्म सत्पदवाच्यं कारणमिति प्रतिपादितं, तदसंगतमेव ; "तत् तेज ऐक्षत" "ता आप ऐक्षन्त" इत्यादावचेतनेऽपीक्षतिर्यथा गौणः श्रूयते, तथा प्रधानेऽपि गौण इति चेन्न ; चेतनवाचिन आत्मशब्दात्, "सदेव सौम्येदमग्र आसीत्" इत्यारभ्य उपसहारे "स आत्मा तत् त्वमसि" इति श्रवणात् ; तेजःप्रभृतिष्वपि न गौणमीक्षतिश्रवणं, तत्तदात्मतया परमेश्वरस्य चेतनस्यानुवृत्तेः ॥ ६ ॥

नन्वीक्षतिश्रवणं गौणमभ्युपेत्याप्यचेतनं प्रधानं सद्रूपं जगतः कारणमिति वक्तुमशक्यं, तस्य चेतनत्ववाचिन आत्मशब्दात् इति निरूपितं, भवतु नात्मशब्दस्याचेतनं प्रधानमर्थः, भवति हि चेतनस्य जीवस्यात्मशब्दवाच्यत्वं मुख्यं, ततो जीव एव चेतनो जगत्कारणं सद्रूपमित्यत आह ॥

॥ तन्निष्ठस्य मोक्षोपदेशात् ॥ ७ ॥

सत्पदवाच्यतत्त्वनिष्ठस्य मोक्ष उपदिश्यते, "तस्य तावदेव चिरं यावन्न विमोक्ष्ये" "अथ संपत्स्ये" इति; तस्मान्न प्रधानं जीवश्चात्र सत्पदविषयः। प्रधानकारणवादिनामपि तन्निष्ठस्य मोक्षो नाभिमतस्त्याज्यत्वात्, जीवनिष्ठस्य च निषेधात्[1]; "शिव एको ध्येयः शिवंकरः सर्वमन्यत् परित्यज्य" इति ॥ ७ ॥

पुनरपि विस्पष्टं हेतुमाह प्रधाननिराकरणे ॥

॥ हेयत्वावचनाच्च ॥ ८ ॥

यदि प्रधानमेवात्र विवक्षितं तदा तस्य हेयत्वमेवोच्येत ; "तत् त्वमसि" इति मोक्षहेतुतया ध्येयत्वमेवोच्यते, ततश्च न प्रधानमिति युक्तम् ॥ ८ ॥

किंच, प्रधानपक्षे विरोध इत्याह ॥

॥ प्रतिज्ञाविरोधात्* ॥ ९ ॥

इतश्च न प्रधानं सत्पदवाच्यम्, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोधात् ; सत्पदवाच्यतत्त्वज्ञानेन तत्कार्यतया सकलचेतनाचेतनवस्तुविज्ञानं भवति ; "येनाश्रुतं श्रुतं भवति" इत्यादिना प्रतिज्ञायते, प्रधानकारणवादे विरुद्धमेतत्, चेतनस्य प्रधानकारणत्वायोगात् ; प्रधाने कारणे ज्ञाते जाड्यविकारास्पदं तत्कार्यमिदं च सर्वं ज्ञायते, यथा मृदि ज्ञातायामेतद्घटादिकम् ॥ ९ ॥

ततः कोऽत्र विरोध इत्याशङ्क्याह ॥

१ नच जीवनिष्ठस्य निषेधात् इति पा०।

* इदं सूत्रं शंकरमते "हेयत्वावचनाच्च" इति चकारेणैव गृहीतार्थमिति न तेन पृथगुपन्यस्तं सूत्रत्वेनेत्यवगन्तव्यम् ।

॥ स्वाप्ययात् ॥ १० ॥

इतश्च न प्रधानं स्वतन्त्रं "स्वप्नान्तं सोम्य विजानीहि यत्रैष पुरुषः स्वपिति नाम" "तदा सोम्य सता संपन्नो भवति" "स्वमपीतो भवति" "तस्मादेनं स्वपितीत्याचक्षत" इति जीवस्य चेतनस्य सता संपन्नस्य स्वाप्ययवचनात्; अप्ययः प्रलयः ॥ १० ॥

अचेतने प्रधाने चेतनस्य लयो न युक्तः; अतो न प्रधानं सदित्युच्यते, सच्छब्देन परमेश्वर एव सर्वत्र प्रतिपाद्यते, न प्रधानमित्याह ॥

॥ गतिसामान्यात् ॥ ११ ॥

यथास्यामुपनिषदि सत्पदस्य परमेश्वरवाचित्वं न गतिस्तथा श्रुत्यन्तरेऽपि समाना । "पुरुषो वै रुद्रः सन्महो नमो नम" इत्यादौ ॥ ११ ॥

ततः सत्पदवाच्यः परमेश्वर एवेति व्यक्तमेवास्यामुपनिषदि सत्पदवाच्यादात्मनः सर्वोत्पत्तिः श्रूयत इत्याह ॥

॥ श्रुतत्वाच्च ॥ १२ ॥

अत्रापि "आत्मैवेदं" "सर्वं सन्मूलाः सोम्येमाः प्रजा" इत्यात्मन एव सर्वोत्पत्तिः श्रूयते; ततो जगत्कारणत्वेन सत्पदवाच्यं ब्रह्मैव न प्रधानमिति सिद्धम् ॥ १२ ॥

इह ब्रह्मलक्षणस्य जगत्कारणस्य शास्त्रेऽसमधिगम्यस्य तान्त्रिके प्रधानेऽतिव्याप्तिमाशङ्क्य चेतनत्वादिहेतुना यथा तस्मिन्नतिव्याप्तिर्न भवति तथा निरूपितम्; अचेतने प्रधान इव चेतनेऽपि जीवे तत्रातिव्याप्तमिति [1]वक्तुमधिकरणान्तरमारभ्यते ॥

॥ आनन्दमयोऽभ्यासात् ॥ १३ ॥

"तस्माद्वा एतस्मादात्मन आकाशः संभूत" इत्यारभ्य "तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्मानन्दमय" इति "कश्चिदाकाशादिसकलभूतकारणत्वेनान्नमयादिपञ्चकोशकञ्चुकान्तरनिगूढ आत्मानन्दमय" इत्यानन्दवल्यामाम्नायते; तत्रानन्दमय आत्मा जीवो वा परमेश्वरो वेति संदेहः । जीव इति पूर्वपक्षः, तद्धर्माणामत्रोपलम्भात्; तथाहि "पृथिव्या ओषधयः", "ओषधिभ्योऽन्नम्," "अन्नात् पुरुष" इत्यादिना पञ्चकोशाकारं[2] शरीरादिकं निरूप्यते; तत्र "अन्नमय" इति शरीरस्वरूपमात्रमुच्यते, "प्राणमय" इति तदन्तर्वर्ती प्राणः, "मनोमय" इति तदन्तर्वर्ति मनः, "विज्ञानमय" इति तदन्तर्वर्तिनी बुद्धिः, "आनन्दमय" इति सर्वेषामन्नमयादीनामाश्रयो

१ जीवे ब्रह्मणः सकलं जगत्कारणत्वादि लक्षणं न व्यभिचरतीति वक्तु—इति पा० ।

२ पञ्चावयवं इति पा० ।

जीव एव; अन्नादीनां शिरःप्रभृतिकल्पना समुपासनार्था; अन्नादीनां ब्रह्मत्वेनोपासनात् तत्तदन्नादिसमृद्धिः फलमुक्तम्; कथमस्य संसारदुःखसागरमग्नस्य जीवस्यानन्दमयत्वाभिधानमिति चेन्न; अत्रानन्दशब्देन परं ब्रह्मोच्यते, "आनन्दो ब्रह्म" इति श्रवणात्; मयट्शब्दस्य विकारार्थत्वात् तत्कार्यभूतो जीव एव आनन्दमय इत्युच्यते; नित्यसंपन्नशिवत्वस्य ब्रह्मण आनन्दमयत्वाङ्गीकारे, "अन्नमयप्राणमयविज्ञानमयानन्दमया मे शुध्यन्ताम्" इति शुद्धिप्रार्थना व्यर्था स्यात्; अतोऽयमानन्दमय आत्मा जीव एव न परमेश्वर इति प्राप्ते ब्रूमः । आनन्दमयोऽयमात्मा परमेश्वर इति सिद्धान्तः; कुतः; अस्यानन्दस्य निरतिशयत्वेनाभ्यासात्; कथमभ्यस्यते; "सैषानन्दस्य मीमांसा[1] भवति" इत्यारभ्य मानुषविशेषादिप्रजापतिपर्यन्तं तत्तदानन्दस्योपर्युपरि शतगुणमतिशयमभिधाय "स एको ब्रह्मण आनन्द" इति ब्रह्मानन्दस्यास्य निरतिशयशिरस्कत्वेनाभ्यासात्[2], तदेतन्निरतिशयानन्दभाजनत्वमस्य संसारिणो न संभवति, यदुक्तम्, "आनन्दमयस्येश्वरत्वे नित्यशुद्धस्य तस्य कथं विशुद्धिप्रार्थना" इति, तत्रेदमुत्तरम्; यथा प्रकृष्टप्रकाशस्य चन्द्रस्य तिरोधायकघनापगम एव प्रसादस्तथा तस्य नित्यशुद्धस्य तिरोधानमलापनयनमेव शुद्धिः; तस्मादानन्दमयः परमेश्वर एव ॥ १३ ॥

नन्वानन्द एव ब्रह्मेत्युच्यते, तद्विकार आनन्दमयः, मयटो विकारार्थत्वात्; आनन्दमयस्येश्वरत्वाभ्युपगमे ब्रह्मणोऽन्य ईश्वर इति प्राप्नोति; तथापि तस्य विकाररूपत्वादनित्यत्वमित्याशङ्कायामाह ॥

॥ विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ १४ ॥

अन्नमयादीनां यथान्नादिविकाररूपत्वं तथानन्दमय इत्यानन्दविकारः; यथा मृद्विकारो मृन्मयो घटादिः; अतो निर्विकारस्य परमेश्वरस्य विकारासंभवादयं जीव एवेति चेन्न; मयट्शब्दस्यात्र प्राचुर्यार्थत्वात्; अन्नमयप्राणमयमनोमयपर्यन्तमेव विकारार्थः; विज्ञानमयो विज्ञानप्रचुरो जीवः, आनन्दमयोऽप्यानन्दप्रचुरः परमेश्वरः ॥ १४ ॥

सर्वथा विकारप्रकरणपठितत्वाद्विकारार्थ एव समुचितो मयट्शब्दस्येत्याशङ्क्याह ॥

॥ तद्धेतुव्यपदेशाच्च ॥ १५ ।

"एष ह्येवानन्दयाति" इति जीवान् प्रत्यानन्दहेतुतयानन्दमयः श्रूयते; स्वयं प्रचुरानन्दो हि परानानन्दयति; अतः परमेश्वर एवानन्दमयः; आनन्दप्रचुरः परमेश्वर आनन्दमय इत्युक्तेऽपि ब्रह्मणोऽन्य एवायमिति गम्यते ॥ १५ ॥

१ मीमांसा सारस्वती भवति इति पा० ।

२ ब्रह्मानन्दो निरतिशयत्वेनाभ्यस्यते इति पा० ।

"ब्रह्म पुच्छं प्रतिष्ठा" इति ब्रह्माधारत्वेनास्यावगमात्, परमेश्वरादन्यत्वाङ्गीकारे ब्रह्मणोऽस्वातन्त्र्याज्जगत्कारणत्वाद्यसंभवः; अतो जीवपक्ष एव समीचीन इत्यत आह ॥

॥ मान्त्रवर्णिकमेव च गीयते ॥ १६ ॥

यत् "सत्यं ज्ञानमनन्तं ब्रह्म" इति मन्त्रवर्णोदितं ब्रह्म ततोऽन्योऽन्तर आत्मानन्दमय इत्यानन्दप्रचुरतयानन्दमय इति गीयते; "ब्रह्म पुच्छं प्रतिष्ठा" इति ब्रह्मशब्दः प्रणववाचकः; तस्य परमेश्वरवाचकत्वादाधारत्वम् ।

अत्र केचिदाहुः, परमाकाशरूपप्रकृत्यात्मानन्दमय इति श्रूयते; न विश्वाधिकं निमित्तं परं ब्रह्म; यत् "सत्यं ज्ञानमनन्तं ब्रह्म" इत्युच्यते; "तस्माद्वा एतस्मादात्मन आकाशः संभूत" इत्याकाशादिप्रपञ्चप्रकृतित्वेन श्रुतेरानन्दमयः परमाकाशः; परमाकाशरूपत्वमस्य "यदेष आकाश आनन्दो न स्यात्" इत्यतोऽवगम्यते; "ब्रह्म पुच्छं प्रतिष्ठा" इति ब्रह्मास्यानन्दो[1]काशस्याधारत्वेनावगम्यते; अत एव स एको ब्रह्मण आनन्द इति ब्रह्माश्रितत्वेनावगम्यते; पुनरेष एव, "आनन्दो ब्रह्मेति व्यजानात्" "आनन्दाद्ध्येव खल्विमानि भूतानि" इत्यादिना सकलभूतप्रकृतित्वेनाभिधीयते; तत्रानन्दो ब्रह्मेत्यस्यानन्दस्य ब्रह्मत्वव्यपदेशस्तु ब्रह्मणो धर्मत्वेन तदभेदात्; "सैषा भार्गवी वारुणी विद्या परमे व्योमन् प्रतिष्ठिता" इति ब्रह्मधर्मस्वरूपे परमानन्दरूपे प्रपञ्चप्रकृतौ परशक्तिपर्याये चिदानन्दात्मनि परमे व्योम्नि वारुणी विद्या समाप्तेत्युच्यते; ततो ब्रह्मधर्मस्वभावः प्रकृत्यात्मा परमाकाशरूपपरशक्तिरत्रानन्दमय इत्युच्यते; तद्धर्मित्वेन प्रतिष्ठेत्युच्यते परं ब्रह्म; विज्ञानमयश्च तदुपासको जीवः; प्रतिष्ठाभूताद् धर्मिणो ब्रह्मणो धर्मभूतस्यानन्दमयस्य शक्त्यात्मनोर्भेदादर्शनादानन्दमय आत्मा ब्रह्मेत्यभिप्रायेण "आनन्दमयोऽभ्यासात्" इति सूत्रकारेण सूत्रमवतारितमिति ।

अन्ये पुनः, "अस्माल्लोकात् प्रेत्य एतमन्नमयमात्मानमुपसंक्रम्य" इत्यादावन्नमयादीनां प्रत्येकं चेतनवाचकात्मश्रुतिसंबन्धात् संसारलोकादुत्क्रान्तस्य मुक्तस्य क्रमप्राप्यत्वावगमादेते सर्वेऽप्यन्नमयादय आत्मानः पञ्च चेतना अन्नाद्यनुमितपञ्चभूताधिष्ठातारः कारणभूतपुरुषा ब्रह्मविष्णुरुद्रेश्वरसदाशिवसंज्ञा अन्नमयाद्यात्माधारस्य सदाशिवस्यानन्दमयस्यापि कारणमूर्तिं परमशिवाख्यं ब्रह्म तत्प्रतिष्ठेत्युच्यते; तदभेदादानन्दमयस्य ब्रह्मत्वव्यपदेश इति सर्वथानन्दमयः परमेश्वर इति सिद्धम् ॥ १६ ॥

१ ब्रह्मानन्दा—इति पा० ।

ब्रह्मणः परमशिवस्य समन्वयसिद्धं जगत्कारणत्वादिकं लक्षणं प्रधानजीवयोर्न व्यभिचरतीति स्थापितम्; अतः परं जीवसमष्टिरूपस्य हिरण्यगर्भस्य जगत्कारणत्वादिकं श्रूयत इत्यत आह ॥

॥ नेतरोऽनुपपत्तेः ॥ १७ ॥

"यतः प्रसूता जगतः प्रसूती
तोयेन जीवान् विससर्ज भूम्याम् ।
यदोषधीभिः पुरुषान् पशूंश्च
विवेश भूतानि चराचराणि" ॥

इति श्रूयते महोपनिषद्यस्य विषयः । अत्र सकलजगत्प्रसूत्यादिहेतुत्वेन श्रूयमाणः पुरुषः परमेश्वर उतान्यो वेति संदेहः । हिरण्यगर्भ इति पूर्वपक्षः । कथं! तल्लिङ्गात्; ।

"एकार्णवे तु त्रैलोक्ये ब्रह्मा नारायणात्मकः ।
भोगिशय्यागतः शेते त्रैलोक्यग्रासबृंहितः" ॥

इति पुराणवचनाद् ब्रह्मणः समुद्रशायित्वमवगम्यते; तदिह श्रूयते तल्लिङ्गं, "यमन्तः समुद्रे कवयो वयन्ति" इति, "प्रजापतिश्चरति गर्भेऽन्तः" इति, स एवोपक्रमे सर्वानुप्रविष्टतयावगम्यते; उपसंहारे च "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयद् दिवं च पृथिवीं च" इत्यादिना तस्यैव कारणत्वमवगम्यते; तस्मादुपक्रमोपसंहारसिद्धस्य हिरण्यगर्भस्यानन्तरसिद्धधर्मोपपत्तिः[1] ।

किंच, तत्प्रतिपादनप्रदेशान्तरोपसंहारश्च कृतः; "अद्भ्यः संभूतो हिरण्यगर्भ इत्यष्टौ" इति; "अद्भ्यः संभूत" इति तत्र प्रजापतिरेव प्रतिपाद्यः; "प्रजापतिश्चरति गर्भेऽन्तरजायमानो बहुधा व्यजायत वै हिरण्यगर्भ" इति श्रवणात्; ततो हिरण्यगर्भः स एव जगत्प्रसूतिहेतुत्वादिनात्र प्रतिपाद्यत इति प्राप्ते ब्रूमः । शिवपरमेश्वरादितरो भिन्नो हिरण्यगर्भोऽत्र न प्रतिपाद्यः, जगत्प्रसूतिहेतुत्वादीनां परमेश्वरधर्माणां तस्मिन्ननुपपत्तेः; "यतः प्रसूता जगतः प्रसूती" इत्यारभ्य जगत्प्रसूतिहेतोस्तस्य ।

"अतः परं नान्यदणीयसं हि
परात् परं यन्महतो महान्तम् ।
यदेकमव्यक्तमनन्तरूपं
विश्वं पुराणं तमसः परस्तात्" ॥

इत्यादिना सर्वोत्कृष्टत्वं तमसः प्रकृतिमण्डलात् परत्वं चावगम्यते; ततश्चाण्डान्तर्वर्तिनो हिरण्यगर्भस्य न संभवति ।

१—स्यावान्तरवाक्यसिद्धसर्वधर्मोपपत्तिः इति पा० ।

किंच, "य एनं विदुरमृतास्ते भवन्ति" इत्यस्य ज्ञानादमृतत्वं मुक्तिरभिधीयते; तच्च हिरण्यगर्भे संभवति परमेश्वरस्य हि मुक्तिहेतुत्वमसाधारणं लिङ्गम्;

"यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।
तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति" ॥

इति श्रवणात्; यदुक्तम् "उपक्रमोपसंहारसिद्ध" इति, तदप्रयोजकम्; अनुपपत्त्या प्रजापतिधातृशब्दो हिरण्यगर्भं विहाय प्रजानां पशूनां पतिं जगद्धारमेकं परमेश्वरमेव प्रतिपादयतः। "अद्भ्यः संभूतो हिरण्यगर्भ" इत्युभयत्रापि परमेश्वर एव प्रतिपाद्यः; "य ईशेऽस्य द्विपदश्चतुष्पदः", "आदित्यवर्णं तमसः परस्तात्" इति विश्वेश्वरत्वविश्वातीतत्वतल्लिङ्गात्; ततो जगत्कारणत्वादिना प्रजापतिशब्दवाच्यः परमेश्वरो न हिरण्यगर्भः ॥ १७ ॥

परमेश्वरेण हिरण्यगर्भस्याभेदाज्जगत्कारणत्वमस्तीत्यत आह ॥

॥ भेदव्यपदेशाच्च ॥ १८ ॥

अस्यां महोपनिषदि परमेश्वरेण हिरण्यगर्भस्य भेदो व्यपदिश्यते कारणकार्यत्वेन; "यो देवानां प्रथमं पुरस्ताद्विश्वाधिको रुद्रो महर्षिर्हिरण्यगर्भः पश्यति जायमानम्" इति; अतो हिरण्यगर्भादेः सर्वप्रपञ्चस्य कारणत्वमीश्वरस्येति सिद्धम् ॥ १८ ॥

## ॥ अथ विद्धशालभञ्जिकानाटिकायाः ॥

॥ चतुर्थाङ्कशेषः ॥

ततः प्रविशन्ति नेपथ्ये पेटिकाहस्ताश्चेट्यः, सर्वाः परिक्रामितकेन ।

एका । हलातरंगिए एक्कहिं उण महाराओ पेक्खिदव्वो * ।

द्वितीया । सहि कुरंगिए जहिं आसण्णविआहकोदूहलपप्फुरिदो जणो दीसदि † ।

अन्या । अयि विअक्खणे किं विअ तरंगिआए मंतिदं । जो सहस्साणं महिसीणं पाणिग्गही तस्स कित्तिओ विअ कोदूहलहल्लफल्लो ‡ ।

अपरा । पिअसहि विअक्खणे किं णु क्खु अणहिण्णासि कंदप्पचरिदाणं णवकोदूहलो कामिजणो § ।

* हला तरङ्गिके कुत्र पुनर्महाराजः प्रेक्षितव्यः ।

† सखि कुरङ्गिके यत्रासन्नविवाहकौतूहलप्रस्फुरितो जनो दृश्यते ।

‡ अयि विचक्षणे किमिव तरङ्गिकया मन्त्रितम् । यः सहस्राणां महिषीणां पाणिग्राही तस्य कियानिव कौतूहलकलकलः ।

§ प्रियसखि विचक्षणे किं नु खलु अनभिज्ञासि कन्दर्पचरितानां नवकौतूहली कामिजनः ।

तरङ्गिणी । पुरोऽवलोक्य । एस भट्टा पंडुरपरिक्खामंगो पहादपुण्णिमाचंदो विअ सणिच्चराणुगदो अज्ज चाराअण द्विदीओ चित्तसालिआदुआरद्देसे दीसेदि । सर्वाः समुपसृत्य । जेदु जेदु भट्टा । देवी विण्णवेदि । आसण्णं लग्गं ता इमं णेवत्थमलंकरिअ अहिट्ठीअदु विआहचउक्किआ * ।

राजा । यदादिशति देवी ।

विदू । आत्मानं निर्वर्ण्य । भोदीओ संबंधिअस्स जणस्स वासभोज्जे किमुत्तरम् † ।

चेट्यः । इदं दास्सामो ‡ ।

विदू । किं विअ तं § ।

चेट्यः । जं केलितरुणो दोहलअं जं अ भअवत् तिलोअणो सीस्से समुव्वहइ ‖ ।

विदू । दण्डकाष्ठमुद्यम्य । आः दासीओ महाराअपिअवअस्सं पिंगलिआबम्हणीवल्लहं ससत्ताणं पठिदद्धपादअं महाबम्हणं अधिक्खिवध ता इमिणा तुम्हारिसचेडीजणचित्तवुत्तिकुडिलेण दंडकट्ठेण भुजंगजणजुगुप्सिआइं वअणाइं करिस्सं ¶ ।

तरं । मरिसदु २ अज्जो, संबंधिओत्ति तुए सह देवीविलासिणीओ वक्कुरं करेंति ** ।

अन्या । अलं वक्कुरेण दुव्वासो अज्जचाराअणो †† ।

तरं । सुआसो हुविस्सदि संपदं एव्व ता विवाहमहूत्तसोचिदं करेम्ह, सुलक्खणे हारलट्ठि कलकंठि वसंतलदे मंगलिए कामकेलि मिअंकलेहे बउलावलि परहुदिए विअक्खणे कप्पलदे पहुणो रसविअक्खणस्स कंकणबंधनेन विरएध विआहदिक्खणं ‡‡ ।

सर्वाः समुपसृत्य । रक्तवासः कुङ्कुमकङ्कणकुसुमादिकमुपनयन्ति ।

* एष भर्ता पाण्डुरपरिक्षामाङ्गः प्रभातपूर्णिमाचन्द्र इव शनैश्चरानुगत आर्यचारायण द्वितीयश्चित्रशालिकाद्वारोद्देशे दृश्यते । जयतु २ भर्ता । देवी विज्ञापयति । आसन्नं लग्नं तदिदं नेपथ्यमलंकृत्याधिष्ठीयतां विवाहचतुष्किकाम् ।

† भवत्यः संबन्धिन्योऽस्य जनस्य वासभोज्ये किमुत्तरम् ।

‡ इदं दास्यामः ।

§ किमिव तत् ।

‖ यत्कङ्केलितरोर्दोहदं यच्च भगवान् त्रिलोचनः शीर्षे समुद्वहति ।

¶ आः दास्यः महाराजप्रियवयस्यं पिङ्गलिकाब्राह्मणीवल्लभं स्वसृत्राणां पठितार्धपादं महाब्राह्मणमधिक्षिपथ । तदनेन युष्मादृशचेटीजनचित्तवृत्तिकुटिलेन दण्डकाष्ठेन भुजङ्गजनजुगुप्सितानि वदनानि करिष्ये ।

** मर्षतु २ आर्यः संबन्धिन्य इति त्वया सह देवीविलासिन्य उपहासं कुर्वन्ति ।

†† अलमुपहासेन दुर्वासाश्चारायणः ।

‡‡ सुवासा भविष्यति सांप्रतमेव तद्विवाहोचितं कुर्मः । सुलक्षणे हारयष्टि कलकण्ठि वसन्तलते माङ्गलिके कामकेलि मृगाङ्कलेखे बकुलावलि परभृतिके विचक्षणे कल्पलते प्रभो रसविचक्षणस्य कङ्कणबन्धनेन विरचयत विवाहदीक्षणम् ।

राजा । नाट्येन परिधत्ते ।

विदू । तदवशिष्टेन समालम्भनादिनात्मानं मण्डयति ।

विच । भोदिओ किं विलंबेध आरंभरमणिज्जाणि पअरणाइं होंति, ता एध गाएध णच्चेध अ * ।

विदू । भो एदाणं मज्झे अहं वि गाइस्सं णच्चिस्सं अ † ।

राजा । यदभिरुचितं भवते । विदूषकेण सह सर्वा गायन्ति नृत्यन्ति च ।

नेपथ्ये । भो विअक्खणामुहीओ किं विलंबेध आणेध महाराअं चउत्तरिअं सपरिवारा देवी संपत्ता ज्जेव्व ‡ ।

तरं । इदो २ महाराओ § । सर्वे परिक्रामन्ति ।

ततः प्रविशति देवी वधूटीवेषा मृगाङ्कावली कुवलयमाला च ।

देवी । अपवार्य । वत्से कुवलअमाले पेक्ख अत्तणो भत्तुणो सुसिद्धं महिलावेसं ‖ ।

कुवलयमाला अवनतमुखी हसति ।

राजा । स्वगतम् ।

दिवस इवास्मि सताप-
श्चन्द्रमुखीत्वेन रात्रिवत्त्वेषा ।
इदमपि चान्तररचितं
रक्तांशुकमावयोः संध्या ॥ ११ ॥

देवी । अज्जउत्त उग्घालीअदु मुहं स्से उदेदु भवणगब्भे चंदो ¶ ।

राजा । उपविश्य तथा कृत्वा । स्वगतम् ।

नयनच्छलेन सुतनो-
र्वदनच्छिते शशिनि कुलपतौ क्रोधात् ।
नासानालनिबद्ध-
स्फुटितमिवेन्दीवरं द्वेधा ॥ १२ ॥

देवी । वत्से मिअंकावलि कुण तारादंसणं वित्थारअ कुवलअसत्थरं ** ।

मृगा । लज्जावशादितस्ततश्चक्षुषी निधाय चिरमूर्ध्वमवलोकयति ।

राजा । स्वगतम् ।

* भवत्यः किं विलम्बयथ आरम्भरमणीयानि प्रकरणानि, तदेत साधयत गायत नृत्यत च ।

† भो एतासामध्ये अहमपि गास्ये नर्तिष्ये च ।

‡ भो विचक्षणामुख्य. किं विलम्बयत आनयत महाराजं चतुष्किकां सपरिवारा देवी संप्राप्तैव ।

§ इतः २ महाराजः ।

‖ वत्से कुवलयमाले प्रेक्ष आत्मनो भर्तुः सुसिद्धं महिलावेषम् ।

¶ आर्यपुत्र उद्घाटयतु मुखमस्याः उदेतु भवनगर्भे चन्द्रः ।

** वत्से मृगाङ्कावलि कुरु तारादर्शनं विस्तारय कुवलयसंस्तरम् ।

भवनभुवि सृजन्तस्तारहारावतारान्
दिशिदिशि विकिरन्तः केतकानां कुटुम्बम् ।
वियति च रचयन्तश्चन्द्रिकां दुग्धमुग्धां
प्रतिनयननिपाताः सुभ्रुवो विभ्रमन्ति ॥ १३ ॥

विदू । जनान्तिकेन एसा कुवलअमाला तिरिच्छेहिं दिट्ठिच्छडाकडक्खेहिं पिअदिव्व * ।

राजा । एवमेतत् ।

प्रणाली दीर्घस्य प्रतिपदमपाङ्गस्य सुहृदः
कटाक्षव्याक्षेपाः शिशुशफरफालप्रतिभुवः ।
सुवानाः सर्वस्वं कुसुमधनुषोऽस्मान्प्रति सखे
नवं नेत्राद्वैतं कुवलयदृशः संनिदधति ॥ १४ ॥

किं पुनः परकलत्रमेषा ।

विदू । णेहगदीए तुह ज्जेव्व एसा † ।

देवी । जनान्तिकेन कुवलयमालां प्रति । पेच्छ २ अत्तणो भत्तारं अज्जउत्तेण परिणिज्जमाणं । प्रकाशम् । अज्जउत्त संपदं दिज्जदु भामरीओ हुदवहम्मि होमिज्जंतु लाआ ‡ ।

राजा । परिणीयोपविशति ।

प्रविश्य प्रतीहारी । देव देवीमाउलस्स चंदवम्मस्स पहाणदूदेण सह अज्ज भाउराअणो दुवारे चिट्ठदि § ।

राजा । देवीमुखमवलोकयति ।

देवी । अविलंबिदं पवेसेहि ‖ ।

प्रतीहारी । तह त्ति ¶ निष्क्रान्तः ।

ततः प्रविशति भागुरायणो दूतश्च ।

उभौ । जयतु २ त्रिलिङ्गाधिपो देवः ।

भागु । इतो लाटाधिपतेर्दूतः ।

राजा । उपविश्य निवेद्यतामपि कुशलं चन्द्रवर्मणः ।

दूतः । देवानुग्रहेण ।

देवी । कुशलं मे मातुलाणीए हारलदाए ** ।

दूतः । अथ किम् ।

देवी । अवि सुमरेदि मं गुरुजणो †† ।

* एषा कुवलयमाला तिर्यग्भिर्दृष्टिच्छटाकटाक्षैः पिबतीव ।

† स्नेहगत्या तवैवेषा ।

‡ पश्य २ आत्मनो भर्तारमार्यपुत्रेण परिणीयमानम् । आर्यपुत्र सांप्रतं दीयतां भ्रामर्यः हुतवहे हूयन्तां लाजाः ।

§ देव देवीमातुलस्य चन्द्रवर्मणः प्रधानदूतेन सह आर्यभागुरायणो द्वारे तिष्ठति ।

‖ अविलम्बितं प्रवेशय ।

¶ तथेति ।

** कुशलं मे मातुलान्या हारलतायाः ।

†† अपि स्मरति मां गुरुजनः ।

दूतः । अन्तरात्मापि विस्मयते । देवीं प्रति । मातुलपुत्रजन्मना दिष्ट्या वर्धसे । सर्वे हर्षं नाटयन्ति । संदिष्टं चास्मत्स्वामिना ।

निस्सूनुना प्राक् परिकल्पिताभू-
न्मया मृगाङ्कावलिरेव पुत्रः ।
पुत्रावकल्पच्छलतश्च सेय-
मानायिता वः सचिवोत्तमेन ॥ १५ ॥

जातः संप्रति मे कुलैकतिलकः पुत्रस्तदेषा त्वया
भव्या कान्तिमती कलासु कुशला केलिप्रिया नीतिभूः ।
दैवज्ञोदितचक्रवर्तिगृहिणीभावा मृगाङ्कावली
देया कस्य चिदिन्दुसुन्दरयशःपूतस्य पृथ्वीपतेः ॥ १६ ॥

भागु । स्वगतम् । फलितं नो नीतिपादपलतया धिया ।

विदू । हस्तमुद्यम्य । भो दिण्णा परिणीदा अ एसा किं ण पेक्खसि पओट्ठे दररत्तसूत्तकंकणं पिअवअस्सस्स मिअंकावलीए अ मंडिदं किदं वरइत्तिअं * । सर्वे विस्मयन्ति ।

देवी । जनान्तिकेन । पेक्ख देव्वदुल्ललिदाइं, जं मए केलिकिलंतणेण अलीअं पडिकप्पिदं तं सच्चत्तणेण परिणदं । विचिन्त्य । भोदु एव्वं दाव । प्रकाशम् । अज्जमादुलसंदेसमंतरेण वि मए परिणाविदा एव्व एसा † ।

दूतः । देवि भवादृशीनां बुद्धयो यदृच्छयापि प्रवृत्ताः कार्यमनुरुन्धानाः परिणमन्ति ।

विदू । जनान्तिकेन । देवी एसा पच्छात्तावे पडिदा ‡ ।

राजा । तथैव । अनुगुणं हि दैवं सर्वस्मै स्वस्ति करोति ।

देवी । जनान्तिकेन । हला अह्मे कज्जवाहिरित्तीओ भामिदाओ एताणं उण साणुबंधाणं एस प्पबंधो § ।

मेखला । जधा एव्व देवीए महाणुभावत्तणं अंगीकिदं तह एव्व णिव्वाहीअदु किं गदे सलिले सेतुबंधेण किं गदे विआहे णक्खत्तपरिक्खाए ‖ ।

विदू । भो अमच्चचूडामणे अहिणवचाणक्को भवं, भाउराअण एसा वि कुवलअमाला पिअवअस्सस्स एव्व जदो महामुणिणो वि एव्वं मंतअंति ।

भज्जा दासो अ पुत्तो अ णिद्धणा सअला वि ते ।
जं ते समधिअच्छंति जस्स ते तस्स तं धणं * ॥ १७ ॥

दूतः । अहो स्मृतिवैशारद्यं महाराजनर्मसचिवस्य चारायणस्य ।

भागु । यथाह चारायणः । किं पुनरनेनैव कङ्कणेन देवि परिणापयैनामपि ।

देवी । जहा समत्थेदि महामच्चो † ।

विदू । कुवलयमालाया हस्तं गृहीत्वा राजहस्ते विनिवेश्य । भो जाणवदेण सालभज्जा अद्धभज्ज त्ति उच्चदि भवदो उण सअलभज्जा संवुत्ता ‡ । सर्वे हसन्ति ।

देवी । सविलक्षं स्मयते ।

विदू । चेटीः प्रति । भोदीओ गाएध णच्चध अहं पि गाइस्सं णच्चिस्सं । जदो विआहसंपुडो वुत्तो त्ति § । तथा कुर्वन्ति ।

मृगा । अपवार्य । सहर्षम् । एहि कुवलअमाले परिरंभस्सु मं कलत्तं भविअ सवत्ती संवुत्तासि ‖ ।

भागु । दक्षिणाक्षिस्पन्दं सूचयित्वा जनान्तिकेन । न जाने किं पुनरन्यदपि हर्षकारणम् ।

प्रविश्य प्रतीहारी । देव सिरिवत्साहिहेअसेणावदिणो आअदो कुरंगओ लेहहत्थओ दुआरे चिट्ठइ ¶ ।

भागु । प्रवेशय तम् ।

प्रती । निष्क्रान्ता ।

ततः प्रविशति कुरङ्गकः । प्रणम्य । जेदु २ भट्टा ** । लेखं प्रक्षिपति ।

भागु । गृहीत्वा वाचयति ।

स्वस्तिश्रीमन्नृपुर्यां तुहिनकरसुता-
वीचिवाचालिताया
देवं कर्पूरवर्षं विनयनतशिराः
सर्वसेनाधिनाथः ।

---

* भो दत्ता परिणीता च एषा किं न प्रेक्षसे प्रकोष्ठे दररक्तसूत्रकङ्कणं प्रियवयस्यस्य मृगाङ्कावल्याश्च मण्डितं कृतं वरयितृकम् ।

† प्रेक्ष दैवदुर्ललितानि यन्मया केलिक्रीडितकेनालीकं परिकल्पितं तत्सत्यत्वेन परिणतम् । भवत्वेवं तावत् । आर्य मातुलसंदेशमन्तरेणापि मया परिणायितैवैषा ।

‡ देवी एषा पश्चात्तापे पतिता ।

§ हला वयं कार्यवाहिरीत्या भ्रान्ताः एतयोः पुनः सानुबन्धयोरेष प्रबन्धः ।

‖ यथैव देव्या महानुभावत्वमङ्गीकृतं तथैव निर्वाह्यतु किं गते सलिले सेतुबन्धेन किं गते विवाहे नक्षत्रपरीक्षया ।

* भो अमात्यचूडामणे अभिनवचाणक्यो भवान् । भागुरायण एषापि कुवलयमाला प्रियवयस्यस्यैव यतो महामुनयोऽप्येवं मन्त्रयन्ति ।

भार्या दासश्च पुत्रश्च निर्धनाः सकला अपि ।
यं ते समधिगच्छन्ति तस्य ते तस्य तद्धनम् ॥

† यथा समर्थयति महामात्यः ।

‡ भो जानपदेन श्यालभार्या अर्धभार्येत्युच्यते भवतः पुनः सकलभार्या संवृत्ता ।

§ भवत्यो गायत नृत्यत अहमपि गास्ये नर्तिष्ये यतो विवाहसंपुटो वृत्त इति ।

‖ एहि कुवलयमाले परिरम्भस्व मां कलत्रं भूत्वा सपत्नीसंवृत्तासि ।

¶ देव श्रीवत्साभिधेयसेनापतेरागतः कुरङ्गको लेखहस्तो द्वारि तिष्ठति ।

** जयतु २ भर्ता ।

श्रीवत्सोवत्सलत्वान्मुरलजनवधू-
लोचनैरर्च्यमाने
पादद्वन्द्वारविन्दे चणमभिरचय-
त्यञ्जलिं मूर्ध्नि भक्त्या ॥ १८ ॥

श्रेयोऽन्यत्कार्यं च लिख्यते । करचुलितिलकस्य पार्थिवस्य तव प्रतापेन महामन्त्रिभागुरायणस्य मतिवैशद्येन मादृशानां च पदातिलवानामादेशनिर्वहणेन प्राचीप्रतीच्युदीचीदिग्विभागे सर्वे एव राजानश्चण्डवृत्तयो दण्डोपनताःस्थिताः केवलमवाचीक्षितिपतयो दृश्यन्ते स्म । तत्रापि विनिवेद्यते । तत्कुल्यापहृतराज्यः कुन्तलाधिपतिर्वीरपालोदेवं शरणमागतो देवादेशाच्च तं पुरस्कृत्य वयं पयोष्णीतीरे समावासिताः । तदा च ।

कार्णाटो युद्धतन्त्रे चतुरतरमतिः
सिंहलः सिंहकर्मा
पाण्ड्यश्चण्डासियष्टिर्मुरलपरिवृढः
कार्मुकप्रौढवाहः ।
आन्ध्रो नीरन्ध्रसारः समरभुवि सुरः
कुन्तलः कुन्तलेशः
किं चान्येकोङ्कणाद्या अपि नरपतयः
संश्रिताः संघवृत्तिम् ॥ १९ ॥

अत्रान्तरे तैः सहास्मदीयानामपि बलानां समरसंमर्दो वृत्तः ।

राजा । समरकर्मणि निसर्गोद्भटा एव कार्णाटाः ।

भागु । वाचयति । तत्र च

प्रेयान्मेदन्तिदन्तप्रवसदसुरयं वल्लभो मे विपक्षः
कुन्तप्रोतोपि योऽयं सरति मम रुचिस्ताण्डवी यत्कबन्धः ।
अत्रास्मत्प्रेमबद्धभ्रुकुटिमुखमिदं यस्य लूनेऽपि कण्ठे
युद्धे देवाङ्गनानामिति वरवरणे न श्रुताः केन वाचः ॥ २० ॥

किं बहुलिखितेन तान्विजित्यास्माभिः स्वराज्ये वीरपालोऽभिषिक्तः । शेषं कुरङ्गकमुखादेवावगन्तव्यम् ।

कुर । भट्टा पडहस्स विअ मे मुहं अत्थि ण उण वाणी * ।

राजा । लेखमुखा एव लेखवाहा भवन्ति ।

भागु । तदधुना

आगङ्गापातपूतप्लुतपुलिनतटात्पूर्वतस्ताम्रपर्णी
पूर्णादादाक्षिणात्यात्तुहिनकरसुतावल्लभादाप्रतीचः ।
नृत्यच्चण्डीशचूडाच्युतविबुधनदीनन्दितात्तावदेव
क्षीराम्भोधेरुदीचः करचुलितिलको वर्तते चक्रवर्ती ॥ २१ ॥

राजानं प्रत्यञ्जलिं बध्वा । किं ते भूयः प्रियमुपकरोमि ।

राजा । अतः परमपि प्रियमस्ति ।

देवी कोपकषायितानुगमिता लब्धा मृगाङ्कावली
प्रागूढापि ममाद्य कुन्तलपतेः पुत्री कलत्रीकृता ।
युष्मन्नीतिवशेन तस्य च महासेनापतेर्विक्रमैः
संजाता मम चक्रवर्तिपदवी किं नाम यत्प्रार्थ्यते ॥ २२ ॥

तथापीदमस्तु

वामाङ्गं पृथुलस्तनस्तबकितं यावद्भवानीपते-
र्लक्ष्मीकण्ठहठग्रहव्यसनिता यावच्च दोष्णां हरेः ।
यावच्च प्रतिमाप्रसारणविधौ व्यग्रौ करौ ब्रह्मणः
स्थेयासुः श्रुतिशुक्तिलेह्यमधुरास्तावत्सतां सूक्तयः ॥ २३ ॥

इति निष्क्रान्ताः सर्वे ।

इति श्रीमद्बालकविकविराजराजशेखरविरचितायां विद्धशालभञ्जिकानाटिकायां चतुर्थोऽङ्को नाटिका च समाप्तिमगात् ॥

* भर्तः पटहस्येव मे मुखमस्ति न पुनर्वाणी ।

---

# THE VIDVAN-MANO-RANJINI

## OR

## REJOICER OF THE MIND OF THE LEARNED,

A COMMENTARY ON SAD-ÁNANDA'S VEDÁNTA-SÁRA, BY RÁMA-TÍRTHA.

(*Continued from page* 280.)

*By austerities.* By the words *et cætera* is included the ripening of the astringent, [that is, the ripening of works in such a manner that they lead to no result]; and by the word *Works* &c., another traditional text. It may be urged that if works, constant &c., have for their result purification of the intellect, and its concentration, then the revealed text indicating the world of the progenitors as the result of constant and other observances, By works, the sphere of the manes, by knowledge the sphere of the deities, all these holy worlds [are obtained,] will be contravened. The author, therefore, proceeds.

तपसेति । आदिपदात् कषायपक्तिः कर्म्माणीत्यादिस्मृत्यन्तरग्रहः । ननु नित्यादेः सत्त्वशुद्धितदैकाग्र्यफलकत्वे कर्म्मणा पितृलोको विद्यया देवलोकः सर्व्वएते पुण्यलोकाभवन्तीति श्रुतिर्नित्यादीनां पितृलोकादिफलपरा पीड्येतेति अतआह ॥

*On the constant and occasional ceremonies* Here there is no mention of expiations, these having no intermediate result; for no result thereof has been heard of save destruction of contracted guilt But in the case of these two, an intermediate result is heard of,—such is the distinction. The intermediate result of these constant and occasional ceremonies is the attainment of the world of the progenitors; whereas the intermediate result of devotions is the attainment of the world of truth [or of Brahmá],—such is the difference. Thus the intermediate nature of such results as the sphere of the manes is subordinately concomitant, just like the shade and fragrance described in the text, There being planted [a tree] the operative cause, for the sake of mangoes, shade and fragrance are along therewith produced. Inasmuch as constant and other ceremonies are not enjoined with reference to these results, and connection with desire of knowledge is enjoined, purification of the intellect is the main end of works. Such is the sense. It may be asked: How is the world of the progenitors to be effected by constant and other observances, since it is effected by obsequial and other ceremonies? and how can the sphere of the deities be the result of knowledge since it is known that it is effected only by the duties of the order of continent ascetics, whether their vows be for life or otherwise, according to such scriptural texts as The path of the worshipful is northwards, among the eighty thousand continent ascetics? If this be asked, we inquire whether the obsequial rites &c, be included among the constant and occasional ceremonies, or among interested actions In the first alternative, how can the world of the manes fail to be a result of constant and other works? In the second, since this world is not implied as a fruit connected with the injunction, the injunction having no connection with the sphere of the manes as a result, the northward passage [as it is technically called] is also impossible to the order of continent ascetics, in the absence of knowledge; inasmuch as the northward passage is denied of those devoid of knowledge, in the Vedic text, By knowledge they ascend thither where desires are overcome, the southward travellers go not thither, nor ascetics that have no knowledge. Moreover it has been decreed by Sankaráchárya, in the part entitled Recapitulation of attributes, Indeterminateness is a non-contradiction of all the Vedic texts according to revelation and tradition. In this section the traditional text does not declare the return of the continent ascetics, but merely their passage; while in the Vedic text there is understood the absence of return on the part of those who have gone to the world of Brahmá designated as the sphere of the deities. [Furthermore it is said in this text] attaining it by this passage, they return not to this mortal scene; and again [another text declares], Of these there is no

नित्यनैमित्तिकयोरिति । अत्र प्रायश्चितताग्रहणं तस्यावान्तरफलाभावात् नह्युपात्तदुरितक्षयमन्तरेण तस्य किञ्चित्फलं श्रुतमस्ति अनयोस्तु तच्छ्रूयते इति विशेषः नित्यनैमित्तकयोः पितृलोकप्राप्तिरवान्तरफलं उपासनानां सत्यलोकप्राप्तिरिति विवेकः तद्यथाम्रफलार्थे आरोपिते निमित्ते छायागन्धावनूत्पद्येते इति स्मृत्युक्तछायागन्धवत् पितृलोकादिफलस्यावान्तरत्वमानुषङ्गिकं तदुद्देशेन नित्यादेरविधानात् । विविदिषासंयोगस्य च विधानाच्छुद्धिरेव महाफलत्वमिति भावः ननु पितृलोकस्य कथं नित्यादिसाध्यत्वं श्राद्धादिकर्म्मसाध्यत्वात्तस्य देवलोकस्य चाष्टाशीतिसहस्राणां मुनीनामूर्द्धरेतसामुत्तरेणार्य्यस्य पन्था इत्यादिस्मृतेर्नैष्ठिकाद्यूर्द्धरेतश्राश्रमधर्म्ममात्रसाध्यत्वावगमात्कुतो विद्याफलत्वमिति चेदत्र पृच्छामः किं श्राद्धादि नित्यनैमित्तिकरूपं कर्म्म काम्यं वेति आद्ये कथं न नित्यादेः पितृलोकः फलं द्वितीयेत्वस्य विध्युद्देशफलेनैव निराकाङ्क्षत्वात् पितृलोकफलसम्बन्धाभावात् नापि विना विद्यामूर्द्धरेतश्राश्रममात्रेणोत्तरमार्गगमनं सम्भवति । विद्यया तदारोहन्ति यत्र कामाः परागताः । न तत्र दक्षिणायान्ति नाविद्वांसस्तपस्विनइति श्रुतौ विद्याविरहितानामुत्तरमार्गनिषेधात् निर्णीतञ्चैतदाचार्य्यैर्गुणोपसंहारपादे अनियमः सर्व्वासामविरोधः शब्दानुमानाभ्यामित्यत्राधिकरणे स्मृतिर्न पुनरावृत्तिमूर्द्धरेतसामाचष्टे किन्तु गमनमात्रं श्रुतौ तु देवलोकशब्दितब्रह्मलोकगतानां पुनरावृत्त्यभावोऽवगम्यते एतेन प्रतिपद्यमाना इमं मानवमावर्त्तन्नावर्त्तन्तइति तेषामिह न पुनरावृत्तिरिति च । यत्पुनरत्रेममिहेतिच विशेषणात् कल्पान्तरे आवृत्तिरवगम्यते तद्विद्यारहितानामनावृत्तिस्तु विद्यावतां क्रममुक्त्याम्नानादिति रहस्यं नन्वेवं सति छान्दोग्यभाष्यविरोधः तत्र हि महता संरम्भेण ये चेमेऽरण्ये श्रद्धातपइत्युपासतइति पञ्चाग्निविद्यागतवाक्यव्याख्यानावसरे गृहस्थानां विद्यारहितानामनृतपैशुन्यमायाभेदाब्रह्मचर्य्यादिभिरपूतत्वाच्च स्वधर्म्मनिष्ठतामात्रेणोत्तरमार्गगतिरस्ति इतरेषां नैष्ठिकवानप्रस्थमुख्यसंन्यासिनान्तु तद्विपरीतत्वात् पूततया स्वाश्रमधर्म्मनिष्ठामात्रेणोत्तरमार्गगतिरपुनरावृत्तिलक्षणाभावात् इत्याचार्य्यैरेव निरूपितं । न तत्र दक्षिणेत्यादिश्रुतिः परमुक्त्यपेक्षयेति व्याख्यातं तत्कुत एवं विभागवचनमिति चेत्सत्यं ऊर्ध्वरेतसामुत्तरमार्गेण ब्रह्मलोकगमनं विद्यां विनापीत्येतावन्मात्रं तत्रोक्तं न पुनरात्यन्तिक्यपुनरावृत्तिस्तत्रविवक्षिता । आभूतसंप्लवं स्थानममृतत्वंहि भाष्यत इत्यापेक्षिकाभूतत्ववचनोदाहरणात् । गुणोपसंहारे च तस्मादिह श्रद्धातपोभ्यां विद्यान्तरोपलक्षणं । वाजसनेयिनस्तु पञ्चाग्निविद्याधिकारेऽधीयते यएवमेतद्विदुर्येचामी अरण्ये श्रद्धां सत्यमुपासतइत्युदाहृत्य तत्र श्रद्धालवो ये सत्यं ब्रह्मोपासतइति व्याख्येयं सत्यशब्दस्य ब्रह्मण्यसकृत्प्रयुक्तत्वादिति तैरेव व्याख्याततत्वात् । याज्ञवल्क्यश्चाह सप्तर्षिनागस्वर्गस्था देवलोकं समाश्रिताः तावन्तएव मुनयः सर्व्वारम्भविवर्जिताः । तपसा ब्रह्मचर्य्येण सङ्गत्यागेन मेधया । तत्र गत्वा वतिष्ठन्ते यावदाभूतसंप्लवमिति । तस्मादात्यन्तिक्यपुनरावृत्तिर्विद्यावतामेवेति युक्तं क्रममुक्तिहेतुत्वाद्विद्यायाः । नच तर्हि मुक्तेरेव विद्यापरमप्रयोजनत्वाच्चित्तैकाग्र्यस्य तदयुक्तमिति वाच्यं सगुणब्रह्मविदस्तथात्वेऽपि निर्गुणब्रह्मविद्याधिकारिणश्चित्तैकाग्र्यताया एव परमप्रयोजनत्वात् तस्यापि साक्षात्कारोदयात् प्रागेव प्रमीतस्य ब्रह्मलोकगमनोपपत्तेः । प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाइत्यादि स्मृतेः । सगुणब्रह्मविदोऽपि ब्रह्मलोकगतस्य तत्र संम्भोगं विद्यावान्तरफलं भुक्तवतस्तत्रोत्पन्नचित्तैकाग्र्यद्वारा स्वयम्भववेदान्तवाक्यार्थज्ञानादेव मुक्तिरिति नियमात् । भवत्येव चित्तैकाग्रतोपासनायाः परमं प्रयोजनमिति न किञ्चिद्दुष्यति । तस्मात् सर्व्वएते पुण्यलोकाभवन्ति इतिश्रुतेर्नित्यनैमित्तिकयोः फलस्य वाचनिकत्वात्तथात्वे प्युक्तलक्षणभेदेन काम्यवैषम्यात् फलविशेषस्य चाश्रुतत्वात् पितृलोकस्य च फलात्मनःकर्म्मविशेषाकाङ्क्षितत्वाच्चाश्वदग्धरथन्यायेन कर्म्मणा पितृलोक इतिश्रुतिरुपपद्यते काम्यप्रायश्चित्तयोः फलविशेषोद्देशेन पापक्षयमात्रार्थत्वेन च विधानात् फलान्तराकाङ्क्षाभावात् तथाहङ्ग्रहरबद्धानां कर्म्मसमृद्ध्यर्थत्वादनहङ्ग्रहबद्धानामपि प्रतीकोपासनानामब्रह्मोपासनानाञ्चाभ्युदयफलत्वात् कार्य्यकारणब्रह्मोपासनानामवान्तरफलं देवलोकशब्दवाच्यब्रह्मलोकइति परिशेषात् सिद्धिरतोयुक्तं विद्यया देवलोकइति वचनं इत्यलंप्रपञ्चेन । साधनसम्पन्नः प्रमाताधिकारीत्युक्तं तत्र कानिसाधनानि कियन्तीत्यपेक्षायां तानि विभजते ॥

return to this world. And whereas by the words here, these, and to this world, is understood a return in another æon, this return belongs to those devoid of knowledge. But the absence of such a return pertains to those who have knowledge, inasmuch as emancipation is revealed as taking place in a certain order This is the secret [of the apparent discrepancy] It may be urged that if this be the case there will be a contradiction to the commentary on the Chándogya Upanishad, where it has been stated with great emphasis by Sankaráchárya himself, on occasion of explaining the text relating to the knowledge of the five fires [or the sky, clouds, earth, man and woman, mystically so designated], viz. They who in the forest exercise devotion believing and performing penance,—that travelling by the northern passage does not belong to householders devoid of knowledge, by the mere observance of the duties of their order, inasmuch as they are impure by reason of untruth, calumny, deceitfulness, dissension, and incontinence, while it does belong to the others, viz. to those who practise lifelong continence, ascetics dwelling in the forest, and the principal renouncers of the world, by merely observing the duties of their own orders, inasmuch as they on the contrary are purified, and since there is no reason for their returning again. It is here explained that the text The southward travellers go not thither, relates only to final emancipation. If we be asked: Why the declaration of such a division? we admit the objection: since it has been implied there that continent ascetics may go to the world of Brahmá by the northern passage even without knowledge [that is, without spiritual union with the universal spirit]; and it is not meant that they absolutely return not again; since there is the example of the words Till the destruction of the elements, involved in the sentence Permanence till the destruction of the elements is called immortality. It is also written in the Recapitulation of attributes: Therefore, there is in this place the implication of another science by [the words] faith and austerities. But the Vajasaneyins read in the treatise concerning the five fires: They who thus have known this, and they who in the forest practise faith and truth. Taking this passage for an example they explain that we must expound it of the faithful who devoutly practise truth or Brahma; inasmuch as the word truth often applies to Brahma. Yájnavalkya also says: They who dwell in the sphere of the seven inspired sages, in the region of serpents, and in paradise, they alone on arrival in the sphere of the deities are free from all kinds of undertakings: Having gone thither by means of austerities, by continence, by renunciation of worldly attachment, and by discriminative knowledge, they abide therein until the dissolution of the universe. Absolute freedom from further transmigration belongs to those only who have knowledge [or spritual union with the supreme],—such is the right view, since it is knowledge which is the cause of gradual emancipation. Nor can it be maintained that if this be the case, emancipation itself being the highest end of knowledge, concentration of mind cannot be the chief aim thereof: for though emancipation may be the highest end of one who knows the conditioned supreme, mental concentration may be the chief aim of those who apply themselves to the knowledge of the unconditioned supreme; it being possible even for the former, if he die before there arise in him the presentation, to go to the sphere of Brahmá, according to the scriptural text [*smṛiti*], Having reached the worlds of the meritorious, and dwelt therein for endless ages &c [Also the objection is invalid] according to the maxim that even to one who knowing the conditioned supreme, has reached the world of Brahmá, and there had fruition of the enjoyment which is the secondary result of knowledge, emancipation accrues only from knowledge of the meaning of the text of the Vedánta [That art thou], which knowledge arises of itself through concentration of the intellect in that world. Thus there is nothing faulty in the assertion that mental concentration is the chief end of devotion. Therefore since the fruit of constant and occasional observances is is according to authority such as aforesaid, according to the Vedic text All these are holy worlds, and since, according to the difference of characteristics, they differ from interested works; and since no special fruit has been heard [to attend them]; and since the world of progenitors, as a result, requires some special work; therefore the Vedic text, The world of progenitors is attained by works, can be explained according to the analogy of two men, of whom the horses of the one are lost and the chariot of the other burnt, [for the horses of the latter may yoked to the car of the former, and they may travel together; and in like manner, constant and occasional works, though no special result has been recorded of them, may supply a cause for the attainment of the world of the progenitors, which requires some special works as a condition] Also since interested and expiatory observances have been respectively enjoined with reference to a particular result, and to the mere destruction of guilt, and do not require any other fruit; and since devotions connected with egoism [insomuch that the worshipper identifies himself with the deity, according to saying, Let him devote himself to the deity when he has become the deity,] have for their end

the enhancement of works; and the other devotions, not connected with egoism and devotions to the supreme result in exaltation [knowledge or emancipation], therefore the collateral fruit of devotions to the product [or conditioned] supreme, and the causal [or unconditioned] supreme, is the world of Brahmá designated by the term sphere of the divinities. This, then, is at last established. The text, therefore The sphere of the divinities is attained by devotion, is right. Enough, then, of prolixity. It has been stated that the subject of right notion, endowed with [the quaternion of] requisites, is the authorised student. It being, therefore, necessary to declare what and how many requisites there are, the author enumerates them by a division.

*The requisites.*—The first place belongs to discrimination, dispassionateness being impossible without discrimination. For withdrawal of desire from that which is to be avoided, is impossible, unless there be the discrimination that such and such thing is to be avoided, and such and such a thing is to be accepted. Mention is made of dispassionateness prior to the mention of tranquillity [or quietism], tranquillity &c. being impossible for one whose desires have not been withdrawn [from objects of sense] And mention is made of tranquillity &c. before desire of liberation, inasmuch as desire of liberation is impossible to one who lacks tranquillity. Since desire of emancipation must necessarily exist in one endowed with these three requisites [viz. discrimination, dispassionateness, and quietism], and since, when desire of liberation exists there necessarily ensues desire of knowing the supreme, the requisites include the desire of liberation as last,—such is the author's purpose. He proceeds to define discrimination and the other requisites in the order [of the preceding enunciation].

*Discrimination of eternal and non-eternal things, &c.*—Eternity means non-determination by time; the obverse thereof being non-eternity. Or in other words the eternal is that which is incompatible with the popular and scriptural expression It will not endure; and the contradictory of this is the non-eternal. The analysis [of the compound] is, Discrimination of eternal and non-eternal, and of these as things. Some teach that eternity and non-eternity are those eternal and non-eternal things, those the nature of which is to reside in the eternal and non-eternal; and that discrimination of eternal and non-eternal things is discrimination of these together with their substrata. And this is the discrimination by one who has cursorily acquired the meaning of the Veda, and skilled in scriptural argumentation, that the supreme [Brahma] is the only eternal substance, and that all else is transient. To exemplify this, to the soul the intellect whereof has been purified, eternity in the supreme appears from such revelations [or Vedic texts] as: That which is ineffable; The year revolves by days; That is the light of lights; Him the eternal, all-pervading, omnipresent, most subtile; Like ether, omnipresent, eternal; Unborn, eternal, everlasting; Truth, knowledge, eternal Brahma; The highest aim of the giver of wealth; In whom one sees nought else, hears nought else, knows nought else, he is the highest who is highest indeed; That is immortal; &c. To the same soul there appears in the discrete world otherness from Brahma, and transiency, from declarations of revelation such as: There was not here indeed anything in the beginning, this [universe] was enveloped by a void only; Soul alone was this [universe] in the beginning, nought else was in being; Existent indeed, my friend, was this [universe] in the beginning; One only without a second; Not this, not this; Nothing here is manifold; Wherein aught else sees, aught else hears, aught else knows, that is finite, moreover what is finite is perishable. Accordingly the argumentation: The controverted, insentient world is transient, because divided like a water-pot, piece of cloth, pillar and the like For the transiency

साधनानीति। विवेकमन्तरेण वैराग्यायोगात् विवेकस्य प्राथम्यं नहीदं हेयमिदमुपादेयमिति विवेचनमन्तरेण हेयाद्रागनिवृत्तिः सम्भवति। अनिवृत्तरागस्य शमाद्यभावात् शमाद्यपेक्षया विरागस्य पूर्व्वमुद्धेशः शान्त्यादिहीनस्य मुमुक्षायोगात् ततः प्रागेव शमाद्युद्धेशः। एतैस्त्रिभिः साधनैः सम्पन्नस्य मुमुक्षाया अवश्यम्भावात् मुमुक्षायाञ्च नियमेन ब्रह्मजिज्ञासाप्रवृत्तेर्मुमुक्षान्तान्येव साधनानि इत्यभिप्रायः। विवेकादीन्युद्धेशक्रमेण लक्षयति॥

नित्यानित्यवस्तुविवेकस्तावदित्यादिना। नित्यत्वंनाम कालानवच्छिन्नत्वं तद्विपरीतत्वमनित्यत्वं न स्थास्यतीति लोकागमयोर्व्यवहारायोग्यं नित्यं तद्विपरीतमनित्यमिति वा तथा च नित्यानित्ये च ते वस्तुनी च नित्यानित्यवस्तुनी तयोर्विवेकइति विग्रहः। केचित्तु नित्यानित्ययोर्व्वसितुं शीलं ययोस्ते नित्यानित्यवस्तुनी नित्यत्वमनित्यत्वञ्च। तयोः साश्रययोर्विवेको नित्यानित्यवस्तुविवेकइत्याहुः सचापाततोऽधिगतवेदार्थस्यानुमानकुशलस्य ब्रह्मैव नित्यं वस्तु ततोऽन्यदखिलमनित्यमिति विवेको भवति। तथाहि यत्स्यादवाच्यं। वत्सरोऽहोभिः परिवर्त्तते। तदेव ज्योतिषां ज्योतिः। नित्यं विभुं सर्व्वं गतं सुसूक्ष्मं। आकाशवत् सर्व्वगतश्च नित्यः अजोनित्यः शाश्वतः। सत्यं ज्ञानमनन्तं ब्रह्म रातेर्दातुः परायणं यत्रनान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा योवै भूमा। तदमृतमित्यादिश्रुतिभ्योब्रह्मणि नित्यत्वं विशुद्धसत्त्वपुंसः प्रतिभाति। तथा नैवेह किञ्चनाग्रआसीत् मृत्युनैवेदमावृतमासीत्। आत्मा वा इदमेक एवाग्रआसीन्नान्यत्किञ्चनमिषत्। सदेव सौम्येदमग्रआसीदेकमेवाद्वितीयं नेति नेति नेहनानास्ति किञ्चन यत्रान्यत् पश्यति अन्यच्छृणोति अन्यद्विजानातितदल्पं अथ यदल्पं तन्मर्त्यमित्यादिश्रुतिवचनेभ्यो ब्रह्मणोऽन्यत्वं भेदप्रपञ्चेऽनित्यत्वञ्च तस्यैव पुंसः प्रतिभाति। तथानुमानमपि। विमतोऽचेतनवर्गोऽनित्यो विभक्तत्वाद्घटपटस्तम्भादिवदिति। अनेन हि विभक्तस्यानित्यत्वेऽवगते तस्मिन्ननुगतप्रकाशात्मकस्य ब्रह्मणोऽविभक्तस्य नित्यत्वमप्यर्थादवगम्यते। आकाशादेश्चोत्पत्तिमत्त्वसाधनेनानित्यत्वमुत्तरत्र वर्णयिष्यामः। नचैवं श्रुत्यनुमानाभ्यां विवेके सति ब्रह्मणो ज्ञातत्वादलं विचारेणेति वाच्यं। आपाततोनित्यं वस्तु ब्रह्मेत्यवगमेऽपि तस्याद्वितीयत्वप्रत्यगभिन्नत्वादेरनिर्धारणाज्जिज्ञासाया अनिवृत्तेरित्यास्तां विस्तरः॥

of the divided [or finite] being apprehended by this inference, one apprehends by implication that eternity belongs to the undivided, the supreme, one with the light, which is diffused therein [that is, in the divided or finite world]. In the sequel we shall prove that ether &c. is non-eternal, by proving that it is originated. It must not also be alleged that, discrimination existing by means of revelation and inference, and the supreme being known, there is no occasion for further pondering [or speculation.] For though cursorily the cognition may have arisen that the eternal substance is the supreme, there does not cease the wish to know that the supreme is without a second, undivided from self-consciousness, &c., since this is not yet realised. We dismiss further prolixity.

*Of things of the present. Disregard of the enjoyment of fruits of the here and the hereafter* is extreme disgust towards them, like the disgust towards poisoned and vomited food, in one who has come to the conclusion that as things of the present, things arising in this world, connected with the body entered in this state, that is, enjoyments or pleasures derived from objects such as garlands, sandal-wood, women, houses, fields, cattle, men, obtained by works and agriculture, service, acceptance of presents, are non-eternal, so also the joys of the next world derived from the use of such objects as ambrosia, must be non-eternal, being produced by sacrifices and other observances. The meaning is this: It is the earnest longing of all living beings that they may enjoy pleasure unsurpassed, and may experience not the least pain. For all this earnest longing, though risking with all their might all temerity, they attain not absolute bliss and absence of pain. And why? Some after experiencing the hardships of voyages at sea, of paying court to the king, and the like, perish of themselves at the time of fruition. Others, though they obtain the desired fruit, are unable to enjoy it, being oppressed by sickness and the like. Others obtaining some small enjoyment, are generally observed to be distressed by the loss of wives, children, and others, the source of their enjoyment, or by disagreement with them; or through fear of losing accumulated sources of enjoyment by reason of rivalry and jealousy of others; or are observed not to enjoy pleasure for a single moment through distress and anxiety on account of drought &c.; while the miserable, the poor, the one-eyed, the hump-backed, the impotent, the deaf, and others are observed to be generally pained by hunger and thirst. To a world so full of pain, the man whose intellect is purified, like a miser not enjoying the least particle of pleasure, is not attached, but is only averse therefrom. It may be urged: Grant that the pleasure of the present world is an object of aversion, inasmuch as it is alloyed with transiency and other defects, still there is no reason for non-attachment to the pleasures of a future world; since there does not arise the inference of transiency, the object matter of which inference would be annulled by the Vedic text The merit of one who offers the four months' sacrifice is assuredly imperishable. To this we reply, Not so. For this text itself, conversant about the comparatively imperishable fruit, which is eulogistic in character, and which, as being portion only of an injunction, depends on another text, is annulled by the sacred text As in this world the sphere attained by works perishes, so the sphere attained in the next world by merit perishes, which text proceeds in dependence on the strength of facts, and does not point back to any other text. For nothing produced in the shape of an entity, has been experienced to be eternal. Therefore dispassionateness towards all enjoyments from ·Brahmá to a stock is reasonable, as towards enjoyments of this world. It has, therefore, been said by the holy Vyása: Whatsoever sensual plaasure there is in the world, and the greater bliss of heaven, these are not worth the sixteenth part of the pleasure of the cessation of desire. He enumerates by division, tranquillity and the rest. A. E G. and G D.



PRINTED AND PUBLISHED BY THE PROPRIETORS, E. J. LAZARUS AND CO., AT THE MEDICAL HALL PRESS, BENARES.

# ॥ मीमांसाशास्त्रसूचीपत्रम् ॥

| ग्रन्थनामानि | पूर्णापूर्णविवेकः | पत्रसङ्ख्या | लिपिकालः | लिपिभेदः | ग्रन्थकर्तृनामादिविवर्णनम् |
|---|---|---|---|---|---|
| ६२ वेष्टनम् | | | | | |
| १ न्यायावलीदीधितिः | खं | ३ | ० | दे | श्रीमत्परमहंसपरिव्राजकाचार्य्यश्रीमद्राघवानन्दसरस्वतीकृता तर्कपादरूपा नवीनाऽशुद्धा च |
| २ तन्त्ररत्नम् | खं | २५ | ० | दे | महामहोपाध्यायपार्थसारथिमिश्रकृतं दशमाऽध्यायरूपं जीर्णतरमशुद्धं च |
| ३ भावार्थचरणम् | सं | २१ | ० | गौ | सोमनाथकृतं शास्त्रदीपिकाव्याख्यामयूखमालिकाग्रन्थस्थं प्राचीनं शुद्धतरं च |
| ४ भाट्टदिनकरः | खं | २० | ० | दे | महामहोपाध्यायोमारामकृष्णसुतदिनकरभट्टकृतो नवमाऽध्यायरूपो प्राचीनोऽशुद्धश्च |
| ६३ वेष्टनम् | | | | | |
| १ टुप्टीका | खं | ८ | ० | दे | श्रीभट्टकुमारिलस्वामिकृता मीमांसावार्तिकव्याख्यारूपाऽशुद्धा प्राचीना च |
| २ लिङ्गपादः | खं | २१ | ० | दे | महामहोपाध्यायरुद्रदेवसूनुखण्डदेवकृतो नवीनोऽशुद्धश्च |
| ३ तर्कपादः | खं | १० | ० | दे | महामहोपाध्यायवासुदेवदीक्षितकृतो नवीनोऽशुद्धश्च |
| ४ शास्त्रदीपिका | खं | १४ | ० | गौ | पार्थसारथिमिश्रकृता सप्तमाऽध्यायरूपा नवीनाऽशुद्धा च |
| ५ शास्त्रदीपिका | खं | १३ | ० | गौ | महामहोपाध्यायपार्थसारथिमिश्रकृतापञ्चमाऽध्यायरूपा प्राचीना शुद्धतरा च |
| ६ जैमिनीयन्यायमालाविस्तरः | सं | ७ | ० | गौ | माधवकृतः एकादशाऽध्यायस्य द्वितीयपादरूपो नवीनोऽशुद्धश्च |
| ७ शास्त्रदीपिका | सं | २२ | ० | गौ | पार्थसारथिमिश्रकृता नवीनाऽशुद्धतरा एकाद-[शाऽध्यायरूपा च |
| ८ जैमिनीयन्यायमालाविस्तरः | सं | ७ | ० | गौ | माधवकृतो एकादशाऽध्यायस्य चतुर्थपादरूपो नवीनोऽशुद्धश्च |
| ६४ वेष्टनम् | | | | | |
| १ भाट्टदीपिकाटीका | खं | ४२ | ० | दे | श्रीखण्डदेवान्तेवासिकविमखण्डनशम्भुभट्टकृता प्रभावलीनामिका नवीनाऽशुद्धा च |
| २ टुप्टीकाव्याख्या | खं | १८ | ० | दे | वाजपेययाजिश्रीव्यङ्कटेश्वरदीक्षितकृता वार्तिकाऽभरणनामिका दशमाऽध्यायस्य तृतीयपादरूपा जीर्णाऽशुद्धा च |

# ॥ मीमांसाशास्त्रसूचीपत्त्रम् ॥

| ग्रन्थनामानि | पूर्णापूर्णविवेकः | पत्रसङ्ख्या | लिपिकालः | लिपिभेदः | ग्रन्थकर्तृनामादिवर्णनम् |
|---|---|---|---|---|---|
| ३ शावरभाष्यम् | खं | १८ | 0 | दे | श्रीभट्टशवरस्वामिकृतं षष्ठाऽध्यायस्य प्रथमद्वितीयपादरूपं प्राचीनं शुद्धं च |
| ४ भाट्टदीपिकाटीका | खं | ६१ | 0 | दे | श्रीखण्डदेवान्तेवासिकविमण्डनशम्भुभट्टकृता प्रभावलीनामिका नवीनाऽशुद्धा च |
| ५ भाट्टदिनकरः | खं | ५ | 0 | दे | महामहोपाध्यायोमारामकृष्णसुतदिनकरभट्टकृतोऽष्टमाध्यायरूपो प्राचीनः शुद्धतरश्च |
| ६ न्यायप्रकाशटीका | खं | २५ | 0 | दे | श्रीमदनन्तदेवात्मजापदेवाऽऽत्मजाऽनन्तदेवकृतभाट्टाऽलङ्काराख्या प्राचीनाऽशुद्धा च |
| ६५ वेष्टनम् | | | | | |
| १ टुप्टीकाव्याख्या | खं | ६ | 0 | दे | वाजपेययाजिश्रीव्यङ्कटेश्वरदीक्षितकृता वार्तिकाऽभरणनामिका दशमाऽध्यायस्य पञ्चमपादरूपा जीर्णाऽशुद्धा च |
| २ मीमांसाकौस्तुभः | खं | २६ | 0 | दे | श्रीमहामहोपाध्यायखण्डदेवकृतो नवीनोऽशुद्धश्च |
| ३ शास्त्रदीपिका | सं | ६ | 0 | दे | श्रीपार्थसारथिमिश्रकृताऽष्टमाऽध्यायरूपा जीर्णाऽशुद्धा च |
| ४ प्रभा | सं | ५४ | 0 | दे | श्रीमद्रामचन्द्रात्मजवैद्यनाथकृता शास्त्रदीपिकाव्याख्यारूपा प्रथमाऽध्यायात्मिका प्राचीना शुद्धा च |
| ५ न्यायप्रकाशः | सं | ३१ | 0 | दे | श्रीमदनन्तदेवसून्वापदेवकृतो प्राचीनः शुद्धश्च |
| ६६ वेष्टनम् | | | | | |
| १ न्यायप्रकाशटीका | खं | ४८ | 0 | दे | श्रीमदनन्तदेवात्मजापदेवात्मजाऽनन्तदेवकृता भाट्टाऽलङ्काराख्या प्राचीनाऽशुद्धा च |
| २ प्रभावली | खं | ३६ | 0 | दे | श्रीखण्डदेवान्तेवासिकविमण्डनशम्भुभट्टकृता भाट्टदीपिकाव्याख्यारूपा चतुर्थाऽध्यायस्य द्वितीयपादात्मिका प्राचीनाऽशुद्धा च |
| ३ टुप्टीकाव्याख्या | खं | २१ | 0 | दे | वाजपेययाजिश्रीव्यङ्कटेश्वरदीक्षितकृता वार्तिकाऽभरणनामिका दशमाऽध्यायस्य तुरीयपादरूपा जीर्णाऽशुद्धा च |
| ४ मीमांसाकौस्तुभः | सं | ३२ | 0 | दे | रुद्रदेवसूनुखण्डदेवकृतो तृतीयाऽध्यायस्य प्रथमपादरूपो जीर्णाऽशुद्धश्च |
| ६७ वेष्टनम् | | | | | |

# ॥ मीमांसाशास्त्रसूचीपत्रम् ॥

| ग्रन्थनामानि | पूर्णापूर्णविवेकः | पत्रसङ्ख्या | लिपिकालः | लिपिभेदः | ग्रन्थकर्तृनामादिवर्णनम् |
|---|---|---|---|---|---|
| १ मीमांसाकौस्तुभः | सं | ८४ | १५०५ | दे | श्री खण्डदेवकृतो प्रथमाऽध्यायस्य तृतीयपादरूपो जीर्णोऽशुद्धश्च |
| २ प्रभा | सं | ३४ | 0 | दे | श्रीरामभट्टात्मजवैद्यनाथभट्टकृता शास्त्रदीपिकाव्याख्यारूपा द्वितीयाऽध्यायात्मिका प्राचीना शुद्धा च |
| ३ न्यायसुधा | खं | ८ | 0 | दे | सोमयाजीमाधवभट्टोपाध्यायात्मजभट्टसोमेश्वरकृता जीर्णाऽशुद्धा च |
| ४ टुप्टीका | खं | ११ | 0 | दे | श्रीभट्टकुमारिलस्वामिकृता षष्ठाऽध्यायात्मिका प्राचीनाऽशुद्धा च |
| ९८ वेष्टनम् | | | | | |
| १ अधिकरणमालाटीका | खं | १० | 0 | गौ | माधवकृता नवीना शुद्धा तृतीयाऽध्यायस्य प्रथमपादरूपा च |
| २ शास्त्रदीपिका | खं | ८ | 0 | गौ | महामहोपाध्यायपार्थसारथिमिश्रकृता तृतीयाऽध्यायस्याऽष्टमपादरूपा प्राचीना शुद्धा च |
| ३ तन्त्रवार्तिकम् | खं | १२ | 0 | दे | श्रीभट्टकुमारिलस्वामिकृतं द्वितीयाऽध्यायस्य तुरीयचरणरूपं प्राचीनं शुद्धं च |
| ४ शास्त्रदीपिका | खं | १२ | 0 | गौ | महामहोपाध्यायपार्थसारथिमिश्रकृता तृतीयाऽध्यायस्यचतुर्थपादरूपा प्राचीना शुद्धा च |
| ५ जैमिनीयन्यायमालाविस्तरः | सं | ११ | १८४२ | दे | सोमयाजिभट्टमाधवकृतो नवीनोऽशुद्धश्च |
| ६ टुप्टीका | खं | ५ | 0 | दे | श्रीभट्टकुमारिलस्वामिकृता प्राचीनाऽशुद्धा च |
| ९९ वेष्टनम् | | | | | |
| १ न्यायप्रकाशः | सं | ४८ | १६४५ | दे | आपदेवकृतो प्राचीनोशुद्धश्च |
| २ टुप्टीका | खं | ५ | 0 | दे | भट्टकुमारिलस्वामिकृता प्राचीनाऽशुद्धा च |
| ३ शास्त्रदीपिका | खं | १० | 0 | गौ | महामहोपाध्यायपार्थसारथिमिश्रकृता तृतीयाऽध्यायस्य तृतीयपादरूपा प्राचीना शुद्धा च |
| ४ टुप्टीकाव्याख्या | खं | १२ | 0 | दे | वाजपेययाजिव्यङ्कटेश्वरदीक्षितकृता वार्तिकाभरणनामिका नवमाऽध्यायस्य प्रथमपादात्मिका जीर्णाऽशुद्धा च |
| ५ अधिकरणमालाटीका | खं | २ | 0 | गौ | माधवकृता द्वितीयाऽध्यायस्य चतुर्थपादरूपा नवीना शुद्धा च |
| १०० वेष्टनम् | | | | | |
| १ तन्त्रवार्तिकम् | खं | १० | 0 | दे | श्रीभट्टकुमारिलस्वामिकृतं तृतीयाऽध्यायस्य सप्तमपादरूपं जीर्णं शुद्धं च |

## ॥ मीमांसाशास्त्रसूचीपत्रम् ॥

| ग्रन्थनामानि | पूर्णापूर्णविवेकः | पत्रसङ्ख्या | लिपिकालः | लिपिभेदः | ग्रन्थकर्तृनामादिविवरणम् |
|---|---|---|---|---|---|
| २ टुप्टीकाव्याख्या | खं | २५ | ० | दे | वाजपेययाजिव्यङ्कटेश्वरदीक्षितकृता वार्तिकाभरणनामिका दशमाऽध्यायरूपा जीर्णाऽशुद्धा च |
| ३ शास्त्रदीपिका | खं | ५ | 0 | गौ | महामहोपाध्यायपार्थसारथिमिश्रकृता तृतीयाऽध्यायस्य पञ्चमपादरूपा प्राचीना शुद्धा च |
| ४ जैमिनीयन्यायमालाविस्तरः | सं | १३ | 0 | दे | माधवकृतो एकादशाध्यायरूपो नवीनोऽशुद्धश्च जैमिनिन्यायमालाविस्तरइत्यपि नामाऽन्तरमस्य |
| ५ टुप्टीका | खं | २८ | 0 | दे | श्रीभट्टकुमारिलस्वामिकृता प्राचीनाऽशुद्धा च |
| १०१ वेष्टनम् | | | | | |
| १ मीमांसकुतूहलवृत्तिः | खं | २५ | 0 | दे | वासुदेवदीक्षितकृता प्रथमाऽध्यायस्य द्वितीयपादरूपा नवीनाऽशुद्धा च |
| २ शास्त्रदीपिका | खं | ८ | 0 | गौ | महामहोपाध्यायपार्थसारथिमिश्रकृता तृतीयाऽध्यायस्य षष्ठपादरूपा प्राचीनाशुद्धा च |
| ३ तन्त्रवार्तिकम् | खं | ११ | १६४१ | दे | भट्टकुमारिलस्वामिकृतं तृतीयाऽध्यायस्याऽष्टमपादरूपं जीर्णंशुद्धं च |
| ४ जैमिनीयन्यायमालाविस्तरः | खं | १२ | 0 | गौ | माधवकृतो नवीनो शुद्धश्च |
| ५ शास्त्रदीपिका | खं | ११ | 0 | गौ | महामहोपाध्यायपार्थसारथिमिश्रकृता प्राचीना शुद्धतरा च |
| ६ टुप्टीका | खं | २५ | १६३५ | दे | प्राचीनाऽशुद्धा दशमाऽध्यायात्मिका च |
| १०२ वेष्टनम् | | | | | |
| १ शास्त्रदीपिका | खं | ७ | 0 | गौ | महामहोपाध्यायपार्थसारथिमिश्रकृता प्राचीना शुद्धा च [प्राचीनाऽशुद्धा च |
| २ टुप्टीका | खं | १० | 0 | दे | श्रीभट्टकुमारिलस्वामिकृता एदशाऽध्यायरूपा |
| ३ मीमांसाकुतूहलवृत्तिः | खं | २४ | 0 | दे | वासुदेवदीक्षितविरचिता प्रथमाऽध्यायस्य चतुर्थपादरूपा नवीनाऽशुद्धा च |
| ४ टुप्टीकाव्याख्या | खं | १७ | 0 | दे | वाजपेययाजिव्यङ्कटेश्वरदीक्षितकृता वार्तिकाभरणनामिका नवमाऽध्यायस्य तृतीयपादरूपा जीर्णाऽशुद्धा च |
| १०३ वेष्टनम् | | | | | |
| १ टुप्टीका | खं | ४ | 0 | दे | श्रीभट्टकुमारिलस्वामिकृता द्वादशाऽध्यायरूपा जीर्णाऽशुद्धा च |

PRINTED AND PUBLISHED BY THE PROPRIETORS, E. J. LAZARUS AND CO., AT THE MEDICAL HALL PRESS, BENARES.

## ॥ मीमांसाशास्त्रसूचीपत्त्रम् ॥

| ग्रन्थनामानि | पूर्णापूर्णविवेकः | पत्त्रसङ्ख्या | लिपिकालः | लिपिभेदः | ग्रन्थकर्तृनामादिविवरणम् |
|---|---|---|---|---|---|
| २ मीमांसावार्त्तिकम् | खं | १७ | ० | दे | श्रीभट्टकुमारिलस्वामिकृतं तृतीयाऽध्यायस्य पञ्चमपादरूपं जीर्णं शुद्धं च |
| ३ टुप्टीकाव्याख्या | खं | १६ | ० | दे | वाजपेययाजिव्यङ्कटेश्वरदीक्षितकृता वार्तिकाभरणनामिका नवमाऽध्यायस्य चतुर्थपादरूपा जीर्णाऽशुद्धा च |
| १०४ वेष्टनम् | | | | | |
| १ जैमिनिन्यायमालाविस्तरः | खं | १५ | ० | गौ | माधवकृतो नवमाध्यायस्य द्वितीयपादरूपो नवीनोऽशुद्धश्च |
| २ चिन्त्यसङ्ग्रहवादः | सं | ५ | १७२६ | दे | शङ्करभट्टकृतः प्राचीनोऽशुद्धश्च |
| ३ विधिवादः | खं | १० | ० | दे | प्राचीनोऽशुद्धश्च |
| ४ जैमिनिन्यायमालाविस्तरः | खं | ७ | ० | गौ | माधवकृतः षष्ठाऽध्यायस्य तृतीयपादरूपो नवीनोऽशुद्धश्च |
| ५ शास्त्रदीपिका | खं | ८ | ० | गौ | पार्थसारथिमिश्रकृता नवमाध्यायरूपा प्राचीनाऽशुद्धा च |
| ६ मयूखमालिका | खं | १८ | ० | गौ | सोमनाथकृता जीर्णाऽशुद्धा च |
| ७ मीमांसावार्त्तिकम् | सं | २८ | ० | दे | श्रीभट्टकुमारिलस्वामिकृतं तृतीयाऽध्यायस्य षष्ठपादरूपं जीर्णमशुद्धं च |
| १०५ वेष्टनम् | | | | | |
| १ शास्त्रदीपिका | खं | १३ | ० | गौ | पार्थसारथिमिश्रकृता तृतीयाऽध्यायस्य द्वितीयपादरूपा नवीनाऽशुद्धा च |
| २ जैमिनिन्यायमालाविस्तरः | खं | ११ | ० | गौ | माधवकृताश्चतुर्थाऽध्यायस्य प्रथमपादरूपो नवीनोऽशुद्धश्च |
| ३ मीमांसाकुतूहलवृत्तिः | खं | २० | ० | दे | वासुदेवदीक्षितकृता प्रथमाऽध्यायस्य द्वितीयपादरूपा नवीनाऽशुद्धा च |
| ४ प्रभा | खं | २५ | ० | दे | वैद्यनाथभट्टकृता शास्त्रदीपिकाव्याख्यारूपा प्राचीनाऽशुद्धा च |
| ५ अधिकरणमालाटीका | खं | २१ | ० | गौ | माधवकृता जैमिनीयन्यायमालाविस्तरनामिका षष्ठाऽध्यायस्य पञ्चमपादात्मिका नवीनाऽशुद्धा च |
| ६ शास्त्रदीपिका | खं | १३ | ० | गौ | महामहोपाध्यायपार्थसारथिमिश्रकृता द्वितीयाऽध्यायस्य प्रथमपादरूपा नवीना शुद्धा च |
| १०६ वेष्टनम् | | | | | |

## ॥ मीमांसाशास्त्रसूचीपत्रम् ॥

| ग्रन्थनामानि | पूर्णापूर्णविवेकः | पत्रसङ्ख्या | लिपिकालः | लिपिभेदः | ग्रन्थकर्तृनामादिविवरणम् |
|---|---|---|---|---|---|
| १ जैमिनिन्यायमालाविस्तरः | खं | ८ | 0 | गौ | माधवकृतश्चतुर्थोऽध्यायस्य द्वितीयपादरूपो नवीनोऽशुद्धश्च |
| २ शास्त्रदीपिका | खं | १८ | 0 | गौ | श्रीपार्थसारथिमिश्रकृता प्रथमाऽध्यायस्य चतुर्थपादरूपा प्राचीना शुद्धा च |
| ३ जैमिनिन्यायमालाविस्तरः | खं | ६ | 0 | गौ | माधवकृतः षष्ठाऽध्यायस्य प्रथमद्वितीयपादरूपो नवीनोऽशुद्धश्च |
| ४ शाबरभाष्यम् | खं | १२ | 0 | दे | श्रीभट्टशबरस्वामिकृतं प्रथमाध्यायस्य द्वितीयपादरूपं जीर्णं शुद्धं च |
| ५ जैमिनिन्यायमालाविस्तरः | खं | १० | 0 | गौ | माधवकृतस्तृतीयाऽध्यायस्याष्टमपादरूपो नवीनोऽशुद्धश्च |
| ६ शास्त्रदीपिका | खं | १० | 0 | गौ | श्रीपार्थसारथिमिश्रकृताऽष्टमाध्यायरूपा नवीनाऽशुद्धा च |
| ७ जैमिनिन्यायमालाविस्तरः | खं | ११ | 0 | गौ | माधवकृतश्चतुर्थोऽध्यायस्य तृतीयपादरूपो नवीनोऽशुद्धश्च |
| १०७ वेष्टनम् | | | | | |
| १ तन्त्रवार्त्तिकम् | खं | २२ | १६५४ | दे | श्रीभट्टकुमारिलस्वामिकृतं तृतीयाऽध्यायस्य प्रथमपादरूपं जीर्णमशुद्धं च |
| २ शास्त्रदीपिका | खं | २१ | 0 | दे | श्रीपार्थसारथिमिश्रकृता द्वितीयाऽध्यायस्य द्वितीयपादरूपा नवीनाऽशुद्धा च |
| ३ जैमिनिन्यायमालाविस्तरः | खं | ६ | 0 | गौ | माधवकृताश्चतुर्थोऽध्यायस्य चतुर्थपादरूपो नवीनोऽशुद्धश्च |
| ४ शास्त्रदीपिका | खं | ११ | 0 | गौ | श्रीपार्थसारथिमिश्रकृता द्वितीयाऽध्यायस्य तृतीयपादरूपा नवीनाऽशुद्धा च |
| ५ जैमिनिन्यायमालाविस्तरः | खं | ८ | 0 | गौ | माधवकृतः पञ्चमाऽध्यायस्य तृतीयपादरूपो नवीनोऽशुद्धश्च |
| ६ शास्त्रदीपिका | खं | ११ | 0 | गौ | श्रीपार्थसारथिमिश्रकृता दशमाऽध्यायस्याऽष्टमपादरूपा नवीनाऽशुद्धा च |
| ७ जैमिनिन्यायमालाविस्तरः | खं | ६ | 0 | गौ | माधवकृतः षष्ठाऽध्यायस्य चतुर्थपादरूपो नवीनोऽशुद्धश्च |
| ८ शास्त्रदीपिका | खं | १८ | 0 | गौ | श्रीपार्थसारथिमिश्रकृता तृतीयाऽध्यायस्य प्रथमपादरूपा नवीना शुद्धा च |
| १०८ वेष्टनम् | | | | | |

# ॥ मीमांसाशास्त्रसूचीपत्रम् ॥

| ग्रन्थनामानि | पृष्ठापृष्ठविवेकः | पत्रसङ्ख्या | लिपिकालः | लिपिभेदः | ग्रन्थकर्तृनामादिवर्णनम् |
|---|---|---|---|---|---|
| १ जैमिनिन्यायमालाविस्तरः | खं | १२ | 0 | गौ | माधवकृतः पञ्चमाऽध्यायस्य प्रथमपादरूपः नवीनोऽशुद्धश्च |
| २ शास्त्रदीपिका | खं | १८ | 0 | गौ | श्रीपार्थसारथिमिश्रकृता प्रथमाऽध्यायस्य तृतीयपादरूपा जीर्णा शुद्धा च |
| ३ प्रभावली | खं | २६ | 0 | दे | श्रीमहामहोपाध्यायशम्भुभट्टकृता भाट्टदीपिकाटीकारूपा प्रथमाऽध्यायस्य तृतीयपादात्मिका नवीनाऽशुद्धा च |
| ४ जैमिनिन्यायमालाविस्तरः | खं | ५ | 0 | दे | महामहोपाध्यायमाधवविरचितो पञ्चमाऽध्यायस्य चतुर्थपादरूपः नवीनो ऽशुद्धश्च |
| ५ शास्त्रदीपिका | खं | ८ | 0 | गौ | श्रीमहामहोपाध्यायपार्थसारथिमिश्रकृता एकादशाध्यायस्य चतुर्थपादरूपा नवीनाऽशुद्धा च |
| ६ प्रभा | सं | ११ | 0 | दे | श्रीमद्रामभट्टसूरिवरात्मजवैद्यनाथभट्टकृत शास्त्रदीपिकाव्याख्यात्मिका एकादशाऽध्यायरूपा प्राचीनाऽशुद्धा च |
| ७ शास्त्रदीपिका | खं | ११ | 0 | गौ | श्रीमहामहोपाध्यायपार्थसारथिमिश्रकृता द्वितीयाऽध्यायस्य तृतीयचतुर्थपादरूपा नवीनाऽशुद्धा च [दरूपः नवीनोऽशुद्धश्च |
| ८ जैमिनिन्यायमालाविस्तरः | खं | ७ | 0 | गौ | श्रीभट्टमाधवकृतो पञ्चमाध्यायस्य द्वितीयपा- |
| १०९ वेष्टनम् | | | | | |
| १ मीमांसाकौस्तुभः | सं | ६८ | १७४५ | दे | श्रीरुद्रदेवसूनुखण्डदेवकृतो द्वितीयाऽध्यायस्य प्रथमपादरूपः प्राचीनोऽशुद्धश्च |
| २ शास्त्रदीपिका | सं | २७ | 0 | गौ | श्रीमहामहोपाध्यायपार्थसारथिमिश्रकृता चतुर्थाऽध्यायात्मिका जीर्णाऽशुद्धा च |
| ११० वेष्टनम् | | | | | |
| १ भाट्टदिनकरः | खं | १२ | 0 | दे | उमारामकृष्णासुतदिनकरभट्टकृतो नवमाध्यायस्य द्वितीयपादरूपः प्राचीनः शुद्धश्च |
| २ जैमिनिन्यायमालाविस्तरः | खं | १० | 0 | गौ | माधवकृतो दशमाऽध्यायस्याऽष्टमपादरूपः नवीनोऽशुद्धश्च |
| ३ शास्त्रदीपिका | खं | १४ | 0 | गौ | श्रीमहामहोपाध्यायपार्थसारथिमिश्रकृता तृतीयाऽध्यायस्य तृतीयपादात्मिका नवीना शुद्धा च |

## ॥ मीमांसाशास्त्रसूचीपत्रम् ॥

| ग्रन्थनामानि | पूर्णापूर्णविवेकः | पत्रसङ्ख्या | लिपिकालः | लिपिभेदः | ग्रन्थकर्तृनामादिवर्णनम् |
|---|---|---|---|---|---|
| ४ मयूखमालिका | खं | २८ | 0 | गौ | सोमनाथकृता शास्त्रदीपिकाव्याख्यात्मिका द्वितीयाऽध्यायस्य द्वितीयपादरूपा प्राचीना शुद्धा च [नवीनोऽशुद्धश्च |
| ५ जैमिनीयन्यायमालाविस्तरः | खं | ८ | 0 | गौ | माधवकृतः सप्तमाऽध्यायस्य तृतीयपादरूपो |
| ६ प्रभावली | खं | ४६ | 0 | गौ | श्रीबालकृष्णभट्टसुतशम्भुभट्टविरचिता भाट्टदीपिकाव्याख्यात्मिका प्रथमाऽध्यायस्य द्वितीयपादरूपा नवीनाऽशुद्धा च |
| १११ वेष्टनम् | | | | | |
| १ मीमांसासूत्रदीधितिः | खं | ८ | 0 | दे | नवमाऽध्यायस्य प्रथमपादरूपा जीर्णाऽशुद्धा च |
| २ नयविवेकटीका | सं | ८ | 0 | दे | श्रीगोविन्दोपाध्यायशिष्यशङ्करकृता दीपिकानामिका चतुर्थाऽध्यायस्य प्रथमचरणरूपा किञ्चिच्छुद्धा च |
| ३ मीमांसासूत्रदीधितिः | सं | ७ | 0 | दे | राघवानन्दसरस्वतीकृताऽष्टमाध्यायस्य द्वितीयतृतीयपादरूपा जीर्णा शुद्धा च |
| ४ जैमिनीयन्यायमालाविस्तरः | सं | १५ | 0 | दे | माधवकृतः पञ्चमाऽध्यायरूपो नवीनोऽशुद्धश्च |
| ५ भाट्टदिनकरः | खं | १६ | 0 | दे | उमारामसुतदिनकरभट्टकृतो नवमाऽध्यायस्य प्रथमचरणरूपो नवीनोऽशुद्धश्च |
| ६ मीमांसासूत्रदीधितिः | खं | १० | 0 | दे | राघवानन्दसरस्वतीकृता नवमाऽध्यायस्य चतुर्थपादरूपा जीर्णाऽशुद्धा च |
| ११२ वेष्टनम् | | | | | |
| १ जैमिनीयन्यायमालाविस्तरः | खं | ७ | 0 | गौ | माधवकृतो दशमाऽध्यायस्य षष्ठपादरूपो नवीनोऽशुद्धश्च |
| २ शास्त्रदीपिका | खं | ११ | 0 | गौ | महामहोपाध्यायश्रीपार्थसारथिमिश्रकृता तृतीयाऽध्यायस्य सप्तमपादरूपा नवीना शुद्धा च |
| ३ मयूखमालिका | खं | १४ | 0 | गौ | महामहोपाध्यायसोमनाथकृता शास्त्रदीपिकाव्याख्यात्मिका द्वितीयाध्यायस्य तृतीयपादरूपा प्राचीना शुद्धा च |
| ४ जैमिनिन्यायमालाविस्तरः | खं | ५ | 0 | गौ | माधवकृत एकादशाध्यायस्य तृतीयपादरूपो नवीनोऽशुद्धश्च |
| ५ प्रभा | खं | १२ | 0 | दे | श्रीरामचन्द्रसूरिवरात्मजवैद्यनाथकृता शास्त्रदीपिकाव्याख्यारूपा द्वादशतमाऽध्यायात्मिका प्राचीनाऽशुद्धा च |

PRINTED AND PUBLISHED BY THE PROPRIETORS, E. J. LAZARUS AND CO., AT THE MEDICAL HALL PRESS, BENARES.

## ॥ मीमांसाशास्त्रसूचीपत्त्रम् ॥

| ग्रन्थनामानि | पूर्णापूर्णविवेकः | पत्त्रसङ्ख्या | लिपिकालः | लिपिभेदः | ग्रन्थकर्तृनामादिवर्णनम् |
|---|---|---|---|---|---|
| ६ जैमिनिन्यायमालाविस्तरः | सं | १३ | 0 | गौ | माधवकृतः षष्ठाध्यायस्य षष्ठसप्तमाऽष्टमपादरूपो नवीनोऽशुद्धश्च |
| ७ प्रभावली | सं | १० | 0 | दे | श्रीबालकृष्णभट्टसुतशम्भुभट्टविरचिता भाट्टदीपिकाव्याख्यात्मिका दशमाऽध्यायस्य प्रथमपादरूपा प्राचीना शुद्धा च |
| ८ शास्त्रदीपिका | खं | ७ | 0 | गौ | महामहोपाध्यायश्रीपार्थसारथिमिश्रकृता तृतीयाऽध्यायस्याऽष्टमपादरूपा नवीना शुद्धा च |
| ११३ वेष्टनम् | | | | | |
| १ शाबरभाष्यम् | खं | ३२ | 0 | दे | श्रीभट्टशबरस्वामिकृतं दशमाऽध्यायरूपं नवीनमशुद्धं च |
| २ जैमिनिन्यायमालाविस्तरः | खं | ८ | 0 | दे | माधवकृतोऽष्टमाध्यायस्य प्रथमपादरूपो नवीनोऽशुद्धश्च |
| ३ प्रभावली | खं | ११ | 0 | दे | श्रीबालकृष्णभट्टसुतशम्भुभट्टविरचिता भाट्टदीपिकाव्याख्यात्मिका प्राचीना शुद्धा च |
| ४ मयूखमालिका | सं | ३ | 0 | गौ | सोमनाथकृता शास्त्रदीपिकाव्याख्यात्मिका द्वितीयाऽध्यायस्य चतुर्थपादरूपा प्राचीना शुद्धा च |
| ५ जैमिनिन्यायमालाविस्तरः | खं | ११ | 0 | गौ | माधवकृतो दशमाध्यायस्य प्रथमपादरूपो नवीनोऽशुद्धश्च |
| ६ शास्त्रदीपिका | खं | ७ | 0 | गौ | श्रीमहामहोपाध्यायपार्थसारथिमिश्रकृता तृतीयाध्यायस्य षष्ठपादरूपा नवीनाऽशुद्धा च |
| ११४ वेष्टनम् | | | | | |
| १ शाबरभाष्यम् | ख | २ | 0 | दे | श्रीभट्टशबरस्वामिकृतं षष्ठाध्यायस्य षष्ठपादरूपं नवीनमशुद्धं च |
| २ मयूखमालिका | खं | ५ | 0 | दे | सोमनाथकृता शास्त्रदीपिकाव्याख्यात्मिकाऽष्टमाऽध्यायस्य चतुर्थपादरूपा नवीना च |
| ३ जैमिनीयन्यायमालाविस्तरः | खं | २ | 0 | गौ | माधवकृतोऽष्टमाध्यायस्य द्वितीयपादरूपो नवीनोऽशुद्धश्च |
| ४ शास्त्रदीपिका | खं | १७ | 0 | गौ | श्रीमहामहोपाध्यायपार्थसारथिमिश्रकृता तृतीयाऽध्यायस्य तृतीयपादरूपा नवीना शुद्धा च |

